# ज्यौतिष-कल्पद्रुमः

प्रसिद्धो भूलोके सकलविषवाञ्छावितरकः सुरद्रुर्दैवेन्द्रप्रविततवनेऽसौ न भुवने ।
इदं ज्योतिःशास्त्रं सकलजनसर्वेष्टदतया सुलभ्यःकल्पद्रुर्भुवि दिवि च जागर्त्ति सततम् ॥१॥
विना ज्योतिःशास्त्रं न हि किमपि विज्ञैरपि जनैः प्रवेत्तुं शक्यन्ते वियति खगविज्ञानविषयाः।
जगत्तत्त्वं भूमौ गिरिपुरनदीद्वीपवलयाः, विना पुण्यैर्यद्वत्त्र भवति गतिर्नाकिनगरे॥२॥
इदं ज्योतिःशास्त्रं श्रुतिनयनरूपं सुविदितं दिनेशैर्ल्लोकेशैः प्रथममरचि प्राज्ञसुमतम् ।
जगज्जालं त्वेतद्ग्रथितमखिलं त्वस्ति विततं विविच्यैतो नान्यत्परमिति परावश्यकमिह ॥३॥
समस्तं शब्दादि प्रमितकृतसूत्रार्थंजनितं त्विदं भिन्नैर्भिन्नैर्विषमविषयैरस्ति भरितम् ।
जनैरध्येतव्यं नहि सरलमन्दैः सुकठिनं यतः पाठ्यं दर्भाग्रसदृशधिया धीरधिषणैः ॥४॥

# भूमिका

सूर्येन्द्वग्निविलोचनां त्रिजगतामानन्ददानोद्यतां
दुष्टध्वंसविधिप्रधानविभुतां दुःखाम्बुधेस्तारिणीम् ।
नूत्नाम्भोदनिभां दयार्द्रहृदयां नत्वा जगन्मातरं
सूचीं भूमिकयाऽन्वितां वितनुते गङ्गाधरो मैथिलः ॥

इह जगति सकललोककल्याणाभिलाषिणो ब्रह्मणो वदननिःश्वासादेव चत्वारो वेदाः विनिर्गताः । यदङ्गेषु तावज्ज्यौतिषशास्त्रमेव नयनरूपतया मुख्यतां प्राप्तमस्तीति नापरिचितं विपश्चिताम् । तदुक्तं शिरोमणौ—

"शब्दशास्त्रं मुखं ज्यौतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तं च कल्पः करौ ।
या तु शिक्षाऽस्य वेदस्य सा नासिका पादपद्मद्वयं छन्द आद्यैर्बुधैः ॥
वेदचक्षुः किलेदं स्मृतं ज्यौतिषं मुख्यता चाङ्गमध्येषु तेनोच्यते ।
संयुतोऽपीतरैः कर्णनासादिभिश्चक्षुषाऽङ्गेन हीनो न किञ्चित्करः ॥"

अत एवास्य शास्त्रस्य प्रयोजनं सर्वेषां सदैव पदे पदे जायते । यथा तावद्बालके समुत्पन्ने तदिष्टसमयवशाल्लग्नं रव्यादिग्रहांश्च ज्ञात्वा जन्मकुण्डलीं निर्म्माय तस्याजन्मनः पूर्वजन्मोपार्जितकर्मसंसूचितं शुभाशुभं ज्ञायते; तदुक्तं वराहेण—

"यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिम् ।
व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव ॥"

ततः सकलसंस्कारकर्मसु तत्तद्विहितमुहूर्त्ता अप्यनेनैव शास्त्रेण ज्ञायन्ते । यत्र शुभसमये कृतसंस्कारः साधारणोऽपि बालः स्वस्य परस्यापि सुखाय सौशील्यशाली च भवति । अविहितसमये कृतसंस्कारः सुलक्षणोऽपि जडतां रोगयुक्ततां प्राप्स्यत एव नह्यसौ स्वपरयोः श्रेयसेऽपितु जगतां भारभूत एव जायते ।

एवमेव शुभसमये विवाहिता सुता सुलक्षणा पतिपुत्रवित्तानन्दसन्दोहशालिनी मङ्गलमूर्तिर्जगतां च कल्याणकरी भवति । कुसमये परिणीता वनिता बालवैधव्यमपत्यवञ्चितत्वं दारिद्र्यञ्चावाप्य दुःखैकभाजनं भवति । अत एव शुभसमयस्यावश्यकत्वस्य ज्ञापकत्वेन एतच्छास्त्रावश्यकत्वं कियदिति सर्वविदितमेव । तदुक्तं मुहूर्तचिन्तामणौ—

"भार्या त्रिवर्गकरणं शुभशीलयुक्ता, शीलं शुभं भवति लग्नवशेन तस्याः ।
तस्माद्विवाहसमयः परिचिन्त्यते हि तन्निघ्नतामुपगताः सुतशीलधर्माः ॥" इति ।

अथ कुमुहूर्त्ते ( दिक्शूलमृत्युयोगक्रकचयोगदग्धयोगादौ ) चलितेन कार्यस्यैव वैफल्यं नहि प्राप्यतेऽपितु जीवनसन्देहदशाऽपि । शुभमुहूर्त्ते ( सिद्धियोगचन्द्र-

ताराऽनुकूलदिने ) गच्छन्नभीष्टकार्यस्य साफल्यमारोग्यञ्च लभतेऽत एवैतच्छास्त्रमन्तरा कथमेतत्कल्याणभाजनेन जनेन भूयते ? ।

तथा च शल्यादिसङ्कुलस्थले निवसतां जनधनहानिः, शुद्धधरण्यां निवसतां सकलसुखमिति ज्योतिःशास्त्रमन्तरा कथं तज्ज्ञानसंभवः ? ।

अथैवं रामनवमी-कृष्णजन्माष्टमी-शिवरात्रि-चतुर्दश्याद्युपवासविनिर्णयो विनैतच्छास्त्रं नहि केनाप्येतद्भिन्नशास्त्रसाहित्येन कर्तुं पार्यते ।

अथ चन्द्रसूर्यग्रहण-गोविन्दद्वादशी-कुम्भयोगादिपुण्यपर्वाणि पूर्वतो नहि केनापि विधिना एतच्छास्त्रं विना ज्ञातुं शक्यन्ते ? कथं च तर्हि तत्र तीर्थादौ स्नानदर्शनहेतवे गन्तुं शक्यते धर्मलुब्धकैर्जनैः ? ।

तथा च कस्यचित् क्षयाहः श्रावणशुक्लपञ्चम्यां भवति, तस्यास्मिन् वर्षे कस्मिन् दिने वार्षिकं स्यादिति ज्यौतिषशास्त्रमन्तरा कथमपि न वेत्तुं पार्यते । तदज्ञानात् कर्मलोपात् पातित्यं, पितॄणां नैराश्यञ्च, ततो नराणां सर्वनाशः सम्भाव्यते ।

कदा मलमासः ? कदा च क्षयमासः ? कदा गुरुभृग्वस्तमौढ्यवक्रताप्रयुक्तोऽशुद्धिसमयः ? । कदा च तयोरुदयमार्गत्ववशेन शुद्धसमयः ? । एतत्सकलं ज्योतिःशास्त्रमृते न ज्ञातुं शक्यते, तदाऽशुद्धिसमयेऽपि विवाहादिसंस्कारकरणसंभवाद्धर्मलोपादसंस्कृतस्याभ्युदयः कथमिव भवेदिति विचारणीयो विषयः ।

एवं यदि सर्वे जगद्वर्तिनो गणकाः पञ्चाङ्गनिर्माणविमुखा भवेयुस्तदा सर्वे सनातनधर्मिणो धर्मपथभ्रष्टाः भ्रान्ताः कर्मच्युता अधःपतिता किमिव नहि भविष्यन्ति ? ।

एवञ्च मण्डपरचनायां कुण्डरचनायाञ्च क्षेत्रमिति-त्रिकोणमित्योर्ज्ञानं विना कुण्डमण्डपयोर्याथार्थ्यासम्भवात् कथं तद्वास्तवफलं लभ्यते यज्ञाचरणैर्जनैः ।

एवं दिग्देशकालज्ञापकत्वेनास्य शास्त्रस्य देवपूजनानुष्ठानादीनि कृत्यानि अपि तद्विना न संभवन्ति । तथोक्तं कमलाकरभट्टेन—

"दिग्देशकालाः सकलोपयुक्ता विनेश्वरं याम विदन्ति तज्ज्ञाः ।
ज्ञातुं च तान् गोलसुसूक्ष्मरीत्या" इति ॥ तथा चोक्तं नारदेन—

"विनैतदखिलं कर्म श्रौतं स्मार्त्तं न सिद्ध्यति ।
तस्माज्जगद्धितायैव ब्रह्मणा निर्मितं पुरा ॥

"एवं कश्यपेनाप्युक्तम्—
"ग्रहणग्रहसंक्रान्तियज्ञाध्ययनकर्मणाम् । प्रयोजनं व्रतोद्वाहक्रियाणां कालनिर्णयः ॥"

एवमीदृशस्य जगतां कर्ममात्रसारथेरस्य ज्यौतिषशास्त्रस्य तावत् स्कन्धत्रय-मस्ति; तदुक्तं केनापि—

"सिद्धान्तः संहिता होरा चैतत् स्कन्धत्रयं मतम् ।"

तथा च बृहत्संहितायां स्फुटतयोक्तं मिहिरेण—

"ज्योतिःशास्त्रमनेकभेदविततं स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्र्योपनयस्य नाम मुनिभिः संकीर्त्यते संहिता ।
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ
होराऽन्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ॥"

तत्र होरास्कन्धस्यैव ताजिकसंज्ञकस्तात्कालिकवर्षफलज्ञापको हि प्रभेदोऽस्ति। जन्मपत्रेणाजन्मनः शुभाशुभं फलं, वर्षपत्रेण तु वर्षपर्यन्तस्यैवेति सूक्ष्मकाल-घटितत्वात् सूक्ष्ममिति कथितं ताजिके—

"जातकोदितदशाफलं यतः स्थूलकालफलदं स्फुटं नृणाम् ।
तत्र न स्फुरति दैवविन्मतिस्तद्ब्रुवेऽब्दफलमादिताजिकात् ॥"

तत्र जन्मकुण्डल्यां कष्टदशाऽन्तर्दशासमागमाभावेऽपि वर्षकुण्डल्यां मुथहादि कृतारिष्टयोगे नराणामशुभं भवतीति बहुधाऽनुभूतोऽयं विषयः । अत एतस्य प्रयो-जनं महदिति सर्वं विदितमेवेति ।

अथैतद्विषये समरसिंह–तेजःसिंह–हिल्लाज–वामन–यवनाचार्य-खत्तखुत्त–प्रभृ-तय आचार्याः स्वमत्या ग्रन्थनिर्माणं चक्रुः । तत्र समरसिंहकृतं ताजिकं सर्वप्रधा-नमतएवानेन नीलकण्ठाचार्येण तन्मतमेव बहुधा गृहीतम् ।

अस्य विषयस्य विशेषप्रचारो यवनजातिष्वपि संजात आसीदिति तदाचार्य-नामभिः, तथैतद्ग्रन्थविहितषोडशयोगसंज्ञाभिरपि ज्ञायते। पूर्वसमये यवनराज्यकाले बहूनि पुस्तकानि यवनभाषायामनूदितानि आसन् । सर्वे च तत्कालीना विद्वांसो यव-नभाषां जानन्त एव आसन् । मिथो भाषाशब्दपरिचयार्थं पारसीप्रकाशनाम्ना सुप्रसिद्ध एकः कोषः आसीद्विद्यतेऽद्यापि काशीस्थसरस्वतीभवनसंस्कृतपुस्तकालये-ऽमुद्रितः । यत्र तु—

"पश्चात्तापेऽपशोचः स्यात् प्रत्याशास्तु उमेदहः ।
कपटे मकरः प्रोक्तः खुलासा मुक्तसंज्ञके ।
दुरवस्था सु वेहालः सितावः सर्वकर्मणि ।
अमानतस्तथा न्यासे ग्रामे देहात उच्यते ।

नगरे शहरः प्रोक्तः सौधे तु महलः स्मृतः ॥
स्तुतौ तु साफतारी स्यात् मुख्ये बुजुर्ग उच्यते ।
दस्तगीरुपकारे च रीतौ रेवाज उच्यते ॥
अविनये अदबः प्रोक्तः क्षमायां माफ इत्यपि ।
विज्ञाते चैव मालूमो मूर्खे नादानसंज्ञकः ॥
अदालती राजनीतौ न्याये स्यादिनसाफहः ।
अन्याये जुलुमो ज्ञेयो विद्यायां इलिमः स्मृतः ॥
शुद्धः सही सदा ज्ञेयोऽशुद्धे च गलतः स्मृतः ।
खतं किताबकं लेख्ये उस्तादस्तु गुरौ तथा ॥
शिष्ये शागिरदः प्रोक्तः तालिब् इल्म सुपण्डिते ।
किस्सा चैवेतिहासादौ किताबः काव्यपुस्तके ॥
सौगातः प्रीतिदत्ते च जुर्माना स्याच्च दण्डके ।
अपराधे गुनाहः स्याच्छास्तौ सजायसंज्ञकः ॥
शापे वद्दुआ प्रोक्ता दुआ तु शुभचिन्तने ।
नरो मर्दस्तु विज्ञेयो भोगी अमीर उच्यते ।
औरतिर्धर्मपत्नी च विधवा वेवा प्रकीर्त्तिता ॥" इत्यादि वर्त्तते ।

अथ वर्त्तमानकाले ताजिकग्रन्थेषु नीलकण्ठदैवज्ञेन १५०९ शके रचिता ताजिकनीलकण्ठी एव सर्वमान्या सकलविषयपूर्णा अत एव परीक्षायां पठनपाठने प्रचलिता वर्त्तते ।

तथोक्तं वर्षतन्त्रान्ते-"शाके नन्दाभ्रबाणेन्दुमित आश्विनमासके ।
शुक्लेऽष्टम्यां समातन्त्रं नीलकण्ठबुधोऽकरोत् ॥"

एतस्य निर्माता नीलकण्ठदैवज्ञो विदर्भदेशे (काश्मीरे) प्रायः-१४६६ शकाब्दे गर्गगोत्रे समुत्पन्नः ।

अयं चिन्तामणिदैवज्ञपौत्रोऽनन्तदैवज्ञपुत्रो रामदैवज्ञानुजः आसीत् । अस्यैव पुत्रो गोविन्ददैवज्ञः १४९१ शके समुत्पन्नो निजपितृव्यरामदैवज्ञरचितमुहूर्त्तचिन्तामणेः पीयूषधाराभिधां दर्शनीयां टीकां, १५२५ शके, तथा च नीलकण्ठ्या रसालाभिधां टीकां च कृतवान् । तत्र प्रकृते नीलकण्ठ्या रसाला टीका पूर्वं शिलाक्षरे मुद्रिताऽऽसीदिदानीमलभ्यप्रायेव वर्त्तते । तथा सिद्धान्ततत्त्वविवेककर्तृकमलाकरदैवज्ञपितामहसहजेन श्रीविश्वनाथदैवज्ञेन १५५१ शकाब्दे कृता परमरमणीया टीका वर्त्तते । साम्प्रतं मुद्रिता सर्वत्रोपलभ्यते । तदुक्तं वर्षतन्त्रान्ते—

॥ इति ॥

श्री१०८ कालिकायै नमः ।

# ताजिकनीलकण्ठी

## जलदगर्जनाभिधसंस्कृतटीकया, गूढग्रन्थिमोचन्यभिधया वासनया, तथोदाहरणचन्द्रिकया भाषाटीकया च सहिता

टीकाकर्तृमङ्गलाचरणम्—

श्यामापदाब्जयुगलं हृदि सन्निधाय
भक्त्या गुरोः पदयुगं मतिदं प्रणम्य ।
भाषायुतां सुरगिरा विवृतिं सयुक्तिं
गङ्गाधरो वितनुते किल नीलकण्ठ्याः ॥ १ ॥
दिक्प्रान्तोन्नतनीलनीरदरवं श्रुत्वा गुहाऽन्तस्ततो-
निर्गत्य द्रुतमेव नृत्यति मुदाऽग्रे नीलकण्ठी यथा ।
तद्वन्मत्कृतदेवहिन्दुलपितैरर्थैः सुयुक्त्याऽन्वितैः
व्यक्तान्तर्गतवासना जनहृदि द्राग्बोधदा नृत्यतु ॥ २ ॥
दोषदर्शनमिषेण दुर्जनाः सज्जना गुणदिदृक्षया मुहुः ।
वीक्ष्य मोदमतुलं प्रयान्तु ते तेन मेऽपि परमं सुखं भवेत् ॥ ३ ॥

## अथ संज्ञातन्त्रम् ।

अथ निर्विघ्नग्रन्थसमाप्त्यर्थं मङ्गलमाचरन् चिकीर्षितं प्रतिजानीते—

**प्रणम्य हेरम्बमथो दिवाकरं गुरोरनन्तस्य तथा पदाम्बुजम् ।**
**श्रीनीलकण्ठो विविनक्ति सूक्तिभिस्तत्ताजिकं सूरिमनःप्रसादकृत् ॥ १ ॥**

**सं० टी०**—श्रीनीलकण्ठः = चिन्तामणिदैवज्ञपौत्रोऽनन्तदैवज्ञपुत्रो रामदैवज्ञाग्रजः सकलशास्त्रबोधविभवशोभाविभूषितो नीलकण्ठदैवज्ञः, हेरम्बं = गणेशं ( हे शिवे रम्बते इति हेरम्बस्तं ) प्रणम्य = निर्विघ्नप्रारीप्सितग्रन्थपूर्त्तिकामनयाऽऽदौ प्रणामं कृत्वा, अथो = तदनन्तरं दिवाकरम् = दिनकरं, ज्यौतिषशास्त्रमुख्याङ्गकाल-

ज्ञापकत्वेन च सूर्यं प्रणम्य, तथा = येन भावेन गणेशसूर्ययोः प्रणमनं, तेनैव भावेन, अनन्तस्य = अनन्तदैवज्ञनामकस्य, गुरोः = पितुर्विद्यादातुश्च, पदाम्बुजम् = चरणकमलं, प्रणम्य, सूरिमनःप्रसादकृत् = सकलविद्वन्मनोविनोददायकमभिनवं, सूरयः पण्डितास्तेषां मनांसि, सूरिमनांसि सूरिमनसां प्रसादः प्रसन्नतेति सूरिमनःप्रसादस्तं करोतीति तत् सूरिमनःप्रसादकृत् तत् = समरसिंहादिकृतं, यत्ताजिकं = तात्कालिकफलज्ञापकं वर्षफलबोधकपुस्तकं वा तत् सूक्तिभिः = उत्कृष्टवचनैः, पूर्वाचार्यमतालोचनपूर्वकसदर्थप्रतिपादकचारुवचोरचनानिचयैः, विविनक्ति = प्रकाशयति ॥ १ ॥

भाषा—श्रीयुक्त नीलकण्ठ नाम का आचार्य पहले गणेशजी को प्रणामकर बाद सूर्य भगवान् को प्रणाम कर, वैसे अनन्तदैवज्ञ नाम के गुरु ( पिता ) के चरण कमल को प्रणाम कर के, विद्वानों के मन को प्रसन्न करने वाले, उस प्राचीन समर सिंह आदि आचार्य से बनाये हुए ताजिकग्रन्थ ( वर्ष फल बोधक ग्रन्थ ) को अच्छी उक्तियों ( वचनों ) से प्रकाशित करता है ॥ १ ॥

अथ द्वादशराशिस्वरूपमाह—तत्रादौ मेषस्य—

**पुमांश्चरोऽग्निः सुदृढश्चतुष्पाद्रक्तोष्णपित्तोऽतिरवोऽद्रिरुग्रः ।**
**पीतो दिनं प्राग्विषमोदयोऽल्पसङ्गप्रजो रूक्ष-नृपः समोऽजः ॥ २ ॥**

**सं० टी०**—अजः = मेषराशिः, पुमान् = पुरुषराशिः, सर्वे विषमसंख्यकाः पुरुषसंज्ञकाः । सर्वे समसंख्यका राशयः स्त्रीसंज्ञकाः । चरः = चरसंज्ञकः, अग्निः = अग्नितत्वात्मकः । सुदृढः = अतिदृढाङ्गः । चतुष्पात् = चतुष्पदः । रक्तः = रक्तवर्णः । उष्णः = उष्णप्रकृतिः । पित्तः = पित्तात्मकः । अतिरवः = उच्चैः शब्दकरः । अद्रिः= पर्वतचरः, उग्रः = क्रूरः, पीतः = पीतवर्णः । दिनं = दिनबली, प्राक् = पूर्वदिक्स्वामी, विषमोदयः, = वक्रोदयः, अल्पसङ्गप्रजः = परिमितप्रजासङ्गः, रूक्षः = विवर्णः, कान्तिरहितः, नृपः = क्षत्रियवर्णः, समः = समविभक्ताङ्गः भवति ॥ २ ॥

**भाषा—मेषराशि, पुरुष, चरसंज्ञक, अग्नितत्त्व, दृढाङ्ग, चतुष्पद, रक्तवर्ण, गर्मस्वभाववाला, पित्तात्मक, अत्यन्त शब्द करने वाला, पर्वतचारी, क्रूरसंज्ञक, पीतवर्ण, दिनबली, पूर्वदिशा का स्वामी, विषमोदय, सङ्ग में थोड़े सन्तान वाला, कान्तिरहित, क्षत्रिय जाति, समाङ्ग ( न तो छोटा न तो बहुत बड़ा ) ऐसा है ॥ २ ॥**

अथ वृषराशिस्वरूपमाह—

**वृषः स्थिरः स्त्री-क्षिति-शीत-रूक्षो याम्येट् सुभू-वायु-निशा-चतुष्पात् ।**
**श्वेतोऽतिशब्दो विषमोदयश्च मध्यप्रजा-सङ्ग-शुभाऽपि वैश्यः ॥ ३ ॥**

**सं० टी०**—वृषः ( वृषराशिः ), स्थिरः ( स्थिरसंज्ञकः ) । स्त्री = स्त्रीराशिः । क्षितिः = भूमिचारी । शीतः = शीतलस्वभावः । रूक्षः = कान्तिरहितः । याम्येट् = दक्षिणदिक्स्वामी । सुभूः = उत्कृष्टभूमिचारी । वायुः = वायुतत्त्वः । निशा = रात्रिबली । चतुष्पाद् = चतुष्पदः । श्वेतः = उज्ज्वलवर्णः । अतिशब्दः = उच्चस्वरः । विषमोदयः = अल्पोदयः । मध्यप्रजासङ्गः = साधारणपरिजनपरिवृतः । शुभः = शुभराशिः । वैश्यः = वैश्यजातिकः । ईदृशो ज्ञातव्यः ॥ ३ ॥

**भाषा**—वृषराशि, स्थिरसंज्ञक, स्त्रीराशि, पृथ्वीतत्त्व, ठण्ढी प्रकृति, विवर्ण, दक्षिणदिशाका स्वामी, अच्छी जमीनमें चलने वाला, वातात्मक, रात्रिमें बली, चतुष्पद, स्वच्छवर्ण, जोरसे शब्द करनेवाला । विषम उदय वाला मामूली प्रजा साथवाला, शुभराशि, वैश्यजाति है ॥ ३ ॥

अथ मिथुनराशिस्वरूपमाह—

**प्रत्यक् समीरः शुकभा द्विपान्ना द्वन्द्वं द्विमूर्तिर्विषमोदयोष्णः ।**
**मध्यप्रजासङ्ग-वनस्थ-शूद्रो दीर्घस्वनः स्निग्ध-दिनेट् तथोग्रः ॥४॥**

**सं० टी०**—द्वन्द्वं ( मिथुनराशिः ) प्रत्यक्=पश्चिमदिशापतिः, समीरः = वायुतत्त्वात्मकः, शुकभाः = शुकपक्षिसमवर्णः = हरितवर्णः, द्विपात् = द्विपदः = मानवः । ना = पुरुषराशिः । द्विमूर्त्तिः = द्विःस्वभावसंज्ञः । विषमोदयः, उष्णः = घर्मस्वभावः । मध्यप्रजासङ्गः = परिमितसन्ततिसङ्गः । वनस्थः = वनचारी, शूद्रः = शूद्रजातिकः । दीर्घस्वनः = उच्चस्वरः, स्निग्धः = चिक्कणकान्तिः । दिनेट् = दिनबली । तथा उग्रः = क्रूरसंज्ञकः । ईदृशो भवति ॥ ४ ॥

**भाषा**—मिथुनराशि, पश्चिमदिशाका स्वामी है, और वायुतत्त्व, शुग्गाके समान हरित वर्ण, द्विपद, पुरुषराशि, द्विःस्वभावसंज्ञक, विषमोदय, गर्मप्रकृति, साधारण है सङ्गमें प्रजा, और वनचर, शूद्रजाति, बड़े जोरसे शब्द करनेवाला, चिकनी कान्तिवाला, दिनमें बली, और क्रूरसंज्ञक है ॥ ४ ॥

अथ कर्कराशिस्वरूपमाह—

**बहुप्रजासङ्गपदः कुलीरश्चरोऽङ्गना पाटल-हीनशब्दः ।**
**शुभः कफी स्निग्ध-जलाम्बुचारी समोदयो विप्र-निशोत्तरेशः ॥५॥**

**सं० टी०**—कर्कटराशिः, बहुप्रजासंगपदः = अधिकसन्ततिसहितोऽधिकचरणश्च, चरः = चरसंज्ञः । अङ्गना = स्त्रीराशिः, पाटलः = किंचिद्रक्तवर्णः । हीनशब्दः = मन्दस्वरः । शुभः = शुभराशिः । कफी = कफात्मकः, जलचरत्वात् ।

स्निग्धः = चिक्कणकान्तिः । जलम् = जलतत्त्वात्मकः । अम्बुचारी = जलचरः । समोदयः = नात्यल्पनात्यधिकोदयः । विप्रः = ब्राह्मणवर्णः । निशा = रात्रिबली, उत्तरदिक्स्वामी । ईदृशो ज्ञेयः ॥ ५ ॥

भाषा—कर्कराशि-बहुत प्रजा संग वाला, बहुत चरण वाला, चरसंज्ञक, स्त्री राशि, पाटल ( थोड़ा लाल वर्ण ), मन्दस्वर, शुभराशि, कफात्मक, चिकना, जलतत्त्व, जलचारी, समोदय, ब्राह्मणवर्ण, रात्रिबली, उत्तरदिशा का स्वामी, ऐसा है ॥ ५ ॥

अथ सिंहराशिस्वरूपमाह—

**पुमान् स्थिरोऽग्नि-दिन-पीत-रूक्षः पित्तोष्ण-पूर्वेश-दृढश्चतुष्पात् ।**
**समोदयो-दीर्घरवोऽल्पसङ्गप्रजो हरिः शैल-नृपोग्र-धूम्रः ॥ ६ ॥**

**सं० टी०**—हरिः = सिंहराशिः, पुमान् = पुरुषराशिः, स्थिरः = स्थिरसंज्ञकः, अग्निः = अग्नितत्त्वात्मकः । दिनम् = दिनबली, पीतः = पीतवर्णः, रूक्षः = विवर्णः । पित्तः = पित्तात्मकः, उष्णः = ऊष्मस्वभावः । पूर्वेशः = पूर्वदिक्पतिः । दृढः = दृढाङ्गः, चतुष्पात् = चतुष्पदः । समोदयः = मध्यमोदयः, दीर्घरवः = उच्चैःस्वरः । अल्पसंगप्रजः = स्वल्पसंगसन्तानः, शैलः = शैलचारी, नृपः = क्षत्रियजातिः । उग्रः = क्रूरसंज्ञः, धूम्रः = धूम्रसमवर्णः । ईदृशो विज्ञेयः ॥ ६ ॥

भाषा—सिंह राशि, स्थिरसंज्ञक, अग्नितत्त्व, दिनबली, पीतवर्ण, कान्तिरहित, पित्तप्रकृति, गर्मस्वभाव, पूर्वदिशा का स्वामी, दृढाङ्ग, चतुष्पाद, समोदय, जोर से शब्द करने वाला, थोड़ी प्रजा है सङ्ग में जिसको ऐसा, और पर्वतचारी, क्षत्रियजाति, क्रूरसंज्ञक, धूम्रवर्ण ऐसा है ॥ ६ ॥

अथ कन्याराशिस्वरूपमाह—

**पाण्डुर्द्विपात् स्त्री द्वितनुर्यमाशा निशा मरुच्छीत-समोदयक्ष्मा ।**
**कन्याऽर्धशब्दा शुभभूमिवैश्या रूक्षाऽल्पसंगप्रसवा शुभा च ॥७॥**

**सं० टी०**—कन्याराशिः, पाण्डुः = ईषत्पीतवर्णा । स्त्री = स्त्रीराशिः । द्वितनुः = द्विःस्वभावसंज्ञका । यमाशा = दक्षिणदिक्पतिः । निशा = रात्रिबला । मरुत् = वायुतत्त्वात्मिका । शीतः = शीतलप्रकृतिः । समोदयः = मध्यमोदया, क्ष्मा = भूमिचारी, अर्धशब्दा = खण्डितरवा, शुभभूमिः = शुभभूमिचारिणी ... ... ... वैश्या = वैश्यवर्णा, रूक्षा = विवर्णा, अल्पसंगप्रसवा = स्वल्पसन्ततिसंगा, शुभा = शुभराशिः, ईदृशी विज्ञेया ॥ ७ ॥

भाषा—कन्याराशि पाण्डु (फीका पीला) वर्ण, स्त्रीराशि, द्विःस्वभावसंज्ञक, दक्षिणदिशा का स्वामी, रात्रिबली, वायुतत्त्व, शीतलस्वभाव, समोदय, भूमिचारी, थोड़ा शब्द करने वाला, पवित्र भूमिचारी, शुभराशि, वैश्यवर्ण, रूक्ष (कान्ति-रहित), थोड़ी सन्तान वाली, शुभराशि है ॥ ७ ॥

अथ तुलाराशिस्वरूपमाह—

पुमांश्चरश्चित्र-समोदयोष्णः प्रत्यङ् मरुत् स्निग्ध-रवोन-वन्यः ।
स्वल्पप्रजासङ्गम-शूद्र उग्रस्तुलो द्युवीर्यो द्विपदः समानः ॥ ८ ॥

सं० टी०—तुलाराशिः, पुमान् = पुरुषराशिः, चरः = चरसंज्ञकः, चित्रः = चित्रवर्णः । समोदयः = मध्यममानोदयः, उष्णः = उष्णस्वभावः, प्रत्यक = पश्चिम-दिक्स्वामी, मरुत् = वायुतत्वः, स्निग्धः = चिक्कणः, रवोनः = हीनशब्दः, वन्यः = वनचरः, स्वल्पप्रजासङ्गमः = परिमितसन्ततिसहितः, शूद्रः = शूद्रवर्णः, उग्रः = क्रूरः, द्युवीर्यः = दिनबली, द्विपदः=मनुष्यराशिः । समानः = नातिदीर्घः नातिह्रस्वः । ईदृशो भवति ॥ ८ ॥

भाषा—तुलाराशि पुरुष, चरसंज्ञक, चित्रवर्ण, समोदय, गर्मप्रकृति वाला, पश्चिम दिशा का स्वामी, वायुतत्त्व, चिकना, थोड़ा शब्द वाला, वनचर, थोड़ी प्रजा सङ्ग में है जिसे ऐसा, शूद्र वर्ण, क्रूर राशि, दिनबली, द्विपद, समान (न तो बहुत बड़ा न तो बहुत छोटा) ऐसा है ॥ ८ ॥

अथ वृश्चिकराशिस्वरूपमाह—

स्थिरः सितः स्त्री जलमुत्तरेशो निशारवोनो बहुपात् कफी च ।
समोदयो वारिचरोऽतिसङ्गप्रजः शुभः स्निग्धतनुर्द्विजोऽलिः ॥ ९ ॥

सं० टी०—अलिः = वृश्चिकराशिः, स्थिरः = स्थिरसंज्ञकः, सितः = स्वच्छ-वर्णः, स्त्री = स्त्रीराशिः । जलम् = जलतत्त्वात्मकः, उत्तरेशः = उत्तरदिक्पतिः । निशा = रात्रिबली, रवोनः = हीनशब्दः । बहुपात् = बहुपदः, कफी = कफात्मकः । समोदयः, समानोदयः, वारिचरः = जलचरः । अतिसङ्गप्रजः = बहुप्रजासङ्गः, शुभ-राशिः, स्निग्धतनुः = चिक्कणदेहः, द्विजः = ब्राह्मणवर्णः, ईदृशो भवति ॥ ९ ॥

भाषा—वृश्चिकराशि-स्थिरसंज्ञक, स्वच्छवर्ण, स्त्रीराशि, जलतत्त्व, उत्तर दिशा का स्वामी, रात्रिबली, थोड़ा शब्द वाला, अधिक पांव वाला, कफात्मक, समोदय, जल चर, बहुत प्रजा है साथ जिसे ऐसा, शुभराशि, चिकनी कान्ति वाला, ब्राह्मण वर्ण ऐसा है ॥ ९ ॥

अथ धनूराशिस्वरूपमाह—

**ना स्वर्णभाः शैल-समोदयोऽतिशब्दो दिनं प्राग् दृढ-रूक्ष-पीतः ।**
**राजोष्ण-पित्तो धनुरल्पसूतिसंगो द्विमूर्तिर्द्विपदोऽग्निरुग्रः ॥ १० ॥**

सं० टी०—धनूराशिः, ना = पुरुषसंज्ञः, स्वर्णभाः, = काञ्चनवर्णः, शैलः = शैलचारी = पर्वतप्रदेशसञ्चरणशीलः, समोदयः = मध्यमोदयः, अतिशब्दः = दीर्घध्वनिकरः, दिनं = दिनबली, प्राक् = पूर्वदिक्स्वामी, दृढः = दृढाङ्गः, रूक्षः = कान्तिरहितः, पीतः = पीतवर्णः । राजा = क्षत्रियः, उष्णम् = उष्णप्रकृतिकः । पित्तः = पित्तात्मकः, अल्पसूतिसंगः = स्वल्पसन्तानसंयुतः, द्विमूर्त्तिः = द्विःस्वभावः, अग्निः = अग्नितत्त्वात्मकः, उग्रः = क्रूरः, विषमसंख्यकराशित्वात् ॥ १० ॥

भाषा—धनु राशि, पुरुष है, सोने के समान वर्ण वाला है । पर्वतचारी, समोदय, ज्यादे शब्द करने वाला, दिन में बली, पूर्व दिशा का स्वामी, मजबूत शरीर है, कान्ति रहित है । पीला वर्ण है । क्षत्रिय जाति, गर्म स्वभाव वाला, थोड़ी सन्तान वाला, द्विः स्वभाव, और अग्नितत्त्व, क्रूर संज्ञक है ॥ १० ॥

अथ मकरराशिस्वरूपमाह—

**मृगश्चरः क्ष्माऽर्धरवो यमाशा–स्त्री–पिङ्ग–रूक्षः शुभ-भूमि-शीतः ।**
**स्वल्पप्रजासङ्ग–समीर-रात्रिरादौ चतुष्पाद् विषमोदयो विट् ॥ ११ ॥**

सं० टी०—मृगः = मकरराशिः, चरः = चरसंज्ञकः, क्ष्मा = भूमितत्त्वात्मकः । अर्धरवः = खण्डितशब्दः, यमाशा = दक्षिणदिक्स्वामी, स्त्री = स्त्रीराशिः, पिङ्गः = पिङ्गलवर्णः, रूक्षः = कान्तिरहितः, शुभः = शुभराशिः, भूमिः = भूमिचारी, शीतः = शीतलप्रकृतिः । स्वल्पप्रजासङ्गः = अल्पसन्ततियुतः, समीरः = वायुतत्वात्मकः, रात्रिः = रात्रिबली, आदौ चतुष्पाद् = पूर्वार्धचतुष्पादः, विषमोदयः = स्वल्पोदयः, विट् = वैश्यजातिः, ईदृशो भवति ॥ ११ ॥

भाषा—मकरराशि–चरसंज्ञकः, भूमितत्त्व, थोड़े शब्द वाला, दक्षिण दिशा का स्वामी, स्त्री राशि, पीला वर्ण, कान्ति रहित, शुभराशि, भूमिचारी, शीतलस्वभाव वाला, थोड़ी है प्रजा संग में जिसको ऐसा, वायुतत्त्व, रात्रि बली, पूर्वार्ध में चतुष्पद (उत्तरार्ध द्विपद) विषमोदय, वैश्यवर्ण ऐसा होता है ॥ ११ ॥

अथ कुम्भराशिस्वरूपमाह—

**कुम्भोऽपदो ना दिन-मध्यसङ्गप्रसूः स्थिरः कर्बुर-वन्य-वायुः ।**
**स्निग्धोष्ण–खण्डस्वर–तुल्यधातुः शूद्रः प्रतीची विषमोदयोग्रः ॥ १२ ॥**

**सं० टी०**—कुम्भः = कुम्भराशिः, अपदः = चरणवर्जितः, ना = पुरुषराशिः, दिनं = दिनबली, मध्यस प्रसूः = मध्यमप्रजः, स्थिरः = स्थिरसंज्ञः, कर्बुरः = चित्रवर्णः, वन्यः = वनचरः, वायुः = वायुतत्त्वात्मकः, स्निग्धः = चिक्कणकान्तिः, उष्णः = उष्णप्रकृतिः, खण्डस्वरः = हीनशब्दः, तुल्यधातुः = समवातपित्तकफः, शूद्रः = शूद्रवर्णः, प्रतीची = पश्चिमदिक्स्वामी, विषमोदयः, उग्रः = क्रूरराशिः । ईदृशो भवति ॥ १२ ॥

**भाषा**—कुम्भराशि चरण हीन है, पुरुषराशि, दिनबली, मामूली थोड़ी है सङ्ग में प्रजा जिसको ऐसा, और स्थिर संज्ञक, चित्रवर्ण, वनचर, वायुतत्त्व, चिकनी कान्ति, गर्मस्वभाव का, थोड़ा शब्द वाला, वात पित्त कफ तीनों समान वाला, शूद्र वर्ण, पश्चिमदिशा का स्वामी, विषमोदय, क्रूरसंज्ञक, ऐसा है ॥ १२ ॥

अथ मीनराशिस्वरूपमाह—

**मीनोऽपदः स्त्री कफ-वारि-रात्रि-निःशब्द-बभ्रुर्द्वितनुर्जलस्थः ।**
**स्निग्धोऽतिसङ्गप्रसवोऽपि विप्रः शुभोत्तराशेड् विषमोदयश्च ॥ १३ ॥**

**सं० टी०**—मीनः = मीनराशिः, अपदः = पदहीनः, स्त्री = स्त्रीराशिः, कफः = कफात्मकः, वारि = जलतत्त्वात्मकः, रात्रिः = रात्रिबली, निःशब्दः = हीनशब्दः, बभ्रुः = नकुलवर्णः, द्वितनुः = द्विःस्वभावसंज्ञकः । जलस्थः = जलवर्त्ती, जलचरः, स्निग्धः = चिक्कणदेहः । अतिसङ्गप्रसवः = अधिकसन्ततियुक्तः, विप्रः = ब्राह्मणवर्णः, शुभः = शुभराशिः, उत्तराशेट् = उत्तरदिक्पतिः, विषमोदयः च ईदृशो भवति ॥ १३ ॥

**भाषा**—मीनराशि चरणरहित है, स्त्री राशि, कफात्मक, जलतत्त्व, रात्रिबली, शब्दहीन, न्यौले के समान भूरा वर्ण, द्विःस्वभाव, जलचर, चिकना और अधिक सन्तान युक्त, ब्राह्मण वर्ण, शुभराशि, उत्तरदिशा का स्वामी, विषमोदय, ऐसा है ॥ १३ ॥

**विशेषविवरण**—

काल महापुरुष का जो भचक्र स्वरूप है, उसका समान समान विभाग ही मेषादि द्वादश राशियां होते हैं । और उस भचक्र के जो बराबर सत्ताइस विभाग ( हिस्से ) होते हैं, वे ही अश्विन्यादि सत्ताइस नक्षत्र हैं । यहां १२ राशियों में २७ नक्षत्र होते हैं, तो १ राशि में क्या ? इस अनुपात से १ राशि में नक्षत्र का मान $= \frac{२७ \times १}{१२} = २ + \frac{१}{४} +$ हुआ अर्थात् अश्विनी, भरणी पूर्ण—२ कृत्तिका का १ चरण इतने मेषराशि में होते हैं । एवं कृत्तिका का तीन चरण रोहिणी का चार, मिलाकर

सात हुए, अब इसमें मृगशिरा के दोही देने से नौ चरण होंगे, इतने वृष राशि होते हैं। ऐसे मृगशिरा का दो चरण आर्द्रा का चार छै हुए, अब पुनर्वसू के तीन चरण ही देने से नौ होंगे, इसलिये पुनर्वसू के तीन चरण पर्यन्त ही मिथुन राशि है। इसी प्रकार पुनर्वसू का शेष एक चरण, पुष्य का चार आश्लेषा के चार मिलने पर नौ होते हैं, इसलिये, आश्लेषान्त कर्क होते हैं। ऐसे ही और राशि को भी समझना। लेकिन आकाश में जो अनगिन तारायें देखने में आतीं हैं। उसमें भचक्र (क्रान्तिवृत्त) के निकटवर्त्ती नक्षत्रों से राशियों का स्वरूप संज्ञा वर्णित है। जैसे द्वादशविभागों में प्रथम विभाग के नक्षत्रों में एक से दूसरे में लगाकर सूत्र बान्हने से मेष (भेड़ा) का आकार बनता है। इस लिये इस प्रथम का नाम मेष पड़ा। इस प्रकार और २ राशियों के स्वरूप सिद्ध नाम पड़े, और भचक्र ही काल पुरुष का स्वरूप है, उसी का द्वादश विभाग ही कालपुरुष के अङ्ग हैं, जैसे वामन पुराण के ९ वें अध्याय में लिखा है।

नारद उवाच।

कालरूपी त्वयाऽऽख्यातः शम्भुर्गगनगोचरः।
लक्षणं च स्वरूपं च सर्वं व्याख्यातुमर्हसि॥ २९॥

पुलस्त्य उवाच।

स्वरूपं त्रिपुरघ्नस्य वदिष्ये कालरूपिणः।
येनाम्बरं मुनिश्रेष्ठ! व्याप्तं लोकहितेप्सुना॥ ३०॥
यत्राश्विनी च भरणी कृत्तिकायास्तथांऽशकः।
मेषो राशिः कुजक्षेत्रं तच्छिरः कालरूपिणः॥ ३१॥
आग्नेयांशास्त्रयो ब्रह्मन्! प्राजापत्यं कवेर्गृहम्।
सौम्यार्धं वृषनामेदं वदनं परिकीर्त्तितम्॥ ३२॥
मृगार्धमार्द्राऽदित्यांशास्त्रयः सौम्यगृहं त्विदम्।
मिथुनं भुजयोस्तस्य गगनस्थस्य शूलिनः॥ ३३॥
आदित्यांशश्च पुष्यश्च आश्लेषा शशिनो गृहम्।
राशिः कर्कटको नाम पार्श्वे मखविनाशिनः॥ ३४॥
पित्र्यर्क्षं भगदैवत्यमुत्तरांशश्च केशरी।
सूर्यक्षेत्रं विभोर्ब्रह्मन्! हृदयं परिगीयते॥ ३५॥
उत्तरांशास्त्रयः पाणिश्चित्रार्धं कन्यका त्विदम्।
सोमपुत्रस्य सद्मैतद्द्वितीयं जठरं विभो॥ ३६॥

चित्रांशद्वितयं स्वातिर्विशाया अंशकत्रयम् ।
द्वितीय शुक्रसदनं तुला नाभिरुदाहृता ॥ ३७ ॥
विशाखांशश्चानुराधं ज्येष्ठा भौमगृहं त्विदम् ।
द्वितीयो वृश्चिको राशिर्मेढ्रं कालस्वरूपिणः ॥ ३८ ॥
मूलं पूर्वोत्तरांशश्च देवाचार्यगृहं त्विदम् ।
ऊर्वोर्युगलमीशस्यापरार्धं च प्रगीयते ॥ ३९ ॥
उत्तरांशास्त्रयर्क्षं च श्रवणं मकरो मुने ।
धनिष्ठाऽर्धं शनिक्षेत्रं जानुनी परिकीर्त्तिते ॥ ४० ॥
धनिष्ठाऽर्धं शतभिषा प्रौष्ठपादांशकत्रयम् ।
सौरेः सद्मापरमिदं कुम्भो जङ्घे च विश्रुते ॥ ४१ ॥
प्रोष्ठपादांश एकस्तु उत्तरा रेवती तथा ।
द्वितीयं जीवसदनं मीनस्तच्चरणावुभौ ॥ ४२ ॥
एवं कृत्वा कालरूपं त्रिनेत्रो यश क्रोधान्मार्गणै राजधान ।
विद्धश्चासौ वेदनाबुद्धियुक्तः खे सन्तस्थौ तारकाभिश्चिताङ्गः ॥
अतः परं राशिस्वरूपं नक्षत्रस्वरूपं च तत्र वर्त्तते । इति ॥

एवं राशिस्वरूपमुक्त्वेदानीं राशीनां मित्राऽमित्रविभागमाह—

**धराम्बुनोरग्निसमीरयोश्च वर्गे सुहृत्त्वं परतोऽरिभावः ।**
**चापान्त्यभागस्य चतुष्पदत्वं ज्ञेयं मृगान्त्यस्य जलेचरत्वम् ॥ १४ ॥**

**सं० टी०**—धराम्बुनोः = भूमिजलतत्वात्मकराश्योः (यथा वृषकर्कयोः) अग्निसमीरयोः = वह्निवाय्वोः, = अग्निवाततत्वात्मकयो राश्योः (यथा मेषमिथुनयोः) वर्गे = समुदाये, सुहृत्त्वं = मित्रत्वं, ज्ञेयम्, परतः = एतद्भिन्नतत्त्वयोः, यथा अग्नि जलयोः, (मेषकर्कयोः), भूमिवाय्वोः, (वृषमिथुनयोः) अरिभावः = शत्रुत्व ज्ञेयम् । चापान्त्यभागस्य = धनुरुत्तरार्धभागस्य, चतुष्पदत्वं, तथा मृगान्त्यस्य = मकरोत्तरार्धस्य जलेचरत्वं विज्ञेयम् । अर्थात् "ना स्वर्णभाः... ॥ १० ॥' इति धनुः-स्वरूपप्रतिपादकपद्ये 'द्विपदः' यदुक्तं तत्पूर्वार्धस्यैव । एवं "मृगश्चरः क्ष्मा,... ॥ ११ ॥ इति मकरराशिस्वरूपप्रतिपादकश्लोके 'आदौ चतुष्पात् = पूर्वार्धभागश्चतुष्पद' इतिस्पष्टमुक्तम् । उत्तरार्धस्य लक्षणं नोक्तं, तदनेन स्पष्टीकृतम् । वस्तुतो मकरस्य जलचरहिंस्रजन्तुविशेषस्यार्धशरीरं जलादुपरि बहुधा दृश्यते । पुच्छमदन्त्यभागो

जलान्तः, अतएवोत्तरार्धस्यैव जलचरत्वमुक्तमाचार्यैः ॥ १४ ॥

भाषा—भूमितत्त्व, जलतत्त्व वाले राशिओं में (जैसे, वृष, कर्क राशियों में) आपस में मित्रता, समझनी चाहिये। और अग्नितत्त्व, वायुतत्त्व राशियों में भी मित्रता, जैसे धनु, तुला इन दोनों में भी मित्रता समझनी चाहिये। इसके भिन्न तत्त्व वाले राशियों में, या भूतत्त्व, वायुतत्त्व वाले राशियों में शत्रुता कहनी चाहिये। और धनु का उत्तरार्ध जलचर है ॥ १४ ॥

अथोक्तराशिस्वरूपस्य फलकथनार्थं सङ्क्षेपेण किञ्चित्स्वरूपमाह—

**पित्तानिलौ धातुसमः कफश्च त्रिर्मेषतः सूरिभिरूहनीयाः।**
**राजन्य-विट्-शूद्र-धरासुराश्च सर्वं फलं राश्यनुसारतः स्यात् ॥ १५ ॥**

सं० टी०—मेषतः = मेषमारभ्य ततः, त्रिः = त्रिरावृत्त्या, सूरिभिः = विज्ञैः, पित्तानिलौ धातुसमः कफः एते ऊहनीयाः, यथा मेषः पित्तात्मकः, वृषो वातात्मकः, मिथुनं = धातुत्रययुक्तम्, कर्कः कफात्मकः। इत्येकावृत्तिः पुनः सिंहः पित्तात्मकः। कन्या = वायुतत्त्वा, तुला = धातुत्रययुक्ता, वृश्चिकः = कफात्मकः। इत्थं द्वितीयावृत्तिः। तथा धनुः पित्तात्मकः, मकरः = वातात्मकः, कुम्भः = धातुत्रयदोषवान्, मीनः = कफात्मकः। इति तृतीयावृत्तिः। एवं सिद्धेनार्थेन पूर्वदिक्पतयो वृषकन्यामकरराशयः वैश्याः वायुतत्त्वात्मकाः। पश्चिमदिक्पतयः = मिथुनतुलाकुम्भराशयः कफपित्तवातेतिदोषत्रयात्मकाः शूद्राः। कर्कवृश्चिकमीनराशयः उत्तरदिक्पतयो विप्राः कफात्मकश्चेति निष्पन्नम्। तथा राजन्यविट्शूद्रधरासुराश्च मेषतस्त्रिरावृत्त्या विज्ञेयाः। यथा मेषः क्षत्रियः। वृषो वैश्यः। मिथुनराशिः शूद्रः। कर्को ब्राह्मणः, एवं शेषेष्वपि ॥ १५ ॥

भाषा—मेष से तीन आवृत्ति के क्रमसे पित्त, वायु, सम-कफ पित्त वायु और कफ ये पण्डितों से समझना चाहिये-जैसे मेष का पित्त, वृष का वायु, मिथुन का वातपित्त कफ बराबर, कर्क का कफ, इस तरह फिर सिंह का पित्त, कन्या वायु, तुला का त्रिदोष, वृश्चिक का कफ, इस तरह मेष सिंह धनु ये राशियों का दोष पित्त, और जाति क्षत्रिय है। वृष कन्या मकर ये सब वायुदोष वाले, और वैश्यजाति के हैं। मिथुन तुला, कुम्भ ये तीन वातपित्त कफ ये तीनों दोषयुक्त हैं, और शूद्र जातिके हैं। कर्क, वृश्चिक, मीन ये तीन कफात्मक, ब्राह्मणवर्ण हैं। इस प्रकार सब फल (चौरों के वर्ण, जाति, स्वभाव, दिशा आदि) जातकों के शील गुण प्रकृति आदि राशियों के अनुसार से ही होते हैं ॥ १५ ॥

अथाग्रिमवर्षप्रवेशवारादिसाधनमाह—

**गताः समाः पादयुताः प्रकृतिघ्नसमागणात् ।**
**खवेदा ४०प्तघटीयुक्ता जन्मवारादिसंयुताः ।**
**अब्दप्रवेशे वारादि सप्ततष्टेऽत्र निर्दिशेत् ॥ १६ ॥**

**सं० टी०**—गताः = अतीताः, समाः = हायनाः, गतवर्षसंख्या इत्यर्थः पादयुताः = स्वचतुर्थांशयुक्ताः कार्याः । प्र कृतिघ्नसमागणात् = एकविंशतिगुणितगतवर्षसमूहाङ्कात् , खवेदाप्तघटीयुक्ताः = चत्वारिंशद्भजनलब्धफलरूपदण्डादिमानसहिताः, जन्मवारादिसंयुताः = जन्मकालिकदिनदण्डपलैर्युक्ताः कार्याः । तत ऊर्द्ध्वाङ्के सप्ततष्टिते अत्र, अब्दप्रवेशे = अग्रिमवर्षप्रवेशे, वारादि = दिनादि, फलं, निर्दिशेत् = कथयेत् ॥ १६ ॥

भाषा—गतवर्ष संख्या में उस संख्या के चतुर्थांश ( चौथाई ) जोड़ना तब २१ इक्कीस से गुणे हुए गतवर्ष को ४० चालिस से भाग देकर जो घड़ी पल आदि फल हो, उसे चतुर्थांशयुक्त गतवर्ष रूप दिनादिक फल में जोड़ना । तब जन्मवारादि ( जन्मदिन इष्ट घड़ी पल ) जोड़ना, दिन के स्थान में सिर्फ सात से भाग देना (घड़ी पल के स्थान में वैसे रखना ) जो शेष होगा वह वर्षप्रवेश वारादि होगा ॥ १६ ॥

उदाहरण—जैसे शुभसंवत् १९८२ वैशाखशुक्ल तृतीया रविवार में रोहिणी नक्षत्र में सूर्योदय से २९ घड़ी १० पला पर काशीधाम में किसी का जन्म हुआ, वहां जन्मकालिकसूर्य ०० । १२ । ९७ । ४९ राश्यादिक हैं । और जन्मलग्न ५।९।३४।१२ है ॥

अथ जन्माङ्गचक्रम्




इष्टम्० २५ । १०

यहां वर्त्तमान संवत् १९९७ में जन्म संवत् १९८२ को घटाने से १५ बांकी बचे, यही गत वर्ष हुए । या जन्मशकाब्द में वर्त्तमान शकाब्द घटाने से १८६२–१८४७ =

१५ गतवर्ष हुए, इसमें इसी के चतुर्थांश $\frac{१५}{४}$ = ३, यह पूरी लब्धि दिन, शेष को साठ में गुणा किया, चार से भाग दिया तो लब्धिः $\frac{३ \times ६०}{४} \times ३$ = १५=४५, यह घड़ी हुई, अर्थात् पूरा चतुर्थांश ३।४५ हुआ इसको गतवर्ष १५ में जोड़ा तो १८।४५ इतने हुए। इसके बाद २१ से गतवर्ष १५ को गुणा किया तो २१ × १५ = ३१५ इतने हुए, इसमें चालीस से भाग दिया तो प्रथम स्थान की लब्धि ७ यह घड़ी आई, शेष ३५ को साठ से गुणाकर २१०० इसमें चालीस से भाग देने पर लब्धि ५२ यह पलात्मक आई, फिर शेष २० को साठ से गुणा किया चालीस से भाग देने पर लब्धि $\frac{२० \times ६०}{४०}$ = ३०, यह विपल आया, अब सब अवयव मिलाकर सम्पूर्ण लब्धिः ७।५२।३० इस घट्यादिक को पहले सपाद गतवर्ष ( १८।४५ ) में जोड़ा,

७।५२।३०
१८।४५।००
१८।५२।५२।३०

इसमें जन्मवारादि ( १।२५।३० ) जोड़ दिया

१।२५।१०
२०।१८।२।३०

अब प्रथम ( दिन स्थान ) में ही सात से भाग दिया तो ६ शेष बचे, इसमें रविवार से छठे शुक्रवार में १८ घड़ी २ पलापर अग्रिम वर्ष का प्रवेश हुआ। इस लिये वर्ष वारादि ६।१८।२।३० यह हुआ। इसमें ६ यह तो वार है, १८।२।३० घट्यादि है। यही अग्रिमप्रवेश का इष्ट हुआ। यह दिन मान से थोड़ा है, इससे दिन ही में हुआ। जहां किसी का वर्षवारादि में घट्यादि दिन मान से अधिक होगा, वहां रात्रि में वर्ष का प्रवेश हुआ यह समझना। यदि दिन मान समान ही वर्ष का इष्ट हुआ, तो सूर्यास्तकाल ही में वर्ष का प्रवेश हुआ॥

## अत्रोपपत्तिः—

वर्तमानसंवत्सरे कदाऽग्रिमवर्षारम्भोऽभूद्वा भविष्यतीति समयज्ञानाय प्रयासः- तत्र यस्मिन् मासे यस्मिन् पक्षे यस्यां तिथौ यावति जन्मसमये जन्माभूत्तन्मासपक्षतिथौ तन्मितेष्टसमयेऽपि वर्षारम्भः स्यादिति सुगममार्गमपहाय कथमन्यथा यत्नः कृतस्तदुच्यते। वर्षायनर्तुयुगपूर्वकमत्र सौरादिति भास्कराचार्यादेशाद्वर्षपूर्त्तिः सौरमानेनैव भवति। अर्थाद्यद्राशेर्यस्मिन्नंशाद्यवयवे भुक्ते जन्म तन्मिते एव वर्त्तमानवर्षे सूर्येऽग्रिमवर्षप्रवेशः स्यादतस्तावदेकसौरवर्षसम्बन्धिसावनदिनज्ञानं त्रैराशिकेन क्रियते—यदि कल्पसौरवर्षैः कल्पकुदिनानि लभ्यन्ते तदेकवर्षेण

किमिति लब्ध मेकवर्षे सावनदिनाद्यम् = ३६५।१५।३१।३०
अत्र दिनस्थाने लाघवार्थं सप्ततष्टितम् , दिनस्य सप्तमितत्वात् १।१५।३१।३०
अथ गतवर्षसंवन्धिसावनदिनाद्यानयनार्थमन्योऽनुपातः, यदि एकवर्षैरिदं १।१५।३१।३० सावनाद्यं तदेष्टवर्षैः किमितीष्टवर्षसम्बन्धिसावनदिनाद्यम् = गव ( १।१५।३१।३० )

गव १ + गव ( १५।३१।३० ) अत्र १५ घटी = $\frac{१५ \text{ दिन}}{६०}$ अतः $\frac{१}{४}$ इदं दिनात्मकं, तथा च ३१।३० = ३१ + $\frac{३०}{६०}$ = ३१ + $\frac{१}{२}$ = $\frac{६३}{२}$ इदं पलात्मकं षष्टिभक्तं

घट्यात्मकम् = $\frac{६३}{२ \times ६०} = \frac{२१}{४०}$, अतो दिनादिस्वरूपम् = $\frac{१}{४} + \frac{२१}{४०}$

तेनोत्थापनात् गव१ + गव $\left( \frac{१}{४} + \frac{२१}{४०} \right)$ = गव १ + $\frac{\text{गव}}{४} + \frac{\text{गव}२१}{४०}$

यदि शनिवारे सूर्योदयसमये एव जन्म स्यात्तदा इदमेव वर्षवाराद्यम् । अथ शनिभिन्नदिने उदयभिन्नकाले जन्म भवेत्तदा जन्मकालिकवारादिना योजितमिदं गतवर्षसम्बन्धिवाराद्यं वास्तवमागामिवर्षप्रवेशवारादिकं स्यात् । तत्र योजनेन दिनस्थाने सप्ताधिकसम्भवात् सप्ताधिकस्य प्रयोजनाभावात् सप्ततष्टितं कार्यं, शेषदिनादिकेऽग्रिमवर्षारम्भ इति सर्वमुपपन्नं युक्तियुक्तम् ॥

अथ तिथिसाधनमाह—

**शिवघ्नोऽब्दः स्वखाद्रीन्दुलवाढ्यः खाग्निशेषितः ।**
**जन्मतिथ्यन्वितस्तत्र तिथावब्दप्रवेशनम् ॥ १७ ॥**

**सं० टी०**—अब्दः = गतवर्षसमूहाङ्कः, शिवघ्नः = एकादशगुणः । स्वाखाद्रीन्दुलवाढ्यः = निजसप्तत्यधिकशतभागयुक्तः, जन्मतिथ्यन्वितः = शुक्लप्रतिपदावधिकजन्मकालीनतिथियुक्तः कार्यः, ततः खाग्निशेषितः = त्रिंशद्भक्तः, तत्र यः शेषस्तत्संख्यके शुक्लप्रतिपदादिगणिततत्तिथौ, अब्दप्रवेशनम् = अग्रिमवर्षारम्भो भवतीत्यर्थः । एवं साधिततिथौ नियमेन नहि वर्षारम्भः कदाचिद्गततिथौ, कुत्रचिद्वर्त्तमानतिथौ कदाचिदागामितिथौ । तिथ्यानयनस्य स्थूलत्वात् । अत एवोक्तं ग्रन्थकर्त्रा पुरतः 'तत्कालेऽर्को जन्मकालरविणा स्याद्यदा समः । तदैवाब्दप्रवेशः स्यात्तिथ्यादेर्नियमो न तु इति ॥ १७ ॥

भाषार्थः-गतवर्ष संख्या को ११ से गुणा करके जो होय, उस को दो जगह रखे, दूसरे स्थान में १७० से भाग दे, जो लब्धि हो, उसको पहले स्थान में जोड़े, तब उसमें जन्म तिथि संख्या जोड़े, तीस से भाग दे, जो शेष हो, वहां शुक्ल प्रतिपदा से शेष तुल्य गिने हुए तिथि में, अगिले वर्ष का प्रारम्भ होगा ॥ १७ ॥

उदाहरण—जैसे गतवर्ष १४ हैं; इसको ११ से गुणा किया तो १६५, इसी का खाद्रीन्दुलव अर्थात् १६९ इसको १७० से भाग दिया तो लब्धि = ०, शेष से मतलब नहीं। इसलिये शून्यलब्धि से १६५ इसको जोड़ने पर भी उतने ही रहा, १६५ इसमें जन्मतिथि ३ जोड़ दिया तो १६८, इसको ३० से भाग दिया तो १८ बचे, अब यहां शुक्ल पक्षके पड़िवा से लगाइत गिनने से १५ तो पूर्णिमा तक बाद करने पर कृष्णपक्ष की, तृतीया तिथि आई। लेकिन, वैशाख कृष्ण पञ्चमी शुक्रवार को वर्ष बदला है, इसलिये यहां दो तिथि का अन्तर पड़ा, यह तिथि साधन ठीक नहीं है। यहां यदि १६५ इस में १७० से भाग देने से पूरी एक लब्धि मान लें तो भी तिथि-४ चौथ ही आती है। पञ्चमी नहीं आती। यहां अमावस के बाद पञ्चमी के अन्दर एक तिथि (तृतीया) का क्षय हुआ है, इसलिये पड़िवा से पञ्चमी चारही पड़ी, तो तिथि किसी प्रकार मिल गयी यह कह सकते हैं॥ वस्तुतः सर्वत्र तिथि नहीं मिलती है।

**अत्रोपपत्तिः**—कल्पसौरवर्षैः कल्पचान्द्राहा लभ्यन्ते तदैकवर्षेण किमित्यनुपाते नैकवर्षसम्बन्धीयचान्द्रदिनमानम् $= \dfrac{\text{कचांदि} \times 1\ \text{सौव}}{\text{कसौव}} =$

= ३७१ । ३।५२ । ३० एकचान्द्रमासे त्रिंशत्तिथिसंख्या भवत्यत एकवर्षसम्बन्धिचान्द्रदिनसंख्या त्रिंशद्भक्ता तदा शेषम् = ११ । ३ । ५२ । ३०, अत इष्टवर्षेऽनुपातेन इचां = इ·ति· $= \dfrac{(11 \mid 3 \mid 52 \mid 30)}{1}\text{गव} =$

$$11\,\text{गव} + \frac{\text{गव}\,(3 \mid 52 \mid 30)}{1} = 11\,\text{गव} + \frac{\text{गव}\,(3 \mid 52 \mid 30)\,170}{170} =$$

$$= 11\,\text{गव} + \frac{\text{गव}\left(10 + \frac{58}{60} + \frac{45}{60 \times 60}\right)}{170} = 11\,\text{गव} + \frac{\text{गव}\ 11}{170},$$ स्वल्पान्तरात् $\dfrac{58}{60} + \dfrac{45}{60 \times 60} = 1$

* अत्रेदं तिथि (चान्द्रदिन) मानं जन्मकालिकतिथिसंख्यया युतं कार्य-

म् । जन्मकालेऽपि शुक्लप्रतिपदादित इष्टजन्मतिथिपर्यन्तं गणनीयम् । तत्र तिथीनां त्रिंशदधिकस्य प्रयोजनाभावात्त्रिंशत्तष्टिते तस्मिन् शुक्लप्रतिपदादितोऽग्रिम-वर्षप्रवेशतिथिर्भवति । यदि तिथ्यन्ते जन्म, तदा मध्यममानेन तिथौ नान्तरम् । यदि तिथिमध्ये जन्म तदा वारद्वयं जन्मतिथेर्योगाद्वर्षप्रवेशतिथिमाने नियतमन्तर-सम्भवः । तथा च गणितसाधितस्य तिथेर्मध्यजातीयत्वात्पञ्चाङ्गे स्पष्टतिथिव्यवहा-रात्स्पष्टमध्यमतिथ्यन्तरकारणेनावश्यमेव वर्षप्रवेशतिथावन्तरसम्भवः । अतोऽस्य न निश्चयत्वम् ।

अथ पंक्तिस्थग्रहाणामिष्टकाले चालनगणितक्रियामाह—

**गतैष्यदिवसाद्येन गतिर्निघ्नी खषड्हृता ।**
**लब्धेनांशादिना शोध्यं योज्यं स्पष्टो भवेद् ग्रहः ॥ १८ ॥**

**सं० टी०**—गतिः = ग्रहाणां स्वस्वगतिः, गतैष्यदिवसाद्येन = मिश्रेष्टान्तरेण दिनादिकेन, निघ्नी = गुण्या, खषड्हृता = षष्टिभक्ता, लब्धम् = प्राप्तम् , लवादिकम्= अंशादिकम् , पङ्क्तिस्थग्रहे शोध्यं, योज्यं तदा ग्रहः = इष्टकालिकः भवेत् ॥ १८ ॥

**अत्रोपपत्तिः**—पञ्चाङ्गे यस्मिन् समये साधितो ग्रहो भवति, तस्मिन्नेव समये यदि वर्षप्रवेशस्तदा साधित एव ग्रह इष्टः । अथ पञ्चाङ्गे यस्मिन् समये ग्रहः साधितोऽस्ति, स कालः पङ्क्तिकालः, मिश्रकालश्च कथ्यते गणकैः, बहुत्र मिश्रमान-काले ग्रहस्य साधितत्वात् । अत्रेष्टकाले ग्रहराश्यादिसाधनार्थमिष्टसमयात्पूर्वं पर-स्ताद्वा यः पङ्क्तिकालो निकटवर्त्ती, तस्य इष्टकालस्य च मध्ये यावान् कालः, स मिश्रेष्टान्तरकालः स तयोरन्तरेण कृतेन भवति । तत्कालसम्बन्धिग्रहचलनफल-ज्ञानार्थमनुपातः—$\frac{\text{ग्रग} \times \text{मिश्रेष्टान्तरदिनादि}}{\text{१ दि०}}$ = चा० फ० । यदि ग्रहो मार्गी तदा पूर्वदिनग्रहात्परदिनग्रहस्याधिकत्वात् पङ्क्तिकालादिष्टकालस्याग्रिमत्वे तच्चालनफलं पङ्क्तिस्थग्रहे योजितं सदिष्टकालिकग्रहः स्यात् । यदि च पङ्क्तिकालात्पूर्वमिष्टदिनं तदा पङ्क्तिग्रहादिष्टग्रहस्य न्यूनत्वात् पङ्क्तिग्रहे तच्चालनफलं विशोधितं सदिष्ट-दिनग्रहो भवेत् । यदि ग्रहो वक्री तदा वर्त्तमानसमयग्रहात्पूर्वसमयग्रहस्याधि-कत्वादृणमिश्रेष्टान्तरे चालनफलं धनं कार्यम् । तथा वर्त्तमानसमयग्रहादग्रिमसमय-ग्रहस्याल्पत्वाद्धनमिश्रेष्टान्तरे चालनफलमृणं कार्यम् , तदेष्टसमये ग्रहो भवतीति स्पष्टम् । अत्रैकरूपया गत्याऽनेकदिनेषु ग्रहस्य चालनात् किञ्चित् स्थूलत्वं स्पष्टम् ।

तथा चोक्तं केनापि—'पङ्क्तिः स्वेष्टाङ्कवेदग्रे पंक्त्यामिष्टं विशोधयेत् ॥
तच्चालनमृणं ज्ञेयं व्यत्ययाद्व्यत्यय विदुः ॥'

भाषा—ग्रहों की गति को गत या ऐष्य (आगामी) जो दिवसादि अर्थात् पंक्ति तथा इष्ट समय का अन्तर (मिश्रेष्टान्तर) उससे गोमूत्रिका प्रकार से गुणा करे, साठ से भाग दे, तब अंशादिक (अंश कला विकला) जो फल होगा सो ऋण मिश्रेष्टान्तर रहने से पंक्तिकालिक ग्रहों में घटाना, यदि पंक्ति से आगे इष्ट समय हो तो मिश्रेष्टान्तर धन होने के कारण जोड़ना, तो इष्ट समय के ग्रह होते हैं। यदि ग्रह मार्गी हो तो इस प्रकार, यदि ग्रह वक्री हो, तो गतदिवसादि में धन करना, ऐष्य-दिवसादि रहने पर ऋण करना। इतनी विशेषता ध्यान रखना। रवि चन्द्रमा सदैव मार्गी, राहु केतु सदैव वक्री, शेष मङ्गल, बुध, बृहस्पति, शुक्र, शनि ये पांच ग्रह वक्री मार्गी दोनों, समय पर होते हैं। पूर्व पंक्ति के ग्रह से अगिले पंक्ति के ग्रह यदि अधिक हों तो मार्गी, यदि पूर्व पंक्ति के ग्रह से अगिले पंक्ति के ग्रह न्यून हों तो वक्री समझना। कभी २ दो पंक्तियों के बीच बीच २ में भी वक्रतारंभ होती है, यह ठीक २ देख समझ कर धनचालन ऋणचालन करना ॥ १८ ॥

यहां वैशाखशुक्ल पञ्चमी शुक्रवार को घ० १८ प० २ इष्ट पर वर्ष प्रवेश हुआ है। इसलिये दिनादि इष्ट ६।१८।२ यह हुआ। और उसी रोज मिश्रमान काल के ग्रह सब बनाये हुए हैं, इसलिये दिनादि मिश्रमान ६।४६।५४ यह हुआ। इन दोनों का अन्तर किया

६ । ४६ । ५४
६ । १८ । ०२
००। २८ । ५२

तो मिश्रेष्टान्तर दिनादि ००।२८।५२ हुआ।

यहां एकही रोज में इष्ट और पंक्ति भी पड़ी है, इस लिये दिनस्थान में शून्य हुआ। जहां १, २, ३ दिनों के अन्तर रहना है, वहां दिनस्थान में भी अङ्क आवेगा। जैसे रविवार में किसी का २५।४० इष्ट है तो दिनादि इष्ट १।२५।४० पङ्क्ति शुक्र ही रोज का है। वही मिश्रमान भी है। तो मिश्रेष्टान्तर बनाने में १ में ६ यहीं घटता, यहां १ में ७ जोड़ दिया तो जिस रविवार से शुक्र छे होते हैं, उसी से दूसरा रविवार ८ हुआ, अब अन्तर किया तो दिनादि मिश्रेष्टान्तर हुआ २।७।३८। यदि पङ्क्ति और इष्ट के अन्तर

८।२५।४०
६।१८।०२
०२।०७।३८

दिनादि ३।३० के आसन्न हो तो स्वल्पान्तर से इष्ट से पूर्व तथा अग्रिम पङ्क्तिस्थ के ग्रहों के अन्तर को आधा करके पङ्क्तिस्थ ग्रहों में वक्री मार्गी और धनचालन ऋणचालन विचार कर जोड़ना या घटाना तो स्वल्पान्तर से ग्रह विना प्रयास के बन जायँगे ॥

अब यहां इष्ट काल १८।०२ यह है, इस से अधिक मिश्रमान है, इस लिये मिश्रेष्टान्तर यहां ऋण हुआ। जहां मिश्रमान से अधिक इष्टकाल होगा, वहां मिश्रेष्टान्तर धन होगा। अब यहां सूर्य की गति ५८।१४ है, इसको मिश्रेष्टान्तर से गोमूत्रिका निवेश प्रकार से गुणन करना होगा, जैसे

```
                                   ०० ५८।१४
                                   २८     ५८।१४
                                   ५२         ५८।१४
```

हर एक पङ्क्ति में मिश्रेष्टान्तर के हरएक खण्डसे गुणा किया, और

```
      ००।००
         १६२४।३९२
            ३०१६।७२४
      ००।१६२४।३४०८।७२४
```

यथाक्रम से योग किया

और ७२४ इस को साठ से भाग दिया शेष ४ को अपने ही स्थान पर रखा, क्यों कि वहैं का है, लब्धि १२ उस से पूर्वखण्ड की जात की हुई, इसलिये ३४०८ इसमें लब्धि १२ को मिलाया, तो ३४२० हुआ। इसमें फिर से साठ से भाग दिया तो लब्धि ५७ आई, शेष शून्य हुआ, यहां लब्धिको १६२४ इस पूर्वखण्ड में जोड़ा तो १६८१ हुआ, इसमें साठसे भाग दिया तो लब्धि २८ शेष १ बचा, शेषको यथा स्थानमें रखा, लब्धिको पीछेके खण्ड शून्य तुल्यमें मिलाया इस प्रकार चालन फल कलादिक २८।०१।०० यह हुआ। यहां मिश्रेष्टान्तर ऋण होनेके कारण चालन फल भी ऋण ही हुआ। इसको पङ्क्तिके सूर्यमें घटाया तो इष्टकालिक सूर्य हुआ=

```
००।१३।२६।५१
   ००।२८।०१
००।१२।५७।५०
```

इसके बाद चन्द्रमाका साधन क्रमप्राप्त है। लेकिन उनकी गति बहुत अधिक होती है, इसलिये उनके साधनका प्रकार आगे अलग आवेगा। अभी कुजादि ग्रह जो पङ्क्तिमें दिये हुए हैं, उनको चालित करते हैं।

जैसे कुजगति ३९।४६ इसको ००।२८।५२ मिश्रेष्टान्तरसे गोमूत्रिका विधिसे गुणाकर अन्तसे सठिआय कर चालन फल—साधन करना है। यहां रविके चालन फलमें गतिही को गोमूत्रिका प्रकार लिख कर मिश्रेष्टान्तरसे गुणा किया है। यहां यदि मिश्रेष्टान्तरको ही गोमूत्रिकासे दो पङ्क्तिमें लिखकर गतिहीसे गुणा करे तो एकही बात हुई, कुछ यहां लिखनेमें लाघव इसलिये वैसा करते हैं—

```
                    ३९ ( ००।२८।५२ )
                    ४६    ( ००।२८।५२ )
गुणने पर       ००।१०९२।२०२८
                  ००   ।१२८८।२३९२
जोड़ने पर       ००।१०९२।३३१६।२३९२
सठियाने पर         ००।१०९२।३३१६।२२९२
```

१९ ५५′ ३९| ६०
| ११६७ ३३५५ ५२ शे.
६० ६०
७शे. ५५शे.

अब लब्धि शेषको एक क्रमसे लिखने पर कलादिक फल १९′।०७′।५९″ यहां प्रतिविकला स्थानमें ५९ हैं, इसलिये अर्धाधिक होनेसे ७ को ८ माना १९।८।०० इसको पङ्क्तिस्थ मङ्गलमें घटाया, क्योंकि सिश्रेष्टान्तर ऋण है, गति मार्गी है—इसलिये

पं० कुजः १।२२।३३।१

ऋण चालन फल—००।००।१९।८

वर्ष कालिककुज १।२२।१३।५३

ऐसे प्रत्येक ग्रहोंके चालन फल ले आकर पङ्क्तिके तत्तद्ग्रहों में संस्कार करनेसे और ग्रह बनेंगे। ग्रन्थके विस्तार भयसे नहीं लिखे—

सिर्फ बने हुएही सब ग्रह लिखते हैं

सूर्य ००।१२।५७′।५०″ गति ५८′।१४″
कुज ०१।२२।१३।५३ गति ३९।४६
बुध ०११।२३।५९।९ गति १०२।३७
गुरु ००।०२।४९।८ गति १४।२६
शुक्र ०१।२८।१९।१७ गति ५३।२७
शनि ००।१०।५५।१३ गति ७।५४
राहु ०६।००। ५।५० गति ३।११ वक्री
केतु ००।००। ५।५० गति ३।११ वक्री

यहां कुछ कहना आवश्यक रहा कि राहु, सदा वक्री होता है, इसलिये उसमें चालन फल यहां धन करना, ऐसे, राहु बनाकर उसके राशिमें छै जोड़नेसे केतु हो जाते हैं। क्योंकि राहुसे छै राशिपर केतु भ्रमण करते हैं। इसलिये केतुका अलग बनाना व्यर्थ है।

चन्द्रमाकी गति अधिक होनेसे उसका साधन चालनसे नहीं, प्रत्युत अलग है। वह आगे "खषड्घ्नं भयातं भभोगोद्धृतं तत्" इस श्लोकके उदाहरणमें चन्द्रमा का साधन देखिये।

अथ वर्षकुण्डलीचक्रम्।



यदि मिश्रकाल और इष्टकालके मध्यही में ग्रह वक्री हो जाय, तो मिश्रमान कालसे वक्रारम्भ तक मिश्रेष्टान्तर बनाकर उस परसे चालन फल 'गतैष्य दिवसाद्येन' इत्यादि प्रकारसे बनाकर पङ्क्तिसे इष्टकाल पश्चात् रहनेसे जोड़ना। पीछे रहनेसे घटाना। और वक्रारम्भसे इष्टकाल तकका मिश्रेष्टान्तर बनाकर उसपरसे चालनफल ले आकर वक्रारम्भ कालिक सिद्ध ग्रहमें घटाना, यदि इष्टकालप ङ्क्तिसे अधिक होय तो। विलोममें विलोम समझना। यदि पहलेहोसे वक्री हुआ ग्रह पङ्क्ति और इष्टके बीचहीमें मार्गी हो जाय। तो पङ्क्तिसे मार्गारम्भ तक मिश्रेष्टान्तर बनाकर उसपरसे चालनफल जो हो, उसको पङ्क्तिस्थ ग्रहमें घटाना, तो मार्गारम्भ कालका ग्रह हुआ। उसके बाद मार्गारम्भ समयसे इष्टकाल पर्यन्तका फिर मिश्रेष्टान्तर बनाकर उसपरसे जो चालनफल आवे, उसको मार्गारम्भ कालिक ग्रहमें जोड़ना तो इष्टकालका ग्रह होता है। अथवा लाघवार्थ पङ्क्तिकालसे मार्गारम्भ पर्यन्त, तथा मार्गारम्भसे इष्टकाल तकका दो मिश्रेष्टान्तर बनावे उन दोनोंका अन्तर करे, उसपरसे चालनफल साधन कर पङ्क्तिस्थ ग्रहमें वक्ष्यमाण रीतिसे धन ऋण करे—जैसे, पङ्क्तिकालसे इष्टकाल अग्रिम है। इसी बीचमें ग्रहमार्गी है। यहां उक्तरीतिसे जो दो मिश्रेष्टान्तर होंगे, उनमें पङ्क्तिसे मार्गारम्भ तक वक्र (ऋण) मिश्रेष्टान्तर हुआ। और मार्गारम्भसे इष्टकालपर्यन्त धनमिश्रेष्टान्तर होगा इन दोनोंमें जो अधिक हो अर्थात् वक्र मिश्रेष्टान्तर यदि अधिक हो तो दोनों मिश्रेष्टान्तरके अन्तरपरसे जो चालन उसको ऋण समझना। यदि धन मिश्रेष्टान्तर अधिक हो तो वहां मिश्रेष्टान्तरों के अन्तर परसे चालन फलको धन समझना।

यदि इष्टकालके बाद पङ्क्तिकाल हो तो ये उक्त संस्थायें उलटी समझनी चाहिये॥ यदि पङ्क्ति और इष्टकालके ठीक बीचमें (अर्धस्थल) में वक्रारम्भ या मार्गारम्भ हो तो पङ्क्तिस्थ ही ग्रह इष्टकालका समझना। क्योंकि वहां धन ऋण चालन दोनों तुल्य होनेसे कट गये। यदि पङ्क्ति और इष्टकालके बीचमें ग्रहके राशिसञ्चार हो तो सञ्चार कालसे ही इष्टकाल तकका मिश्रेष्टान्तर बनाना उसपरसे चालन देनेमें लाघव होगा। सञ्चारकालमें ग्रह पूर्ण २ राशि मात्रही होते हैं। सूर्यके लिये तो मिश्रेष्टान्तरसे चालन देना गौरव होगा। क्योंकि प्रत्येक दिनका मिश्रमान कालिक या उदयकालिक सूर्य पञ्चाङ्गमें बना रहता ही है। उसीकालसे इष्टकाल पर्यन्त मिश्रेष्टान्तर बनाना, उसपरसे चालन फल ले आकर मिश्रमानकालिक या उदयकालिक सूर्यमें संस्कार करना, यहां भी इष्टकालसे जो नजदीक उदयकाल, या मिश्रकाल पड़े, उससे मिश्रेष्टान्तर बनाकर चालन देना॥ ये सब बातें मन्दबुद्धियोंके लिये लिखी है।

वर्षप्रवेश कालिक सूर्य जन्म कालिक सूर्यके बराबर होना चाहिये, आगे

लिखा भी है—

'तत्कालेऽर्को जन्मकालरविणा स्याद्यदा समः ।
तदैवाब्दप्रवेशः स्यात्तिथ्यादेर्नियमो न तु ॥'

लेकिन यदि वर्षप्रवेश कालिक सूर्य जन्मकालिक सूर्यके समान नहीं हो तो दोनों सूर्य के अन्तरको विकला बनाकर साठसे गुणा करे, गतिकलाको भी विकला बनाकरके उससे भागदे, तो लब्धि आयेगी वह घटी, शेषको साठसे गुणा करके फिर गतिविकलासे भागदे तो पल आयेगा, यह घटी पल वर्षवारादिमें धन ऋण करना, अर्थात् वर्षकालिक सूर्यसे जन्मकालिक सूर्य जादे होनेसे जोड़ना, और वर्षकालिक सूर्य न्यून होनेसे घटाना, तो पूर्वापेक्षया सूक्ष्म वर्षवारादि हुआ, अर्थात् इसकाल में दोनों सूर्य समान होंगे। यह विषय ताजिकसारमें तथा ताजिकभूषणमें भी लिखा है—

ताजिकसार का श्लोक—

सूर्यो वर्षसमुद्भवो नहि भवेज्जन्मार्कतुल्यो यदा
तद्गत्या विहृतं तयोस्तु विवरं लब्धं च हीनान्वितम् ।
वर्षावेशघटीपलेषु सततं वर्षार्कहीनाधिके
जन्मोत्थे द्युमणौ हि वर्षसमयस्त्वेवं भवेत् प्रस्फुटः ॥

ऐसे ही ताजिक भूषण में लिखा है—

जन्मकालनलिनीविलासिना नैव याति तुलनां कलासु चेत् ।
वर्षकालनलिनीपतिस्तयोरन्तरं गतिहृतं युतोनितम् ॥
कार्यं वर्षध्रुवे तस्मादसौ स्पष्टः प्रजायते ॥ इति ।

अर्थ स्पष्ट है। यहां सोचना चाहिये कि यदि किसी एकदेशहीके प्रचलित सारिणीसे जन्मकालिक सूर्य वर्षकालिक सूर्यभी बने होंय तो ठीक है—

अन्यथा जन्मपत्री के सूर्य जिस सारिणी जिस देशके पञ्चाङ्ग से बने है; उससे भिन्न सारिणी और भिन्नपञ्चाङ्ग से जो वर्षकालिक सूर्य बनेगा, वह अवश्य भिन्न होगा। वहां अन्तरपड़ना जरूरी है। क्योंकि एक आधारसे नहीं बने हुए हैं। सो भी मिश्रेष्टान्तर पर से एकवेग से चालन देकर बनाये हुए हैं। स्पष्टग्रह की गति प्रतिक्षण में विलक्षण होती है। इसलिये यथार्थमें चालित स्पष्टग्रह न तो स्पष्टग्रह यथार्थ रहैं, न तो यथार्थ मध्यम, इस हालतमें व्यवहार काम लाघवसे चलानेके लिये सब ज्यौतिषी वैसे रहने देते हैं।

यदि जन्मकालिक सूर्य ठीक २ जन्मकालका बनाया होय, चालित न होय, और जिस देशके अनुसार बनाया होय। उसी देशके अनुसार वर्षप्रवेश कालिक भी सूर्य बनाया जाय। उन दोनोंमें यदि अन्तर पड़े तो उपर्युक्त संस्कार करना चाहिये। अन्यथा नहीं। क्योंकि जन्मकालका भी तो स्थूल ही है।

यही सब बखेड़ा जानबूझ कर नीलकण्ठाचार्य प्रायः यह संस्कार नहीं लिखे। यह अनुमान करता हूं।

अथ पञ्चाङ्गस्थनक्षत्राच्चन्द्रानयनमाह—

**खषड ६०घ्नं भयातं भभोगोद्धृतं तत्**
**खतर्कघ्नधिष्ण्येषु युक्तं द्विनिघ्नम् ।**
**नवाप्तं शशी भागपूर्वस्तु भुक्तिः**
**खखाभ्राष्टवेदा ४८००० भभोगेन भक्ताः ॥ १६ ॥**

**सं० टी०**—भयातम् =इष्टनक्षत्रगतघट्यादिमानं, खषड्घ्नं = षष्टिगुणं, भभोगोद्धृतं = तदिष्टनक्षत्रसकलभोगमानेन भक्तं, सत् यल्लब्धं, तत् खतर्कघ्नधिष्ण्येषु = षष्टिगुणाश्विन्यादिगतनक्षत्रसंख्याङ्केषु युक्तं, ततः, द्विनिघ्नं द्विगुणं, नवाप्तं = नवभिर्भक्तं, तदा भागपूर्वः = अंशादिकः, शशी = चन्द्रमाः, भवति। अंशस्थाने त्रिंशद्भक्ते राश्यादिको भवतीति किं चित्रम्। अथ खखाभ्राष्टवेदाः = शून्यशून्यशून्याष्टचत्वारिंशत्संख्यका अङ्काः = ४८००० भभोगेन = इष्टनक्षत्रसम्पूर्णमानेन, भक्ताः = विभाजिताः, तदा भुक्तिः = गतिः ( चन्द्रस्येत्यर्थः ) भवति ॥ १९ ॥

**अत्रोपपत्तिः—**

तत्र तावद्भयातभभोगयोः साधनार्थं तयोः स्वरूपमुच्यते—

यस्मिन्नक्षत्रे जन्म, वा वर्षारम्भो वा प्रश्नकृत इष्टकालस्तस्य नक्षत्रस्य प्रारम्भसमयादिष्टसमयावधिकः खण्डकालो भयातसञ्ज्ञः, भस्य नक्षत्रस्य यातोगतोऽवयवो भयात इत्यर्थसिद्धः। अथ तस्यैव नक्षत्रस्य भोगः सम्पूर्णमानात्मको भभोगसञ्ज्ञ उच्यते। तत्रेष्टदण्डाधिके नक्षत्रमाने—भयातभभोगसाधनार्थं कस्य चिरद्यम्—

गतर्क्षनाडी खरसेषु शुद्धा सूर्योदयादिष्टघटीषु युक्ता ।
भयातसञ्ज्ञा भवतीह तस्य निजर्क्षनाडीसहिता भभोगः ॥ अस्यार्थः—

गतर्क्षनाडी = गतनक्षत्रघट्यादिमितिः, खरसेषु = षष्टिषु, शुद्धा = विशोधिता, या भवति, सा ( वर्तमानदिने ) सूर्योदयात् = रव्युदयादितः, गतासु इष्टघटीषु युक्ता कार्या, तदा भयातसञ्ज्ञा भवति। अथ इह = षष्टिशुद्धगतनक्षत्रमितौ, निजर्क्षनाडीसहिता = वर्तमाननक्षत्रघट्यादिमानयुक्ता, तदा भभोगः भवति।

यदि इष्टदण्डाल्पं वर्तमानदिने नक्षत्रमानं भवेत्तदोक्तपद्येन भयातभभोगौ न

सिद्धयतः । अत एव जातकक्रोडे तत्स्थले तयोर्ज्ञानाय पद्यमुपन्यस्तम्—

'यदाऽभीष्टमानं-गतर्क्षाधिकं-स्यात्तदाऽभीष्टमानाद्विशोध्यं भमानम् ।
भयातं तदेवं गतर्क्षोनषष्टियुताऽभीष्टनक्षत्रमानैर्भभोगः ॥'

अथ क्षयनक्षत्रावसरे, वृद्धिनक्षत्रावसरे च भभोगभयातसाधनं प्रदर्श्यते—

बु. रेवती ५।५०
बृ. अश्विनी २।२५ } –अस्मिन्नेव दिने भरणी ५४।
शु. कृत्तिका ५८।४०

अत्र बृहस्पतिदिने यदीष्टम् १।३०, अर्थादश्विनीमानाल्पं किमपि तदा गतर्क्षनाडीत्यादिनैव तयोः साधनं स्पष्टम् ।

यद्यत्र इ=५।४० तदाऽश्विनीमतिक्रम्य भरण्यां जन्म, वा वर्षारम्भः, तत्राश्विन्यन्ताद्भरण्या इष्टसमयावधिमानं तु इष्टघटीषु अश्विनीमानं विशोध्यैव भवति भयातम्=३।१५, भभोगः साधित एव = ५४। . . ।

यदि तस्मिन्नेव दिने इष्टम् = ५८।३०, तदाश्विनीभरण्योर्योगात् ५६।२५ अस्मादपि इष्टमधिकं, तत्र ( ५८।३० )—( ५६।२५ ) = २। . ५ = भयातम् ।

६०-( ५८।३० ) = १।३० = शे, शे + ५८।४० = ( १।३० ) + ( ५८।४० ) = ६०।१०=भभोगः ।

अथ वृद्धिस्थले { सू० । रो० ५८।१० ; चं० । मृ० ६०। . . ; मं० । मृ० ३।२५ } अत्र रविवारे यदीष्टम्=५९।१५, तदा मृगशिरसि जन्म जातम्, तदा (५९।१५)–(५८।१०)=१।.५=भयातम् ।

( १।५० ) + ( ६०।०० ) + ( ३।२५)=६५। . ५=भभोगः ।

यदि चन्द्रवासरे इष्टं यत् किमपि कल्प्यताम्=५०।४०, तत्र मृगशिरसः किञ्चिन्मानं रविवारे, किञ्चिद्भौमवारेऽपि वर्त्तते, तदा सकलावयवयोगेन भभोगः स्यात्यथा रविदिने मृगशिरोमानम्—६०—( ५८।१० )=१।५०, चन्द्रदिने ६०। . . कुजदिने ३।२५ सर्वेषां योगः = ६५।१५ = भभोगः । तत्र भयातम् = ( १।५० ) + ( ५०।४० ) = ५२।३० ।

यदि कुजदिने इष्टम् = २।४०, तदा भयातम्=( १।५० ) + ( ६०। . . ) + ( २।४० ) = ६४।३० भभोगः=६५।१५, पूर्वसाधित एवेति विज्ञेयम् ।

**भाषा—भयात को साठ ६० से गुणा कर भभोगसे भागदेने पर जो लब्धि हो, अर्थात् भयात भभोगमें भी दण्ड और पल ये दो अवयव रहते हैं, अतः भभोग घटीको साठसे गुणाकर पल जोड़नेसे पलात्मक भभोग हुआ । ऐसे भयातके घीटको साठसे**

गुणाकर पल जोड़नेसे पलात्मक एक जातीय भयात हुआ। अब एक जातीय भयातको साठसे गुणाकरे, एक जातीय भभोगसे भागदेने पर लब्धिको अलग रखे, फिर शेषको साठसे गुणाकर एक जातीय भभोगसे भागदे, इस लब्धिको पूर्व लब्धिके आगे रखे। फिर शेषको साठ से गुणाकर एक जातीय भभोगसे भागदे, इस लब्धिको दूसरे लब्धिके भी आगे रखे, इस प्रकार जो तीन जातकी तीन लब्धियां बनी, इसको साठसे गुणा किये हुए गत नक्षत्र संख्यामें जोड़े, अर्थात् उन तीन लब्धियोंमें जो पहले स्थान वाली है, उसको जोड़े। और दो को उसके आगे रक्खे। अब भी तीन खण्ड जो निष्पन्न अङ्क हुए उन सबों को दो से गुणाकरे, नौ से भागदे, प्रथम लब्धि अंश हुआ। शेषको साठसे गुणाकर फिर नौ से भागदे, यह दूसरी लब्धि कला हुई। यहां भी जो शेष हो उसको साठसे गुणाकरके फिर नौ से भागदे, यह तीसरी लब्धि विकला हुई। अब यहां पहली जो अंशात्मक लब्धि है। उसको ३० से भागदेने पर जो लब्धि हो वह प्रथम लब्धिके भी प्रथम स्थान अर्थात् राशि स्थानमें जायगी, यों राश्यादिक चन्द्रमा बन जायगा ॥ २९ ॥

उदाहरण—यहां भयात २५।३९ भभोग ६०।२६ है। घटीको साठसे गुणाकर पल जोड़कर एक जातीय बनानेसे भभोग ३६२६, भयात १५३९ हुआ। अब भयातको साठसे गुणा किया तो १५३९ × ६० = ९२३४० | ३६२६ ) ९२३४० ( २५।२७।५८ भभोगसे भाग दिया, तो प्रथम लब्धि २५ आयी, शेष १६९० को फिर साठसे गुणा किया १०१४०० हुआ भभोगसे भाग दिया, तो दूसरी लब्धि २७ आयी, शेष बचा ३४९८ इसको साठसे गुणा किया तो २०९८८० हुआ, इसमें फिर भभोगसे भागदेने पर लब्धि ५८ आयी। यहां पूरी लब्धि ५७ आती थी, लेकिन अर्धाधिक लेने पर ५८ आया। अब क्रमसे सब एकत्र लब्धि २५।२७।५८ अब यहां गत नक्षत्र है ज्येष्ठा, इसको अश्विनीसे गिना १८ हुआ, इसको साठसे गुणा किया तो १०८० इतने हुए। इसमें उस लब्धिको जोड़ना, यहां उसके जो प्रथम स्थान में २५ हैं, उसको १०८० इसमें जोड़ना चाहिये जैसे

$$
\begin{array}{r}
१०८०।००।००\\
२५।२७।५८\\
\hline
\end{array}
$$

योगफल = ११०५।२७।५८

अब इसको दो से गुणा किया तो २२१०।५५।५६, इसको ९ नौसे भाग दिया तो पूर्ववत् करनेसे लब्धि २४५°।२९'।३३'' अंशादिक आया। अंश २४५° स्थानको तीससे भागदेने पर राश्यादिक चन्द्रमा बना ८।५°।२९'।३३''

अब इसकी गति बनानी है—४८०००, इसको भभोग याने भभोग घटीसे भाग

देना है, यहां हर भाज्यको साठसे गुणने पर भाज्य=४८००० × ६०=२८८०००० और भाजकमें भभोगका एक जातीय पलात्मक होगया=भाजक=३६२६

अब भाज्य २८८०००० को भाजकसे भागदेने पर प्रथम लब्धि ७९४ शेष बचा ९०६ इसको साठसे गुणाकरके।५४३६० भभोग ३६२६ से भाग दिया तो लब्धि २ आयी, तब पूरी लब्धि ७९४।०२' यही चन्द्रमाकी गति हुई। यह भी स्थूल है। तथा 'अकर्णान्मन्दकर्णोऽपि श्रेयान्' इस न्यायसे ठीक है।

अब यहां प्रसङ्गसे भयात, भभोग बनाने का नियम बताता हूं, जिसमें प्रायः बहुत लोग भूलकर बैठते हैं। असल में भयात उसीको कहते हैं कि जिस किसी नक्षत्रमें जन्म, या वर्ष प्रवेश, या इष्ट हो, उसके प्रारम्भ कालसे इष्ट काल पर्यन्त जो खण्ड काल हो, वही भयात है। और उस नक्षत्र के सम्पूर्ण मानको भभोग कहते हैं। वहां यदि इष्ट कालसे वर्त्तमान नक्षत्रका मान अधिक हो, तो भयात भभोग का साधन निम्न लिखित प्राचीन श्लोकके अनुसार करना—जैसे श्लोक—

गतर्क्षनाड़ी खरसेषु शुद्धा सूर्योदयादिष्टघटीषु युक्ता।
भयातसञ्ज्ञा भवतीह तस्य निजर्क्षनाड़ीसहिता भभोगः॥

अर्थ—जिस रोज भयात बनाना है, उसके गत दिनके जो नक्षत्रके घटी पल हों उसको साठमें घटावें, क्योंकि गत दिनके उदयसे वर्त्तमान दिनके उदय तक साठ घटी है उसमें गत दिनके नक्षत्रको घटाने पर जो शेष रहा, वह गत दिनमें वर्त्तमान नक्षत्रही का गत खण्ड हुआ। उसको वर्त्तमान दिनके सूर्योदयसे जो इष्ट घटी हो उसमें जोड़ दिया तो, वर्त्तमान नक्षत्रका प्रारम्भसे इष्ट काल पर्यन्त खण्ड हुआ, इसको भयात कहते हैं। और गत दिनके जो गत खण्ड, उसमें वर्त्तमान दिनके नक्षत्रका जो घटी पल मानहो उसको जोड़ने पर भभोग होगा। अर्थात् गत नक्षत्रान्त से वर्त्तमान नक्षत्रान्त पर्यन्त बन गया, पूरा नक्षत्रका मान होगया इसीलिये इसका नाम भभोग हुआ॥

यदि वर्त्तमान दिनमें इष्ट कालसे नक्षत्रका मान न्यून हो तो पूर्वोक्त नियमसे भयात भभोग नहीं सिद्ध होगा। इस लिये दूसरा श्लोक वहांके लिए है—

यथा—यदाऽभीष्टमानं गतर्क्षाधिकं स्यात्तदाऽभीष्टमानाद्विशोध्यं भमानम्।
भयातं तदैवं गतर्क्षोनषष्ट्युताऽभीष्टनक्षत्रमानैर्भभोगः॥

अर्थ—यदि इष्ट मान नक्षत्र मानसे अधिक हो, तो इष्ट कालही में नक्षत्र मानको घटावें, शेष भयात होगा, और गत नक्षत्रको साठमें घटाने पर जो बांकी रहै, उसमें इष्ट नक्षत्रके (अगिले दिनका) जो मान वह जोड़े तो भभोग होगा।

इसका उदाहरण—जैसे मान लीजिये कि—उसी वर्ष प्रवेशहीके दिन इष्ट काल नक्षत्र मानसे अधिक है, तो इष्ट कालहीमें नक्षत्र मानको घटाने पर भयात ३।०९

हुआ। क्योंकि इष्ट कालमें मूल नक्षत्र नहीं रहा, पूर्वाषाढ़ होगया, अब पूर्वाषाढ़ का कितना गत हुआ है, यह जाननेके लिये मूल नक्षत्रान्तसे इष्ट कालप र्यन्त खण्ड बनाया, यही उस वर्त्तमान पूर्वाषाढ़ नक्षत्रका गत हुआ, यही भयात है। और मूलके ५२।४९ मानको साठमें घटाया तो मूलके आखिरीसे अग्रिम सूर्योदय पर्यन्त पूर्वाषाढ़का मान हुआ। ७।११ इसमें अगिले दिनके पूर्वाषाढ़का जो ५४।२३ मान है, इसको जोड़ा तो ६१।३४ यही पूर्वाषाढ़का सम्पूर्ण मान भभोग हुआ।

और भी इसका नियम दिखाता हूं—ध्यान से पाठक समझें—

उदाहरण—
७ सू० ५४। ५५ उ० ५७। २५
८ चं० ५७। २१ श्र० ६० । ०६
९ मं० ६०। ०० श्र० १ । २७
९ बु० ० । ५६ ध० ३ । ४१

यदि वैशाख वदि सप्तमी रविवारको इष्ट काल ५८।५० है, तो अभी जो 'यदाऽभीष्टमानं गतर्क्षाधिकं स्यात्।' इसी नियमसे भयात १।२५ हुआ, भभोग जरा विचारनेसे होगा, जैसे उत्तराषाढ़का मान ५७।२५ को साठमें घटाया शेष श्रवणाका इतना २।३५ बाकी रहा, इसमें सोमवारका श्रवणाका मान ६०।०० और मङ्गल वारका श्रवणाका मान १।२७ इन सबोंको मिलाने पर भभोग ६४।०२ इतना हुआ। यहां तीन दिन तक श्रवणा नक्षत्र मानका सम्बन्ध आया है, पूरा मानका नाम भभोग है। इस लिये तीनों दिनके मानको जोड़ने पर भभोग बना।

यदि मङ्गल वारको इष्ट काल १।१० है, तो भयात बनाना? गतर्क्ष नाड़ी खरसेषु शुद्धा' इससे नहीं तथा 'यदाऽभीष्टमानं गतर्क्षाधिकं स्यात्' इससे भी नहीं होगा—क्या करना चाहिये? तो रविवारका श्रवणाका मान २।३५ सोमवारका ६०।०० इन दोनोंके योग ६२।३५ में इष्ट काल १।१० को जोड़ा ६३।४५ तो यही भयात हुआ। भभोग तो तीनों दिनके मान जोड़ने से ६४।०२ हुआ ही है।

यदि वैशाख वदि अष्टमी सोमवारको इष्ट काल कुछ भी मान लीजिये २५।३० है, तो भयात "गतर्क्षनाड़ी खरसेषु शुद्धा" इसी प्रकारसे सिद्ध हुआ = २८।०५ भभोग बनानेमें "निजर्क्षनाड़ीसहिता" का अर्थ सोमवारका ६०।०० मङ्गलवारका १।२७ ये दोनों जोड़ने पर भभोग हुआ ६४।०२ यह विशेष कठिन नहीं है।

उदाहरण—
६ मं० ४२।२५ श्लै० २।३० मघा० ५६।२९
७ बु० २६।३४ पू० फ० ५५।०२

यदि ज्येष्ठ शुदि ६ षष्ठी मङ्गलवारको इष्ट काल १०।२५ है, तो यहां पहलेके जो 'गतर्क्ष नाड़ी खरसेषु शुद्धा' यह नियम नहीं लगेगा, यहां 'यदाऽभीष्टमानं गतर्क्षाधिकं स्यात्' इस नियमसे इष्ट काल १०।२५ में उस दिनके जो आश्लेषाका २।३० मान

है, उसको घटानेसे मघाका ७।४४ भयात हुआ। भभोग तो मघाका बनाही हुआ पञ्चाङ्गमें लिखा है जैसे ४६।२९ भभोग हुआ ॥

यदि उसी दिन इष्ट काल ४९।४० है। तो "गतर्क्ष नाड़ी खरसेषु शुद्धा" तथा "यदाऽभीष्टमानं गतर्क्षाधिकं स्यात्" ये दोनों भी नियम नहीं लगेंगे। करना क्या होगा?, तो आश्लेषाका २।३० मघाका ५६।२९ दोनोंके योग हुआ ५८।५९ इसको इष्ट काल ४९।४० में घटाया ००।५१ तो इतना भयात हुआ। क्योंकि सूर्योदयसे २।३० आश्लेषा थी, उसके बाद मघा ५६।२९ इस लिये दोनोंके योग कर इष्टकाल घटानेसे पूर्वफल्गुनीका गत मान हुआ, वह पूर्व फल्गुनीका भयात हुआ। यहां दोनोंके मान योग ४८।५९ को साठमें घटाने पर मङ्गलवारका पूर्व फल्गुनीका गत मान हुआ १।०१ इसमें बुधवारके पूर्व फल्गुनीके ५४।०२ मानको जोड़ा, तो भभोग ५६।३ इतना हुआ ॥

## अत्रोपपत्तिः—

चन्द्रभिन्ना ग्रहाः "गतैष्यदिवसाद्येन गतिर्निघ्नो"—त्यनेन मिश्रेष्टान्तरवशात् प्रचाल्य पूर्वं प्रसाधिताः। चन्द्रस्य तु सकलग्रहापेक्षयाऽधिकगतित्वादन्यथा साधनप्रकारः आचार्यैर्ततिः स सोच्यते—यदि वर्त्तमाननक्षत्रस्य सम्पूर्णमानेन भभोगसञ्ज्ञकेन एकं नक्षत्रं लभ्यते तदा वर्त्तमाननक्षत्रस्य गतदण्डात्मकभयातसञ्ज्ञकेन किमिति त्रैराशिकेन लब्धं वर्त्तमाननक्षत्रस्य भयातसम्बन्धिगतावयवमानम् =

$= \frac{१ \times \text{भयात}}{\text{भभोग}}$, इदमश्विन्यादिगतनक्षत्रसंख्यायां योजितं तदाऽश्विन्यादिसावयवगतनक्षत्रमानं जातम् $= \text{गत} + \frac{\text{भयात}}{\text{भभोग}}$, ततोऽङ्शात्मककरणार्थमन्योऽनुपातः—यदि सप्तविंशतिनक्षत्रैर्भांशा लभ्यन्ते तदा चन्द्रभुक्तैरश्विन्यादिसावयवगतनक्षत्रैः किमित्यनेनागता इष्टचन्द्रभुक्तांशाः $= \frac{३६०\left(\text{गत} + \frac{\text{भयात}}{\text{भभोग}}\right)}{२७}$

त्रिभिरपवर्त्तिताः $= \frac{१२०\left(\text{गत} + \frac{\text{भयात}}{\text{भभोग}}\right)}{९}$, अत्र भाज्यस्थद्वादशानां $६० \times २$ एतत् खण्डयुगं प्रकल्प्योत्थाप्य महता ६० खण्डेन पृथक् सङ्गुण्य जातम्

$$= \frac{२\left(६० \text{ गत} + ६० \frac{\text{भयात}}{\text{भभोग}}\right)}{९}$$ = अंशादिकश्चन्द्रः । अंशस्थाने त्रिंशदधिके त्रिंशत्तष्टिते जातो राश्यादिकश्चन्द्रः । अथास्य गतेरानयनं क्रियते । यदि भभोगघटीभिरष्टशतकला लभ्यन्ते तदा षष्टिघटीभिः का ? इति तात्कालिकी क्रियासम्पादिका चन्द्रगतिः $= \frac{८०० \times ६०}{\text{भभोग}} = \frac{४८०००}{\text{भभोग}}$, इत्युपपन्नं सर्वम् ॥

अथ दशमलग्नसाधनार्थं नतकालसाधनमाह—

**पूर्वं नतं स्याद्दिनरात्रिखण्डं दिवानिशोरिष्टघटीविहीनम् ।**
**दिवानिशोरिष्टघटीषु शुद्धं द्युरात्रिखण्डं त्वपरं नतं स्यात् ॥२०॥**

दिवानिशोः = दिनरात्र्योः, दिनरात्रिखण्डं = दिनार्धरात्र्यर्धमानं. इष्टघटीविहीनं = सत् पूर्वं नतं भवति । एतदुक्तं भवति–दिनार्धादल्पे इष्टे दिनार्धादिष्टं विशोधितं सत् पूर्वनतं स्यादेवं सूर्यास्तानन्तरं रात्र्यर्धमानादल्पे इष्टे रात्र्यर्धमानादिष्टं विशोधितं, तदाऽपि रात्रौ पूर्वं नतं भवति । अथ दिने दिनार्धाधिके इष्टमाने इष्टघटीषु दिनार्धमानं शुद्धं तदा दिने परं नतम् । रात्रौ मध्यरात्रितोऽधिके इष्टेऽर्थात् सूर्यास्ताद्रात्र्यर्धाधिके इष्टे इष्टघटीषु रात्रिदलं विशोधितं, तदा रात्रौ परनतं भवति ॥ २० ॥

अत्रोपपत्तिः—

यथा केशवीयजातकादौ याम्योत्तरवृत्तखण्डितगोलस्य प्राक्परकपालत्वं प्रतिपादितं, नह्यत्र ग्रन्थे तथा कपालकल्पनक्रमः । अत्र तूदयक्षितिजादूर्ध्वयाम्योत्तरवृत्तावधि पूर्वकपालः । दिनस्य पूर्वभागत्वात् । ऊर्ध्वयाम्योत्तरवृत्तादस्तक्षितिजावधि पश्चिमकपालः दिनस्य परभागत्वात् । अस्तक्षितिजादधोयाम्योत्तरवृत्तावधि रात्रेः पूर्वभागत्वात्पूर्वकपालो रात्रौ, एवमधोयाम्योत्तरवृत्तादुदयक्षितिजावधि रात्रेः परभागत्वात्परकपालसंज्ञेति कपालकल्पनयुक्तिः । तत्र रव्युपरिगताहोरात्रवृत्ते रवितऊर्ध्वयाम्योत्तरवृत्तावधि नतकालो दिवा भवति । रात्रौ तु रवितोऽधोयाम्योत्तरवृत्तावधि तदहोरात्रवृत्ते नतकालः । तत्र पूर्वाण्हे उदयक्षितिजादूर्ध्वयाम्योत्तरवृत्तावधिके दिनार्धमाने उदयक्षितिजाद्रविकेन्द्रावधिकाहोरात्रवृत्तखण्डस्येष्टकालसंज्ञत्वात् रविकेन्द्रयाम्योत्तरवृत्तान्तरीयाहोरात्रवृत्तखण्डस्य नतकालत्वात् पूर्वाण्हे

दिनार्धे इष्टकालशोधनेन पूर्वनतकाल एवावशिष्यते । एवमपराह्णे दिनार्धाधिकेष्टमानाद्दिनार्धं विशोधितं सत्परकपालीयं नतं भवति । पूर्वरात्रौ त्वस्तसमयान्निशीथावधिकरात्र्यर्धमानादस्तक्षितिजायोयाम्योत्तरवृत्तान्तर्गताहोरात्रवृत्तखण्डादस्तक्षितिजसूर्यावधिकाराहोरात्रवृत्तखण्डरूपं रात्रिगतघटीमानं यदि विशोध्यते तदा सूर्यविम्बकेन्द्राद्याम्योत्तरवृत्तावधि तदहोरात्रवृत्ते रात्रौ पूर्वनतमवशिष्यते । एवं निशीथानन्तरं पररात्राविष्टकालस्तदेष्टकालाद्रात्र्यर्धशोधनेन रात्रौ रवियाम्योत्तरवृत्तयोरन्तरे तदहोरात्रवृत्ते परनतमानमवशिष्यते इत्युपपन्नं सर्वम् ।

भाषा—दिनार्ध में यदि दिनगतघटी ( इष्टकाल ) घट जाय, तो शेष, दिन में पूर्वनत होता है । रात्र्यर्ध में यदि रात्रिगतघटी घट जाय, तो शेषमान रात्रि में पूर्वनत होता है । और यदि दिन गत घटी ही में दिनार्ध घट जाय तो दिन में परनत, तथा रात्रिगतघटी में रात्र्यर्ध ही घट जाय तो रात्रि में परनत होता है ॥ २० ॥

अथ लग्नानयनमाह—

**तत्काले सायनार्कस्य भुक्तभोग्यांशसङ्गुणात् ।**
**स्वोदयात्खाग्नि ३० लब्धं यद् भुक्तं भोग्यं रवेस्त्यजेत् ॥ २१ ॥**
**इष्टनाडीपलेभ्यश्च गतगम्यान्निजोदयात् ।**
**शेषं खघ्या ३० हतं भक्तमशुद्धेन लवादिकम् ॥ २२ ॥**
**अशुद्धशुद्धभे हीनयुक्तनुर्व्ययनांशकम् ॥ ३ ॥**

तत्काले = इष्टकाले, सायनार्कस्य = अयनांशयुक्तार्कस्य, भुक्तभोग्यांशसंगुणात्, स्वोदयात् = सायनार्काधिष्ठितराशिस्वदेशीयोदयमानात्, खाग्निलब्धम् = त्रिंशद्भक्ताद्यल्लब्धं तत् क्रमेण, रवेः = सायनरवेः, भुक्तं, भोग्यं भवति अर्थात् सायनार्कभुक्तांशैर्यदि स्वोदया गुण्यन्ते, त्रिंशद्भिर्विभज्यन्ते, तदा सूर्यस्य भुक्तासवो लभ्यन्ते । यदि च भोग्यांशैः स्वोदया गुण्यन्ते त्रिंशद्भिर्विभज्यन्ते, तदा तस्य भोग्यासवो लभ्यन्ते इति भावः । तत्, भुक्तं भोग्यम्, इष्टनाडीपलेभ्यः=पलीकृतेष्टघटीभ्यः, त्यजेत् = विशोधयेत्, शेषं यत्तस्मात्, निजोदयान् = गतगम्यान् = राश्युदयान्, त्यजेत्, यावच्छुद्ध्येत्तावदिति शेषः । यस्योदया न शुद्ध्यन्ति, सएवाशुद्धसंज्ञकः । अथ शेषं यत् तत् खघ्याहतं = त्रिंशद्गुणं, अशुद्धेन भक्तं = विभाजितं, तदा लब्धं लवादिकं भवेत्, तल्लवादिकम्, अशुद्धशुद्धभे हीनयुक्, यदि भुक्तप्रकारेण क्रिया कृता, तदा अशुद्धभे हीनं, यदि भोग्यप्रकारेण क्रिया क्रियते, तदा शुद्धभे युक्तं

कार्यं, तत् व्ययनांशकं = अयनांशहीनं, कार्यम्, तदा तनुः = प्रथमलग्नं भवेत्॥ ॥ २१ ॥ २२ + ½ ॥

## अत्रोपपत्तिः—

"यत्र लग्नमपमण्डलं कुजे तद्गृहाद्यमिह लग्नमुच्यते। प्राचि पश्चिमकुजेऽस्तलग्नकं मध्यलग्नमिह दक्षिणोत्तरे॥" इति भास्करोक्त्या पूर्वक्षितिजे क्रान्तिवृत्तस्य यः प्रदेशो यस्मिन् समये लगति, तदेव तदा लग्नं प्रथमसंज्ञकम्, लगतीति लग्नमिति व्युत्पत्त्या घटितम्।

तस्य साधनमत्र क्रियते, तत्र रविरिष्ट कालोऽयनांशाश्चैते ज्ञाताः सन्ति। अत्र सायनमेषादित एवोदयमानक्षेत्रसिद्धया गणितसिद्धे निरयणसूर्ये अयनांशयोजनेन गोलसन्धेः (सायनमेषादितः) सूर्यो जातः। तथा चोक्तं भास्करीयगणिताध्याये— 'युक्तायनांशादपमः प्रसाध्यः कालौ च खेटात् खलु भुक्तभोग्यौ' तत्र रविबिम्बकेन्द्रिकाहोरात्रवृत्ते प्राग्गर्भक्षितिजाद्रविबिम्बकेन्द्रपर्यन्तं सावनेष्टकालः। अर्थात् प्रथमलग्नसूर्यान्तरे क्रान्तिवृत्ते येंऽशास्तत्सम्बन्धी एव कालो रविबिम्बकेन्द्रिकाहोरात्रवृत्ते प्राग्गर्भकुजरविबिम्बकेन्द्रान्तर्धाराखण्डे विद्यते, परन्त्वत्र तच्चापखण्डाधोभागे समप्रोतस्य (क्षितिजवृत्तस्य) लग्नत्वान्न निरक्षोदयात्मकोऽपितु स्वोदयात्मकः। ध्रुवप्रोतवृत्तेन कालविभाजकत्वाभावात्। तत्र राशीनां पूर्वाभिमुखक्रमघटनदर्शनात् क्रान्तिवृत्ते रविकेन्द्रात्पूर्वतोरव्यधिष्ठितराश्यन्तावधि रवेर्भोग्यांशाः। तदग्रे (तत्पूर्वभागे) पूर्तिपूर्त्तिराशिमानानि। तत्पूर्वभागे क्षितिजासन्ने लग्नस्य भुक्तांशाः। लग्नावयवस्योत्तरोत्तरं प्रवहगत्याऽधस्तात्कुजोर्ध्वगमनात् लग्नतोऽधोभागवर्त्तिक्रान्तिवृत्तावयवस्य क्षितिजे संलग्नाभावादग्रिमक्षणसंलग्नसम्भवाद् भोग्यत्वम्। कुजोर्ध्वस्य भागस्य क्षितिजसंघर्षणेन भुक्तत्वाद्भुक्तत्वमिति स्पष्टम्। अतः पूर्त्तिपूर्त्तिराश्यनन्तरं त्वपूर्णराश्यवयवा लग्नभुक्तांशा एव। अत एव रविकेन्द्रोपरिगताहोरात्रवृत्ते रविकेन्द्रात् पूर्वस्यां दिशि रविभोग्यासवः। ततः पूर्णपूर्णराशिमानासवः। लग्नभुक्तासवश्च वर्त्तन्ते। एतेषां योग इष्टकालः। तत्रानुपातेन भोग्यासवः $= \frac{\text{राउअ} \times \text{भोअं}}{३०}$, एवं भुक्तासवः $= \frac{\text{राउअ} \times \text{भुअं}}{३०}$, तत्रेष्टघटीं पलात्मिकां

विधाय, तस्यां भोग्यपलानि विशोध्य ततः पूर्णपूर्णराशिस्वोदयपलानि विशोध्य, यदा शेषे शुद्धाग्रिमराशिस्वोदयपलानि न शुद्ध्यन्ति तदा स राशिः सायनलग्नमशुद्धसंज्ञम् । तत्र शेषञ्च सायनलग्नस्य भुक्तपलानि, अत एतत्सम्बन्धीयभागज्ञानायानुपातः $= \frac{३० \times शेष}{अ०रा०उ०}$ = ल० भु० प० यदीदं शुद्धराशिसंख्यायां योज्यते तदा सायनलग्नं भवेत्तत्रायनांशशोधनेन निरयणमेषादितः प्रथमलग्नं सिद्धम् । अथ यदि रविभुक्तांशवशाल्लग्नज्ञानमभीष्टम् ? तदेष्टघटीं षष्टितोहीनां कृत्वा शेषतुल्यमिष्टकालं मत्वा ततः क्रिया कार्या । दिवा भोग्यप्रकारेण लाघवम् । रात्रौ भुक्तप्रकारेण लाघवम् । भुक्तप्रकारे षष्टिशुद्धेष्टकालपलेषु रविभुक्तपलानि, तत् पृष्ठतः पूर्णपूर्णराशिमानानि विशोधितानि कृत्वा शेषं लग्नभोग्यपलानि । ततः पूर्ववदनुपातेन लग्नभोग्यांशाः $= \frac{३० \times शे}{अ०रा०उ०}$ । एते यदि अशुद्धराशिसंख्यायां विशोध्यन्ते, तदाऽपि सायनलग्नज्ञानं ततोऽयनांशहीनं कृतं सन्निरयणप्रथमलग्नमिति तत्रोदयसमये रविरेव लग्नम् । दिनार्धसमे इष्टे रविरेव दशमलग्नम् । दिनमानसम इष्टे सषड्भसूर्यतुल्यं लग्नम् । मध्यरात्रिसम इष्टे चतुर्थलग्नं रविसममेवेति बालावबोधार्थमुक्तम् ।

भाषा—जिस समय का लग्न बनाना हो, उस समय के अयनांश जोडे हुए रवि के भुक्तांश, और भोग्यांश से गुणा किये हुए, सायनसूर्य राशिके जो स्वोदयमान, उसमें तीससे भाग देने पर क्रमसे भुक्त भोग्य होंगे । अर्थात् सूर्य में अयनांश जोड़ने पर जिस राशि में हों, उस राशि के अपने देश का जो उदयमान, उसको सायनसूर्य के भुक्तांशसे गुणा करके तीस से भाग दे, तो सायनसूर्य का भुक्तफल होंगे । इसी तरह भुक्तांश के स्थान में भोग्यांश रखने से भोग्य भी होगा । अब यदि भोग्यप्रकार से लग्नानयन करना है तो इष्टदण्ड के पल बनाकर उसमें भोग्यपल घटाकर, अग्रिम राशि के उदयमान घटाना चाहिये, एवं आगे घटाते २ जो नहीं घटे, वही अशुद्धोदय होगा । वही राशि अशुद्धराशि भी होगा । यदि भुक्तप्रकारसे लग्नानयन करना हो, तो इष्टदण्डके पलमें रवि भुक्तपल घटाकर गत राशि का उदयमान घटाना, एवं उसके गत को इसी प्रकार गत उपगत राशियोंके उदयमान घटाते २ शेषमें जब जिस पूरे राशि का उदयमान नहीं घटेगा, तब वही अशुद्ध राशि, उसी का उदय अशुद्धोदय होगा । भुक्तप्रकार तथा भोग्यप्रकार दोनोंसे एक ही अशुद्ध राशि होगा । अशुद्ध राशि ही सायन लग्न होता है ।

अब आखिर का जो शेष पल मान रहे, उसको तीससे गुणाकर अशुद्धोदयसे भाग दे तो लब्धि लग्नके भुक्तांश, वा भोग्यांश होंगे यदि भुक्तांश हो तो अशुद्धराशि संख्या में घटावे, यदि लग्न के भोग्यांश हो, तो उसको शुद्ध राशि संख्यामें जोड़ना, यह सायनलग्न हुआ, इसमें अयनांश घटावें, तब निरयणलग्न होगा ॥ २१-२२ ॥

उदाहरण सूर्य००।१२।५७।५०″ इसमें ग्रहलाघव मत से अयनांश २३।३८।०० को जोड़ने से सायन सूर्य १।६।३५।५० इतना हुआ। अर्थात् एक राशि पूरा होकर, दूसरे राशि का ६ अंश भुक्त होकर सातवें अंश का ३५ कलायें भुक्त होकर, ३६ कला की ५० विकला भुक्त हुई। अर्थात् वृष राशि का ६।३५।५० इतने अंशादि भुक्त हुआ, उसको तीस ३० अंशमें घटाया तो २३।२४।१० इतने वृष का भोग्य अंश हुए। क्योंकि हर एक राशि में ३० अंश होते हैं, इसलिये भुक्तांश को तीस अंश में घटानेसे भोग्यांश शेष रहते हैं।

यहां काशीके उदयमान का प्रमाण—

चन्द्राक्षिपक्षाः २२१, गुणबाणपक्षाः २५३, वेदाभ्ररामाः ३०४, नयनाब्धिरामाः ३४२ ॥
बाणाब्धिरामाः ३४५, शररामरामाः ३३५
क्रमोत्क्रमान्मेषतुलादिमानम् ॥ इसके अनुसार

काशी का उदयमान—

| | | |
|---|---|---|
| मे० | २२१ | मी० |
| वृष | २५३ | कु० |
| मि० | ३०४ | म० |
| कर्क | ३४२ | ध० |
| सिं० | ३४५ | वृ० |
| क० | ३३५ | तु० |

अब यहां इष्टकाल १८।०२ है, इतने ही पर वर्षप्रवेश हुआ है। यह दिनमान से न्यून है, इसलिये भोग्यप्रकार ही लाघव होगा।

इसलिये यहां सायनसूर्य के भोग्यांशादि (२३।२४।१०) से वृषके उदयमान को गुणा करना चाहिये, भोग्यांशादि तीन खण्ड है, अतः उदयमान ही को तीन स्थानमें प्रत्येकखण्डसे गुणा करने पर हुए

| | | |
|---|---|---|
| २५३ | २५३ | २५३ |
| २३ | २४ | १० |
| ७५९ | १०१२ | २५३० |
| ५०६ | ५०६ | |
| ५८१९ | ६०७२ | |

अर्थात् तीनों जगह के गुणनफल ५८१९। ६०७२। २५३०, यहां तीसरे खण्डको साठसे भाग देकर लब्धिको दूसरेमें जोड़ना। शेषको अपने स्थान ही पर रखना।

फिर उस लब्धि युक्त द्वितीय खण्डको साठ से भाग देकर लब्धि को प्रथम स्थानमें जोड़ना, शेषको अपने ही स्थान पर रखना, जैसे—

| | | | |
|---|---|---|---|
| ५८१९ | ६०७२ | २५३० | |
| १०१ | ४२ | ६० | अर्थात् ५९२०।५४।१० इतने |
| ५९२० | ६११४ | १०शे० | हुए। अब इसको तीस से भाग |
| | ६० | | देना चाहिये तो पहले स्थान |
| | ५४शे० | | |

५९२० में ३० से भाग दिया, लब्धि १९७ आई, शेष बचा १० इसको साठ से गुणा किया ६०० द्वितीय खण्ड के शेष को जोड़ा तो ६५४ इसमें फिर तीस से भाग दिया तो लब्धि २१ आई, शेष बचा २४, इसको साठ से गुणा किया १४४० तृतीय स्थान के शेष १० जोड़ा तो १४५० इतने हुए, इसमें फिर तीस से भाग देने पर लब्धि ४८ हुई, शेष १० बचा, यहां शेष का प्रयोजन नहीं, केवल क्रमसे तीनों लब्धियां १९७।२१।४८ ये भोग्य पल विपल प्रतिविपल हैं। अब इसको इष्टघड़ी के पल में घटाना है, यहां इष्ट घटी १८।२, घटी को साठ से गुणा कर १०८०, पल २ जोड़ कर पलात्मक इष्ट काल १०८२ हुआ, इसमें भोग्य पल विपल प्रतिविपल को घटाया तो

| | |
|---|---|
| शेष बचा १०८२।००।०० | अब इसमें सायन सूर्य |
| १९७।२१।४८ | के अग्रिम राशियों के उदय |
| ८८४।३८।१२ | मान घटाना चाहिये। |

सो यहां मिथुन का ३०४, कर्क का ३४२ घटाया तो शेष २३८।३८।१२ यह रहा। इस के आगे सिंह का उदय नहीं घटता, इस लिये सिंह ही अशुद्धभ हुआ। यहां अशुद्ध का अर्थ गलत नहीं समझना, अर्थात् 'नहीं जो शुद्ध हो अर्थात् नहीं जो घट सके, वह अशुद्ध हुआ। अब याद के लिये सिंह के उदय के सामने 'अ' लिखिये।

अब शेष २३८।३८।१२ को तीससे गुणा किया तो इतने हुये ७१४०।११४०।३६० यहां साठ से जादे पल विपल नहीं होते हैं, इसलिये तीसरे खण्ड को साठ से भाग देने पर लब्धि ६ को दूसरे में जोड़ा तो दूसरा खण्ड ११४६ हुआ, इसमें भी साठ से भाग दियातो लब्धि १९ इतने को प्रथमखण्डमें जोड़ा, शेष ६ को यथा स्थान ही पर रखा, तो क्रम से ७१५९।६।०० इतने हुये। अब इसको अशुद्धोदय ३४५ से भाग दिया तो लब्धि २० आई, शेष बचा २५९, इसको साठ से गुणा किया और द्वितीय शेष ६ को जोड़ा तो १५५४६ इतने हुए, इसमें उसी अशुद्धोदय ३४५ से भाग दिया तो दूसरी लब्धि (४५) आई, शेष बचा २१ इसको फिर साठसे गुणा किया १२६० आये तीसरे स्थानमें शेष नहीं है जो जोड़ेंगे, इसलिये १२६० इसीमें फिर अशुद्धोदय से भाग दिया तो तीसरी लब्धि ३, यहां अर्धाधिक ग्रहणसे लब्धि ४, अब क्रमसे सब

लब्धियां २०।४५।०२ हुई, ये अंशादिक हैं, इसको शुद्ध राशि संख्या ४ में जोड़ने पर ४।२०।४५।४ इतने हुए, इसमें अयनांश २३।३८ घटाया तो निरयण लग्नमान राश्यादि हुआ ।

|  |  |
|---|---|
|  | ४।२०।४५।०४ |
|  | २३।३८।०० |
| प्र० लग्नम् | ३।२७।०७।०४ |

अब भुक्त प्रकारसे भी लग्नानयन दिखाता हूं— सू० ०।१२।५७।५० (+ २३।३८।०० = १।०३।३५।५०)

यहां भुक्तांश ६।३५।५० हुआ। इससे वृषके उदयमान २५३ को गुणा किया तो १५१८।८८५५।१२६५०, अन्तसे सठि आया तो १६६१।०५।५०, इसमें ३० से भाग देने पर लब्धि ५५।३८।१२ यह भुक्त पलादिक हुआ। यह शुद्ध है या नहीं, यह जांचके लिये भोग्य पलादिक १९७।२१।४८ जोड़ने पर २५३ वृष के सम्पूर्ण उदय मानके बराबर हुआ, इसलिये भुक्त पलादिक शुद्ध ही हैं। यहां इष्ट १८।०२ को साठमें घटाकर बांकी ४१।५८ इष्टकाल माना। इसको पलात्मक किया २५१८ इसमें भुक्त पलादिक को घटाया तो शेष २४६२।२१।४८ इसमें वृषसे पूर्व राशियोंके उदयमानों को घटाया तो कन्या तक का २३५६ योग घट गया, सिंह नहीं घटा, इसलिये सिंह ही अशुद्ध हुआ। भुक्त भोग्य दोनों प्रकारसे एकही अशुद्धोदय होता है। यह ध्यान देना चाहिये। यदि भिन्न हो जाय तो गलत समझना।

अब यहां शेष बचा १०६।२१।४८, इसको तीस ३० से गुणा करने पर इतने हुए ३१८०।६३०।१४४० सठियाने पर ३१९०।५४।०० इतने हुए। इसको अशुद्धोदय ३४५ से भाग देने पर अंशादिक लब्धि ९।१४।५६ इतनी हुई, इसको अशुद्धराशि संख्या ५ में घटाया तो

|  |
|---|
| ५।००।००।०० |
| ९।१४।५६ |
| ४।२०।४५।०४ |

शेष ४।२०।४५।४ इसमें अयनांश २३।३८।०० घटाया तो शेष ३।२७।०७।४ यह प्रथम लग्न हुआ। इतने ही भोग्य प्रकारसे सिद्ध हुआ। इसलिये प्रथम लग्न शुद्ध (ठीक) हुआ, यह विश्वास हुआ। जहां फरक पड़े, वहां गलत समझना, कौन गलत है ?, यह ठीक नहीं कह सकते, इसलिये बार बार बनाकर एक ही आवे, तब समझना शुद्ध है। एकही दफे लग्न बनाकर नहीं छोड़ना।

**एक बात कहना आवश्यक रह गया है** सो यह है कि "शेषं खत्र्याहतम्" अर्थात् इष्ट नाड़ी पल में जो भोग्यपल घटाकर शेष को तीस से गुणा करके बाद सठियाते हैं, वहां सिर्फ प्रथम स्थान ही को तीससे गुणा करे उसमें अगिले खण्ड का आधा जोड़ दे, यदि अगिले खण्ड विषम अङ्क हो तो वहां आधा करने

पर पूर्णाङ्क ही पूर्व खण्डमें जोड़ना, शेष स्थान में ३० रखना। ऐसे तीसरे खण्ड का आधा उस द्वितीय स्थान के ३० में जोड़ना।

जैसे भुक्तांशसे स्वोदय को गुणाकर १८१=।८८५५।१२६९० इसको सठियाकर १६६९।५।२० ऐसा बना है, यहां सिर्फ पहले स्थान १६६६ में ३० से भाग दिया तो प्रथम लब्धि ५०, शेष १९ को दूना किया ३८, इसमें त्रिंशद्भक्त द्वितीय शेष ५, कुछ भी नहीं हुआ, यदि कुछ होता तो ३८ में जोड़ देना यहां वैसे रहा। अब, द्वितीयं शेष को दूना करके तृतीय शेष को तीस से भाग देने पर जो लब्धि अर्धाधिक लेकर २ हुई, सो उसमें जोड़ दिया तो १२ हुआ, अतः क्रमसे ५५।३८।१२ इतने बन गये। इसमें थोड़ा प्रयास है॥

उदाहरण—देखिये ऊपर भुक्त प्रकार के लग्नानयनमें और इष्ट घडाके पल २५१८ में भुक्तपलादि ४२।३८।१२ और मेषसे विलोम क्रमसे कन्या तक उदयमान का योग २३९६ घटानेसे जो शेष १०६।२१।४८ बचा, यहां तक उदयमान का योग २३४६ घटानेसे जो शेष १०६।२१।४८ बचा, यहां केवल १०६ इसीको ३० से गुणा किया ३१८० और मध्यखण्डके आधा १० जोड़ा तो ३१९० प्रथमखण्ड हुआ। दूसरा ३० हुआ, और अन्त्य खण्ड ४८ का आधा २४ उसमें जोड़ा तो द्वितीयखण्ड ५४ हुआ। तृतीयखण्ड ० हो गया, क्योंकि ४८ सम अंक था, इसलिये ठीक आधा २४ हो गया, यदि विषम होता जैसे ४९ होता, तो २४ को द्वितीय खण्डमें देना, तृतीय खण्डमें ३० रहता।

इन दोनों प्रकार की युक्ति—

प्रथमस्थानके शेषको साठसे गुणा करके द्वितीयस्थानके शेषको जोड़ने पर तीससे भाग देना है तो द्वितीय लब्धि होती है, फिर द्वितीय शेषको साठसे गुणा करके तृतीय शेषको जोडे और तीससे भाग दे तो तृतीय लब्धि होती है। यहां उक्तरीतिसे

लब्धि $= \frac{\text{प्रशे } ६० + \text{द्विशे}}{३०} = २ \text{ प्रशे} + \frac{\text{द्विशे}}{३०}$, तथा $\frac{६० \text{ द्विशे} + \text{तृशे}}{३०} = २\text{द्विशे} + \frac{\text{तृशे}}{३०}$

इससे प्रथमविधान उपपन्न हुआ।

अब भुक्तांश या भोग्यांश साधन में युक्ति दिखाता हूं—

जैसे शेष = घ। प। वि, इस को तीससे गुणा किया तो ३० शे = ३० घ ३०प। ३० वि अन्तसे सठिआया तो $\frac{३० \text{ शे}}{=} = ३०\text{घ} + \frac{३० \text{ प}}{६०} + \frac{३० \text{ वि}}{६०} = ३० \text{ घ} + ५$।

$\frac{\text{विप}}{२} = ३० \text{ घ} + \text{ल} + \frac{\text{पशे}}{२} + \text{ल} + \frac{\text{विशे}}{२}$, इससे लिखी हुई वपत सिद्ध होगई। इति।

अब उतने ही १८।२ इष्टकालमें उसी सूर्य परसे लग्नानयन दिखाता हूं इसमें

अन्तर यही कि पलभा भेदसे मिथिलाका उदयमान भिन्न है । जैसे मिथिला देशीय उदयमान का प्रमाण—

अष्टेन्दुपक्षाः शशिबाणपक्षा गुणाभ्ररामा गुणवेदरामाः ।
शैलाब्धिरामा वसुरामरामाः क्रमोत्क्रमान्मेषतुलादिमानम् ॥

इसके अनुसार मे०उ० = २१८, वृ०उ० = २५१, मि०उ० = ३०३, कर्क उ० = ३४३ सिंह उ० = ३४७, कन्याउ०=३१८, तु०उ०=३३८, वृश्चिकउ०=३४७, ध०उ०=३४३ म०उ० = ३०३, कु०उ० = २५१, मी०उ० = २१८,

अयनांश मिथिलादेशीय काशीसे भिन्न हैं-मिथिलादेशीय अयनांश साधन प्रकार—

शाकमेकाक्षिवेदोनं द्विः कृत्वा दशभिर्हरेत् ।
लब्धं हीनं च तत्रैव सायनांशाः कलाः स्मृताः ॥

अर्थ—जिस शाके में बनाना हो, उसमें ४२१ इतनेको घटाकर, दो जगह लिखना, एक स्थानमें दश से भाग देकर लब्धिको दूसरे स्थानमें घटाना, शेष तुल्य अयनांशकी कला होगी । उदाहरण—जैसे शाके १८६२ इसमें ४२१ घटाया, शेष १४४१ को दो जगह लिखा, फिर १४४१ इसमें दशसे भाग दिया तो १४४ लब्धि आई, शेष १ बचा इसको साठसे गुणा किया फिर दशसे भाग दिया तो लब्धि ६ आई, अतः सावयव लब्धि १४४।६ को प्रथम स्थानके १४४१ में घटाया १४४१।००।०० यह कलात्मक अयनांश, इस को प्रथमस्थान में साठसे भागदिया तो १४४।०६ अंशादिक अयनांश २१°।३६'।५४" हुआ । लेकिन यह सौरवर्षादि का १२९६।५४।०० हुआ । अब इष्टदिन का कैसे साधन किया जाय ? उसका प्रकार ।

अर्को लवीकृतस्त्रिघ्नो नखाप्तो हि कला मताः ।
ता वर्षाद्ययनांशैस्तु युक्ता इष्टदिने स्मृताः ॥

अर्थ—इष्ट दिनके सूर्य का अंश बनाना, अर्थात् राशिको तीससे गुणा करके अंश जोड़े, उसको तीनसे गुणा करके २० से भाग दे, लब्धि कला, विकला अयनांश होगा, उसको शकादिके अयनांश में जोड़ना तो इष्ट दिन का अयनांश हो जायगा ।

उदाहरण—यथा सूर्य ००।१२।५०।५७, यहां राशि शून्य ही है । इसलिये अंशादिक १२।५०।५७ यही हुआ, तीनसे गुणा किया ३६।१५०।१७१ सठिआया ३८।३२।५१, इसमें २० से भाग दिया तो लब्धि १'।५५"।३८'''।३३'''' इसको शकादि के अयनांश २१°।३६'।५४" में यथा स्थानमें जोड़ने पर २१°।३६'।५५"।५५'''।३८''''।३३ इसमें विकला पर्यन्त ही का गणितमें उपयोग होता है। इसलिये इष्टदिन का अयनांश २१°।३६'।५५" हुआ । और देशों के अयनांश स्थूल हैं । सालभर स्वल्पान्तर से एक ही अयनांशसे काम चलाते हैं । जो कुछ,

अब मिथिला देशानुसार लग्नसाधन दिखाता हूं—

सूर्य ००।१२।९७।९० इसमें अयनांशा २१।३६।५५ जोड़ दिया १।४।३४।४९ यहां वृषराशि का ४।३४।४९ भुक्तांश हुआ। इसको तीसमें घटानेसे भोग्यांश यहां वृष-राशि का ४।३४।४५ भुक्तांश हुआ। इसको तीसमें घटानेसे भोग्यांश २९।२९।१५ इससे वृषमें उदयमान २९१ को गुणा किया ६२२५।६९७५।३७६९ सठिआया ६३९७।१७।४५, इस में ३० तीस से भागदिया तो लब्धि—भोग्यपलादिक आई २१३।०४।२५ इसको इष्ट नाड़ी पल १०८२ में घटाया, तोष ८६८।५५।२५ इसमें मि-थुन ३०३ कर्क ३४३ के उदयमानो ६४३ को घटाया तो बाँकी बचा २२२।५५।२५, इसको तीस गुणा कर सठिया करके हुआ ६६८७।४२।३० इसमें अशुद्ध सिंहके उदय ३४७ से भाग देने पर लब्धि ०१९।१६।२२ इसको शुद्धराशि संख्या ४ में जोड़ा तो ४।१९।१६।२२ इसमें अयनांश २१।६६।९९ को घटाया बाँकी प्रथमलग्न हुआ ६।२७।३६।२७॥

उदाहरण—सूर्य ००।१३।४०।४० अयनांश २३।३८ इष्ट ०२।१० यहां सूर्य ००।१३°।४०।४०" में ऊयनांश २३°।३८' जोड़ा १।७।१८।४० अंशादि ७।१८।४० को ३० तीसमें घटाया तो भोग्यांश ०२२।४१।२०, यहां सायन सूर्यको वृषराशिमें रहनेसे वृषके उदयमान को तीन स्थान में रखकर भोग्यांशके २२।४१।२० तीनों खण्डोंसे गुणा करने पर ५५६६।१०३७३।५०६० अन्तसे सठियानेसे ५७५०।१७।२० तीससे भाग देने पर १९१।२०।३४ यह भोग्य पल हुआ।

| | | | |
|---|---|---|---|
| मे० | उ० | २२१ | मी० |
| वृष० | उ० | २५३ | कु० |

इसको इष्ट नाड़ीपल १३० में घटानेको जाता तो घटता ही नहीं। क्यौंकि १९१ इससे १३० यह थोड़ा है इस लिये यहां "भुक्तं भोग्यं रवेस्त्यजेत्।" यह क्रिया नहीं लगती है, इस हालतमें 'भुक्तं भोग्यं स्वेष्टकालान्न शुद्ध्येत्" इस श्लोक का अवसर आया।

यहां इष्ट नाड़ीपल १३० को ३० से गुणा किया ३९०० इसमें वृषके उदय २५३ से भाग देने पर लब्धि १५°।२४'।५४" यह लवादिक फलको सूर्यमें जोड़ा (००।१३°।४०'।४०") + १५°।२४'।५४" = ००।२९।०५।६४ यह प्रथम लग्न हुआ। यह उदाहरण केवल यहां हीके लिये समझना। सर्वत्रके लिये ३।२७।०७।०९ यह प्रथमलग्न लेना॥ यहां सवादिक सूर्यको सायन सूर्यमें जोड़ घटाकर बाद अयनांश घटाकर लग्न बनाना यह गौरव है, इसलिये निरयण सूर्य हीमें इष्ट सम्बन्धी अंश भोग्य प्रकारमें जोड़ना। और भुक्तप्रकार सूर्यमें निरयण सूर्यमें घटाना तो लग्न हो जायगा। इति॥

अथ दशमलग्नसाधनमाह—

**एवं लङ्कोदयैर्भुक्तं भोग्यं शोध्यं पलीकृतात्॥ २३॥**

पूर्वपश्चान्नतादन्यत्प्राग्वत्तद्दशमं भवेत् ॥ २३ ॥

प्रथमलग्नसाधने स्वोदयैः सायनार्कस्य भुक्तं भोग्यं च साधितम्, अत्र तु लङ्कोदयैर्भुक्तं भोग्यं साध्यम् । अत्रेष्टघटीस्थाने नतघटी ज्ञेया ततस्तत्काले सायनार्कस्येत्यादिना क्रिया कार्या, तदा दशमं लग्नं भवेत् ( अर्थाद्यदि पूर्वान्त घटी, तथा भोग्यप्रकारेण, यदि च परनतघटी, तदा भुक्तप्रकारेणेति शेषः ॥ २३ ॥

अत्रोपपत्तिः—

इष्टकाले क्रान्तिवृत्तोर्ध्वयाम्योत्तरवृत्तयोः सम्पातो दशमलग्नसंज्ञः । तत्र रव्युपरिगतध्रुवप्रोतवृत्तनाडीवृत्तयोः सम्पातान्निरक्षखमध्यावधि नाडीवृत्ते नतघटी, वा रव्युपरिगताहोरात्रवृत्ते रविकेन्द्राद्याम्योत्तरवृत्तावधिका नतघटी । अत्र याम्योत्तरवृत्तमेव क्षितिजं कल्प्यं, रविस्तु रविः । तत्रेष्टकालो नतघट्येव । यदि परनतं तदा रविभोग्यप्रकारेण, यदि पूर्वनतं तदा रात्रिशेषेष्टकालवत् भुक्तप्रकारेण दशमलग्नं साध्यम् अत्र क्षितिजस्य ध्रुवप्रोतत्वान्निरक्षोदयमानात्तत्साधनम् । रवेर्भुक्तभोग्यासुसाधनवासना प्रथमलग्नवदेव—

भाषा—जैसे प्रथम लग्न साधन किया है, वैसे ही दशमलग्न भी, लेकिन स्वोदयके जगह यहां निरक्षोदय लेना चाहिये । इष्टघटीके जगह नतघटी लेनी चाहिये । यदि पूर्वनत होतो भुक्तप्रकारसे, परनतहो तो भोग्यप्रकारसे क्रिया करनी चाहिये । और सब प्रथमलग्नवत् ही विधि समझना । तब दशमलग्न होता है ॥ २३ ॥

उदाहरण—सूर्य०।१२।५७।५०। अयनांश २३।३८ जोड़ने पर सायनार्क १।६।३५।५० यहां भुक्तांश ६।३५।५०'' इसको ३० अंश में घटाने पर भोग्यांश २३।२४।१० हुआ । यहां निरक्षोदय का प्रयोजन होता है-इसलिये निरक्षोदयमान का प्रमाण 'लङ्कोदया विघटिका गजभानि गोऽङ्कदस्रास्त्रिपक्षदहनाः क्रमगोत्क्रमस्थाः ।' इस के अनुसार मेषादि राशियों के निरक्षोदयमान ।

| | | |
|---|---|---|
| मे० | २७८ | मी० |
| वृष | २९९ | कुं० |
| मि० | ३२३ | म० |
| कर्क | ३२३ | ध० |
| सिं० | २९९ | वृ० |
| कन्या | २७८ | तु० |

यहां इष्टकाल नतघटी ही होती है । सो परनत १।५७ इतना है । अब सायनार्क के राशि वृष है, इस लिये वृष के निरक्षोदय २९९ को अलग अलग भोग्यांश २३।२४।१० खण्डों से गुणा किया, तो ६८७७।७१७६।२९९० इतने हुए । अब अन्त से सठि आया, तो ६९९७।२।५० हुए । इसको तीस से भाग देने पर पलादिक लब्धि २३३।१४।५१ इसको नतघटी के पलात्मक ११७ में घटाया, तो नहीं घटता, इस लिये यहां अब "तत्काले सायनार्कस्य" इस प्रकार से क्रिया नहीं बनती । इस लिये 'भुक्तं भोग्यं स्वेष्टकालान्न शुद्ध्येत् त्रि-

शनिघ्नात्स्वोदयाप्तं लवाद्यम् । हीनं युक्तं भास्करे तत्तनुः स्याद्रात्रौ लग्नं भार्धयुक्ताद्रवेस्तु ॥" इस श्लोक के अनुसार क्रिया करनी पड़ेगी । यहां इष्टकाल ११७ को ३० से गुणा किया तो ३५१०, इसमें वृषके निरक्षोदय से भाग दिया तो, लब्धि ११।४४।२१ यह अंशादिक हुई, इसको यदि सायन सूर्य में जोड़ा तो १।१६।१०।६ इतने हुए, इसमें अयनांश २३।३८ को घटाया तो ००।१४।४२।११ हुआ । यहां सायन सूर्य में जोड़ने से पीछे अयनांश घटाना गौरव क्रिया होती है । इस लिये निरयण ही सूर्य ००।१२।५७।५० में उस अंशादिक लब्धि को जोड़ दिया तो सीधे ही दशमलग्न आगया ००।२४।४२।११ ॥ "भुक्तं भोग्यं" का यह भी उदाहरण हो गया ॥

दशम लग्न पर और कुछ ज्ञातव्य विषय लिखना आवश्यक है—यदि दिनार्ध के तुल्य इष्ट काल हो तो सूर्य समान ही दशम लग्न समझना । यदि मिश्रमान तुल्य इष्ट काल हो तो सूर्य में छै राशि जोडने से दशम लग्न, सूर्य के तुल्य चतुर्थ लग्न होता है ।

यदि मिश्रमान के नजदीक पूर्व या पश्चात् इष्ट काल हो तो, चतुर्थ लग्न ही का साधन जल्दी होगा, उसमें छै राशि जोड़ने पर दशम लग्न होगा । मेषादि छै राशि में प्रथम लग्न होने से दशम लग्न से प्रथम लग्न तीन राशि से अधिक अन्तरित होता है । तुलादि छै राशि प्रथम लग्न होने से दशम लग्न से प्रथम लग्न तीन राशि के अन्दर में होता है । यह साधारणतया अन्दाजा शुद्धाशुद्ध समझने के लिये लिखा है ।

सिर्फ सायम मेषादि, सायन तुलादि लग्न होने से लग्न से १ राशि पर धन भाव, २ राशि पर सहज भाव, ३ राशि पर चतुर्थ भाव, ऐसे एक एक राशि अन्तर सब भावों का होगा । और समये में ऐसा नहीं । कोई २ ज्यौतिषी लग्नांश के समान ही सदा सब भावों को माना है, यह गोल युक्ति से बहिर्भूत मालुम पड़ता है।

यदि नत काल बिना ही दशम लग्न साधन करना इष्ट हो । तो प्रथम लग्न में छै राशि जोड़ कर सप्तम लग्न जाना गया इसी को सूर्य मान कर दिनार्ध का साधन किया, उसी को इष्ट काल माना, सप्तम लग्न को ही सूर्य माना उस पर से और निरक्षोदय पर से क्रमलग्नानयन विधि से जो लग्न होगा वही दशम लग्न होगा ॥ इसका श्लोक—सप्तमलग्नमिनं परिकल्प्यं साध्यं घस्रदलं तदिहेष्टम् ।

व्यक्षोदयवशतो यल्लग्नं भोग्याद् वेद्यं तद्दशमाङ्गम् ॥

अथवा—लग्नं प्रथमं सूर्यं मत्वा रजनीदलमिह साध्यं विज्ञैः ।

तत्तुल्येष्टे व्यक्षौ भुक्तैराद्यं लग्नं यद्दशमं तत् ॥ इति ।

या प्रथम लग्न ही को सूर्य मान कर उस पर से चर साधन कर रात्रिमान बनाना,

उसके आधे को ही इष्ट काल मान कर भुक्त प्रकार से जो निरक्षोदय पर से प्रथम लग्न होगा, वही दशम लग्न होगा।

अथससन्धिशेषभावानयनमाह—

**सषड्भे लग्नखे जायातुर्यौ लग्नोनतुर्यतः ॥ २४ ॥**
**षष्ठांऽशयुक्तनुःसन्धिरग्रे षष्ठांशयोजनात्।**
**त्रयः ससन्धयो भावा षष्ठांशोनैकयुक्सुखात् ॥ २५ ॥**
**अग्रे त्रयः षडेवं ते भार्धयुक्ताः परेऽपि षट्।**
**खेटे भावसमे पूर्णं फलं सन्धिसमे तु खम् ॥ २६ ॥**

लग्नखे = प्रथमलग्न-दशमलग्ने, सषड्भे = षड्राशियुक्ते, तदा जायातुर्यौ = सप्तमचतुर्थभावौ भवतः। ( अर्थात् लग्नं षड्राशियुक्तं सप्तमभावः। दशमलग्नं षड्राशियुक्तं तदा चतुर्थभावो भवति )। लग्नोनतुर्यतः = प्रथमलग्नहीनचतुर्थभावात्, षष्ठांशयुक् तनुः = लग्नशोधितचतुर्थभावस्य षष्ठांशेन युक्तं लग्नं, तनुःसन्धिः = लग्नसन्धिः स्यात्। ततोऽग्रे षष्ठांशयोजनात् ससन्धयः त्रयः = ससन्धिधनसहजसुखभावाः स्युः। अर्थात् लग्ने षष्ठांशयोजनेन लग्नसन्धिः। लग्नसन्धौ षष्ठांशयोजनेन धनभावः। धनभावे तत्षष्ठांशयोजनेन धनसन्धिः। धनसन्धौ तत्षष्ठांशयोजनेन सहजभावः। सहजे षष्ठांशयोजनेन सहजसन्धिः। सहजसन्धौ षष्ठांशयोजनेन सुखभावः। इति। अथ पञ्चमादिभावसाधनमुच्यते-षष्ठांशोनैकयुक्सुखात् = षष्ठांश एकराशौ विशोध्यः, शेषं यत्तेन युक् = युक्तं, सुखं=चतुर्थभावो यो भवति तस्मात्, अग्रे = चतुर्थभावात्परे, त्रयः = चतुर्थपञ्चमषष्ठभावाः भवन्ति। एवं लग्नात् षड्भावाः सिद्ध्यन्ति। ते = षट् लग्नादिषष्ठान्तभावाः, भार्धयुक्ताः = षड्राशियुक्ताः, तदा परे = सप्तमादिद्वादशान्ताः, अपि षट् भावा जाताः। भावसमे = ग्रहे, पूर्णं जातकताजिकोक्तफलं समग्रं भवति। सन्धिसमे खेटे खं = शून्यं फलं भवतीति ॥ २४ ॥ २५ ॥ २६ ॥

**अत्रोपपत्तिः—**

द्वयोर्महद्वृत्तयोः सम्पातौ षड्भान्तरितौ भवत इति युक्त्या प्रथमलग्नात्सप्तमलग्नस्य ( अस्तक्षितिजक्रान्तिवृत्तसम्पातरूपस्य षड्भान्तरितत्वात् प्रथमलग्नं सषड्भं सत्सप्तमलग्नं भवत्येवं दशमलग्नादूर्ध्वयाम्योत्तरक्रान्तिवृत्तसम्पातात् चतुर्थलग्नस्य ( अधोयाम्योत्तरवृत्तक्रान्तिवृत्तसम्पातस्य षड्भान्तरितत्वाद्दशमलग्नं

सषड्भं कृतं सच्चतुर्थलग्नं भवतीति बालगम्यमेव । अथ क्षितिजयाम्योत्तरवृत्ताभ्यां क्रान्तिवृत्तस्यासमा ये चत्वारः सम्पातास्ते प्रथमचतुर्थसप्तमदशमभावाः सर्वमतेन सिद्धा एव, तदन्तरालभावानयनार्थं प्रागगर्भक्षितिजक्रान्तिवृत्तयोः सम्पातादधोयाम्योत्तरक्रान्तिवृत्तसम्पातावधिकचापस्य प्रथमलग्नचतुर्थलग्नान्तरस्य समास्त्रयो विभागाः कृताः सन्तः द्वितीयतृतीयचतुर्थभावास्तत्र सन्धेः सीमाज्ञानाय तदन्तरस्य षट् विभागाः कृताः । लग्ने षष्ठांशयोजनेन लग्नसन्ध्यवशालसीमा, तत्र षष्ठांशयोजनेन धनभावः । एवं स्पष्टम् , तत्र प्रथमलग्नात्सप्तमलग्नावधिं भार्धांशाः । चतुर्थलग्नाद्दशमलग्नावधि भार्धांशाः । तत्र चतुर्थलग्नसप्तमलग्नान्तरमितयोभयनिष्ठचापखण्डस्य विशोधनेन प्रथमचतुर्थलग्नान्तरसमानमेव सप्तमदशमलग्नान्तरं सिद्धम् । तत्र प्रथमचतुर्थलग्नान्तरचापस्य समविभागत्रयतुल्या एव सप्तमदशमलग्नान्तरचापविभागा अतो 'भार्धयुक्ताः परेऽपि षट् ।' इत्युक्तम् । यथा लग्नचतुर्थलग्नयोरन्तस्य समास्त्रयो विभागाः कृतास्तथैव चतुर्थसप्तमलग्नान्तरस्यापि चापस्य समास्त्रयो विभागाः पञ्चमषष्ठसप्तमभावा भवन्ति । तत्रापि भावानां सन्धिज्ञानाय तदन्तरस्य समाः षड्विभागाः कृता एकैकषष्ठांशयोजनेन सन्धयो भावाश्च भवेयुः । तत्र लग्नचतुर्थलग्नान्तरषष्ठांशज्ञाना चतुर्थसप्तमलग्नान्तरचापषष्ठांशज्ञानं क्रियते अत उपपन्नं सर्वम् , अथ प्रथमचतुर्थलग्नान्तरचापोनाः षड्राशय श्चतुर्थसप्तमलग्नान्तरचापा भवन्ति ६-(च—प्र) = स—च, अत्र पक्षौ षड्भिर्विभक्तौ तदा

$$१—\frac{(च—प्र)}{६} = \frac{स—च}{६}$$

, अतः षष्ठांशोनैकयुक्सुखादिरुदुक्तम् ।

भाषा—लग्न में छै राशि जोड़नेसे सप्तमभाव होता है । दशम लग्न में छै राशि जोड़नेसे चतुर्थ भाव होता है । अब चतुर्थ भाव में लग्न को घटाकर शेषका षष्ठांश बनाना, उसको लग्नमें जोड़नेसे लग्नकी सन्धि हुई । उसमें फिर षष्ठांश जोड़नेसे धन भाव, धन भावमें वही षष्ठांश जोड़नेसे धनकी सन्धि बनी, फिर उसमें षष्ठांश जोड़नेसे सहजभाव बना, फिर उसमें षष्ठांश जोड़ने से सहजसन्धि होगी । फिर षष्ठांश जोड़नेसे चतुथ भाव हुआ। तनु धन सहज ये तीन भाव हुए। चतुर्थ भाव तो ज्ञात ही है ।

अब उसी षष्ठांशको एक राशिमें घटाकर शेष को चतुर्थभावमें जोड़ा, तो चतुर्थभावकी सन्धि हुई, फिर उसमें वही शेषको जोड़ा तो पञ्चम ( सुत )भाव हुआ। फिर उसमें वही शेषको जोड़ा पञ्चमभावकी सन्धि हुई। फिर उसमें शेषको

जोड़ा तो षष्ठभाव हुआ। फिर उसमें वही शेषको जोड़ा, तो षष्ठभाव की सन्धि हुई। षष्ठभावकी सन्धि में उसीको जोड़ा तो सप्तम भाव बना, यहां सप्तमतो ज्ञातही था, इसलिये ये ५।६।७ तीन भाव बने। यहां यदि शेष जोड़नेसे सप्तमभाव, पूर्वसिद्ध सप्तम के तुल्य हुआ तो ठीक है। नहीं तो अशुद्ध समझिये। तब फिरसे जोड़िये।

इस प्रकार ये छै भावोंमें छै छै राशियां जोड़नेसे शेष छै जाया मृत्यु धर्म कर्म आय व्यय ये भाव हो जायंगे॥ २४-२६॥

उदाहरण—प्रथमलग्न ३।२७।७।४ इसमें छै राशि जोड़ा, तो सप्तम भाव ९।२७।७।४ हुआ, और दशमलग्न ००।२४।४२।११। में छै राशि जोड़ा तो चतुर्थ भाव ६।२४।४२।११ हुआ।

अब ३।२७।७।४ इस प्रथमलग्नको चतुर्थभाव ६।२४।४२।११ में घटाया तो शेष बचा २।२७।३५।७ इसका षष्ठांश ००।१४।३५।५१ शेष १ रहा,

लग्न ३।२७। ७। ४

जोड़नेसे लग्नसन्धि ४।११।४२।५५

फिर षष्ठांश जोड़नेसे धनभाव ४।२६।१८।४६

एवं षष्ठांश जोड़नेसे धन सन्धि ५।१०।५४।३७

एवं षष्ठांश जोड़ने से सहजभाव ५।२५।३०।२९

षष्ठांशका शेषमें अर्धाधिकग्रहणसे फिर षष्ठांश जोड़ने से सहजसन्धि ६।१०।६।२०

इसमें फिर षष्ठांश जोड़ने पर सुखभाव ६।२४।४२।११

यहां यह जोड़ा हुआ चतुर्थभाव गणितागत चतुर्थभावसे मिल गया, ठीक है। अब उस षष्ठांश ००।१४।३५।५१ को ३० अंशमें घटाया शेष ००।१५।२४।९ यहां एक विकला का षडंश ऋण शेष है, अतः चतुर्थ स्थानमें एक घट जायगा। अर्धाधिक नियमसे इस षष्ठांशको ००।१५।२४।९

६।२४।४२।११

चतुर्थभावमें जोड़ा, तो सुखभाव की सन्धि हुई ७।१०। ६।२०

फिर उस शेष को जोड़ने से सुतभाव ७।२५।३०।२८

फिर उस शेष को जोड़ने से सुतसन्धि ८।१०।५४।३७

फिर उस शेषको जोड़ने पर रिपुभाव ८।२६।१८।४६

पुनः उस शेषको जोड़ने पर रिपुसन्धि ९।११।४२।५५

फिर उस शेषको जोड़ने पर जायाभाव ९।२७। ७। ४

यह सप्तम लग्न के समान होगया, इसलिये गणित ठीक है। अब इन छै ससन्धि भावों में छै छै जोड़ने पर शेष छै भाव हो जायँगे।

इस प्रकार ससन्धिद्वादशभावचक्र—

| तनु | ३ | २७ | ७ | ४ | सन्धि | ४ | ११ | ४२ | ५५ |
|---|---|---|---|---|---|---|---|---|---|
| धन | ४ | २६ | १८ | ४६ | सन्धि | ५ | १० | ५४ | ३७ |
| सहज | ५ | २५ | ३० | २९ | सन्धि | ६ | १० | ६ | २० |
| सुख | ६ | २४ | ४२ | ११ | सन्धि | ७ | १० | ६ | २० |
| सुत | ७ | २५ | ३० | २८ | सन्धि | ८ | १० | ५४ | ३७ |
| रिपु | ८ | २६ | १८ | ४६ | सन्धि | ९ | ११ | ४२ | ५५ |
| जाया | ९ | २७ | ७ | ४ | सन्धि | १० | ११ | ४२ | ५५ |
| मृत्यु | १० | २६ | १८ | ४६ | सन्धि | ११ | १० | ५४ | ३७ |
| धर्म | ११ | २५ | ३० | २९ | सन्धि | ०० | १० | ६ | २० |
| कर्म | ०० | २४ | ४२ | ११ | सन्धि | १ | १० | ६ | २० |
| आय | १ | २५ | ३० | २८ | सन्धि | २ | १० | ५४ | ३७ |
| व्यय | २ | २६ | १८ | ४६ | सन्धि | ३ | ११ | ४२ | ५५ |

अथ भावकुण्डलीचक्रम् ।



भाव कुण्डलीमें ग्रहनिवेशविचार पहले कुण्डली लिखकर उसमें तनु, धन, सहज सुख सुत रिपु, जाया मृत्यु धर्म कर्म आय व्यय ये द्वादश भावोंके नाम लिखकर विचारना कि कौन ग्रह किस खाने में होगा ?—

यथा सूर्य ००।१२।२७।५० है, तो देखिये धर्म भावकी सन्धि ००।१०।६।२० इससे सूर्य अधिक है, और कर्म भाव ००।२४।४२।११ से न्यून है, इसलिये कर्म भाव हीमें पड़ा। चन्द्रमा ८।५।३९।३३ है, यहां यह सुत भाव से अधिक, सुतसन्धि से न्यून है, इसलिये सुतसन्धि में पड़ा ।

अथ मङ्गल ११२२।१३।८३ है, यह भावचक्र देखनेसे कर्मसन्धि से आगे आय भावके अन्दर पड़ा, इसलिये आय भावमें मङ्गल हुआ।

बुध ११।२३।५९।०९ है, यह मृत्युके सन्धिसे आगे और धर्म भावके अन्दर पड़ा इसलिये धर्मभावमें बुध हुआ।

एवं गुरु ०००।०२।४९।८ यह धर्म भावसे अधिक, तथा उसकी सन्धिसे न्यून है। इसलिये धर्मकी सन्धि में पड़ा।

शुक्र ०११२८।१९।१७ है, यह आय भाव से अधिक, आयभावकी सन्धि से न्यून है। इसलिये आयकी सन्धिमें शुक्र पड़ा।

शनि ००।१०।२२।१३ है, यह धर्मकी सन्धिसे अधिक कर्म भावसे न्यून है। इसलिये कर्मभाव में पड़ा।

राहु ०६।००।५।५० है, यह सहज भावसे अधिक, उसकी सन्धिसे न्यून है इसलिये सहजसन्धिमें लिखा।

केतु ००।००।२।२०, यह धर्मभावसे अधिक, उसकी सन्धिसे न्यून है, अतःसन्धिमें पड़ा। मुथहा ८।५।३४।१२ है, यह सुत सन्धिमें पड़ी ॥ इति

अथ सूर्यस्य भुक्तमथवा भोग्यम् उक्तरीत्या चानीतं तद्यदीष्टकालघटीपलेभ्यो न शुद्ध्येत् तदा केनोपायेन लग्नसाधनं कर्तव्यमित्यत आह—

**भुक्तं भोग्यं स्वेष्टकालान्न शुध्येत्त्रिंश३०न्निघ्नात्स्वोदयाप्तं लवाद्यम्। हीनं युक्तं भास्करे तत्तनुः स्याद्रात्रौ लग्नं भाद्धयुक्ताद्रवेस्तु ॥ २७ ॥**

रवेः, भुक्तं=भुक्तासुमानं, भोग्यं=भोग्यासुमानं, यदि स्वेष्टकालान्न शुद्ध्येत अर्थाद्रविभुक्तभोग्यमानादल्प इष्टकालो भवति, तदा त्रिंशन्निघ्नादिष्टकालात् स्वोदयेन=सायनरव्यधिष्ठितराशिस्वदेशीयोदयेन प्रथमलग्नानयने, दशमलग्नानयने तद्राशिनिरक्षोदयेन भक्तात्, यदाप्तं लब्धं तल्लवाद्यं फलं ज्ञेयं तद्भास्करे=सूर्ये हीनं युक्तं च कार्यम्, अर्थात् यदि भुक्तप्रकारेण कर्म कृतं, तदा भास्करे हीनं, भोग्यप्रकारेण कर्म कृतं तदा सूर्ये युक्तं कार्यं, व्ययनाशविधिरत्रापि विज्ञेयः। तदा

तनुः लग्नं स्यात्। रात्रौ यदि लग्नानयनमभीष्टं तदा सूर्योदयादिष्टसमयावधि-तदिष्टकालस्याधिकत्वाद्रवौ भार्द्धं संयोज्य ततः, तथा रात्रिगतेष्टघटीमिष्टघटीं मत्वा भोग्यप्रकारेणैव लग्नं सुखेन सिद्ध्यति। अथवा रात्रौ सूर्योदयाद्यातघटीं षष्टिशुद्धां कृत्वा शेषमितेष्टघटीसु भुक्तप्रकारेण लग्नज्ञानं भवतीति॥ २७॥

## अत्रोपपत्तिः—

प्रथमलग्नानयने पूर्वक्षितिजासन्नेऽध ऊर्ध्वं च सति सूर्ये, यदीष्टसमयादधिकं भुक्तं भोग्यं भवेदर्थात् प्राक्क्षितिजाधोवर्त्तिरविबिम्बकेन्द्रगताहोरात्रवृत्ते रविकेन्द्रं प्राक्क्षितिजान्तरालतुल्यरात्रिशेषेष्टकालादधिको रवेर्भुक्तकालस्तथा दशमलग्नानयने ऊर्ध्वयाम्योत्तरवृत्तासन्नस्थे रवौ सति नतकालादधिकं भुक्तं भोग्यं वा भवेत्तदा "भुक्तं भोग्यं रवेस्त्यजेत्। इष्टनाडीपलेभ्यश्च।" इति क्रियाया अलग्नत्वात्—स्वल्पेष्टकालादेव त्रैराशिकेन लग्नरव्यन्तरांशज्ञानं कृतं यथा-यदि-सायनरव्यधिष्ठितराशिस्वोदयमानेन त्रिंशदंशाः लभ्यन्ते, तदेष्टकालेन क इति रविलग्नान्तरांशाः। तत्र रात्रिशेषेष्टकाले रवेर्लग्नाधिकत्वाद्रवौ शोध्याः। दिनगताल्पेष्टकाले-भोग्यप्रकारेण क्रियायाश्चलनात्तयोरन्तरांशाः सूर्ये युक्ताः सन्तः प्रथमलग्नांशाः। सूर्याल्लग्नस्याधिकत्वात्।

रात्रौ लग्नं भार्धयुक्तादित्यस्य—

क्षितिजाधोभागप्रदेशवर्तिनि सूर्ये रव्युपरिगताहोरात्रवृत्ते रविगतध्रुवप्रोतवृत्ताधोयाम्योत्तरवृत्तान्तरालचापतुल्यनतघट्य ऊर्ध्वयाम्योत्तरवृत्त—रविगतध्रुवप्रोतवृत्तयोरन्तरालेऽहोरात्रवृत्तेऽपि भवन्ति, समाना एव। तत्रास्तक्षितिजाद्यावद्घटिकाग्रे रविस्तत्तुल्यघटिकाग्रे एवोदयक्षितिजादूर्ध्वं सषड्भसूर्यः षड्भान्तरे तिष्ठति, तेन रात्रौ दिनमानाधिकेष्टकालाल्लग्नानयनस्य गौरवात्केवलरात्रिगतघटीतुल्ये एवेष्टकाले सषड्भसूर्याल्लाघवेन लग्नानयनमाचार्यैः कृतम्।

अत्रापि भुक्तप्रकारेण, सूर्योदयादिगतेष्टघटीं षष्टितो विशोध्य शेषमितासु इष्टघटीषु लाघवेनैव लग्नानयनं भवितुमर्हति।

**भाषा—भुक्तं भोग्यं रवेस्त्यजेत्। इष्टनाडीपलेभ्यः—इस क्रिया में यदि इष्टदण्ड से सूर्यका भुक्तकाल, भोग्यकाल अधिक हो तब इष्टदण्डमें वह नहीं घटेगा। वहांपर इष्टकाल ही को तीस गुणाकर सायनसूर्यराशिके उदयमान से भागदे जो लब्ध हो, उसको भुक्तक्रियामें सूर्यमें घटावे, भोग्यक्रियामें सूर्यमें जोड़ देवे, तो लग्न हो जायगा॥ २७॥**

अथ भावस्थग्रहफलम्—

**खेटे सन्धिद्वयान्तःस्थे फलं तद्भावजं भवेत्।**
**हीनेऽधिके द्विसन्धिभ्यां भावे पूर्वापरे फलम् ॥ २८ ॥**

सन्धिद्वयान्तःस्थे = पूर्वापरसन्धिमानयोर्मध्यस्थिते, ग्रहे सति, तद्भावजं फलं भवेत्। द्विसन्धिभ्यां = पूर्वापरसन्धिभ्यां, हीनेऽधिकेऽर्थात् पूर्वसन्धेरल्पे, वा परसन्धेरधिके ग्रहे सति पूर्वापरे भावे फलं भवेत्। अर्थादारम्भसन्धेरल्पे ग्रहे पूर्वभावफलं ददाति। विरामसन्धेरधिके ग्रहे सति अग्रिमभावे फलं ददातीत्यर्थः ॥ २८ ॥

**अत्रोपपत्तिः—**

पूर्वसन्धिमारभ्य परसन्ध्यन्तं भावमानमत एव सन्धिद्वयमध्ये स्थितस्य भावस्थत्वात्तद्भावफलदानार्हता ग्रहस्य। पूर्वसन्ध्यन्तात्पूर्वं पूर्वभावावयवत्वाद्यो ग्रहः आरम्भसन्धेरूनः सोऽवश्यं पूर्वभावस्थफलदाने समर्थः स्यात्। एवं विरामसन्धेरधिको ग्रहोऽग्रिमभावे वर्त्तते तेन तस्य ग्रहस्याग्रिमभावफलदानार्हत्वं स्फुटमेवेति।

भाषा—आरम्भसन्धि और विरामसन्धि के बीच में ग्रह को रहने से उस भाव का फल देता है। यदि आरम्भसन्धिसे ग्रह कम हो तो पूर्वभावका फल, या विरामसन्धि से अधिक ग्रह हो तो अगिले भाव में रहने का फल देता है ॥ २८ ॥

उदाहरण—जैसे-यहां देखिये ससन्धि भाव चक्र को, सूर्य ०।१२।६७।५ है। यह आरम्भ सन्धि (धर्म भाव की सन्धि ०।१०।१०।००'') से अधिक है, और विरामसन्धि (कर्मभाव की सन्धि १।१०।१०।००) से न्यून है, इस लिये ठीक २ कर्मभाव में रहने का जो फल है उसको देंगे। यहां शनि आय की सन्धि से न्यून है इस लिये आय भाव का फल देंगे, ऐसे ही बुध मृत्युभाव के सन्धि से अधिक है, इस लिये धर्मभाव के फल देंगे।

अथ ग्रहाणां विंशोपकात्मकभावफलमाह—

**ग्रहसन्ध्यन्तरं कार्यं विंशत्या २० गुणितं भजेत्।**
**भावसन्ध्यन्तरेणाप्तं फलं विंशोपकाः स्मृताः ॥ २९ ॥**

ग्रहसन्ध्यन्तरं, ग्रहो यस्य सन्धेरासन्नवर्ती तस्य सन्धेर्ग्रहस्य चान्तरं कार्यं, विंशत्या गुणितं, भावसन्ध्यन्तरेण भजेत्, आप्तं = लब्धं, फलं विंशोपकाः स्मृताः कथिताः ॥ २९ ॥

**अत्रोपपत्तिः—**

भावस्थे पूर्णं फलं विंशतिसमं स्वीकृतं, सन्धिस्थे ग्रहे फलं शून्यमतोऽवा-

न्तरस्थिते ग्रहे तत्फलप्रमाणज्ञानाय त्रैराशिकम्-भावसन्ध्यन्तरेण विंशतिसमं पूर्णफलं तदा ग्रहसन्ध्यन्तरेण किमित्येवमिष्टफलम् = $\frac{२० \times (ग्रु = सं)}{भा० स० अं०}$ = विंशोपकफलम् ।

भाषा—ग्रह और आसन्नवर्ती सन्धिका अन्तर करके, वीस से गुणा करे भावसन्धि के अन्तर से भाग दे, लब्धि विंशोपक फल होगा ॥ २९ ॥

उदाहरण—सूर्य ०।१२।८७।४०, तथा इनके आसन्न सन्धि ०।१०।६।२० इन दोनों के अन्तर ०।२।५१।३० इसको बीस से गुणा किया ०।४०।१०२०।६०० अन्त से सठियाने से ०।५७।१०।०० इतना हुआ, इसकी एक जाति किया तो २०५८०० यह भाज्य बना। अब भाव ०।२४।४२।११ और सन्धि ०।१०।६।२० इन दोनों का अन्तर ०।१४।३५।५१ इसकी एक जाति किया तो ५२५५१ हुआ, यह भाजक हुआ। अब भाज्य २०५८०० को भाजक ५२५५१ से भाग देने पर आयी लब्धि = ३।५४। यह रवि का भावविंशोपक फल हुआ। ऐसे ही सब ग्रहों के विंशोपक बनाना पूरा विंशोपक २० के समान होता है, इस लिये २० में लगभग ४ स्वल्पान्तर से आया तो यह न्यून विंशोपक हुआ। इस लिये रविका भावफल अत्यन्त साधारण होगा। पांच से अल्प निकृष्ट ( हीन ), ५-१० तक मध्यम, ११-१५ उत्तम, १६-१० उत्तमोत्तम समझना।

अथ राशीशद्रेष्काणेशानाह—

**भौमोशनःसौम्यशशीनवित्सितारेज्यार्किमन्दाङ्गिरसो गृहेश्वराः ।**
**आद्याः कुजाद्या रवितोऽपि मध्यमाः सितात्तृतीयाः क्रियतोदृकाणपाः॥ ३०॥**

भौमोशनःसौम्यशशीनवित्सितारेज्यार्किमन्दाङ्गिरसः = मङ्गलशुक्रबुधचन्द्ररविबुधशुक्रमङ्गलबृहस्पतिशनिशनिबृहस्पतयः, ग्रहाः, क्रमेण, गृहेश्वराः = गृहाणां = मेषादिराशीनाम्, ईश्वराः = अधिपतयः स्युः। यथा मेषस्य भौमः, वृषस्य शुक्रः, मिथुनस्य बुधः, कर्कस्य चन्द्रमाः, सिंहस्य रविः, कन्याया बुधः, तुलायाः शुक्रः, वृश्चिकस्य कुजः, धनुषो गुरुः, मकरस्य शनिः, कुम्भस्य शनिः, मीनस्य गुरुः स्वामीति। अथ द्रेष्काणेशान् वर्णयति—तत्र राशित्रिभागो द्रेष्काण उच्यते, यथा राशौ त्रिंशदंशाः भवन्ति, तेषां समात्रिभागो दश दशांशाः एकैकद्रेष्काणः। तत्रैकमंशमारभ्य दशांशान् यावत् प्रथमद्रेष्काणः, एकादशांशतो विंशत्यंशावधि द्वितीयो द्रेष्काणः। एकविंशतिभागादितस्त्रिंशदंशावधि तृतीयो द्रेष्काणः। एवं सर्वेषु राशिषु। तत्र क्रियतः = मेषतः, ( मेषमारभ्य मीनान्तावधि द्वादशराशीनां )

This order should be of house
आद्याः- प्रथमद्रेष्काणेशाः, कुजाद्याः=मङ्गलबुधगुरुसितशनिरविचन्द्रेतिक्रमगता भवन्ति। रवितः = रविमारभ्य, ततः = रविचन्द्रकुजबुधगुरुशुक्रशनीतिक्रमगणिता-ग्रहाः। मध्यमाः=द्वितीयद्रेष्काणेशाः। सितात् = शुक्रात्, शुक्रमारभ्य ततः (शुक्रशनिरविचन्द्रकुजेतिक्रमगता ग्रहाः। तृतीयाः = तृतीयद्रेष्काणेशा भवन्तीति॥ ३०॥

## यथा राशिस्वामिचक्रम्।

| राशयः | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राशीशाः | मं. | शु. | बु. | चं. | सू. | बु. | शु. | मं. | बृ. | श. | श. | बृ. |

इदमेवात्र पञ्चवर्गीयवलसाधनाय ग्राह्यम्, पञ्चमनवमैः सहेन्द्राद्या इत्यादिका नेति स्मर्तव्यम्। द्वादशवर्गीयवलसाधने पञ्चमनवमैः सहेन्द्राद्या इति मतमङ्गीकृतमिति॥

## अथ द्रेष्काणचक्रम्।

| राशयः | मे. | वृष | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कु. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| प्र.द्रे.स्वा. १-१० | मं. | बु. | बृ. | शु. | श. | सू. | च. | मं. | बु. | बृ. | शु. | श. |
| द्वि.द्रे.स्वा. ११-२० | सू. | चं. | मं. | बु. | बृ. | शु. | श. | सू. | चं. | मं. | बु. | बृ. |
| तृ.द्रे.स्वा. २१-३० | शु. | श. | सू. | चं. | मं. | बु. | बृ. | शु. | श. | सू. | चं. | मं. |

## अत्रोपपत्तिः—

'राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः, सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः।" इति प्राचीनकल्पननियमेन राशिषु दुर्दण्डौ कर्कसिंहौ जलचरवनचरौ तेन राज्ञोरधिकारप्राप्तौ, तत्रापि जलचरत्वात् कर्कस्य चन्द्रोऽधिपतिः। सिंहस्य सूर्यः। तत्र कर्कतः प्राग्भगणार्धाधिकारी चन्द्रः। सिंहात् तत्परभगणार्धाधिकारी सूर्यः। अथ राज्ञोऽनन्तरं राजकुमारस्यावसरस्तेन बुधाय चन्द्रोमिथुनं, रविः कन्यां दत्तवान्, ततो मन्त्रिणोरवसरः। अत एव शुक्राय राजनीतिनिपुणतराय रविस्तुलां चन्द्रो वृषं ददौ, ततोऽवसरो नेतुः, तेन कुजाय रविर्वृश्चिकं, चन्द्रोमेषं, ददौ। ततोऽवसरः किङ्करस्य शनेरतस्तस्मै रविर्मकरं, चन्द्रः कुम्भं ददौ।

एवं कुजाद्या द्विद्विराशिस्वामिनः । रविचन्द्रावेकैकराशिपती जातौ । अत्रत्योद्रेष्काणस्वामिनियमो जातकग्रन्थनियमाद्भिन्न एवास्ति जातकेतु 'पञ्चमनवमैः सहेन्द्राद्याः ।' तथा बृहज्जातके 'द्रेष्काणपाः स्वेषुनवर्क्षनाथाः ।' इत्येवमन्यत्रापि वर्त्तते । तत्र प्रत्येकराशौ द्वादशराशेस्तृतीयांशरूपं राशिचतुष्कत्रयं स्वीकृतं, तत्र प्रथमचतुष्कस्य प्रथमराशीशः । द्वितीयचतुष्कस्य पञ्चमाद्यष्टमावधिकस्य पञ्चमराशीशः । तृतीयचतुष्कस्य नवमादिद्वादशान्तस्य नवमराशीशः स्वामीति स्पष्टम् । ताजिकद्रेष्काणेशयुक्तिरुक्ताद्भिन्नाऽस्ति ।

भाषा—मेष से क्रम से बारहो राशियों के मंगल, शुक्र बुध चन्द्रमा सूर्य बुध शुक्र मङ्गल, बृहस्पति शनि शनि बृहस्पति ये स्वामी होते हैं। जैसे मेष का मंगल, वृष का शुक्र, मिथुन का बुध, कर्क का चन्द्रमा, सिंह का सूर्य, कन्या का बुध, तुला का शुक्र, वृश्चिक का मङ्गल, धनु का गुरु, मकर और कुम्भ का शनि मीन का बृहस्पति स्वामी हैं।

हरेक राशि में तीस अंश होते हैं। उसका तीन विभाग करने से दश दश विभाग करने से दश दश विभाग का एक २ द्रेष्काण कहलाता है, वहां मेष से बारहो राशियों के प्रथम द्रेष्काणों के स्वामी मंगल से लेकर मंगल बुध बृहस्पति शुक्र इस क्रम से होते हैं। द्वितीय द्रेष्काणों के स्वामी सूर्य से लेकर जैसे सूर्य चन्द्र कुज बुध इस क्रम से, तृतीय द्रेष्काणों के स्वामी शुक्र से लेकर जैसे सूर्य चन्द्र कुज बुध इस क्रम से, तृतीय द्रेष्काणों के स्वामी शुक्र से लेकर जैसे शुक्र, शनि रवि चन्द्र इस क्रम से होते हैं। यह नियम जान के नियम से भिन्न है ॥ ३० ॥

अथ ग्रहाणामुच्चनीचान्याह—

**सूर्यादितुङ्गान्यजोक्षनक्रकन्याकुलीरान्त्यतुला लवैः स्युः ।**
**दिग्भिर्गुणैरष्टयमैः शरेकैर्भूतैर्भसंख्यैर्नखसम्मितैश्च ॥ ३१ ॥**

अजोक्षनक्रकन्याकुलीरान्त्यतुलाः = मेषवृषमकरकन्याकर्कमीनतुलाः राशयः, दिग्भिः १० गुणैः ३ अष्टयमैः २८, शरेकैः १५, भूतैः ५, भसंख्यैः २७, नखसम्मितैः २० लवैः, सूर्यादितुङ्गर्क्षं = सूर्यादिग्रहाणामुच्चस्थानानि स्युः । यथा सूर्यस्य मेषदशमेंऽशे, चन्द्रस्य वृषत्रिमितेंऽशे, कुजस्य मकराष्टाविंशतितमभागे, बुधस्य कन्यार्धे, गुरोः कर्कपञ्चमेंऽशे, शुक्रस्य मीनसप्तविंशतितमेंऽशे, शनेस्तुलाविंशतितमेंऽशे उच्चस्थानमार्षोक्तम् । न तु वर्त्तमानकालिकम् उच्चस्य चलितत्वाद्यथा सूर्यस्य मिथुनाद्यादशभागेऽस्त्युच्चमेवमन्येषाम् ॥ ३१ ॥

## अथोच्चनीचचक्रम्।

| ग्रहाः | सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|
| उच्च-राशयः | ०० | १ | ९ | ५ | ३ | ११ | ६ |
| अंशाः | १० | ३ | २८ | १५ | ५ | २७ | २० |
| नीच राशयः | ६ | ७ | ३ | ११ | ९ | ०५ | ०० |
| अंशाः | १० | ३ | २८ | १५ | ५ | २७ | २० |

भाषा—मेषके दश अंशमें सूर्यका, वृषके ३ अंशमें चन्द्रमाका, मकरके २८ अंशमें मङ्गलका, कन्याके १५ अंशमें बुधका, कर्कके ५ अंशमें बृहस्पतिका, मीनके २७ अंश में शुक्रका, तुलाके २० अंशमें शनिका उच्च है ॥ ३१ ॥

अथ ग्रहाणां नीचस्थानमुच्चबलानयनं नवांशस्वामिनश्चाह—

**तत्सप्तमं नीचमनेन हीनो ग्रहोऽधिकश्चेद्रसभाद्विशोध्यः।**
**चक्रात्तदंशाङ्कलवो बलं स्यात् क्रियेणतौलीन्दुभतो नवांशाः ॥ ३२ ॥**

तत्सप्तमं=उच्चात्सप्तमं, ग्रहाणां नीचं स्यात्। अनेन = नीचेन, हीनः = वर्जितः, ग्रहः, यदि रसभात् = षड्राशितः, अधिकः = राशिस्थाने षडङ्काद्विशेषः, स्यात् तदा चक्रात् = द्वादशराशिभ्यः, विशोध्यः = वर्जितः, कार्यः। तदंशाङ्कलवः = तदन्तरस्य येंऽशास्तेषामङ्कलवो नवमांशः कार्यः, तदुच्चबलं स्यात्। मेषादिद्वादश-राशीनां त्रिरावृत्त्या क्रियेणतौलीन्दुभतः = मेषमकरतुलकर्केतिराशिचतुष्टयस्य पौनः-पुन्येन क्रमतो नवांशा भवन्ति ॥ ३२ ॥

### तत्रोच्चबलसाधनोपपत्तिः—

उच्चस्थिते ग्रहे पूर्णं बलं विंशतिः, नीचस्थिते ग्रहे बलं शून्यम्। उच्चनी-चान्तरं राशिषट्कम्। भचक्रे उच्चान्नीचस्य षड्भान्तरितत्वात्। अथेष्टस्थाने स्थितस्य ग्रहस्य बलमानीयते त्रैराशिकेन = उच्चस्थाने स्थितस्य ग्रहस्य नीचेन सह सिद्धेन भार्धांशेन यदि विंशतिर्बलं तदेष्टस्थलस्थितस्य ग्रहस्य नीचेन सह कृतेना-न्तरेण किमिति इष्टस्थलीयबलम् $= \frac{२० (ग्र—नी)}{१८०} = \frac{ग्र—नी}{९}$, इति सिद्धम्।

## अथ नवांशक्रमोपपत्तिः—

एकराशौ नव नवांशा द्वादशराशौ त्वष्टोत्तरशतं नवांशास्तत्र मेषे मेषादितो नवांशा इत्यत्र स्पष्टैव युक्तिः। भचक्रादौ भचक्रादिनवांशादेर्निवेशात्। तत्र मेषराशौ नवसु नवांशेषु मेषादिनवराशयो निवेशिताः सन्तो धनुःपर्यन्तराशयः सिद्धाः। अथ वृषप्रथमनवांशे मकरराशिरेव प्राप्तः। ततो वृषस्य नवसु खण्डेषु मकरादिनव स्थापिता राशयस्तदा वृषान्ते कन्याराशिनवांशः। ततो मिथुनस्य प्रथमनवांशे तुला एवोपनिवेशिता दृश्यते, मिथुनान्तिमनवांशे मिथुननवांश एवातः कर्कादिनवांशे कर्क एवोपगतः, तेन नवांशक्रमो युक्तियुक्त एवेति, एवं शेषेषु पौनःपुन्येन निवेशाद्वासना स्पष्टेति।

भाषा—अपने अपने उच्चसे सातमें राश्यंशमें ग्रहोंके नीच होते हैं। जैसे सूर्यका उच्च मेषके दश अंशमें है, उसमें छै राशि जोड़नेसे तुलाके दश अंशमें सूर्यका नीच होता है। ऐसे सब ग्रहों का समझना। अब उच्च बल बनाते हैं—

जिस ग्रहका उच्च बल बनाना हो, उसके नीचको उस ग्रहके राश्यंशमें घटाना, शेष यदि छै राशिसे अधिक हो तो शेषको बारह राशिमें घटाना, उसका अंश बनाना अर्थात् राशि स्थानको तीससे गुणाकर आगेके अंशको जोड़ना तो अंशादि हो जायगा। अब इसको नौ से भाग देने पर लब्धि उस ग्रहका उच्च बल होता है।

यहां विशेष बात यह है कि शेष छै राशिसे अधिक होनेसे बारहमें घटाना यह जो आचार्य का कथन है वह गौरवात्मक है।

वस्तुतः नीच, और ग्रह इन दोनोंमें जिसको जिसमें घटानेसे थोड़ा अन्तर हो उसीमें उसको घटाना, तब शेष छै राशि से थोड़ा ही होगा। दूसरी बार बारहमें घटाना नहीं पड़ेगा।

उदाहरण—देखिये सूर्य ००।१२।५७।५० है, उसका नीच ६।१० है, अब यहां नीच को सूर्यमें घटाना है किन्तु सूर्य के राशि स्थान शून्य है वहां बारह समझना, तब सूर्यमें नीच को घटाया तो ०६।०२।५७।५० हुआ शेष, यह छै राशिसे अधिक है इसलिये फिर बारह राशि में घटाया तो शेष ०५।२७।०२।१० इसका अंशादि १७७।०२।१० इसका नवमांश १९।४०।१४ रविका उच्च बल हुआ।

यहां यदि पहले ही नीचसे सूर्यको थोड़ा देखकर नीचहीमें सूर्यको घटाया तो शेष वह आगया ०५।२७।०२।१० जो बारहमें पूर्व शेषको घटाकर हुआ था।

और भी देखिये मङ्गल १।२२।१३।५४ है, उसका नीच ३।२८ है, यहां मङ्गलमें नीचको घटाने को जाते हैं, तो १ राशिमें ३ राशि नहीं घटता है, यहां १ में १२ जोड़ कर घटाया, तो ९।२४।१३।५४ हुआ, छै राशिसे अधिक है, अतः फिर १२ राशिमें

राशिपतिः=सूर्याधिष्ठितराशीशः, निशि = रात्रौ, वर्षप्रवेशे सति, चन्द्रमाधीश्वरः= चन्द्राक्रान्तराशीश्वरः। एतत्पञ्चकम्। विमृश्य = विचार्य, एषां = पञ्चाधिकारिणां मध्ये, बली = सर्वाधिकबलशाली, यो ग्रहः स यदि तनुं=वर्षलग्नं, ईक्षमाणः=कयाऽपि एकद्वित्रिचरणया मित्रशत्रुरूपया दृष्ट्या पश्यति। न केवलं पूर्णयैव, तदा स वर्षपः= वर्षेश्वरः, भवतीत्यर्थः सर्वाधिकबलशाली सन्नपि लग्नं=वर्षलग्नम्, अनीक्षमाणः = अपश्यन् सन्, अब्दपः = वर्षेशः, नैव भवति। अत्र यद्यपि बलस्य प्राधान्यं तथापि दृष्टेरादरो वर्त्तते एव। न तु सर्वाधिकदृष्टिशाली आपेक्षिकाल्पबली वर्षेशो भवति बलस्य साम्ये दृष्ट्यतिरेकतः=दृष्टिभागाधिक्यात्। अब्देशः। अर्थात् पञ्चाधिकारिणां सर्वे वा चत्वार उत त्रयः समबला भवेयुस्तदा तेषां वा तयोर्मध्ये यस्य लग्नोपरि अधिकदृष्टिः स वर्षेशः। एवमाद्याः=पूर्वाचार्या विदुः=कथयन्ति ॥ ६२-६३ ॥

भाषा—जन्मकालिकलग्नका स्वामी, वर्षकालिकलग्नका स्वामी, मुथहा का स्वामी, त्रिराशीश, दिनमें वर्षप्रवेशहोने से सूर्य जिस राशिमें हों उसका स्वामी रात्रिमें वर्षप्रवेश होनेसे चन्द्रमा जिस राशिमें हों, उसका स्वामी, इन पांचों को विचार कर ( किस अधिकार में कौन ग्रह है सो लिखकर ) उसमें जो सब से अधिक बली हो और वर्ष लग्नको भी देखता हो, वही वर्षेश होता है। जो वर्ष लग्न को नहीं देखता हो वह सर्वाधिक बलवान होने पर भी वर्षेश नहीं होता है। यदि उन पञ्चाधिकारियों में सब या चार या तीन या दो भी सम बलशाली हों तो जिनकी दृष्टि लग्नपर विशेषहो, वह वर्षेश होता है। यह पुराने आचार्य कहते हैं ॥ ६२-६३ ॥

दृष्टिसाम्ये व्यवस्थामाह—

**दृगादिसाम्येऽप्यथ निर्बलत्वे वर्षाधिपः स्यान्मुथहेश्वरस्तु।**
**पञ्चापि चेन्नो तनुमीक्षमाणा वीर्याधिकोऽब्दस्य विभुर्विचिन्त्यः ॥६४॥**

पञ्चाधिकारिणां लग्नोपरि दृगादिसाम्ये दृष्टिबलतुल्यत्वेऽथवा तेषां निर्बलत्वे तुल्यबलहीनत्वे मुथहेश्वरो वर्षाधिपः स्यात्। चेद्यदि पञ्चापि ग्रहाः अर्थात्पञ्चाधिकारिणोऽपि ग्रहा लग्नं नो ईक्षमाणाः अर्थात् पञ्चाधिकारिग्रहेभ्यो द्विषडष्टमद्वादशसंख्यस्थानगतं वर्षलग्नं स्यात्तदा तेषु यो वीर्याधिको बलाधिकः सोऽब्दस्य विभुः स्वामी विचिन्त्यो ज्ञेयः ॥ ६४ ॥

भाषा—यदि पाचों अधिकारी ग्रहों के बल तथा लग्न के ऊपर दृष्टि समान हो या सब निर्बल हों तो मुथहाके स्वामी ग्रह ही वर्षेश होता है। अगर पञ्चाधिकारिग्रहोंमें कोई भी लग्नको नहीं देखे तो उन पाँचोंमें जो सबसे अधिक बली हो वही वर्षेश जानना।

## अथ वर्षप्रवेशनिर्णयः ।

अत्र जन्मलग्नपतिर्बुधः (१)। वर्षलग्नपतिश्चन्द्रः (२)। मुथहेशोगुरुः (३)। त्रिराशिपतिः शुक्रः (४)। सूर्यराशीशः कुजः (५)। एषां पञ्चाधिकारिणां दृष्टि-बलप्रदर्शकं चक्रम् ।

| ग्रहाः | चन्द्रः | कुजः | बुधः | गुरुः | शुक्रः |
|---|---|---|---|---|---|
| बलानि | १०।३५ | ७।२७ | ९।१९ | ११।४८ | १३।५८ |
| दृष्टिसंख्या | ०० | ००।४० | ००।४५ | ००।१५ | ००।४० |

अत्र पञ्चाधिकारिणां मध्ये सर्वाधिकबलशाली लग्नदर्शी च शुक्रस्तेनासावेव वर्षाधीशः। स च स्वगृहगतोऽपि कुजयुतदृष्टः तथा बुधेन च दृष्टोऽतो वर्षफलं चोत्तममेव विज्ञेयम् । फलमस्य वर्षतन्त्रे द्रष्टव्यम् ।

भाषा—अब वर्षेशका निर्णय किया जाता है। यहां जन्मलग्नेश बुध, वर्षलग्नेश चन्द्रमा, मुथहेश बृहस्पति, त्रिराशीश शुक्र, सूर्यराशीश मङ्गल हैं, इन ग्रहोंमें सबसे अधिक बलवान् शुक्रही है, वह लग्नको देखता है, इसलिये शुक्रही वर्षेश हुआ। पञ्चाधिकारियोंमें सबसे बलवान् ग्रह यदि लग्नको नहीं देखे, तो उससे आसन्न न्यून-बली जो लग्नको देखे वही वर्षेश होता है। वर्षेश होनेमें बल और दृष्टि दोनोंकी आवश्यकता है। वर्षेशनिर्णायक श्लोकों की टीका देखिये ॥ ६४ ॥

अथ केषाञ्चिन्मतेन दृष्टिबलसाम्ये वर्षेशनिर्णयमाह—

**बलादिसाम्ये रविराशिपोऽह्नि निशीन्दुराशीडिति केचिदाहुः ।**
**येनेत्थशालोऽब्दविभुः शशी स वर्षाधिपश्चन्द्रभपोऽन्यथात्वे ॥ ६५ ॥**

बलादिसाम्ये = बलदृष्टिसमसङ्ख्यकत्वे, अह्नि दिवसे सूर्यराशिपः, निशि = रात्रौ इन्दुराशीट् = चन्द्राक्रान्तराशीशो वर्षेशः स्यादिति केचिदाचार्या आहुः ।

अथ स्वमतविशेषमाह = पूर्वोक्तव्यवस्थया निश्चितोऽब्दविभुर्वर्षेशः शशी चन्द्रो येन केनचिद्ग्रहेणेत्थशालः पञ्चाधिकारिमध्यस्थितेन कृतः स एव वर्षाधिपो ज्ञेयः। अन्यथात्वे किन्तु चन्द्रेण कस्यापि ग्रहस्येत्थशालयोगासम्भवे चन्द्रभपश्चन्द्रराशीशो वर्षेशो बोध्यः ॥ ६५ ॥

भाषा—बल और दृष्टिकी समतामें दिनमें वर्षप्रवेश होनेसे सूर्य जिस राशिमें

हों, उसके स्वामी वर्षेश होते हैं, रात्रिमें चन्द्रमा जिसके राशिमें हों वह वर्षेश होता है। यह कोई आचार्य कहते हैं। अब अपना मत कहते हैं—कि उक्त नियम से यदि चन्द्रमा वर्षेश हो और वह पञ्चाधिकारियों में किसी से इत्थशाल करता हो, तो वह इत्थशाल करनेवाला ग्रह ही वर्षेश होता है। यदि चन्द्रमा इत्थशाल किसीसे न करता हो, तो चन्द्रमा जिस राशिमें हों, उस राशिका स्वामी वर्षेश होता है। यहाँ इस नियम से चन्द्रमा वर्षेश नहीं सिद्ध हुआ, लेकिन यदि रात में वर्षप्रवेश हो, और चन्द्रमा अपने ही राशि में स्थित हो, तो उस हालत में चन्द्रराशीश स्वयं चन्द्रमा ही हुआ, अतः वही वर्षेश होगा। इसी लिये वर्षतन्त्र में चन्द्रमा के वर्षेश होने का फल भी लिखा है॥ ६५॥

अथ मुथहासाधनम्—

**स्वजन्मलग्नात् प्रतिवर्षमेकैकराशिभोगान् मुथहाभ्रमोऽतः।**
**स्वजन्मलग्नं रवितष्टयातशरद्युतं सा भमुखेन्थिहा स्यात्॥ ६६॥**

यतः स्वजन्मलग्नात् = जन्मकालिकलग्नात्, प्रतिवर्षमेकैकवर्षमेकैकराशिभोगान् मुथहाभ्रमो भवति, अतः स्वजन्मलग्नं निजजन्मलग्नराश्यादिमानं, रवितष्टयातशरद्युतं द्वादशशेषितगतवर्षमानयुक्तं, तदा सा भमुखा राश्यादिका मुथहा स्यात्।

**अत्र युक्तिः—**

मध्यमगुरुवन् मुथहाऽपि एकैकवर्षे एकैकराशिं भुनक्ति, तत्र जन्मतः प्रथमवर्षान्तं यावज्जन्मलग्ने, द्वितीयवर्षे जन्मलग्नतो द्वितीयराशौ, तृतीयवर्षे तृतीयराशावेवं मुथहा चलति। तत्र राशीनां द्वादशसङ्ख्यकत्वात् त्रयोदशे वर्षे पुनः सा जन्मलग्नं प्रत्यायाति। एवं पञ्चविंशे सप्तत्रिंशे एकोनपञ्चाशद्वर्षेऽपि जन्मलग्ने मुथहास्थितिः।

अत इष्टवर्षे मुथहास्थानज्ञानाय जन्मलग्नराश्यादिमानं यत्तत्र राशिस्थाने गतवर्षसङ्ख्यासंयोजनेनेष्टमुथहामानं जातं, तत्र राशीनां द्वादशसङ्ख्याधिकानां प्रयोजनाभावात् केवलराशिस्थानमेव द्वादशभिर्विभज्य शेषतुल्या राशयः। अंशादि जन्मलग्नस्यांशवदेव तत्र ज्ञेयम्॥ ६६॥

**भाषा—जन्म कालमें एक वर्ष तक जन्मलग्न ही में मुथहा रहती है। दूसरे वर्षमें जन्मलग्नसे दूसरे स्थानमें, तीसरे वर्षमें तीसरे स्थानमें इस क्रमसे प्रत्येक वर्षमें एक एक राशि भोगसे मुथहाका भ्रमण होता है। इसलिये जन्मलग्नमें राशिस्थान में गत वर्षको जोड़कर १२ से भाग दे, तो शेष तुल्य राशि और** अंशादिक तो लग्नके अंशा-

दिवत्, इसप्रकार इष्ट वर्षमें मुथहा होती है। अर्थात् सब वर्षों में मुथहाके राशि ही बदलती है, अंशादि स्थिर ही रहता है ॥ ६६ ॥

प्रत्यहं शरलिप्ताभिर्वर्द्धते साऽनुपाततः।
सार्धमंशद्वयं मास इत्याहुः केऽपि सूरयः ॥ ६७ ॥

सा मुथहा प्रत्यहमनुपाततः शरलिप्ताभिः पञ्चकलाभिर्वर्द्धते। तथा मासे एकमासे सार्धमंशद्वयं ( २।३०′ ) वर्धते इति केऽपि सूरयः पण्डिता आहुरूचुः।

अत्र युक्तिः—

यद्येकवर्षेऽर्थात् षष्ट्यधिकशतत्रयसौरदिनात्मके एकराशिस्त्रिंशदंशात्मकश्चलनं तदैकमासे त्रिंशद्दिनात्मके कः-इत्यनुपातेनैकमासे मुथहाचलनम् $= \frac{३० \times ३०}{३६०} =$

$\frac{९००}{३६०} = \frac{५}{२} = २ + \frac{१}{२} = २।३०$।

तथा चैकदिनेऽनुपातेन मुथहागतिः$= \frac{३०^{\circ} \times १}{३६०} = \frac{१^{\circ}}{१२}$, इयमंशात्मिका भिन्ना।

अभिन्नमानार्थं कलात्मिकार्थं च षष्ट्या गुणिता$\frac{६० \times १}{१२} = ५'$, अत उपपन्नं सर्वम्।

भाषा—हर एक सौर दिनमें ५ कलायें, हर एक मास में अढ़ाई अंश अनुपात से मुथहा बढ़ती ( चलती ) है। यह स्पष्टता के लिये कोई आचार्य कहे हैं। इस का प्रयोजन मासप्रवेश और दिन प्रवेश में पड़ता है। क्योंकि वर्षप्रवेश कुण्डलीमें जो मुथहा है वह एक वर्ष तक वहां ठहरती है, परन्तु प्रथममासप्रवेश में भी वही मुथहा का मान हुआ। अब दूसरे मास प्रवेश बनानेमें वर्षप्रवेश कालिक मुथहामें अढ़ाई अंश जोड़नेसे मुथहा होती है, तीसरे मास प्रवेश बनानेमें द्विगुणित अढ़ाई अंश अर्थात् पांच अंश जोड़नेसे मुथहा होती है। ऐसेही चौथे मासप्रवेशमें साढ़े सात अंश जोड़ने से मुथहा बनती है। ऐसे औरों में भी समझना।

दिन प्रवेश बनानेमें प्रतिदिन प्रवेशमें जो मुथहा है उसमें ५ पांच कला, जोड़नेसे अगले दिन प्रवेश की मुथहा बनती है।

यहां वर्षप्रवेश में मुथहा मान जानने के लिये—जन्मलग्न ५।१।३४।१२ में राशि स्थानमें गतवर्ष १५...जोड़ा २०।१।३४।१२...अब राशिस्थानमें १२ बारहसे भाग दिया शेष ८।१।३४।१२ तुल्य मुथहा हुई। अब इसमें अढ़ाई अंश जोड़ा तो अग्रिम (द्वितीय) मास प्रवेश में मुथहा हुई। ५ अंश जोड़ा तो तृतीय मास प्रवेश में मुथहा

हुई। एवं वर्ष प्रवेश के प्रथम दिनप्रवेश की मुथहा वही होती जो वर्ष प्रवेश की मुथहा है इसमें पांच कला जोड़ दिया तो दूसरे दिन की मुथहा बनी। ऐसे ही आगे समझना चाहिये॥ ६७॥

अथ राहोर्मुखपृष्ठपुच्छानां लक्षणमाह—

**भोग्या राहोर्लवास्तस्य मुखं पृष्ठं गता लवाः।**
**ततः सप्तमभं पुच्छं विमृश्येति फलं वदेत्॥ ६८॥**

राहोर्भोग्या लवास्तस्य मुखम्। तथा राहोर्गता भुक्ता लवाः पृष्ठम्। ततो राह्वाक्रान्तराशितः सप्तमभं पुच्छमिति विमृश्य फलं (तत्पृष्ठभागे न शुभप्रदा स्यादित्यादि) वदेत्॥ ६८॥

भाषा—राहु के जो भोग्य अंश, सो उसका मुख होता है। और जो भुक्त अंश होते हैं वे पृष्ठ संज्ञक होते हैं। राहु से सातवाँ राशि उसका पुच्छ होता है। यह जानकर फल कहैं।

विशेष विवरण—राहु की विलोम गति होनेसे वह पहले किसी राशिके अन्तमें आकर मध्यमें, बाद आदिमें आते हैं। इसलिये जिसराशिमें जहां पर वह स्थित हो, उस बिन्दुसे उस राश्यादि तक, जो की राहु नहीं भोग किया है लेकिन राश्यादि लिखनेमें वहीं अंशादि लिखे जाते हैं, क्योंकि पूर्वाभिमुख राशिक्रमगणना होनेसे, तो राहु के राश्यादि जो पञ्चाङ्ग में लिखते हैं, उसमें अंशादि भोग्य ही रहते, उसको ३० में घटाने से शेष भुक्त होते हैं। वहां राहु केवल राश्यन्तसे राश्यादिके तरफ जो आते हैं सो पश्चिम मुख होकर नहीं, मुख तो पूर्वाभिमुख ही रहता है पृष्ठ पश्चिम तरफ रहती है, जब जिस बिन्दुमें रहता है तब उससे पश्चिम (अर्थात् लिखे हुए अंशादि, वस्तुतः भोग्यांशादि मुख संज्ञक होता है। और लिखे हुए को ३० में घटानेसे अर्थात् वस्तुतः भुक्तांशादि पृष्ठ संज्ञक होता है।

जैसे उदाहरण राहु ४।७।१४।४० यहां ७।१४।४० ये पृष्ठ हैं। और २२।४५।२० यह मुख है, मीन के ७।१४।४० इनमें पुच्छ है॥ ६८॥

इति नीलकण्ठ्यां सञ्ज्ञातन्त्रे ग्रहाध्यायस्य टीका सम्पूर्णा॥

**श्रीगर्गान्वयभूषणं गणितविच्चिन्तामणिस्तत्सुतोऽ-**
**नन्तोऽनन्तमतिर्व्यधात्खलमतध्वस्त्यै जनुः पद्धतिम्।**
**तत्सूनुः खलु नीलकण्ठविबुधो विद्वच्छिवानुज्ञया**
**सत्तुष्ट्यै व्यदधाद्ग्रहप्रकरणं संज्ञाविवेकेऽमलम्॥ ६९॥**

स्पष्टम्।

इति संज्ञातन्त्रे ग्रहाध्यायः॥ १॥

अथ ग्रहस्वरूपम् । तत्र तावत् सूर्यस्वरूपम् ।

**सूर्यो नृपो ना चतुरस्रमध्यंदिनेन्द्रदिक् स्वर्णचतुष्पदोग्रः ।**
**सत्त्वं स्थिरस्तिक्तपशुक्षितिस्तु पित्तं जरन्पाटलमूलवन्यः ॥ १ ॥**

सूर्यः=सूर्यग्रहः, नृपः=क्षत्रियवर्णः । ना = पुरुषः । चतुरस्रमध्यन्दिनेन्द्रदिक्-स्वर्णचतुष्पदोग्रः = चतुष्कोणाकृति-मध्याह्नबली-पूर्वदिक्पति-सुवर्णधातुस्वामीचतुष्पदाश्वगजवृषादिस्वामीक्रूरः । सत्वं सत्त्वगुणाधिकः । स्थिरः = स्थिरप्रकृतिः । तिक्तपशुक्षितिः = तिक्तरसप्रिय-पशुपति-भूमिचलनशीलः । पित्तं = पित्तात्मकः । जरन् = जरातुरो वृद्धग्रहः । पाटलमूलवन्यः = श्वेतमिलितरक्तवर्ण-मूलकन्दकर-वनचरः, ईदृशो ज्ञेयः ।

प्रयोजनं तु-जन्मपत्रे यः सर्वाधिकबलशाली, तत्तुल्यस्वरूपशीलो बालो भवतीति । वा चौरवयोरूपजातिप्रकृतिज्ञानाय ग्रहस्वरूपमुक्तम् ॥ १ ॥

**भाषा—सूर्यग्रह क्षत्रियजाति, पुरुष, और चतुरस्र (चौरस) जितना लम्बा उतना ही चौड़ा है, मध्याह्न में बली, पूर्वदिशा का स्वामी, सुवर्णधातु का स्वामी, और चतुष्पद स्वामी, क्रूर (पापग्रह) है । और सत्वगुणप्रधान, स्थिरस्वभाव वाला, तीतेरस का प्रिय, (यहां नीम, चिरायता, कुटज का जैसा स्वाद होता है, उस को तीता बताते हैं । बहुत जगह कटु रस को ही तीता कहते हैं, जैसे मरिच, लालमिर्च आदि, इसके स्वाद ही को तीता कहते हैं, सो उचित नहीं है, वैद्यक देखिये ?) । पशुओं का स्वामी, भूमि तत्त्व वाला, पित्त दोषप्रधान, वृद्धग्रह, थोड़ा २ लालवर्ण, मूल कन्दों का अधिपति, तथा वनचर है ॥ १ ॥**

अथ चन्द्रस्वरूपम्—

**वैश्यः शशी स्त्री जलभूस्तपस्वी गौरोऽपराह्णाम्बुगधातुसत्त्वम् ।**
**वायव्यदिक्श्लेष्मभुजङ्गरूप्यस्थूलो युवा क्षारशुभः सिताभः ॥२॥**

शशी = चन्द्रः, वैश्यः=वैश्यवर्णः, स्त्री=स्त्रीग्रहः । जलभूर्जलाक्रान्तभूमिचारी । तपस्वी = तपोनिरतः, अत्रिपुत्रत्वात् । गौरः=गौरवर्णः । अपराह्णाम्बुगधातुसत्त्वम् = अपराह्णबली-जलचर-गैरिकादिधातुपति-सत्त्वगुणप्रधानः । वायव्यदिक्= पश्चिमोत्तरमध्यकोणदिक्पतिः । श्लेष्मभुजङ्गरूप्यस्थूलः = कफात्मक-सर्पजातिपत्ति-रजतद्रव्यपति-विशालदेहः । युवा = तरुणः, क्षारशुभः = लवणरसप्रिय-शुभ-[illegible]ः । सिताभः स्वच्छकान्तिः । वा स्वच्छसकलद्रव्यपतिः ॥ २ ॥

भाषा—चन्द्रमा ग्रह, वैश्यजाति, स्त्रीग्रह, जलभूमिचारी, तपस्वी, गौरवर्ण, दो प्रहर के बाद बली, जलचरों के स्वामी, गैरिकादि धातु का स्वामी, सत्वगुण प्रधान, वायव्य कोण का स्वामी, कफात्मक, सर्पों का स्वामी, चान्दी धातु का मालिक, मोटे देह वाला, नवयुवक, लवणरस प्रिय, स्वच्छ कान्ति वाला है ॥ २ ॥

अथ कुजस्वरूपमाह—

**भौमस्तमः पित्तयुवोग्रवन्यो मध्याह्नधातुर्यमदिक् चतुष्पात् ।**
**ना राट् चतुष्कोणसुवर्णकारो दग्धाऽवनीव्यङ्गकटुश्च रक्तः ॥ ३ ॥**

भौमः = कुजः, तमः=तमोगुणमुख्यः, पित्तयुवोग्रवन्यः=पित्तात्मकप्रकृति–तरुण–क्रूर–वनचरः । मध्याह्नधातुः = मध्यदिनबली–गैरिकादिधातुपतिः । यमदिक् = दक्षिणदिक्पतिः । चतुष्पात् = चतुष्पदजातिस्वामी । ना = पुरुषग्रहः । राट् = राजन्यः, चतुष्कोणसुवर्णकारः = चतुष्कोणाकृति–सुवर्णकारजातिपतिः । दग्धावनी-व्यङ्गकटुः = दग्धभूमिचारी–निरङ्ग–कटुरसप्रियः । रक्तः = रक्तवर्णः, वा रक्तवर्ण-पदार्थपतिः, अस्तीति शेषः ॥ ३ ॥

भाषा—मङ्गलग्रह, तमोगुणी, पित्तात्मक, समर्थ, क्रूर, वनचारी मध्याह्न बली, धातुवों का स्वामी, दक्षिणदिशा का स्वामी, चतुष्पदों का स्वामी, पुरुष, क्षत्रियवर्ण, चतुष्कोण, सोनारजाति का पति, जली हुई जमीन का मालिक, अङ्गहीन, और कटु रस के प्रिय, लाल वर्ण हैं ॥ ३ ॥

अथ बुधस्वरूपमाह—

**ग्राम्यः शुभो नीलसुवर्णवृत्तः शिश्विष्टकोच्चः समधातुजीवः ।**
**श्मशानयोषोत्तरदिक्प्रभातं शूद्रः खगः सर्वरसो रजो ज्ञः ॥ ४ ॥**

ज्ञः = बुधः, ग्राम्यः = ग्रामचरः, वा ग्रामभवसुखप्रियः, शुभः = शुभग्रहः, नी-लसुवर्णवृत्तः = नीलवर्ण–काञ्चनद्रव्याधिपति–वर्तुलाकारः । शिश्विष्टकोचः=बालवय-इष्टिकोच्चप्रदेशचरः । समधातुजीवः = समवातपित्तकफत्रिदोषयुक्त–जीवजन्तुपतिः । श्मशानयोषोत्तरदिक् = शवदहनस्थलचारी–स्त्रीग्रहोत्तरदिशाधीशः । प्रभातं = प्रभा-तकाले बली, शूद्रः = शूद्रवर्णस्वामी, खगः = पक्षिजातिः, सर्वरसः=मधुरकटुक-षायाम्लक्षारतिक्तरसप्रियः । रजः = रजोगुणप्रधानः । अस्तीति शेषः ॥ ४ ॥

भाषा—बुध, ग्रामों में चलने वाला, या ग्राम के सुख चाहने वाला, शुभग्रह, नील

वर्ण, सुवर्णधातु का मालिक, वर्त्तुलाकार, बाल उमर वाला, ईंटोंके उच्च स्थल में रहने वाला, वातपित्त कफ तीनों समान दोष, जीवों का स्वामी, श्मशान प्रदेश में चलने वाला, स्त्रीग्रह, उत्तर दिशा का स्वामी, प्रभात समयमें बली, शूद्रवर्णों का स्वामी, पक्षी जाति, सब रसोंके प्रिय, रजोगुणी हैं ॥ ४ ॥

अथ गुरुग्रहस्वरूपमाह—

**गुरुः प्रभाते नृशुभेशदिग् द्विजः पीतो द्विपाद् ग्राम्यसुवृत्तजीवः।**
**वाणिज्यमाधुर्यसुरालयेशो वृद्धः सुरत्नं समधातुसत्त्वम् ॥ ५ ॥**

गुरुः = बृहस्पतिग्रहः, प्रभाते = प्रातःसमये बली, नृशुभेशदिग्=पुरुषग्रह-शुभग्रह-पूर्वोत्तरदिङ्मध्यस्वामी, द्विजः = ब्राह्मणवर्णः, पीतः = पीतवर्णः, द्विपात्=द्विपदस्वामी, ग्राम्यसुवृत्तजीवः = ग्रामचर-वर्त्तुलाकार-मनुष्यादिजीवस्वामी। वाणिज्यमाधुर्यसुरालयेशः = वाणिज्यं क्रयविक्रयकर्त्ता, माधुर्यं = मधुररसप्रियः, सुरालयेशः = देवभवनाध्यक्षः। वृद्धः = जराजर्जरः, सुरत्नं = सद्रत्नस्वामी, समधातुः = कफपित्तवातात्मकः। सत्वं = सत्त्वगुणप्रधानः। अस्तीति शेषः ॥ ५ ॥

**भाषा—बृहस्पति ग्रह, प्रातः समय में बली, पुरुषग्रह, शुभग्रह, ईशानकोण का स्वामी, ब्राह्मणवर्ण, पीलावर्ण, द्विपदों के स्वामी, ग्राम्य सुख प्रिय, अतिवर्त्तुलाकार, जीवों का स्वामी, खरीद विक्री में निपुण, मधुररस का प्रिय, देव मन्दिरों का मालिक, बूढा, अच्छे रत्नों के अध्यक्ष, वात पित्त कफ युक्त, सात्विक स्वभाव वाला है ॥ ५ ॥**

अथ शुक्रग्रहस्वरूपमाह—

**शुक्रः शुभः स्त्री जलगोऽपराह्णः श्वेतः कफी रूप्यरजोऽम्लमूलम्।**
**विप्रोऽग्निदिङ्मध्यवयो रतीशो जलावनीस्निग्धरुचिर्द्विपाच्च ॥ ६ ॥**

शुक्रः = शुक्रग्रहः, शुभः = शुभग्रहः, स्त्री = स्त्रीग्रहः। जलगः = जलस्थलचरः, अपराह्णः = दिनमध्योत्तरकालबली, श्वेतः=अस्वच्छवर्णः। कफी=कफात्मकः। रूप्यरजोऽम्लमूलम् = रजतद्रव्य-रजोगुणा-म्लरसप्रिय-मूलस्वामी। विप्रः = ब्राह्मणजातिः। अग्निदिक् = पूर्वदक्षिणमध्यकोणस्वामी, मध्यवयाः = प्रौढवयस्कः, रतीशः= केलिकलाविषयप्रधानः। जलावनी = जलभूमिचारी, स्निग्धरुचिः चिक्कणत्वग्वर्णः, द्विपात् = द्विपदो मानवजातिः। अस्ति ॥ ६ ॥

भाषा—शुक्रग्रह, शुभग्रह, स्त्रीग्रह, जलचारी, दो प्रहर के बाद बली, स्वच्छवर्ण, कफ दोष प्रधान, चान्दी धातु का मालिक, खट्टे रस का, मूल कन्दों का मालिक, ब्राह्मणवर्ण, अग्निकोण का स्वामी । आधी उमर वाला, केलि कला रसिक, ( कामशास्त्र निपुण ) जलभूमि चारी, चिकनी कान्ति, मानव जातिका स्वामी है ॥ ६ ॥

अथ शनिग्रहस्वरूपमाह—

**शनिर्विहङ्गोऽनिलवन्यसन्ध्याशूद्राङ्गनाधातुसमः स्थिरश्च ।**
**क्रूरः प्रतीची तुवरोऽतिवृद्धोत्करक्षितीट् दीर्घसुनीललोहम् ॥ ७ ॥**

शनिः = शनिग्रहः, विहङ्गः = पक्षिजातिस्वामी, अनिलवन्यसन्ध्याशूद्राङ्गनाधातुसमः = वातात्मक–वनचर —सन्ध्यासमयवली—शूद्रजातिपति–स्त्रीग्रह–समत्रिदोषयुक्तः, स्थिरः=स्थिरप्रकृतिः, क्रूरः=पापग्रहः, प्रतीची=पश्चिमदिक्पतिः । तुवरः = कषायरसप्रियः । अतिवृद्धः=जराजर्जरितः । सकलग्रहेष्वयमेवाधिकवयस्कः । उत्करक्षितीट् = ऊषरभूमिपतिः । दीर्घः = प्रांशुः=अत्युच्चदेहः । सुनीलः = अतिनीलवर्णः, लोहं = लोहधातुस्वामी वा लोहप्रियः । अस्तीति शेषः ॥ ७ ॥

भाषा—शनिग्रह पक्षीजातियों का मालिक, वायुप्रकृति, वनचारी, सांझ में बली, शूद्र जाति का स्वामी, स्त्रीग्रह, त्रिदोष ( वात पित्त कफों ) से युक्त, स्थिर स्वभाव वाला, पापग्रह, पश्चिमदिशा का स्वामी, कसैले रस का प्रिय, अत्यन्त वृद्ध, ऊषर प्रदेश का स्वामी, लम्बे कद का, अति नीलवर्ण युक्त, लोह धातु का स्वामी है ॥ ७ ॥

अथ राहुस्वरूपमाह—

**राहुस्वरूपं शनिवन्निषादजातिर्भुजङ्गोऽस्थिपनैर्ऋतीशः ।**
**केतुः शिखी तद्वदनेकरूपः खगस्वरूपात्फलमूह्यमित्थम् ॥ ८ ॥**

राहुस्वरूपं शनिवत्=शनिवर्ण–दिशाप्रकृत्यादि सममेव बोध्यम् । तत्र यत्किञ्चिदधिकं, तदाह—निषादजातिः=चाण्डालजातिः, भुजङ्गः=सर्पाकारः, अस्थिपः = अस्थिधातुस्वामी, नैर्ऋतीशः = दक्षिणपश्चिममध्यवर्त्तिकोणस्वामी । अस्ति । केतुस्तु शिखी = शिखावान्, तत्र पुराणवार्त्तया शिखीति नोपपद्यते । अस्य शीर्षहीनत्वात् । परन्तु आकाशे समुदितकेतुस्वरूपदर्शनाच्छिखीति सम्यग् विशेषणम् ।

तद्वत् = शनिराहुवत्, अनेकरूपः = नानाप्रकारकस्वरूपवान् । बृहत्संहितायां केतवः सन्ति, इत्थममुना प्रकारेण फलमूह्यं ज्ञातव्यम् ॥ ८ ॥

भाषा—राहु का स्वरूप शनिस्वरूप के समान है, और निषाद जाति, सर्प का ऐसा स्वरूप, हड्डियों का स्वामी, नैर्ऋति कोण का स्वामी, है ।

केतु शिखावान्, और शनि के समान ही और विषय तथा अनेक प्रकार का रूप, वाला होता है। ऐसे ग्रहों के स्वरूप से फल समझना ॥ ८ ॥

इति ग्रहस्वरूपवर्णनप्रकरणम् ।

अथ दृष्टिप्रकरणम् । तत्र दृष्टेश्चत्वारो भेदाः, प्रत्यक्षस्नेहा (१) गुप्तस्नेहा(२) गुप्तवैरा (३) प्रत्यक्षवैरा(४) इति । तत्रादौ प्रत्यक्षस्नेह गुप्त दृष्टिमाह—

**दृष्टिः स्यान्नवपञ्चमे बलवती प्रत्यक्षतः स्नेहदा**
**पादोनाऽखिलकार्यसाधनकरी मेलापकाख्योच्यते ।**
**गुप्तस्नेहकरी तृतीयभवभे कार्यस्य संसिद्धिदा**
**त्र्यंशोना कथिता तृतीयभवने षड्भागदृष्टिर्भवे ॥ ९ ॥**

यस्य ग्रहस्य दृष्टिविचारः क्रियते तदाश्रितराशितो नवमपञ्चमे स्थाने, प्रत्यक्षतः स्नेहदा बलवती दृष्टिर्भवति । सा तु पादोना = स्वचतुर्थांशोना ००।४५′ पञ्चचत्वारिंशत्कलात्मिका, सकलकार्यसाधनविधायिनी, मेलापकसञ्ज्ञिका कथ्यते । तथा ग्रहाश्रितराशितस्तृतीयभवने या दृष्टिर्भवति सा गुप्तस्नेहकरी कार्यस्य संसिद्धिदा, त्र्यंशोना = ००।४०′ चत्वारिंशत्कलात्मिका कथ्यते ।

भवे = ग्रहाश्रितराशित एकादशस्थाने षड्भागदृष्टिः—$\frac{1^{\circ}}{6} = \frac{60'}{6} = 10'$ दश कलात्मिका भवति ।

भाषा—जिस ग्रह की दृष्टि विचारनी है, उस ग्रह से नवमें पांचवें स्थान में प्रत्यक्ष प्रेम देने वाली दृष्टि होती है, वह पादोन अंश अर्थात् ०°।४५′ इतनी होती है। वह सब कामों के साधन करने वाली मेलापक दृष्टि कहलाती है। और तीसरे स्थान में भी जो दृष्टि होती है सो भी कार्य की सिद्धि देने वाली गुप्तस्नेहकरी है। लेकिन वह त्र्यंशोन $1-\frac{1}{3}=\frac{2}{3}=\frac{2 \times 60}{3}=\frac{120}{4}=40'$ चालिस कला होती है। एकादश स्थान में जो दृष्टि होती है वह भी अच्छी है, और वह षड्भाग तुल्य $= \frac{1}{6} = \frac{60}{6} = 10$ दश कला प्रमित होती है। अर्थात् किसी ग्रह से पञ्चम नवम तृतीय एकादश स्थानों की दृष्टियां अच्छी होती हैं, उसमें पञ्चम नवम सर्वोत्तम, उससे न्यून तृतीय उससे भी न्यून एकादश स्थान की दृष्टि है ॥ ९ ॥

**दृष्टिः पादमिता चतुर्थदशमे गुप्तारिभावा स्मृताऽ-**
**न्योन्यं सप्तमभे तथैकभवने प्रत्यक्षवैराऽखिला ।**

**दुष्टं दृक्त्रितयं क्षुताह्वयमिदं कार्यस्य विध्वंसदं**
**सङ्ग्रामादिकलिप्रदं दृश इमाः स्युर्द्वादशांशान्तरे ॥१०॥**

यस्य ग्रहस्य दृष्टिर्विचार्यते, तदाश्रितराशितश्चतुर्थदशमे स्थाने गुप्तारिभावा = अप्रत्यक्षशत्रुभावा पादमिता पञ्चदशकलात्मिका दृष्टिः स्मृता । तथा ग्रहाश्रितस्थानात् सप्तमभे एकभवने चान्योन्यं प्रत्यक्षवैरा = प्रकटशत्रुभावाऽखिला पूर्णा षष्टिकलात्मिका दृष्टिः स्मृता । इदं दृक्त्रितयं चतुर्थदशमरूपमेकं, सप्तसप्तकरूपं द्वितीयं, एकर्क्षगतं तृतीयमित्थं त्रिविधदृग्विषयं क्षुताह्वयमनिष्टफलजनकं, कार्यस्येष्टविधानस्य विध्वंसदं विनाशकरं सङ्ग्रामादिकलिप्रदं भवति । इमाः सर्वा उक्ता दृशो द्वादशांशान्तरे द्वादशांशाभ्यन्तरे एव फलदायिकाः स्युः ॥ १० ॥

भाषा—जिस किसी ग्रह की दृष्टि विचार करनी है, उस ग्रह के स्थान से चौथे और दशवें स्थान में अप्रकट ( गुप्त ) रूप से शत्रुता करने वाली १५ पन्द्रह कला तुल्य दृष्टि होती है । और ग्रह के स्थान से सातवें, तथा पहले स्थान में पूरी साठ कला तुल्य दृष्टि होती है, वह प्रत्यक्ष रूप से शत्रुता करने वाली होती है ।

ये तीनों दृष्टियां क्षुत (अशुभ) हैं, कार्य को ध्वंस (नाश) करने वाली युद्ध झगड़ा मोकदमा आदि देने वाली हैं, ये सब बारह अंश के अन्दर ही होती हैं ॥ १० ॥

अथेष्टदृष्टिकलासाधनमाह—

**अपास्य पश्यं निजदृश्यखेटादेकादिशेषे ध्रुवलिप्तिकाः स्युः ।**
**पूर्णं खवेदास्तिथयोऽक्षवेदाः खं षष्टिरभ्रं शरवेदसंख्या ॥ ११ ॥**
**तिथ्यः खचन्द्रा वियदभ्रतर्काः शेषाङ्कयातैष्यविशेषघातात् ।**
**लब्धं खरामै३०रधिकोनकैष्ये स्वर्णं ध्रुवे ताः स्फुटदृष्टिलिप्ताः ॥१२॥**

यो ग्रहः पश्यति स द्रष्टा, यं ग्रहं पश्यति स दृश्य इति । तत्र निजदृश्यखेटात् पश्यं=द्रष्टारं दर्शकं ग्रहमपास्य विशोध्य शेषे राशिस्थाने एकादिसङ्ख्यातुल्ये सति क्रमेण पूर्णं = ०, खवेदाश्चत्वारिंशत् = ४०, तिथयः = १५, अक्षवेदाः=४५, खं = ०, षष्टिः = ६०, अभ्रं = ०, शरवेदसङ्ख्या = ४५, तिथ्यः = १५, खचन्द्राः = १०, वियद्= ०, अभ्रतर्काः = ६०, एताः ध्रुवलिप्तिकाः स्युः । तत्र राशिस्थानादग्रे यः शेषोंऽशकलाविकलात्मकः स शेषाङ्कः । तत्र राशिसङ्ख्यासङ्ख्यकध्रुवाङ्कतो यातैष्यखण्डयोर्यो विशेषोऽन्तरं स यातैष्यविशेषः । तयोर्घाताद्गुणनफलात् खरामैः ३० यल्लब्धं तत् , ध्रुवेऽधिकोनकैष्ये सति क्रमेण स्वर्णं=धनर्णं कार्यं, तदा ताः स्फुटदृष्टि-

कलाः स्युः । यदा गतध्रुवाङ्कादैष्यध्रुवाङ्कोऽधिकस्तदा धनं, यदाऽल्पस्तदोनं कार्य-मित्यर्थः ॥ ११-१२ ॥

भाषा—देखने वाला ग्रह द्रष्टा, देखा जाता हुआ ग्रह दृश्य कहाता है। अब दृश्य ग्रह के राश्यादि मान में द्रष्टा ग्रह के राश्यादि मान को घटाने से एक दो आदि शेष रहने से क्रम से ०।४०।१५।४५।०।६०।०।४५।१५।१०।०।६० इतनीं ध्रुव-लिप्तायें होतीं हैं।

### चक्र देखिये ।

| राशिशेषसंख्या | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ध्रुवलिप्तासंख्या | ० | ४० | १५ | ४५ | ०० | ६० | ०० | ४५ | १५ | १० | ०० | ६० |

अब राशि के आगे अंशादिक जो शेष हो उसको गत, ऐष्य ध्रुवान्तर से गुणा करके तीस से भाग देने पर जो कलादि लब्ध होगा, उसको, गत ध्रुवा से ऐष्य ध्रुवा को अधिक होने से गत ध्रुवा में जोड़ना, तथा गत ध्रुवा से ऐष्य ध्रुवा को न्यून होने से गत ध्रुवा में घटाना, तब स्पष्ट दृष्टि कला होती है ॥ ११ ॥

### अत्रोपपत्तिः—

तत्र पश्यतीति द्रष्टा, दृश्यते यः स दृश्योऽथवा द्रष्टुं योग्यो दृश्य इति कथ्यते । तत्र तावद् 'दृष्टिः स्यान्नवपञ्चमे बलवती'त्यादिना तथा 'दृष्टिः पादमिता चतुर्थदशमे' इत्यादिना च द्रष्टृग्रहाद्दृश्यग्रहे एकद्वित्र्यादिराशौ स्थिते दृष्टिमानानि—

| राशयः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दृष्टिमानम् कलात्मकम् | ६० | ० | ४० | १५ | ४५ | ० | ६० | ० | ४५ | १५ | १० | ०० |

अथ द्रष्टा ग्रहो यस्मिन् कस्मिन्नपि राशौ यदंशाद्यवयवे तिष्ठति, तत्तुल्यभागा-द्यवयवे द्वितीय-षष्ठाष्टमव्ययस्थानान्यतमस्थाने द्रष्टृग्रहात्पुरतो दृश्यग्रहे स्थिते सति तत्र दृष्टिखण्डाभावः, इति लिखितचक्रदर्शनात् स्पष्टम् , तत्र तेषु द्रष्टृदृश्यग्र-हान्तराणि क्रमेणैकपञ्चसप्तैकादशराशिसमान्येव भवन्त्यतस्तत्तुल्यशेषेषु दृष्टिः शून्यमिता फलिता ।

अथ द्रष्टृग्रहाश्रितराश्यंशाद्यवयवबिन्दुतः पूर्णराशिद्वयान्तरितो दृश्यग्रहस्तु द्रष्टृग्रहाश्रितराशिकोष्ठतस्तृतीयराशिकोष्ठे भवति, तृतीयस्थाने दृष्टिस्त्र्यंशोनाऽर्थाच्चत्वारिंशत्कलातुल्या दृष्टिर्विद्यतेऽतो द्रष्टृदृश्यग्रहान्तरे राशिद्वयमिते दृष्टिध्रुवा चत्वारिंशत्कलासमा।

एवं द्रष्टृग्रहाश्रितराश्यंशाद्यवयवबिन्दुतः पूर्णैकराश्यन्तरितो दृश्यग्रहस्तु द्रष्टृग्रहाश्रितराशिकोष्ठतो द्वितीयराशिकोष्ठे भवति, द्वितीयस्थाने दृष्टिः शून्या तत्र द्रष्टृग्रहदृश्यग्रहराश्यन्तरं त्वेकमितमतस्तयोरेकराशिसमेऽन्तरे दृष्टिध्रुवा शून्या।

एवं द्रष्टृग्रहाश्रितराशिलवाद्यवयवबिन्दुतः पूर्णराशित्रयान्तरितो दृश्यग्रहस्तु द्रष्टृग्रहाश्रितराशिकोष्ठाच्चतुर्थकोष्ठे भवति, चतुर्थस्थाने दृष्टिस्तु पञ्चदशकलात्मिका, अतो द्रष्टृदृश्यग्रहान्तरे पूर्णराशित्रयमिते सति पञ्चदशकलातुल्या दृष्टिध्रुवा सिद्धा।

एवं द्रष्टृग्रहाश्रितराशिकोष्ठात्पञ्चमे राशिकोष्ठे वर्त्तमानस्य दृश्यग्रहस्य दृष्टिकला पञ्चचत्वारिंशत्कला भवति, तत्र द्रष्टृदृश्यग्रहान्तरं राशिचतुष्टयमतो राशिचतुष्टयमिते द्रष्टृदृश्यग्रहान्तरे दृष्टिध्रुवा पञ्चचत्वारिंशत्कलासमा फलिता, एवं शेषस्थानेऽपि चिन्त्यम्।

तत्र चक्रम्।

| राशिकोष्ठसंख्या | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राश्यन्तरसंख्या | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| दृष्टिध्रुवासंख्या | ०० | ४० | १५ | ४५ | ०० | ६० | ०० | ४५ | १५ | १० | ० | ६० |
| ध्रुवान्तराणि | ०० | ४० | २५ | ३० | ४५ | ६० | ६० | ४५ | ३० | ५ | १० | ६० |
| धनर्णसंख्या संज्ञा | ध. | ऋ | ध. | ऋ | ध. | ऋ | ध | ऋ | ऋ | ऋ | ऋ | ध. |

अथ द्रष्टृदृश्यग्रहान्तरे कृते पूर्णपूर्णराशिशेषसम्बन्धिदृष्टिध्रुवा तु सिद्धा। तत्रांशाद्यवयवशेषसम्बन्धिदृष्टिकलासाधनार्थं गतैष्यध्रुवान्तरवशेन त्रैराशिकम्—यदि त्रिंशदंशैर्गतैष्यध्रुवान्तरं तदा द्रष्टृदृश्यग्रहान्तरांशैः किमित्यनुपातेन यल्लभ्यते तद्गतध्रुवाधिके ऐष्यध्रुवे धनं कार्यमुत्तरोत्तरमुपचीयमानत्वात्। यदि गतध्रुवाङ्कादेष्यध्रुवोऽल्पस्तदा दृष्टिकलायाः क्रमापचयत्वादनुपातानीतं फलं ध्रुवायां विशोध्यमित्युपपन्नं सर्वम्॥ १२॥

## अथ ग्रहदृष्ट्यङ्कबोधकं चक्रम् ।

द्रष्टारो ग्रहाः ।

| दृश्य ग्रहाः | सू० | चं० | मं० | बु० | बृ० | शु० | श० | दृश्यग्रहाः |
|---|---|---|---|---|---|---|---|---|
| द्रष्टृग्रहा सू० | ०० | ३४।२ | १२।२५ | २८।२ | ३९।४२ | २०।२८ | ९९।९५ | |
| चं० | ३४।२ | ०० | ३३।१४ | ३६।२० | ४२।१० | ४५।१९ | ३७।६ | |
| मं० | ३।६ | ३३।१९ | ०० | ८।२६ | ६।२६ | ४७।२६ | ३।४७ | |
| बु० | २८।३ | ३६।२० | ३३।४४ | ०० | ४८।२१ | ३८।३८ | ३२।८ | |
| बृ० | ३९।४३ | ४२।१० | २५।५७ | ४८।२० | ०० | ३४।०० | ४३।४८ | |
| शु० | ९।८ | ४५।१६ | ४७।३५ | १०।१४ | ८।३० | ०० | ९।४८ | |
| श० | ५५।९९ | ३७।६ | १५।१६ | ३२।७ | ४३।४७ | २३।१२ | ०० | |

उदाहरण—यहां ग्रह के राश्यादि लिखना आवश्यक है। यहां प्रश्न है कि चन्द्रमाके ऊपर सूर्य की कितनी दृष्टि होगी? तो चन्द्रमा दृश्य ग्रह, सूर्य द्रष्टा ग्रह हुआ।

सू० ००।१२।५७।५०
चं० ८।०५।३९।३३
मं० ०१।२२।१३।५३
बु० ११।२३।५९। ९
बृ० ००।०२।४९।०८
शु० ०१।२८।१९।१७
श० ००।१०।५९।१३

अब चन्द्रमा ८।५।३९।३३ में सूर्य ००।१२।५७।५० को घटा कर शेष ७।२२।४१।४३ यहां राशि स्थान में ७ है, अतः शेष ध्रुवा चक्रमें ध्रुवाङ्क = ०० हुआ। यह गतध्रुवाङ्क हुआ। ऐष्य ध्रुवाङ्क ४५ इन दोनों के अन्तर ४५ से शेषके कलादि २२।४१।४३ को गुणा किया और सठिआया तो १०२११।१७।०५, इसमें ३० से भाग दिया तो लब्धि ३४।०२।३४ यहां गत ध्रुवा ०० है, अतः इतनी ही कला चन्द्रमा पर सूर्य की दृष्टि होती है।

एवं मङ्गलपर सूर्यकी दृष्टि कितनी होगी? यहाँ द्रष्टा सूर्य, दृश्य मङ्गल है, अतः मङ्गल १।२२।१३।५३ में सूर्य ००।१२।५७।५० को घटाकर शेष १।९।१६।३ यहां राशि स्थानमें शेष १ है, अतः गत ध्रुवाङ्क ०० हुआ। और ऐष्य ४० है, इन दोनोंके अन्तर ४० से शेष की कलादि ९।१६।३ को गुणा कर सठिआया ३७०।४२।४० इसमें ३० से भाग दिया तो १२'।२१''।२५''' इतनी लब्धि हुई। यहां ध्रुवा ०० है, अतः यही दृष्टि हुई। ऐसे सब ग्रहों की दृष्टि बनानी चाहिए॥ १२॥

## अथ दृष्टिध्रुवाङ्कावगमकं चक्रम्।

| शेषाङ्काः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ध्रुवाङ्काः | ०० | ४० | १५ | ४५ | ०० | ६० | ०० | ४५ | १५ | १० | ०० | ६० |
| गतैष्याङ्काः | ४० | ३० | ३० | ४५ | ६० | ६० | ४५ | ६० | ०५ | १० | ६० | ६० |
| धनर्णसंज्ञा | ध. | ऋ | ध. | ऋ | ध. | ऋ. | ध. | ऋ. | ऋ | ऋ. | ध. | ऋ |




अथ मित्रामित्रविचारमाह—

**पश्यन्मित्रदृशा सुहृद्रिपुदृशा शत्रुः समस्त्वन्यथा**
**तिथ्यर्काष्टनगाङ्कशैलखचराः सूर्यादिदीप्तांशकाः।**
**चक्रे वामदृगुच्यते बलवती मध्याद्यथा वेश्मनी-**
**त्येकर्क्षेऽपि दृगुच्यतेऽर्थजननीत्येके विदुः सूरयः॥ १३॥**

यः कश्चिद्ग्रहो यं कमपि ग्रहं मित्रदृशा ९।५।३।११ दृष्ट्या पश्यन् सन् सुहृत् मित्रं स्यात्। अत्रेदं तत्त्वं यथा रवितो नवमे चन्द्रोऽस्ति तदा चन्द्रात् पञ्चमे सूर्यः स्यात्। वा रवितः पञ्चमे यदि चन्द्रस्तदा चन्द्रान्नवमे सूर्योऽवश्यं स्यात्तथा यदि रवितस्तृतीये चन्द्रस्तदा चन्द्रादेकादशेऽवश्यं रविरेवं यः कश्चिद् ग्रहो यं कमपि ग्रहं यादृश्या दृष्ट्या पश्यति सोऽपि तं तादृश्यैव गत्या पश्यति। अत इयं मैत्री मिथः सिद्धा, शत्रुत्वमपि मिथः सिद्धम्। इदमत्र विलक्षणं विद्यते। जातके तथा न, यथा चन्द्रस्य बुधो मित्रं किन्तु बुधस्य चन्द्रः शत्रुरस्तीति व्यवस्था वर्त्तते। आस्तां तावदयं विचारः। रिपुदृशा शत्रुदृष्ट्या १।७।४।१० एतत्सङ्ख्यया पश्यन् ग्रहः

शत्रुः स्यात्। अतोऽन्यथा मित्रशत्रुभिन्नदृष्ट्या २।६।८।१२ एतत्सङ्ख्यस्थानेषु स्थितो ग्रहः समः स्यात्, तत्र स्थानेषु नहि मित्रत्वदृष्टिर्न वा शत्रुत्वदृष्टिरपि विद्यते दृष्ट्यभावात्समत्वं स्फुटम्। यथा जातके कुजश्चतुर्थाष्टमस्थाने पश्यति वा तदन्यो ग्रहस्त्रिपाददृष्ट्या ते स्थाने पश्यति। तथा ताजिके न, अत्र तु २।६।८।१२ एषु दृष्टिरेव नहि भवतीति विशेषो बोध्यः।

अथ दीप्तांशानाह—

तिथ्यर्काष्टनगाङ्कशैलखचराः १५।१२।८।७।९।७।९ सूर्यादिग्रहाणां क्रमेण दीप्तांशकाः स्युः। यथा चक्रम्।

अथ दृष्टौ विशेष उच्यते—

| ग्रहाः | र. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|
| दीप्तांशाः | १५ | १२ | ८ | ७ | ९ | ७ | ९ |

तत्र रवेः पुरतः पृष्ठतश्च १५ अंशान्तरे यदि कश्चिद्ग्रहो भवेत्तदा स सूर्यदीप्तांशान्तरे वर्त्तते। अर्थाद्रवेस्तेजोविशेषस्तस्य ग्रहस्योपरि विशेषेण पतति। अस्य प्रयोजनं तु यमयायोगादौ "दीप्तांशकैद्वावथ शीघ्रतस्तु॥ आदाय तेजो बुधतो ददौ" इत्यादिषु वर्त्तते।

चक्रे लग्नादिद्वादशराशिचक्रे दक्षिणदृष्ट्यपेक्षया वामदृग् बलवती उच्यते। तत्र लग्नादिषड्भावा दक्षिणभागः। सप्तमादि द्वादशान्तषड्भावा वामभागः। तत्र यथा मध्याद्दशमस्थानाद्वेश्मनि चतुर्थस्थाने या दृष्टिः सा बलवती भवति। चतुर्थभावाद्दशमभावोपरि या दृष्टिः सा बलवती नेत्यर्थः।

तत्र मध्याद्यथा वेश्मनीति उपलक्षणमेतत्तेन सप्तमादिद्वादशस्थानस्थितानां ग्रहाणां लग्नादिषष्ठान्तभावस्थितग्रहेषु या दृष्टिः सा बलवती भवतीति स्फुटोऽर्थः।

अथैकस्थानदृष्टौ कस्यचिन्मतमाह–एकर्क्षे एकराशिस्थितग्रहोपरि तद्राशिस्थितग्रहस्य या दृष्टिः साऽपि अर्थजननी प्रयोजनसाधिका भवतीत्येके सूरयो विद्वांसो विदुः।

भाषा—कोई ग्रह किसी ग्रह को ३।५।९।११ इस मित्र दृष्टियों में से किसी दृष्टि से देखे तो परस्पर मित्र होता है। और किसी को कोई ग्रह १।४।७।१० इन शत्रु दृष्टियों

में से किसी दृष्टि से देखे तो शत्रु होते हैं। जैसे चक्र देखिये ?–रवि से ५ वे में चन्द्रमा और नवमें में बृहस्पति हैं, ११ में बुध, ये तीनों ग्रह सूर्य के मित्र हैं। तथा चन्द्र, बुध, बृहस्पति का भी सूर्य मित्र है। और सूर्य से चौथे शनि, दशवें में मङ्गल ये दोनों सूर्य के शत्रु हुए। तथा सूर्य से बारहवें में शुक्र न मित्र न तो शत्रु अर्थात् सम

| | | |
|---|---|---|
| ३ | सू. | शु. |
| | | बु. |
| | श. मं. | |
| . | | बृ. |

हुए। ऐसे ही सब ग्रहों के मित्र सम शत्रु समझना। और सूर्यादि ग्रहों के क्रमसे १२।१२।८।७।१।७।९ इतने दीप्तांशा होते हैं। चक्रमें कुण्डलीमें दहिने दृष्टिसे वाम दृष्टि बलवती होती है। जैसे दशमस्थानके मङ्गलग्रह की चतुर्थस्थान में शनि पर जो दृष्टि सो बलवती है। कोई कोई एक राशि में भी अर्थ (प्रयोजन, धन, कार्य) जननी (सम्पादन करने वाली) (दृष्टि) होती है, यह कहते हैं ॥ १३ ॥

पुरः पृष्ठे स्वदीप्तांशैर्विशिष्टं दृक्फल ग्रहः।
दद्यादतिक्रमे तेषां मध्यमं दृक्फलं विदुः ॥ १४ ॥

यः कोऽपि ग्रहः स्वदीप्तांशैः पुरः पृष्ठे विशिष्टं दृक्फलं दद्याद्दीप्तांशान्तर्गत-दृष्टिरेव विशेषफलसाधिकेति भावः। तेषां दीप्तांशानामतिक्रमे दृक्फलं मध्यमं साधारणं विदुः ॥ १४ ॥

भाषा—कोई ग्रह अपने से आगे, पीछे दीप्तांशाके अन्दर ही विशेष दृष्टिफल देता है। दीप्तांशाके अतिक्रमण करने से साधारण दृष्टिफल कहते हैं ॥ १४ ॥

इति दृष्टिफलाध्यायः।

---

अथ षोडशयोगाध्यायः।

प्रागिक्कवालो पर इन्दुवारस्तथेत्थशालोऽपर ईसराफः
नक्तं ततः स्याद्यमया मणाऊ कम्बूलतो गैरिकंबूलमुक्तम् ॥ १५ ॥
खल्लासरं रद्दमथो दुफालिकुत्थं च दुत्थोत्थदिवीरनामा।
तम्बीरकुत्थौ दुरफश्च योगाः स्युः षोडशैषां कथयामि लक्ष्म ॥ १६ ॥

प्राक् पूर्वं प्रथमो वा योग इक्कवालः भाग्यार्थकः। यथा लोके भाग्यवन्तं जनम् 'इक्कवाली' इति वदति। तस्मादपर इन्दुवारः कार्यनाशकः। तथाऽपरस्तृतीय-

इत्थशालः, दृष्टिसंयोगसम्बन्धात्मकः । चतुर्थः = ईसराफः = वियोगसूचकः । ततः परं नक्तं, ततो यमया स्यात्, ततः मणाऊ, ततः कम्बूलं स्वीकारबोधकं, ततो गैरिकम्बूलमुक्तम् । ततः खल्लासरं = रिक्तकरम् । रद्दं = व्यर्थत्वबोधकम् । अथोऽनन्तरं, दुफालिकुत्थं = साधारणकार्यसाधकम् । दुत्थोत्थदिवीरनामा=अन्यसाहाय्यतः कार्यसाधकम् । तम्बीरः=कार्यसाधकः । कुत्थः=बलबोधकः, दुरफः=दुर्बलबोधकः । एते षोडशयोगाः स्युः । एषां योगानां क्रमशो लक्ष्म=लक्षणं कथयामि ॥१५-१६॥

भाषा—अब षोड़श योग कहते हैं। पहला इक्कवाल, दूसरा इन्दुवार ऐसे चक्र में देखिये—

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| इक्कवाल | इन्दुवार | इत्थशाल | ईसराफ | नक्तं | यमया | मणाऊ | कम्बूल | गैरिकम्बूल | खल्लासर | रद्द | दुफालिकुत्थ | दुत्थोत्थदि० | तम्बीर | कुत्थ | दुरफ |

तत्रेक्कवालेन्दुवारयोर्लक्षणे आह—

**चेत्कण्टके पणफरे च खगाः समस्ताः**
**स्यादिक्कवाल इति राज्यसुखाप्तिहेतुः ।**
**आपोक्लिमे यदि खगाः स किलेन्दुवारो**
**न स्याच्छुभः क्व च न ताजिकशास्त्रगीतः ॥ १७ ॥**

**इन योगोंके आगे क्रमसे लक्षण कहता हूँ ॥ १५-१६ ॥**

चेत्—यदि, समस्ताः सप्तापि ग्रहाः कण्टके केन्द्रे १।४।७।१० वा पणफरे २।५।८।११ स्थाने स्थिताः, तदा राज्यसुखाप्तिहेतुरिक्कवाल इति योगः स्यात् । यदि समस्ताः खगा ग्रहा आपोक्लिमे ३।६।९।१२ स्थितास्तदा स योगः ताजिकशास्त्रगीतः=ताजिकग्रन्थकथितः इन्दुवारः स्यात्, स किलेति निश्चयेन क्वचन शुभो न स्यादिति ॥ १७ ॥

**भाषा—यदि सब ग्रह लग्नसे १।४।७।१० वा २।५।८।११ इन स्थानों में हों, तो इक्कवाल योग होता है, वह राज्य, सुखके प्राप्ति का कारण होता है, अर्थात् अच्छा है, यदि सब ग्रह ३।६।९।१२ इन स्थानों में हों तो इन्दुवार योग होता है। यह ताजिक ( वर्षफल बोधक ) शास्त्रमें कहा है। यह कहीं भी शुभ नहीं है ॥ १७ ॥**

केन्द्रादिकों की संज्ञा लघुजातक में लिखित है—

केन्द्रचतुष्टयकण्टकसञ्ज्ञा लग्नास्तदशमचतुर्थानाम् ।
तस्मात् परतः पणफरमापोक्लीमं च तत्परतः ॥

उत्तम इक्कवालयोग




मध्यम इक्कवाल योग




इन्दुवारयोग




अथेत्थशालयोगलक्षणमाह—

**शीघ्रोऽल्पभागैर्घनभागमन्देऽग्रस्थे निजं तेज उपाददीत ।**
**स्यादित्थशालोऽयमथो विलिप्ता लिप्तार्धहीनो यदि पूर्णमेतत् ॥ १८ ॥**

यदि अल्पभागैः=स्वल्पांशैः, वर्त्तमानः शीघ्रः=शीघ्रगतिग्रहः, घनभागमन्दे = अधिकांशवति मन्दगतिग्रहे निजं स्वकीयं तेजः उपाददीत, अर्थाद्यस्मिन् कस्मिन्नपि दृष्टिसम्भवे राशौ यावदंशेषु शीघ्रगतिग्रहस्तिष्ठति ततोऽधिकेंऽशे शीघ्रगति-

ग्रहदीप्तांऽशान्तर्गते एव यदि मन्दगतिग्रहः स्यात्तदैव शीघ्रगतिग्रहस्य तेजो मन्दगतिग्रहोपरि याति, दीप्तांशान्तर्गतत्वात्, तदा 'इत्थशालः' योगः स्यात्।

अथ पूर्णेत्थशालयोगमाह—

अथो यदि शीघ्रगतिग्रहः मन्दगतिग्रहात् विलिप्तालिप्तार्धहीनः विकला वा त्रिंशत् प्रतिविकलाप्रमाणन्यूनस्तदा एतदित्थशालसञ्ज्ञं पूर्णं स्यात्। यथा चन्द्रः १०।२०। २५।४० बुधः १०।२०।२६।१० अत्र शीघ्रगतिग्रहश्चन्द्रः। बुधो मन्दगतिग्रहो ज्ञेयः।

सप्तसु ग्रहेषु चन्द्रः शीघ्रगतिग्रह एव, शनिर्मन्दगतिग्रह एव, न तौ चन्द्रमन्दौ मन्दशीघ्रगतिग्रहौ कथमपि भवतः। तदन्ये ग्रहाः शीघ्रगतिग्रहा मन्दगतिग्रहाश्च भवितुमर्हन्ति। यथा चन्द्रापेक्षया बुधो मन्दगतिः परन्तु शुक्रापेक्षया बुध एव शीघ्रगतिः। अर्थात्कक्षानामध ऊर्ध्वास्थित्या मन्दशीघ्रगतित्वं ग्रहाणां भवति। तत्र यथा—चंग > बुग > शुग > रग > मंग > बृग > शग। एवमुत्तरोत्तरं मन्दगतयः। तथाऽन्तिमात् पूर्वं पूर्वं शीघ्रगतयो ज्ञेयाः। तत्र ययोर्ग्रहयोर्वशेन इत्थशालयोगस्य विचारः क्रियते तयोर्योऽधिकगतिकः स शीघ्रगतिग्रहः। योऽल्पगतिकः न मन्दगतिग्रह इति पर्यवसितोऽर्थः। अत्र गतिः स्पष्टा ग्राह्येति। इत्थशालयोग-एव मुथशिलसंज्ञक उच्यते ॥ १८ ॥

भाषा—जिन दो ग्रहों के वश से विचार करना है उन दोनों में जो अधिक गति वाला ग्रह हो, वह शीघ्रगति ग्रह। जिसकी गति दूसरे की अपेक्षा अल्प हो वह मन्दगति ग्रह कहाता है। वहां पर शीघ्रगति किसी राशि के जितने अंश पर हो, उससे अधिक अंश पर दीप्तांशा के अन्दर ही यदि मन्दगति ग्रह हो तो इत्थशाल या मुथशिल योग होता है। ऐसे ही स्थिति में शीघ्रगति ग्रह मन्दगति ग्रह को अपना तेज देते हैं। यदि शीघ्रगति ग्रह से विकला, या तीस प्रतिविकला न्यून हो तो पूर्ण इत्थशाल योग होता है ॥ १८ ॥

यहां पर इतना आवश्यक है कि—न्यून अधिक का अर्थ पीछे आगे है। जैसे मेष के २९ अंश पर चन्द्रमा हैं। और वृष के ५ अंश पर कोई दूसरा मन्दगति ग्रह है। तो चन्द्रमा से दीप्तांशा १२ के अन्दर ही आगे वह दूसरा ग्रह हुआ, यहां अवश्य मुथशील या इत्थशाल योग होता है। लेकिन चन्द्रमा के २५ अंशा से दूसरे ग्रह की ५ अंशा न्यून ही है, इसलिये न्यून का अर्थ थोड़ा, अधिक का अर्थ जादे यह मोटा मोटी अर्थ रखने से योग नहीं घटता। वस्तुतः न्यून का अर्थ है पृष्ठभागवर्त्ती। अधिक का अर्थ है अग्रिमप्रदेशवर्त्ती। और क्षेत्र के वश से इत्थशाल का भी भेद सम

कहना। अर्थात् जिस क्षेत्रमें इत्थशाल हो वहां यदि शीघ्रमन्द ग्रहों के उच्च, स्वक्षेत्र, मित्रगृह, त्रिकोण हो तो विशेष शुभप्रद प्रबल इत्थशाल कहना। शत्रु नीच क्षेत्र में अधम दुर्बल इत्थशाल कहना। इत्थशाल का अर्थ दृष्टि संयोग है सो 'शीघ्रेऽग्रगे युतिर्याता गम्या पृष्ठगते यतः' इति। सूर्यसिद्धान्तके इस वचन से स्पष्ट है कि थोड़ा २ चलने वाला आगे रहे, तेज चलने वाला पीछे हो तो अवश्य कहीं न कहीं संयोग होगा ही—इसमें सन्देह नहीं।

यहां वक्रमुथशिल योग भी हो सकता है। जैसे मन्दगति ग्रह से शीघ्रगति ग्रह अधिक भी हो लेकिन वक्री हो, तो अवश्य योग होगा। अथवा मन्दगति ग्रह शीघ्रगति ग्रह दोनों वक्री हों। उसमें मन्दसे शीघ्र अधिक हो तथापि योग होगा, लेकिन वक्रेत्थशाल होगा।

पूर्णेत्थशाल का उदाहरण—

यहां स्त्री लाभके प्रश्नमें कर्क लग्न है, उसका स्वामी चन्द्रमा वृषराशि में दो अंश अठारह कला पर है, और कार्याधिपति शनि उसीराशिमें २ दो अंश १९ उन्नीस कला पर है, तो यहां दोनों में एक ही कला का अन्तर है, अतः पूर्णेत्थशाल होता है।

राश्यन्तर में रहने पर भी पूर्णेत्थशाल योग का उदाहरण—

यथा धनलाभके प्रश्नमें वृष लग्न है, उसका स्वामी शुक्र कुम्भराशिके २९ अंश पर हों, और यहां कार्येश (धनेश) बृहस्पति मीन के चार अंश पर हों तो पूर्णेत्थशाल होता है। यहां कुम्भ से मीन दूसरा स्थान है, अतः दृष्टि के अभाव से इत्थशाल कैसे हुआ? यह शङ्का हो, तो ठीक नहीं, क्योंकि दूसरे स्थान में रहने ही से दृष्टि का अभाव नहीं होता, प्रत्युत दोनों (दर्शक दृश्य ग्रहों) के अन्तर ठीक एक राशि तुल्य होने से दृष्टि का अभाव होता है। यथा मीनके २९ अंशपर यदि बृहस्पति हो और कुम्भ के २९ पर शुक्र वर्त्तमान ही है, ऐसी स्थिति में दृष्टि का अभाव होता है, न्यूनाधिक अंश में नहीं। इस लिये यहां लग्नेश से कार्येश को दूसरे स्थान में रहने पर भी इत्थशाल योग घटित ही हुआ।

भावी इत्थशाल योग का उदाहरण—धन लाभके प्रश्न में तुला लग्न है, उसका स्वामी शुक्र ५ अंश से कर्क में है और यहां तुला से धनभाव (वृश्चिक) का स्वामी मङ्गल मीन के १७ अंशपर है। तो यहाँ शुक्र शीघ्रगति ग्रह पीछे, मङ्गल मन्दगति ग्रह आगे है, और दीप्तांशा के अन्दर है, इसलिये भविष्यत् इत्थशाल का यह उदाहरण हुआ। भूत (व्यतीत) इत्थशाल तो ईशराफ योग ही है।

कोमल बुद्धिवाले छात्रों के लिये विशेष प्रस्फुट विवरण—

यहां लग्नाधीश और कार्याधीश का लक्षण-प्रश्न काल में जो लग्न राशि, उस

का स्वामी लग्नाधीश होता है। और जिस कार्य का प्रश्न होता है, उस कार्य का विचार जिस भाव से किया जाता है, वह भाव जिस राशि में पड़े, उस का स्वामी कार्येश वा कार्याधीश होता है।

यथा शरीर सम्बन्धी प्रश्न में लग्नेश ही कार्येश हुआ। एवं धन लाभ प्रश्न में द्वितीयेश कार्याधीश, सुख लाभ, गृह लाभ, भूमि लाभ के प्रश्न में चतुर्थेश कार्याधीश होता है। तथा पुत्र लाभ के प्रश्न में पञ्चमेश कार्येश, स्त्रीलाभ प्रश्न में सप्तमेश कार्याधीश, एवं तीर्थ यज्ञादि धर्म कार्य में नवमेश, राज्य प्राप्ति, जीविका, पितृ-सम्बन्धी विचार में दशमेश कार्याधीश होता है। ऐसे ही प्रश्न के भेद से कार्याधीश का भेद होता है।

इत्थशाल योग का लक्षण-जिस किसी दो ग्रहों में इत्थशाल होना विचारना है, उन में जो अधिक गति वाला ग्रह हो वह शीघ्रगति ग्रह कहाता है जो न्यून गति वाला ग्रह हो, वह मन्दगति ग्रह कहाता है। वहां यदि मन्दगति ग्रह से शीघ्रगति ग्रह न्यून हो, परस्पर दृष्टि सम्भव हो और दोनों के अन्तर करने से अंशस्थान में दीप्तांशा से न्यून संख्या हो, तो इत्थशाल योग होता है।

एक राशि में या भिन्न भिन्न राशियों में भी लग्नाधीश, कार्याधीश रहें और दीप्तांशा के अन्दर रह कर परस्पर दृष्टि सम्बन्ध होता होय तो इत्थशाल योग होता है।

इत्थशाल योग का तत्त्व—

जब दृष्टिसंयोग सम्बन्ध पूर्वक ग्रहों के संयोग ही को इत्थशाल कहा है, तो अधिक चलने वाला ग्रह पीछे हो, अल्प चलने वाला ग्रह आगे हो, दोनों यदि मार्गी हो इस दशा में पीछे से तेज चलने वाला ग्रह, धीरे धीरे, चलते हुए आगे के मन्द गति ग्रह को अवश्य कभी न कभी पकड़ेगा ही। जैसे वर्त्तमान काल में किसी एक स्थान से एक कोस पर जब कोई एक आदमी जा रहा है, जो धीरे २ चलता है। और दूसरा आदमी तभी उसी स्थान से उससे अधिक वेग से चला, तो आगे वाले को पीछे वाला रास्ते में अवश्य पकड़ेगा। यहां लग्नेश हुआ काम काज का मतलबी व्यक्ति, कार्येश हुआ उस काम काज का मालिक, अतः उन दोनों की भेंट होने से काम होता है

इत्थशाल योग का उदाहरण—

यथा राज्य लाभ प्रश्न में वृश्चिक लग्न है, तो लग्नेश मङ्गल, कार्येश ( दशमेश ) सूर्य हुआ। लग्नेश लग्न में १६ अंश से हो। कार्येश सूर्य सिंह में दो अंश से हो, तो यहां सूर्य और मङ्गल में शीघ्रगतिग्रह सूर्य पीछे है, मन्दगति ग्रह मङ्गल आगे है, दोनों

का अंशान्तर १४ दीप्तांश के अन्दर हुआ, परस्पर दृष्टि पड़ रही है, इसलिये इत्थशाल योग घटित है। इस उदाहरण पर से कुण्डली—




अथ दृष्टौ मुथशिलयोगमाह—

**शीघ्रो यदा भान्त्यलवस्थितः सन् मन्देऽग्रभस्थे निदधाति तेजः।**
**स्यादित्थशालोऽयमथैष शीघ्रदीप्तांशकांशैरिह मन्दपृष्ठे ॥ १९ ॥**
**तदा भविष्यद्गणनीयमित्थशालं त्रिधैवं मुथशीलमाहुः।**
**लग्नेशकार्याधिपयोर्यथैष योगस्तथा कार्यमुशन्ति सन्तः ॥ २० ॥**

यदा शीघ्रः शीघ्रगतिग्रहः, भान्त्यलवस्थितः = राश्यन्तिमांशे वर्त्तमानः, सन्, अग्रभस्थे = अग्रिमराशिस्थिते मन्दे मन्दगतिग्रहे तेजः निदधाति, तदाऽयमित्थशालः स्यात्। अथ एषः शीघ्रगतिग्रहः स्वदीप्तांशाधिकांशैर्मन्दपृष्ठे स्थितः, तदानीं दृष्ट्यभावात् तदग्रिमसमये दीप्तांशाभ्यन्तरसम्भवात् तदा भविष्यन्मुथशीलं गणनीयम्। एवं त्रिधा मुथशीलमाचार्या आहुः। वर्त्तमानं पूर्णं भविष्यच्चेति भेदात्।

अथ मुथशीलयोगस्य फलमाह—

यथा लग्नेशकार्याधिपयोर्योगस्तथा सन्तः कार्यमुशन्ति। अर्थात् वर्त्तमाने योगे तदानीमेव कार्यसिद्धिः। पूर्णेत्थशाले पूर्णा कार्यसिद्धिस्तत्क्षणे एव। यदि भविष्यदित्थशालं तदा भाविनि समये कार्यसिद्धिर्वाच्येति।

अत्र प्रश्नभेदेन भिन्नो भिन्नः कार्याधीशो भवति। यथा पुत्रप्राप्तिप्रश्ने यदि मेषलग्नं स्यात्तदा पञ्चमेशः सूर्यः कार्याधिपः। सहजलाभप्रश्ने तृतीयेशो बुधः कार्याधिपः। स्त्रीलाभप्रश्ने सप्तमेशः शुक्रः कार्याधीशः। मृत्युप्रश्नेऽष्टमेशः। कर्मोन्नति=राज्यप्राप्तिप्रश्ने कर्मेशः कार्याधीशः। अर्थाद्यद्भावाद्यद्वस्तुविचारणीयमुक्तं

तेष्वन्यतमप्रश्ने तद्भावाधीश एव कार्याधीश इति सिद्धम्। लग्नेशस्तु सर्वत्र तात्कालिकलग्नाधिपतिरेवेति ॥ १९ ॥ २० ॥

भाषा—किसी राशिके अन्तिम अंश ३० में वर्त्तमान शीघ्रगतिग्रह यदि अगिले राशि में स्थित मन्दगतिग्रह पर अपना तेज रखता हो, अर्थात् शीघ्रगतिग्रह से आगे दीप्तांशाके अन्दर ही मन्दगतिग्रह हो तो इत्थशाल योग होता है। यह सामान्य लक्षण है।

यदि शीघ्रगतिग्रह, मन्दगति ग्रह से पीछे दीप्तांशा से अधिक अंश के अन्तर पर हो जैसे चन्द्रमा २।२९।४८।०२ बुध ३।१४।२४।४० यहाँ चन्द्रमा से आगे चन्द्रमा के दीप्तांशा ( १२ ) से अधिक अन्तर पर बुध है, तो जरूर आगे मुथशील होने वाला है। यह भविष्यत् इत्थशाल का योग है। इस प्रकार तीन प्रकार के इत्थशाल कहते हैं। जिस प्रकार लग्नाधीश का योग होय उसी प्रकार कार्य कहना अर्थात् वर्त्तमान योग में वर्त्तमान कार्य सिद्धि। पूर्णेत्थशाल में पूर्णकार्य। भावी इत्थशाल में भावी कार्य सिद्धि कहते हैं ॥ १९ ॥ २० ॥

अथ मुथशिलयोगवैशिष्ट्यमाह—

**लग्नेशकार्याधिपतत्सहाया यत्र स्युरस्मिन् पतिसौम्यदृष्टे।**
**तदा बलाढ्यं कथयन्ति योगं विशेषतः स्नेहदृशाऽपि सन्तः ॥ २१ ॥**

लग्नेशकार्याधिपतत्सहायाः, लग्नेशः प्रश्नलग्नस्वामी, कार्याधिप इच्छितप्रष्टव्यविषयाश्रयीभूतराश्यधिपः, धनलाभप्रश्ने धनेशः। गृहलाभप्रश्ने चतुर्थेशः। पुत्रलाभप्रश्ने पञ्चमेश एवं कार्याधिपः। तत्सहायस्तत्तयोर्लग्नाधीशकार्याधीशयोः सहायः पोषको मित्रादिर्ग्रहस्ते यत्र यस्मिन् राशौ पतिसौम्यदृष्टे स्वामिशुभग्रहविलोकिते सति तदा बलाढ्यं प्रवलं योगं मुथशिलयोगं कथयन्ति। केवलं मुथशिलमेव सर्वेषां योगानामेतद्वैशिष्ट्यं विज्ञेयम्। तत्रापि यदि स्वामिशुभग्रहाभ्यां स्नेहदृष्ट्या मित्रदृशा ( ३।५।०९।११ ) एतदन्यतमया दृशा दृष्टेर्विशेषतो बलाढ्यं योगं सन्तः सद्विज्ञाः कथयन्तीति ॥ २१ ॥

भाषा—लग्नस्वामी, कार्याधीश, और उन दोनों के सहायक मित्रादि ग्रह ये सब जिस २ राशि में हों, उसको, अपने स्वामी ग्रह, और शुभ ग्रह से देखे जाने पर मुथशील योग प्रबल होता है। यदि मित्रदृष्टया देखे तो और विशेष प्रबल योग आचार्य कहते हैं ॥ २१ ॥

**स्वर्क्षादिसत्स्थानगतः शुभैश्चेद्युतेक्षितोऽभूद्भविताऽथवाऽऽस्ते।**
**तदा शुभं प्रागभवत्सुपूर्णमग्र भविष्यत्यथ वर्तते च ॥ २२ ॥**

यः कोऽपि योगकारको ग्रहः, लग्नाधीशः कार्यक्षेत्राधिपतिर्वा स्वर्क्षादिसत्स्थानगतः = निजराशिहोराद्रेक्कनवांशादि-शुभग्रहक्षेत्रांशगतः, शुभैः बुधगुरुशुक्रचन्द्रैश्चेद्युतेक्षितो युतदृष्टोऽभूत् तदा सुपूर्णं शुभं फलं प्राक् पूर्वमभवत् ।

यदि शुभैर्युतेक्षितो भविता भावी तदा सुपूर्णं शुभं फलमग्रे भविष्यति । अथवा यदा तादृशो योग आस्ते सम्प्रति विद्यते तदा सुपूर्णं शुभं फलं वर्त्तते इति वक्तव्यमति ॥ २२ ॥

**भाषा**—लग्नाधीश अथवा कार्याधीश, जो कोई योगकारक ग्रह अपने राशि, होरा द्रेष्काण, नवांश, उच्च, तथा शुभग्रहके वर्ग आदि क्षेत्रोंमें स्थित होकर शुभग्रहों से युत दृष्ट होगया हो तो पूर्ण शुभ फल होगया, या यदि स्वक्षेत्र शुभक्षेत्र में जाने वाला हो तथा शुभ ग्रहों से युतदृष्ट होने वाला हो, तो आगे पूर्णफल होने वाला है।

यदि उक्त योग होरहा हो, तो पूर्ण शुभ वर्तमान कहना। यहां पर इतना और समझना कि पहले तथा वर्त्तमान में और आगे भी यदि अच्छे स्थान में ग्रहका रहना सम्भव है तो बरोबर शुभफल कहना। अथवा पहले, और वर्त्तमान, और भावी समयमें भी यदि अशुभ ही स्थानोंमें ग्रह हों, तो अशुभ ही फल निरन्तर कहना। एवं पहले अच्छे स्थानमें बाद बुरे स्थानमें जानेवाला होय, तो पहले शुभ पीछे अशुभ फल कहना। यदि पहले बुरे स्थानमें हों, पीछे अच्छे स्थान में जाने वाला होय तो पहले अशुभ पीछे शुभ कहना ॥ २२ ॥

अथाशुभफलमाह—

**व्यत्यस्तमस्माद्विपरीतभावेऽथेष्टर्क्षतोऽनिष्टगृहं प्रपन्नः ।**
**अभूच्छुभं प्रागशुभं त्विदानीं,संयातुकामेन च भावि वाच्यम् ॥ २३॥**

अस्मादुक्तात् स्वर्क्षादिसत्स्थानात्, विपरीतभावे—शत्रुपापक्षेत्रादिदुष्टस्थाने योगकरो ग्रहो भवेत्तदा शुभफलमपि व्यत्यस्तं कथिताद्विपरीतमर्थादशुभमेव वाच्यम् । अथ यदि योगकरो ग्रह इष्टर्क्षतः स्वमित्रोच्चादिक्षेत्रतः, अनिष्टगृहं = शत्रुपापक्षेत्रं, प्रपन्नः=प्राप्तः, तदा, यदेष्टक्षेत्रे आसीत्तदा शुभं, पश्चादनिष्टगृहे गते इदानीमनिष्टफलं वाच्यम् । अथ संयातुकामेन शुभक्षेत्रे गन्तुकामेन ग्रहेण भावि तत्फलं वाच्यमिति ॥ २३ ॥

**भाषा**—उक्त स्थानसे विपरीत स्थानमें ग्रहके रहनेसे विलोम फल कहना। शुभ

स्थानोंसे अशुभ स्थानमें ग्रह आया हो तो पहले शुभ पीछे अशुभ कहना। यदि शुभ स्थानमें जानेवाला हो तो शुभफल भावी कहना ॥ २३ ॥

अथ ईसराफयोगलक्षणमाह—

**शीघ्रो यदा मन्दगतेरथैकमप्यंशमभ्येति तदेसराफः।**
**कार्यं तयो मूसरिफे खलोत्थे सौम्ये न हिल्लाजमतेन चिन्त्यम्॥ २४ ॥**

शीघ्रः = शीघ्रगतिग्रहः, लग्नाधीशकार्याधीशयोरेकतरोऽधिकगतिग्रह इत्यर्थः। यदि मन्दगतेर्ग्रहस्य एकमप्यंशमभ्येति अतिक्रमति। अग्रे यातीत्यर्थः। तदा 'ईसराफः' एतत्संज्ञया प्रसिद्धो योगः, अयमेव गतेत्थशालयोगो ज्ञेयः। तत्र खलोत्थे= पापग्रहजनिते मूसरिफे योगे, कार्यक्षयः = इच्छितविषयवैफल्यं स्यात्, सौम्ये=शुभग्रहजनिते मूसरिफे न कार्यक्षयः, अर्थात्कार्यसिद्धिरेव भवति, इति हिल्लाजमतेन हिल्लाजनाम्नो यवनगणकस्य मतेन चिन्त्यम् ॥ २४ ॥

भाषा—यदि लग्नाधीश कार्याधीश ग्रहों में जो अधिकगति वाला ग्रह हो, वह अल्पगतिग्रह से एक भी अंश आगे बढ़े तो ईसराफ योग होता है। अर्थात् गत-इत्थशाल या गत मूसरिफ योग होता है। यहां यदि पापग्रह से मूसरिफ योग होता हो तो कार्य नाश,तथा शुभग्रह से इत्थशाल होता हो तो कार्यसिद्धि, यह हिल्ला-जनामक यवनज्यौतिषी के मत से समझना ॥ २४ ॥

उदाहरण—प्रश्न है कि मुझे विद्यालाभ होगा या नहीं? प्रश्न काल में लग्न स्थिरकिया तो अभी वृष लग्न हुआ, इस लिए कार्येश (पञ्चमेश) बुध, लग्नेश शुक्र हुआ, इन दोनोंमें बुध शीघ्रगति, शुक्र मन्दगतिग्रह है, यहां बुध = ५।४।२५।४०, शुक्र ५।३।२६।२० है, तो ईसराफयोग हो गया। यहां शुभ ग्रह से मूसरिफ हुआ अतः कार्यसिद्धि होगी ॥ २४ ॥

अथ नक्तयोगलक्षणमाह—

**लग्नेशकार्याधिपयोर्न दृष्टिर्मिथोऽथ तन्मध्यगतोऽपि शीघ्रः।**
**आदाय तेजो यदि पृष्ठसंस्थान्न्यसेदथान्यत्र हि नक्तमेतत्॥२५॥**

लग्नेशकार्याधिपयोर्मिथो दृष्टिर्न भवेदर्थात्तयोरेकतरस्मादन्यतरषष्ठाष्टमद्वितीयद्वादशान्यतमस्थानस्थितो भवेत्, अथ तन्मध्यगतः = तत्तयोर्लग्नाधीशकार्याधीशयोर्मध्ये गतो वर्त्तमानः शीघ्रगतिग्रहः पृष्ठसंस्थान्न्यूनग्रहात् तेज आदाय

अन्यग्र पुरःस्थग्रहोपरि न्यसेदर्पयेत्तदा एतत् नक्तं नक्तनामको योगः स्यात्। अत्र सर्वत्र स्वदीप्तांशमध्ये यदि शीघ्रग्रहान्मन्दग्रहोऽधिकोभवति, तदा शीघ्रो मन्दस्य तेजोदाता मन्दः शीघ्रस्य तेजोहरो ज्ञेयः। दीप्तांशमध्ये शीघ्रग्रहान्न्यूनांशे मन्दग्रहे शीघ्रो मन्दस्य तेजोहरः, मन्दः शीघ्रस्य तेजोदाता ज्ञेयः ॥ २५ ॥

भाषा—लग्नेश, कार्येश में परस्पर दृष्टि नहीं होय, और उन दोनों के बीच में कोई दूसरा शीघ्रगति ग्रह रहकर पीछे के ग्रह से तेज लेकर आगे वाले को दे, तो नक्तयोग होता है ॥ २५ ॥

अथ नक्तयोगस्योदाहरणम्—

**स्त्रीलाभपृच्छातनुरस्ति कन्या स्वामी बुधः सिंहगतो दशांशैः।**
**सूर्यांशकैर्देवगुरुः कलत्रे दृष्टिस्तयोर्नास्ति मिथोऽथ चन्द्रः ॥ २६ ॥**
**चापे वृषे चोभयदृश्यमूर्तिः शीघ्रोऽष्टभागैरथवा भवांशैः।**
**आदाय तेजो बुधतो ददौ यज्जीवाय लाभः परतः स्त्रिया स्यात् ॥ २७ ॥**

स्त्रीलाभपृच्छातनुः-स्त्रीलाभो मम भविष्यति नवेति पृच्छायां प्रश्ने तनुर्लग्नं यथा कन्या राशिरस्ति-इति कल्प्यते। अस्य स्वामी बुधः, दशांशैर्दशभिरंशैः सिंहराशिगतः। तदा कार्याधीशः कन्याराशितः सप्तमेशो मीनराशीशो देवगुरुर्बृहस्पतिः कलत्रे सप्तमेऽर्थान्मीनराशौ सूर्यांशकैर्द्वादशभिरंशैरुपलक्षितस्तिष्ठेत्। अत्र सिंहस्थबुधात् मीनस्थगुरुरष्टमेऽतः षडष्टके दृष्टयभावात् तयोर्मिथो दृष्टिर्नास्ति। अथ तयोर्भिन्नः उभयदृश्यमूर्तिर्बुधगुरुदृष्टः शीघ्रः बुधगुर्वपेक्षया शीघ्रगतिग्रहश्चन्द्रः, चापे धनुषि अष्टभागैर्वा वृषे भवांशैरेकादशांशैरुपलक्षितः सन् बुधतः पृष्ठसंस्थात् तेज आदाय जीवाय पुरोवर्त्तिने यद्ददौ, तस्मात् कारणात् परतः अन्यसाहाय्यात् स्त्रिया लाभः स्यात्, अर्थात्स्वबुद्धिबलेन नहि स्त्रीलाभः ॥२६॥२७॥

भाषा—स्त्रीलाभ प्रश्न का लग्न यथा कन्या है, उसका स्वामी बुध सिंह के दश अंश में हो, और यहां स्त्रीका विचार सप्तम भाव से होने से सप्तमेश गुरु सप्तम में (मीन में) बारह अंश में हों, यहां बुध से बृहस्पति अष्टम होने से परस्पर दृष्टि नहीं है।

अब बुध और बृहस्पति से देखा गया शीघ्रगति चन्द्रमा धनु के आठ अंश में हो या वृष के ११ अंश में हो, तो जिसलिये बुध से तेज लेकर बृहस्पति को देता है, इसलिये पराये के द्वारा स्त्री लाभ हो यह कहना।

उदाहरण—विवरण—




| | |
|---|---|
| | ध = ४।१० |
| यहां चन्द्रमा | बृहस्पति = ११।१२ |
| को वृश्चिक और | चन्द्रमा = ८।८ |
| मिथुन में भी | वा चन्द्रमा = १।११ |

मान सकते हैं। तौ भी बुधबृहस्पतिसे देखे जाते। मेष, कर्क, कन्या, कुम्भ इन राशियोंमें नहीं वहाँ दोनों ग्रह से नहीं देखे जायंगे। इस कल्पना का तत्त्व यह है कि लग्नाधीश से कार्याधीश जिस से २।६।८।११ में पड़े, ऐसी स्थिति कल्पना करनी चाहिये। उन दोनों के बीच में उन दोनों से अधिक गतिवाले कोई ग्रह हो, चन्द्रमा से यहाँ कल्पित उदाहरण ही में सम्बन्ध है। क्यों कि बुध से शीघ्रगति ग्रह चन्द्रमा है। सब जगह नहीं। प्रश्नलग्न, बदलने से शीघ्रगतिग्रह बदल जायगा। जैसे दूसरा उदाहरण—




| | |
|---|---|
| यहां स्त्रीलाभप्रश्न | ल = ६।१० |
| लग्न तुला है। लग्नेश | शु = ७।२५ |
| शुक्र और कार्येशमङ्गल | मं = ००।२८ |
| है। मङ्गल को मेष या | मं = २।२६ |

मिथुन में भी मान सकते हैं, तो लग्नेश कार्येश में दृष्टि नहीं होती। यहां शीघ्रगतिग्रह—चन्द्रमा बुध दोनों होसकते हैं। उसके बीच में ऐसे मानें जिस से दोनों की दृष्टि उसपर पड़े। यही तत्त्व है ॥ २६ ॥ २७ ॥

अथ यमयायोगलक्षणमाह—

**अन्तःस्थितो मन्दगतिस्तु पश्येद्दीप्तांशकैर्द्वावथ शीघ्रतस्तु।**
**नीत्वा महो यच्छति मन्दगाय कार्यस्य सिद्ध्यै यमयः प्रदिष्टः ॥ २८ ॥**

मन्दगतिर्ग्रहः, लग्नेशकार्येशयोरन्तःस्थितः, मध्ये वर्त्तमानः, सन् द्वौ लग्नेशकार्येशौ पश्येत्, अथ लग्नेशकार्येशयोर्योऽधिकगतिः ततः शीघ्रतः महस्तेजो नीत्वाऽऽदाय मन्दगाय मन्दगतिग्रहाय यच्छति, एवं यमयः कार्यस्य सिद्ध्यै प्रदिष्टः ॥२८॥

भाषा—लग्नेश कार्येश इन दोनों के अपेक्षा मन्दगतिग्रह यदि लग्नेश कार्येशके मध्यमें हों, और उन दोनोंको देखे, तथा लग्नेश कार्येशोंमें जो शीघ्रगति ग्रह हो उससे तेज लेकर मन्दगति ग्रह को दे, तो यह 'यमया' योग कार्यसिद्धि के लिये होता है॥२८॥

अथ यमयायोगोदाहरणमाह—

**राज्याप्तिपृच्छातुललग्ननाथो मेषे सितस्त्वष्टिलवैर्वृषस्थः।**
**चन्द्रो रसांशैर्यदि राज्यनाथो दृष्टिस्तयोर्नास्ति गुरुस्तु मन्दः॥ २९॥**
**दिगंशकैः कर्कगतस्तु पश्यन्नुभौ ग्रहो दीप्तलवैः स चान्द्रम्।**
**ददौ सितायेति पदस्य लाभोऽमात्येन भावीति विमृश्य वाच्यम्॥३०॥**

राज्याप्तिपृच्छायां यदि तुलालग्नं स्यात्तन्नाथः सितः शुक्रः, अष्टिलवैः षोडशांशैर्मेषे स्थितः। तत्र कार्यं राज्यप्राप्तिः, तद्दशमभावाद्विचारणीयम्, तत्र प्रश्नलग्नात्तुलातो दशमः कर्कः, अतस्तत्स्वामी राज्यनाथः चन्द्रः रसांशैः षडंशैर्वृषस्थः। अत्र तयोर्लग्नेशकार्येशयोः शुक्रचन्द्रयोर्द्विर्द्वादशस्थानस्थितत्वेन मिथो दृष्टिर्नास्ति, तत्र चन्द्रशुक्रापेक्षया मन्दगतिग्रहः गुरुर्दिगंशकैर्दशांशैः कर्कगतः सन् उभौ लग्नेश-कार्येशौ पश्यन्, दीप्तलवैः स्वदीप्तांशैः नवभिरंशैः स चान्द्रं चन्द्रसम्बन्धि तेजः सिताय शुक्राय ददौ। इति हेतोः अमात्येन मन्त्रिणा पदस्य राज्यस्थानस्य लाभो भावीति विमृश्य वाच्यम्॥ २९॥ ३०॥




भाषा—राज्य लाभ प्रश्न में यथा तुला लग्न है लग्न का स्वामी शुक्र सोलह अंश से मेष में हों। राज्य का विचार दशमभाव से होता है, इसलिये तुला से दशम कर्क हुआ, उसका स्वामी चन्द्रमा कार्येश हुआ, सो छै अंश से वृष राशि में है, इन दोनों में एक से दूसरा दूसरे बारहवें होने से दृष्टि नहीं है। और इन दोनों से मन्द गति ग्रह गुरु दश अंश से कर्क राशि में होकर, लग्नेश कार्येश को देखता हुआ चन्द्रमा का तेज दीप्तांशा से लेकर शुक्र को देता है। इसलिये मन्त्री के द्वारा पद (राज्यस्थान गद्दी) का लाभ भावी है, यह विचार कर कहना। यह 'यमया' योग का उदाहरण है।

यहां लग्नाधीश कार्याधीश की दृष्टि नहीं होने से तथा कार्येश को उच्च में होने पर भी अष्टम में होने से तत्काल नहीं योग घटा, लेकिन भावी जरूर होगा। क्योंकि चन्द्रमा गुरु ये दोनों उच्च के हैं ॥ २९ ॥ ३० ॥

अथ मणऊयोगलक्षणमाह—

**वक्रः शनिर्वा यदि शीघ्रखेटात्पश्चात्पुरस्तिष्ठति तुर्यदृष्ट्या ।**
**एकर्क्षसप्तर्क्षभुवा दृशा वा पश्यन्नथांशैरधिकोनकैश्चेत् ॥ ३१ ॥**
**तेजो हरेत्कार्यपदेत्थशाली स्थितोऽपि वाऽसो मणऊ शुभो न ।**

वक्रः = कुजः, वा शनिः, शीघ्रखेटात = शीघ्रगतिग्रहात् , पश्चात्, वा पुरः = अग्रे, तिष्ठति। तुर्यदृष्ट्या = चतुर्थदृष्ट्या = गुप्तारिभावाख्ययेति भावः। वा एकर्क्षसप्तर्क्षभुवा= प्रथमसप्तमस्थानदृष्ट्या = शत्रुदृष्ट्या, अधिकोनकैरंशैः शीघ्रग्रहतोऽधिकांशैः किन्तु तद्दीप्तांशाल्पैरंशैः शीघ्रग्रहस्य तेजो हरेत्तथा वक्रशन्योर्मध्ये एकतरः कार्यपदेत्थशाली = इष्टकार्यस्थानेशग्रहेत्थशालयोगवान् स्थितश्चेद्भवति, तदाऽसौ मणऊयोगः स्यात्, स शुभो न ॥ ३१ ॥

भाषा—मङ्गल, या शनि, शीघ्रगति ग्रह से पीछे वा आगे हो, और चौथी दृष्टि से, या प्रथम, सप्तम दृष्टि से दीप्तांशा से थोड़े अंश से शीघ्रगति ग्रह को देखता हो, तथा कार्येश के साथ इत्थशाल करता हो तो यह मणऊ योग होता है ॥ ३१ ॥

अथ मणऊयोगोदाहरणम्—

**स्त्रीलाभपृच्छा तनुरस्ति कन्याऽत्र ज्ञो दिगंशैस्तिथिभिः सुरेज्यः ॥३२॥**
**कलत्रगः खेऽवनिजो भवांशैः पूर्वं बुधो भौमहृतस्वतेजाः ।**
**जीवेन पश्चान्मिलतीति लाभो नार्यास्तु नो पृष्ठगतेऽथवाऽस्मिन् ॥ ३३ ॥**

स्त्रीलाभपृच्छातनुः = स्त्रीलाभविषयकप्रश्नलग्नं, कन्याराशिर्यथाऽस्ति, तदीशः, ज्ञो बुधः, दिगंशैरत्र कन्यायां विद्यते, सुरेज्यः = गुरुः, तिथिभिः = पञ्चदशभिरंशैः कलत्रगः = सप्तमस्थानगतः, अर्थान्मीनराशिगतोऽस्ति, अवनिजः = कुजः, भवांशैः = एकादशांशैः, खे = दशमे, अर्थान्मिथुनेऽस्ति। अत्र स्थितौ पूर्वं भौमहृतस्वतेजा बुधः पश्चाज्जीवेन गुरुणा सह मिलति। इति हेतोर्नार्याः स्त्रिया लाभो नो भवेत्। अथवा उक्तयोगेऽस्मिन् कुजे पृष्ठगते अर्थात् बुधापेक्षयाऽल्पेंऽशे भौमः स्यात्तथापि मणऊयोगः स्यात्। अयं योगः कार्यसाधको नेति ज्ञेयम् ॥ ३२ ॥३३॥




भाषा—स्त्री लाभ के प्रश्न में जैसे कन्या लग्न है उसका स्वामी बुध, उसी राशि में दश अंश में होय, और यहां कार्याधीश गुरु १२ अंश से सातवें (मीन) राशि में हों दोनों को परस्पर शत्रु दृष्टि है। और मङ्गल ११ अंश से दशवें (मिथुनराशि) में हों, तो पहले मङ्गलसे हरण हो गया है तेज ऐसे जो बुध सो बृहस्पति से मिलते हैं ( अर्थात् बृहस्पति से बुध शीघ्रगतिग्रह है, इसलिये मार्गीबुध जरूर बृहस्पति से मिलेंगे ) इसलिये स्त्री का लाभ नहीं होगा।

या यह मङ्गल पृष्ठगत हो तो भी मणऊ योग होता है ॥ ३२ ॥ ३३ ॥

अथवा मणऊयोगोदाहरणभेदमाह—

**यदोत्थशालोऽस्त्युभयोः स्वदीप्तहीनाधिकांशैः शनिभूसुतौ चेत्।**
**एकर्क्षगौ लग्नपकार्यपोः स्तस्तेजोहरौ कार्यहरौ निरुक्तौ ॥ ३४ ॥**

यदि उभयोर्लग्नेशकार्येशयोरित्थशालोऽस्ति, तत्र चेत् = यदि एकर्क्षगौ = एकराशिगतौ शनिभूसुतौ = शनिकुजौ स्वदीप्तहीनाधिकांशैर्लग्नपकार्यपोस्तेजोहरौ, अतस्तौ कार्यहरौ निरुक्तौ कथितौ ॥ ३४ ॥

भाषा—अगर लग्नाधीश कार्याधीश में इत्थशाल होता हो, और एक राशिगत शनि मंगल अपने दीप्तांशासे अधिक या ऊन अंशसे लग्नेश, कार्येशके तेज को हरण करते होंय, तो वे कार्य को नाश करते हैं ॥ ३४ ॥

**राज्याप्तिपृच्छातुललग्ननाथः कर्कः सितोंशैरितथिभिर्दिगंशैः।**
**वृषे शशी भूपलवैः कुजश्च हरन् द्वयोर्भा हरते च राज्यम् ॥ ३५ ॥**

राज्याप्तिपृच्छातुललग्ननाथः=राज्यलाभप्रश्नकालिकतुलालग्नेशः सितः = शुक्रः, तिथिभिः = पञ्चदशभिः, अंशैः, कर्के स्थितः। शशी = चन्द्रः दिगंशैर्दशभिरंशैः, तथा कुजो मङ्गलः, भूपलवैः चकाराच्छनिश्च षोडशांशैः। तदा कुजो द्वयोर्लग्नेश-कार्येशयोर्भा तेजो हरन् राज्यं हरते ॥ ३५ ॥

अथ लग्नेशकार्येशयोः शुक्रचन्द्रयोर्मध्ये चन्द्रः शीघ्रः। शुक्रो मंदः। 'शीघ्रग्रहोऽल्पभागैर्घनभागमंदेऽग्रस्थे' इत्यनेन तयोरित्थशालयोगो वर्त्तते परन्तु तन्मध्ये कुजशनी तयोस्तेजोहरौ वर्त्तेते तेनेत्थशालोऽपि निरर्थको जातः ॥ ३५ ॥

अत्रचं १।१०
शु=३।१५
मं=१।१६
श=१।१६




भाषा—जैसे राज्य प्राप्ति प्रश्न में तुला लग्न है उसका स्वामी शुक्र, दशवें स्थान में कर्कराशि में १५ अंश से हैं। वहां कार्येश (दशमेश) चन्द्रमा दश अंश से वृष में हैं, मङ्गल और शनि १६ अंश से वृष में हैं। इस स्थिति में मंगल तथा शनि उन दोनों लग्नेश कार्येश के तेज को हरण करते हैं, इसलिये राज्य का भी हरण कहना, अर्थात् राज्य लाभ योग नहीं है ॥ ३५ ॥

अथ कबूलयोगस्य सामान्यलक्षणमाह—

**लग्नकार्येशयोरित्थशालेऽत्रेन्द्वित्थशालतः।**
**कबूलं श्रेष्ठमध्यादिभेदैर्नानाविधं स्मृतम् ॥ ३६ ॥**

लग्नकार्येशयोः = लग्नाधिपतिकार्याधिपयोः, इत्थशाले, मुथशिले, सति। अत्र तयोरेकतरेण सह इन्द्वित्थशालतः = चन्द्रस्येत्थशालतः, श्रेष्ठमध्यादिभेदैः = उत्तममध्यमाधमभेदैर्नानाविधं = षोडशप्रकारकं कबूलं स्मृतम्। कबूलं = स्वीकारबोधकम्। तत्र चक्रं स्पष्टार्थं प्रदर्श्यते ॥ ३६ ॥

भाषा—लग्नेश कार्येश को इत्थशाल होता हो, वहां चन्द्रमा को उन दोनों में से किसी से इत्थशाल हो, तो उत्तम मध्यम भेद से नानाप्रकार के कबूल होते हैं ॥३६॥

| चन्द्रः | ल.प.का.प. | ल.प.का.प. | ल.प.का.प. | ल.प.का.प. | समाधिकार |
|---|---|---|---|---|---|
| उत्तमाधिकार | उ.अ. | उ.अ. | म.अ. | अ.अ. | स.अधिकार |
| मध्यमाधिकार | उ.अ. | उ.अ. | म.अ. | अ.अ. | स.अधिकार |
| अधमाधिकार | उ.अ. | उ.अ. | म.अ. | अ.अ. | स.अधिकार |
| समाधिकार | उ.अ. | उ.अ. | म.अ. | अ.अ. | स.अधिकार |

तत्रोत्तमोत्तमकबूलमाह—

**यदीन्दुः स्वगृहोच्चस्थस्तादृशौ लग्नकार्यपौ।**
**इत्थशाली कबूलं तदुत्तमोत्तममुच्यते ॥ ३७ ॥**

यदि इन्दुः = चन्द्रः, स्वगृहोच्चस्थः = कर्कवृषान्यतमराशिगतः, लग्नकार्यपौ = तादृशौ, किन्तु स्वगृहोच्चस्थौ। तत्र तयोरन्यतरेण केनापि सह चन्द्र इत्थशाली = इत्थशालयोगकर्ता, तदा तत् कबूलम्, उत्तमोत्तमम्, उच्यते ॥ ३७ ॥

भाषा—यदि चन्द्रमा अपने गृह, या उच्चमें हों, लग्नेश कार्येश भी वैसे ही अपने राशि या उच्च में हों, उन दोनों में से किसी एक ग्रह से चन्द्रमा इत्थशाल करता हो, तो उत्तमोत्तम कबूल होता है ॥ ३७ ॥

अथ मध्यमोत्तमस्य, उत्तमस्य च लक्षणमाह—

**स्वीयहद्दाद्रेकाणाङ्कभागस्थेनेत्थशालतः।**
**मध्यमोत्तमकम्बूलं हीनाधिकृतिनोत्तमम् ॥ ३८ ॥**

यदि स्वगृहोच्चस्थस्य चन्द्रस्य स्वीयहद्दाद्रेष्काणनवांशस्थितेन अन्योन्यं कृतमुथशिलेन लग्नकार्येशयोरन्यतरग्रहेण सह इत्थशालतः मध्यमोत्तमकबूलं भवति। तथा स्वगृहोच्चगतस्य चन्द्रस्य हीनाधिकृतिना = लग्नकार्येशान्यतरेण, इत्थशालत उत्तमं कबूलं भवति ॥ ३८ ॥

भाषा—चन्द्रमा अपने गृह उच्च में रहकर निज हद्दा द्रेष्काण नवांश में स्थित लग्नेश या कार्येश से इत्थशाल करता हो तो उत्तमपक्ष का मध्यम कबूल होता है। यदि वैसे ही चन्द्रमा अपने अधिकार से हीन लग्नेश या कार्येश के साथ इत्थशाल करता हो, तो सिर्फ उत्तम कबूल होता है।

उदाहरण—मध्यमोत्तम कबूल का—

लग्न तुला, लग्नेश शुक्र कर्क में १० अंश में अपनी हद्दा में है। भाग्येश बुध मेष में १४ अंश में हों, इन दोनोंमें इत्थशाल होता है। कर्मेश चन्द्रमा कर्क में १८ अंश से रहकर दोनों लग्नेश कर्मेश से इत्थशाल योग करता है, इसलिये उत्तम पक्ष का मध्यम कबूल हुआ।



ऐसे ही लग्न मिथुन है, लग्नेश बुध कहीं समगृही में हैं। दशमेश गुरु भी समगृही कन्या में हैं। चन्द्रमा वृष में हैं इन दोनों के इत्थशाल होने से उत्तम कबूल हुआ॥३८॥

उत्तमकम्बूलयोग का उदाहरण—




अथोत्तमाधमकबूल-मध्यमोत्तमकबूल-मध्यमध्यमकबूललक्षणमाह—

**उत्तमाधमता नीचरिपुगेहस्थितेन चेत्।**
**स्वद्रेक्काणांशगश्चन्द्रः स्वभोच्चस्थेत्थशालकृत्॥ ३९॥**
**मध्यमोत्तममेतच्च पूर्वस्मान्न विशिष्यते॥**
**स्वहद्दादिपदस्थेन कंबूलं मध्यमध्यमम्॥ ४०॥**

यदि स्वगृहोच्चस्थस्य चन्द्रस्य नीचरिपुगेहस्थितेन लग्नेशकार्येशयोरन्यतरे- णेत्थशालत उत्तमाधमता स्यात्। तथा स्वद्रेष्काणांशगश्चन्द्रः स्वभोच्चस्थेन तयो- रन्यतरेणेत्थशालं करोति तदा मध्यमोत्तमं कबूलं स्यात्। इदं पूर्वस्मात् ३८ श्लो- कोक्तान्न विशिष्यते, तत्तुल्यमेवेत्यर्थः।

यदि स्वद्रेष्काणनवांशगतस्य चन्द्रस्य स्वहद्दादिपदस्थेन तयोरन्यतरेणेत्थशा- लतः मध्यमध्यमं कबूलं स्यात्॥ ३९॥ ४०॥

भाषा—यदि स्वगृह, उच्च गत चन्द्रमा, नीच, शत्रुगृहगत लग्नेश से या तादृश कार्येश से इत्थशाल करता होय, तो उत्तमाधम कबूल होता है।

यदि स्वकीय द्रेष्काण स्वीय नवांश गत चन्द्रमा, अपने राशि उच्च में स्थित लग्नेश से या कार्येश से इत्थशाल करता होय तो मध्यमोत्तम कबूल होता है।

यदि स्वद्रेष्काण, नवांश गत चन्द्रमा स्वहद्दा, स्वनवांश गत लग्नेश से या कार्येश से इत्थशाल करता हो तो मध्यमकबूल होता है॥ ३९-४०॥




उदाहरण—स्त्रीलाभ प्रश्न में यथा तुलालग्न है उसका स्वामी (लग्नेश) शुक्र वहां ही २४ अंशपर है और वहां कार्येश (सप्तमेश) मङ्गल सप्तम-स्थान (स्वगृही) मेष में २८ अंश पर है। यहां चन्द्रमा मकर के २२ अंश पर है, तो इन तीनों में एक से दूसरे को इत्थशाल होता है, यह मध्यमोत्तम कबूल योग का उदाहरण हुआ ३९-४०

अथ मध्यमकबूललक्षणमाह—

**कबूलं मध्यमं च स्याद्धीनाधिकृतिखेटजम्।**
**मध्यमाधमकबूलं नीचारिभगखेटजम् ॥ ४१ ॥**

हीनाधिकृतिखेटजं = हीनाधिकारग्रहजनितं मध्यमं कबूलं स्यात्। नीचारिभ-गखेटजं = नीचशत्रुग्रहगृहगतग्रहजनितं मध्यमाधमकबूलं स्यात् ॥ ४१ ॥

भाषा—हीन अधिकार वाले ग्रह से जायमान कबूल मध्यम होता है। नीच, शत्रु राशिगतग्रह से जायमान कबूल मध्यमाधम होता है।




उदाहरण—यथा पुत्रलाभ प्रश्न में वृष लग्न है उस का स्वामी शुक्र (लग्नेश) मकर राशि में ४ अंशपर सम की हद्दा में है और कार्येश (पञ्चमेश) बुध तुला राशि के ५ अंश पर सम की हद्दा में है, चन्द्रमा कर्क राशि में तीन अंश पर अपने द्रेष्काण में है। इन सबों में एक से दूसरे को इत्थशाल होता है। यह मध्यम कबूल हुआ। इस में प्रयास से सन्तान की प्राप्ति कहनी चाहिये।




अब मध्यमाधम कबूल योग का उदाहरण-यथा भाग्योदय के प्रश्न में मेष लग्न है, उसका स्वामी मङ्गल कर्क (नीच) में है। कार्येश (नवमेश) गुरु मकर में (नीच में) है, यहां चन्द्रमा कर्क में अपने द्रेष्काण में रह कर दोनों से इत्थशाल करता है। इस लिये यह मध्यम पक्ष का अधम कबूल हुआ ॥ ४१ ॥

अथाऽरमुत्तमकबूललक्षणमाह—

**इन्दुः पदोनः स्वर्क्षोच्चस्थितेनाप्युत्तमं तु तत् ।**
**स्वहद्दादिगतेनाऽपि पूर्ववन्मध्यमुच्यते ॥ ४२ ॥**

पदोनः स्वभोचाद्यधिकाररहीन इन्दुश्चन्द्रः स्वर्क्षोच्चस्थितेन लग्नाधीशकार्याधीशयोरन्यतरेण इत्थशाली तदाऽपि उत्तमं तत् कबूलं स्यात् । तादृशश्चन्द्रः स्वहद्दादिगतेन तयोर्लग्नाधीशकार्याधीशयोरन्यतरेणेत्थशाली तदा पूर्ववन्मध्यमं कबूलं स्यात् ४२

भाषा—चन्द्रमा अपने गृह उच्च आदि अधिकार से रहित होकर अपने गृह उच्चगत लग्नेश से या कार्येश से इत्थशाल करता हो तो उत्तम कबूल होता है ।

यदि वैसे ही चन्द्रमा अपनी हद्दादि पद गत लग्नेश या कार्येश से इत्थशाल करता होय तो पहले के ऐसा मध्यम कबूल होता है ॥ ४२ ॥

उदाहरण—धन लाभ के प्रश्नमें तुला लग्न है, यहां लग्नेश शुक्र लग्न ही में है । और कार्येश (धनेश) मङ्गल मकर (उच्च) में है, चन्द्रमा मिथुनमें सम ग्रहके द्रेष्काण में है, इन सबों में एक से दूसरे को इत्थशाल होता है, इस से मध्यमोत्तम कबूल होता है । यहां भाग्योदय अच्छा कहना ।




अब मध्यम कबूल का उदाहरण—

यथा धन लाभ के प्रश्न में तुला ही लग्न है, उसका स्वामी शुक्र सिंहराशिमें अपनी हद्दा में दश अंश पर है । और धनेश ( कार्येश ) मङ्गल अपनी हद्दा में चन्द्रमा मिथुन के दश अंश पर सम द्रेष्काण में है, इन सबों को इत्थशाल होने से मध्यम कबूल हुआ । यहां धन लाभ साधारण कहना ॥ ४२ ॥




अथ पुनर्मध्यमकबूललक्षणमाह—

**पदोनेनापि मध्यं स्यादिति युक्तं प्रतीयते ।**
**नीचारिस्थेनेत्थशालेऽधमकंबूलमुच्यते ॥ ४३ ॥**

समाधिकारी चन्द्रः पदोनेन = स्वर्क्षादिपदरहितेन लग्नाधीशकार्याधीशयोरन्यतरेण सहेत्थशाली तदा मध्यमं कबूलं स्यादिति युक्तं समीचीनं प्रतीयते = ज्ञायते ।

तथा तादृशश्चन्द्रः नीचारिस्थेन तयोरन्यतरेण सहेत्थशाली तदा अधमं कबूलम् उच्यते ॥ ४३ ॥

भाषा—सम अधिकार वाला चन्द्रमा यदि पदहीन लग्नेश या कार्येश से इत्थशाल करता हो तो मध्यम कबूल होता है । तथा वैसे ही चन्द्रमा, नीच शत्रु राशिगत लग्नेश या कार्येश से इत्थशाल करता होय तो अधम कबूल होता है ।




उदाहरण—यथा धन लाभ प्रश्न में मेष लग्न है । उसका स्वामी मङ्गल सिंह में दश अंश पर है, और धनेश ( शुक्र ) कुम्भराशि के दश अंश पर है । चन्द्रमा तुला के दश अंश पर है, यहां इन तीनों को इत्थशाल होने से मध्यम कबूल योग होता है ।




और पुत्र लाभके प्रश्न में कन्या लग्न है, उसका स्वामी बुध मीन ( नीच ) में हैं । पञ्चमेश ( कार्येश ) शनि मेष में है । चन्द्रमा अधिकार हीन मिथुनमें जसे है, यहां अधमकबूल होता है ॥ ४३ ॥

**नीचशत्रुभगश्चन्द्रः स्वभोच्चस्थेत्थशालकृत् ।**
**अधमोत्तमकम्बूलं पूर्वतुल्यफलप्रदम् ॥ ४४ ॥**

नीचशत्रुभगः = वृश्चिक-शत्रुराशिगतः, चन्द्रः, स्वभोच्चस्थेत्थशालकृत = निजगृहोच्चस्थितेन लग्नकार्येशान्यतरग्रहेणेत्थशालकृत् तदा अधमोत्तमकंबूलं स्यात्तत्पूर्वतुल्यफलप्रदम् ॥ ४४ ॥

भाषा—वृश्चिकराशि चन्द्रमाका नीच है, और चन्द्रमाका जो ताजिकमत से

शत्रु ग्रह अर्थात् जो १।४।७।१० इन स्थानोंमें हों, उनके स्थानोंमें रहकर चन्द्रमा यदि अपने राशि या उच्च में स्थित लग्नेश या कार्येशों में एक किसी से इत्थशाल करता होय तो अधमोत्तम कबूल होता है। यह पहले कहे हुए अधमोत्तम कबूल के समान ही फल देने वाला है ॥ ४४ ॥

उदाहरण—जैसे सुखलाभ प्रश्नमें सिंह लग्न है उसका स्वामी सूर्य मेष (उच्च) में है और सुखेश (मङ्गल) मकरमें है, यहां नीच (वृश्चिक)मेंस्थित चन्द्रमा दोनोंसे इत्थशाल करताहै, इसलिये यह उत्तमपत्का अधम या अधमपत्का उत्तम कबूल हुआ ॥ ४४ ॥

| ६ | ५ | ४ |
|---|---|---|
| ७ | | ३ |
| चं. ८ | | २ |
| ९ | ११ | १सू. |
| १० मं | | १२ |

**चन्द्रो नीचारिगेहस्थः स्वहद्दादिगतेन चेत्।**
**तत्रेत्थशाली कम्बूलमुच्यतेऽधममध्यमम् ॥ ४५ ॥**

नीचारिगेहस्थश्चन्द्रः स्वहद्दादिगतेन निजहद्दानिजद्रेक्काणनवांशादिपदस्थेन लग्नकार्येशान्यतरेण चेदित्थशाली = मुथशिलयोगकर्त्ता भवेत्तदाऽधममध्यमं कबूलमुच्यते ॥

भाषा—नीच, या शत्रुगृह गत चन्द्रमा, स्वकीय हद्दा आदि वर्ग में स्थित लग्नेश या कार्येश से इत्थशाल करें, लग्नेश कार्येशमें परस्पर इत्थशाल योग होता होय, तो अधममध्यम कबूल होता है ॥ ४५ ॥

उदाहरण—यथा पुत्रप्राप्तिके प्रश्नमें कन्या लग्न है। उसका स्वामी बुध मकरमें अपनी हद्दामें तीन अंश पर है। पुत्रभावेश शनि मीनमें अपनी हद्दामें पांच अंश करके है। यहां चन्द्रमा नीच अर्थात् वृश्चिकमें तीन अंश पर है। इन तीनोंको इत्थशाल होनेसे यहां अधम मध्यम कम्बूल होता है ॥ ४५ ॥

| ७ | ६ | ५ |
|---|---|---|
| ८ | | ४ |
| ९ | | ३ |
| बु. १० | १२ श. | २ |
| ११ | | १ |

**इन्दुर्नीचारिगेहस्थः पदोनेनेत्थशालकृत्।**
**कम्बूलमधमं ज्ञेयं पूर्वतुल्यफलप्रदम् ॥ ४६ ॥**

नीचारिगेहस्थ इन्दुश्चन्द्रः पदोनेन लग्नकार्येशान्यतरग्रहेणेत्थशालकृत्, तदा पूर्वतुल्यफलप्रदमधमं कबूलं ज्ञेयम् ॥ ४६ ॥

भाषा—नीचशत्रुगृहगत चन्द्रमा, यदि पद स्वगृहादि स्वकीय उच्चसे वर्जित लग्नेश कार्येशोंमें किसी एकसे इत्थशाल करता हो, तो पूर्वकथित अधम कबूलके समान फल देनेवाला यह भी अधम कबूल होता है, यह समझना ॥ ४६ ॥

उदाहरण—यथा राज्यलाभके प्रश्नमें वृष लग्न है उसका स्वामी शुक्र सिंहमें छ अंश पर है। यहां कार्येश (शनि) वृष के दश अंश पर है। चन्द्रमा अपने नीच वृश्चिकमें तीन अंशपर है, यहां इन तीनों को इत्थशाल योग होता है इसलिये अधमकबूल होता है यहां राज्यलाभ मुशकिल से कहना ॥ ४६ ॥




**नीचारिभस्थखेटेन नीचारिभगतः शशी।**
**तदित्थशाली कम्बूलमधमाधममुच्यते ॥ ४७ ॥**

नीचारिभगतः = नीचशत्रुराशिस्थः, शशी = चन्द्रः, नीचारिभस्थखेटेन = नीचशत्रुराशिगतग्रहेण = लग्नेशकार्येशयोरन्यतरेण सह इत्थशाली = मुथशिली, तदा अधमाधमं कबूलमुच्यते ॥ ४७ ॥

भाषा—नीच शत्रुराशिमें गत चन्द्रमा यदि नीचशत्रुराशिगत लग्नेश या कार्येश से इत्थशाल करता होय तो अधमपत्तका अधम कबूल होता है ॥ ४७ ॥

उदाहरण—यथा पुत्र लाभके प्रश्नमें धनु लग्न है लग्नेश गुरु अपने नीच (मकर) में है। कार्येश (पञ्चमेश) मङ्गल कर्क (नीच) में है। चन्द्रमा मीनमें या वृश्चिकमें होय, यहां तीनों को इत्थशाल होनेसे अधमाधम कबूल होता है। इसमें पुत्र लाभ नहीं कहना ॥ ४७ ॥




अथोत्तमोत्तमकबूलयोगोदाहरणमाह—

**मेषे रविः कुजो वाऽपि वृषे कर्केऽथवा शशी**
**तत्रेत्थशाली कम्बूलमुत्तमोत्तमकार्यकृत् ॥ ४८ ॥**

सन्तानलाभप्रश्ने कल्प्यते यथा मेषलग्नं तत्र रविः कार्येशः, कुजो मङ्गलो लग्नेशोऽपि वा भवेत् , तत्र शशी वृषे स्वोच्चे, वा कर्के स्वगृहे भवेत् तत्र रविकुजयोरेकतरेण सह मुथशिलं करोति तदा उत्तमोत्तमकार्यकृत् उत्तमोत्तमं कबूलं भवति ॥४८।

भाषा—पुत्र लाभ के प्रश्न में यथा मेषलग्न है, उसी में कार्येश रवि, तथा लग्नेश मङ्गल भी हैं, वहां चन्द्रमा वृष (उच्च) या कर्क (स्वगृह) में हो, और चन्द्रमा को लग्नेश और कार्येश इन दोनों में से किसी से इत्थशाल होता होय, तो उत्तमोत्तम कार्य को करने वाला उत्तमोत्तम कबूल होता है ॥ ४८ ॥




अथाधमाधमकबूलस्योदाहरणम्—

**वृश्चिकस्थः शशी भौमः कर्के तत्रेत्थशालतः ।**
**अधमाधमकब्बूलं कार्यविध्वंसदुःखदम् ॥ ४९ ॥**

पुत्रलाभप्रश्ने धनुर्लग्नं, तदीशो गुरुर्मकरेऽस्ति, शशी चन्द्रो वृश्चिकस्थोऽर्थात्स्वनीचस्थः, भौमोऽत्रत्येश अतएव स एव कार्येशः कर्के स्वनीचराशौ भवेत् तत्र तयोरेकतरेण चन्द्रो मुथशिलयोगकारी च भवेत्तदा कार्यनाशकरमधमाधमं कबूलं भवेत् ॥ ४९ ॥

भाषा—चन्द्रमा वृश्चिक (नीच) में हो, लग्नेश (गुरु) मकरमें हो, यह तर्क सिद्ध है। और कार्येश यहां पुत्रभावेश मङ्गल कर्क (स्वनीच) में हो वहां उन दोनोंसे चन्द्रमा इत्थशाल भी करता होय तो अधमाधम कबूल होता है, यह कार्य नाश कर है ॥ ४९ ॥



एवं पूर्वोक्तभेदानामुदाहरणयोजना।
उक्तलक्षणसम्बन्धादूहनीया विचक्षणैः ॥ ५० ॥

एवमुक्तप्रकारेण पूर्वोक्तभेदानां प्रागुक्तकम्बूलयोगभेदानामुक्तलक्षणसम्बन्धाद्विचक्षणैः पण्डितैरुदाहरणयोजना उदाहरणकल्पना ऊहनीया तर्क्येति ॥ ५० ॥

भाषा—इसप्रकार पहले कहे हुए कबूलके भेदों के लक्षणों से उनकी उदाहरण कल्पना पण्डितों से करनी चाहिये ॥ ५० ॥

अथ केचित्कम्बूलयोगलक्षणे शीघ्रमन्दगतग्रहयोरेकस्थयोरेव मुथशिलयोगमाहुस्तन्मतमुपन्यस्यति—

मेषस्थेऽब्जे शनीत्यादिदृष्टान्तान्मन्दशीघ्रयोः।
एकक्षावस्थितावित्थशालादीनपरे जगुः ॥ ५१ ॥
तदयुक्तं नीचगस्य नीचेन रिपुणा रिपोः।
इत्थशालः कार्यनाशीत्युक्तं तत्र यतः स्फुटम् ॥ ५२ ॥

'मेषस्थेऽब्जेशनी'—त्यादिदृष्टान्तात्।

'मेषस्थेऽब्जे शनिना कर्कस्थे भूभुवा स्त्रियां कविना।
मकरस्थे गुरुणा सह मीनस्थे ज्ञेन न शुभं च ॥

इत्युक्तोदाहरणप्रदर्शनात् मन्दशीघ्रयोरेकक्षावस्थितौ एकाराशिगतसंस्थायां इत्थशालादीनपरे आचार्या जगुराहुः। तन्मतमयुक्तं युक्तिरहितं वर्त्तते यतः नीचगस्य रिपोः शत्रोर्नीचगतेन रिपुणा शत्रुणा कृत इत्थशालः कार्यनाशी इति। तत्र समरसिंहकृतताजिके स्फुटमुक्तमस्ति—तद्वाक्यं च—

"यदि नीचो नीचेन च मुथशिलकारी तथा रिपुर्द्विषता।
तत्कम्बूलं नेष्टं चन्द्रोऽपि विनाशकोऽमुष्मिन्" ॥ ५१—५२ ॥

भाषा—चन्द्रमा मेषमें, रहकर, उसी राशिमें गत शनि से, इत्थशाल करता हो। या चन्द्रमा कर्कमें रहकर उसी राशिगत मङ्गलसे, या कन्याराशिमें चन्द्रमा शुक्रसे इत्थशाल करता हो, या मकरमें रहकर बृहस्पतिसे, या मीनमें चन्द्रमा उसी राशिमें गत बुधसे इत्थशाल करता होय तो शुभ नहीं है। इस उदाहरणके दृष्टान्तसे शीघ्रगति ग्रह मन्दगतिग्रहको एक राशिहीमें जो इत्थशाल योग अन्य आचार्य कहे हैं, वह सङ्गत नहीं है, क्यों कि नीच राशिगत शत्रु ग्रहको नीच राशिगत शत्रुग्रहसे इत्थशाल होना कार्यनाशकर है, यह वहां स्पष्टरूपसे कहा हुआ है ॥ ५१-५२ ॥

अथ प्रकारान्तरेण कम्बूलयोगस्य लक्षणमाह—

लग्नकार्यपयोरित्थशाले चैकोऽस्ति नीचगः ।
स्वर्क्षादिपदहीनोऽन्योऽत्रेन्दु कम्बूलयोगकृत् ॥ ५३ ॥
तत्र कार्याल्पता ज्ञेया यथा जात्यन्यमर्थयन् ।
अन्यजातिः पुमानर्थं तथैतत्कवयो विदुः ॥ ५४ ॥

लग्नकार्यपयोर्लग्नेशकार्येशयोरित्थशाले सति, तयोरेकतरो लग्नेशोऽथवा कार्येशः, नीचगोऽस्ति, अन्यस्तदन्यतरः स्वर्क्षादिपदहीनः स्यादत्र इन्दुर्यदि कबूलयोगकृद्भवति, तदा कार्याल्पता ज्ञेया । तत्रोदाहरणमाह—यथा अन्यजातिः पुमान् पुरुषो याचकः जात्यन्यं भिन्नजातिकं जनमर्थयन् याचयन् सन् अर्थं धनं स्वल्पं लभते, तथा कवयः पण्डिता एतत्कम्बूलं विदुः जानन्ति ॥ ५३-५४ ॥

भाषा—लग्नेश कार्येशमें इत्थशाल योग होता हो, उन दोनोमें कोई एक अपने नीच राशिमें गत हो, दूसरा ग्रह अपने राशि आदि पदसे हीन हो, यहां यदि चन्द्रमा कम्बूल योग करता हो तो इस योग में कार्य की अल्पता जाननी चाहिये, जैसे किसी धनीके यहां कोई दूसरे जातिके लोग मांगता हुआ थोड़ा धन पाता है । वैसे ही यह योग भी है, यह पण्डित जानते हैं ॥ ५३-५४ ॥

अथ गैरिकम्बूलं वक्तुकामस्तदुपयोगिशून्याध्वलक्षणमाह—

यस्याधिकारः स्वर्क्षादिः शुभो नाप्यशुभोऽपि च ।
केनाप्यदृश्यमूर्तिश्च स शून्याध्वग इष्यते ॥ ५५ ॥

यस्य कस्यचिद्ग्रहस्य शुभः शुभप्रदः स्वर्क्षादिरधिकारो नास्ति, तथा शुभोऽपि नीचशत्रुवर्गाद्यधिकारो नास्ति केनापि ग्रहेण अदृश्यमूर्तिः दृष्टोऽपि न स ग्रहः शून्याध्वगः शून्यमार्गगत इष्यते उच्यते ॥ ५५ ॥

भाषा—जिस ग्रह को शुभफलप्रद स्वक्षेत्रादिक अधिकार नहीं हो, अथवा अशुभ फलप्रद भी नीच शत्रु राशिगत अधिकार नहीं हो, किसी से देखा भी नहीं जाय, ऐसा ग्रह शून्याध्वग, ( निरवलम्बमार्गगत ) कहाता है ॥ ५५ ॥

अथ गैरिकम्बूललक्षणमाह—

लग्नकार्येशयोरित्थशाले शून्याध्वगः शशी ।
उच्चादिपदशून्यत्वान्नेत्थशालोऽस्य केनचित् ॥ ५६ ॥
यद्यन्यर्क्षं प्रविश्यैष स्वर्क्षोच्चस्थेत्थशालवान् ।
गैरिकम्बूलमेतत्तु पदोनेनाशुभं स्मृतम् ॥ ५७ ॥

लग्नकार्येशयोरित्थशाले सति शशी चन्द्रः शून्याध्वगः अस्ति, अस्य चन्द्रस्य स्वर्क्षादिपदशून्यत्वात् केनचिद् ग्रहेण इत्थशालो न, अथ ईदृश एव चन्द्रोऽन्यर्क्षं = अग्रिमराशिं प्रविश्य स्वर्क्षोच्चस्थेत्थशालवान् भवति, तदेतत् गैरिकम्बूलं ज्ञेयं, एतत् पदोनेन स्वर्क्षादिपदहीनेन इत्थशालतोऽशुभं स्मृतम् ॥ ५६-५७ ॥

भाषा—लग्नेश कार्येशमें इत्थशाल होता होय, चन्द्रमा शून्यमार्ग में हो, इस चन्द्रमाके स्वगृह आदि अधिकार शून्य होनेसे, किसी ग्रहसे इत्थशाल भी नहीं होता होय, ऐसा चन्द्रमा यदि अगिले राशिमें प्रवेश करके अपने राशि उच्च आदि अधिकार प्राप्त ग्रहसे इत्थशाल करता होय, तो यह योग गैरिकम्बूल होता है, यहां यदि अधिकार हीन ग्रहसे चन्द्रमा इत्थशाल करता होय तो यह अशुभ होता है ॥५६-५७॥

अथ गैरिकम्बूलस्योदाहरणमाह—

**लप्स्ये सुखमिति प्रश्ने सिंहलग्ने रविः क्रिये।**
**अष्टांशैः सुखपः कुम्भे भौमोऽर्कै रविभिस्तयोः ॥ ५८ ॥**
**इत्थशालोऽस्ति तत्रेन्दुः कन्यायां चरमेंऽशके।**
**स्वर्क्षादिपदहीनस्य नेत्थशालोऽस्य केनचित् ॥ ५९ ॥**
**स स्वोच्चगेन शशिनाऽन्यर्क्षस्थेनेत्थशालकृत्।**
**गैरिकम्बूलमन्येन सहायाल्लाभदायकम् ॥ ६० ॥**

अहं सुखं लप्स्ये प्राप्स्यामि नवेति प्रश्ने, सिंहलग्ने सति तत्र रविरर्थाल्लग्नेशोऽष्टांशैः क्रिये मेषेऽस्ति, सुखपः सुखकार्येशः भौमो रविभिरंशैः कुम्भेऽस्ति, तयोर्यदि इत्थशालोऽस्ति तत्र इन्दुश्चन्द्रः कन्यायां चरमेऽन्तिमे २९।३० अंशे भवेत्। अत्र स्वर्क्षादिपदहीनस्य अस्य चन्द्रस्य केनचिद्ग्रहेण लग्नकार्येशान्यतरेण इत्थशालो नास्ति, स ईदृशश्चन्द्रः स्वोच्चगेन तुलागतेन अन्यर्क्षस्थेन शनिना इत्थशालकृत् = मुथशिली, तदा एतद्गैरिकंबूलं स्यात्। तदन्येन जनेन सहायाल्लाभदायकम् भवति ॥ ५८-६० ॥

भाषा–मैं सुख पाऊंगा या नहीं?, इस प्रश्नमें जैसे-सिंह लग्न है, उसका स्वामी सूर्य मेषमें आठ अंशसे हो, और सुखेश (कार्येश) यहां मंगल, क्योंकि सिंहसे चौथा-वृश्चिकराशि होता है, अतः कार्येश (सुखेश) मंगल बारह अंश से कुम्भमें होय, इन दोनों को इत्थशाल योग होता है, वहां चन्द्रमा कन्याराशिके आखिरी अंशमें हो। अर्थात् तुलामें अभी जाने वाला है, और इस चन्द्रमा को किसी ग्रह से इत्थशाल योग नहीं है। अब यहां अपने उच्च में गत दूसरे राशिस्थित शनि से वह

चन्द्रमा इत्थशाल करता होतो यह गैरिकबूल योग होता है। यह दूसरे की सहायता से लाभदायक है ॥ ५८-६० ॥

अथ खल्लासरयोगलक्षणमाह—

**शून्येऽध्वनीन्दुरुभयोर्नेत्थशालो न वा युतिः।**
**खल्लासरो न शुभदः कम्बूलफलनाशनः ॥ ६१ ॥**

इन्दुश्चन्द्रः शून्येऽध्वनि मार्गे स्थितः, तथा च उभयोर्लग्नेशकार्येशयोर्मध्ये केनापि ग्रहेण इत्थशालो न, वा युतः=एकराशौ स्थितोऽपि न, तदाऽयं योगः कबूलफलनाशनः खल्लासरः स्यात्, अयं शुभदो न भवति ॥ ६१ ॥

भाषा—चन्द्रमा शून्य मार्ग में होय, और लग्नेश कार्येशोंमें किसीसे इत्थशाल भी न करता हो, अथवा युत भी नहीं होय तो कबूलयोग का नाशक खल्लासरयोग होता है, यह अशुभ है ॥ ६१ ॥

अथ रद्दयोगलक्षणमाह—

**अस्तनीचरिपुवक्रहीनभा दुर्बलो मुथशिलं करोति चेत्।**
**नेतुमेष न विभुर्यतो महोऽन्ते मुखेऽपि न स कार्यसाधकः ॥ ६२ ॥**

अस्तनीचरिपुवक्रहीनभाः = अस्तः सूर्यात्कालांशान्तर्गतो भवित। नीचं स्वनीचराशिस्तद्गतः। रिपुः = शत्रुस्तद्गृहगतः वक्रो विलोमगमनशीलः हीनभाः = तेजोविहीनः, ईदृशो ग्रहो दुर्बलो बलहीनो भवति, चेत् = यदि ईदृशोग्रहः केचिन्मुथशिलमपि करोति तदा एष दुर्बलो यतो यस्मान्महस्तेजो नेतुं ग्रहीतुं न विभुः न समर्थो भवति, अतः स ग्रहोऽन्ते वर्षान्ते, मुखे वर्षादौ अपि कार्यसाधको न भवति असमर्थत्वात्। स्वयमसमर्थः कथं परार्थसाधनयोग्यः स्यादिति भावः ॥ ६२ ॥

भाषा—जो ग्रह अस्त, नीचस्थ, वक्र, तेजरहित है, वह दुर्बल है, वह अगर किसी से इत्थशाल भी करै तो जिसलिये वह दूसरेसे तेज लेनेमें असमर्थ होता है, इसलिये वर्षके आखिरीमें या वर्ष के प्रारम्भमें कार्यसाधक नहीं होता ॥ ६२ ॥

अथ रद्दयोगस्यैव स्थितिवशेन फलभेदमाह—

**केन्द्रस्थ आपोक्लिमगं युनक्ति भूत्वाऽदितो नश्यति कार्यमन्ते।**
**आपोक्लिमस्थो यदि केन्द्रयातं विनश्य पूर्वं भवतीह पश्चात् ॥ ६३ ॥**

लग्नेशकार्येशयोरेकतरो ग्रहः केन्द्रस्थः १।४।७।१० एतदन्यतमस्थानगतो भूत्वा आपोक्लिमगं = ३।६।९।१२ एतदन्यतमस्थानस्थमन्यतरग्रहं युनक्ति इत्थशालं करोति- तदा पूर्वस्थानात्परस्थानस्य निकृष्टत्वात्, आदितः प्रथमतः कार्यं

भूत्वाऽन्तेऽवसाने नश्यति। एवं च यदि आपोक्लिमगः ३।६।९।१२ एतदन्यतमस्थानस्थितो ग्रहः केन्द्रस्थं १।४।७।१० ग्रहं युनक्ति, तदा पूर्वं कार्यं विनश्य विनष्टं भूत्वा पश्चात् परस्मिन् कार्यं भवतीति। निकृष्टस्थानात्प्रकृष्टस्थानगत्वात् ॥६३॥

भाषा—यदि केन्द्र (१।४।७।१०) में स्थित ग्रह आपोक्लिम (३।६।९।१२) स्थान गत ग्रहसे इत्थशाल करता होय तो पहले कार्य होकर पीछे कार्य नाश होय। अगर आपोक्लिम (३।६।९।१२) में स्थित ग्रह केन्द्रस्थ (१।४।७।१०) ग्रहसे इत्थशाल करता होय तो पहले कार्य नष्ट होकर पीछे कार्य होय ॥ ६३ ॥

अथ दुफालिकुत्थयोगलक्षणमाह—

**मन्दः स्वभोच्चादिपदे स्थितश्चेत् पदोनशीघ्रेण कृतेत्थशालः।**
**तत्रापि कार्यं भवतीति वाच्यं वक्रादिनिर्वीर्यपदे न चेत्स्यात् ॥ ६४ ॥**

मन्दो मन्दगतिग्रहः स्वभोच्चादिपदे स्थितः सन् पदोनशीघ्रेण = स्ववर्गाधिकारशून्यशीघ्रगतिग्रहेण, चेत् = यदि, कृतेत्थशालः, तदा तत्रापि स्थितौ कार्यं भवति, इति वाच्यम्। चेत्=यदि, शीघ्रगतिर्ग्रहो वक्रादिनिर्वीर्यपदे–वक्रनीचरिपुक्षेत्रे न भवेत्तदैवेति ॥ ६४ ॥

भाषा—मन्दगतिग्रह, यदि अपने राशि उच्च आदि स्थानों में होकर, अपने राशि उच्च आदि अधिकारहीन शीघ्रगतिग्रह से इत्थशाल करता हो तो यह 'दुफालिकुत्थ' नाम योग होता है। इस में भी कार्य होता है अर्थात् यह योग भी उत्तम ही है। लेकिन यदि शीघ्रगतिग्रह वक्र, अस्त, शत्रुक्षेत्री, हीन तेज न हों तो यह योग होता है ॥ ६४ ॥

अथ दुत्थोत्थदिवीरयोगमाह—

**वीर्योनितौ कार्यविलग्ननाथौ स्वर्क्षादिगेनान्यतरो युनक्ति।**
**अन्यौ यदा द्वौ बलिनौ तदाऽन्यसाहाय्यतः कार्यमुशन्ति सन्तः ॥ ६५ ॥**

कार्यविलग्ननाथौ = कार्येशलग्नेशौ, वीर्योनितौ = बलहीनौ, स्तस्तयोरन्यतरो ग्रहः स्वर्क्षादिगेन केनचिदितरेण ग्रहेण युनक्ति, मुथशिलं करोति। तदा सन्तः कार्यमुशन्ति। वा बलिनौ बलयुक्तौ अन्यौ भिन्नौ लग्नेशकार्येशान्यतरग्रहेणेत्थशालं कुरुतस्तदाऽप्यन्यसाहाय्यतः कार्यं सफलमुशन्ति ॥ ६५ ॥

भाषा—लग्नेश कार्येश बल हीन होय, उन दोनों में कोई एक ग्रह निजराशि उच्चहद्दादिवर्गगत भिन्न ग्रह से इत्थशाल करता होय, तो कार्य सिद्ध होता है यह आचार्य कहते हैं। या कोई बली दो ग्रह, लग्नेश से या कार्येशसे इत्थशाल करता होय तो पराये की सहायता से कार्य सिद्धि कहनी चाहिये ॥ ६५ ॥

**बली राश्यन्तगोऽन्यर्क्षगामी दीप्तांशकैर्ग्रहः ।**
**दत्तेऽन्यस्मै कार्यकरस्तंबीरो लग्नकार्यपोः ॥ ६६ ॥**

लग्नकार्यपोः लग्नेशकार्येशयोर्मध्ये एकतरो बली ग्रहो राश्यन्तगः, अतएवा-न्यर्क्षगामी अग्रिमराशिं गन्तुमिच्छुः सन् दीप्तांशकैर्ग्रहस्तेजोऽन्यस्मै ग्रहाय दत्ते, तदा कार्यकरः कार्यसिद्धिकरस्तम्बीरयोगः स्यात् ॥ ६६ ॥

भाषा—लग्नेश कार्येशों में जो विशेष बलवान् हो, राशिके अन्त में गत हो, अतः अग्रिमराशि में जाता हो, और दीप्तांशा से तेज दूसरे ग्रह को देता होय, तो कार्यसिद्धिकर तम्बीर योग होता है ॥ ६६ ॥

अथ कुत्थयोगलक्षणमाह—

**लग्नेऽथ केन्द्रे निकटेऽपि वाऽस्य विलग्नदर्शी स्वगृहोच्चदृक्के ।**
**मुसल्लहे स्वे नीजहद्दगो वा बली ग्रहो मध्यगतिस्त्वशीघ्रः ॥ ६७ ॥**

यः कश्चिद्ग्रहो लग्ने, ऽथ केन्द्रे ४।७।१०, अपि वा अस्य केन्द्रस्य निकटे पणफरेऽपि स्थितः विलग्नदर्शी, स्वगृहोच्चयुक्तः, स्वे मुसल्लहे नवांशे स्थितो निजहद्दगः, मध्यगतिः, अशीघ्रः = मन्दगतिग्रहः, बली, स्यात् ॥ ६७ ॥

भाषा—जो ग्रह लग्न में, या केन्द्र में ४।७।१०, में या केन्द्रके निकट पणफर में हो लग्नदर्शी हो, अपने गृही, उच्च से युक्त हो, अपने नवांश में हो अपनी हद्दा में हो मध्यगति, मन्दगति ग्रह हो वह बली होता है।

युक्ति—

उच्च के आसन्न में गति मन्दा, नीच के आसन्न में गति शीघ्रा होती है। उच्च में ग्रह बलवान्, नीच में दुर्बल होता है, इसलिये मन्दगति ग्रह बलवान् होता है, शीघ्रगतिग्रह दुर्बल होता है ॥ ६७ ॥

**कृतोदयो मार्गगतिः शुभेन युतेक्षितः क्रूरखगस्य दृष्ट्या ।**
**त्रुताख्यया नाधिगतो न युक्तः क्रूरेण सार्धं च सितेन्दुभौमाः ॥ ६८ ॥**
**यदोद्यन्ते परात्रिभागैर्जीवार्कजावह्नि नराः सवीर्याः ।**
**अन्ये निशीनस्य नवैकभागे स्थिताः स्थिरर्क्षे च बलेन युक्ताः ॥ ६९ ॥**

कृतोदयः कृतउदयो येन स सूर्यसामीप्यादस्तंगतो न, मार्गपतिः पूर्वाभि-मुखक्रमगमनशीलः । शुभेन = पूर्णचन्द्रबुधगुरुभृगूणामन्यतमेन केनापि युतेक्षितः संयुतदृष्टः, क्रूरखगस्य=पापग्रहस्य त्रुताख्यया ( १।४।७।१० ) दृष्ट्याऽधिगतो दृष्टो न, क्रूरेण-पापेन, युक्तः = एकस्थानस्थितो न भवेत, स ग्रहो बलवान् । सितेन्दु-

भौमाः शुक्रचन्द्रमङ्गलाः, सायङ्काले यदोदयन्ते तदा बलिनः स्युः । जीवार्कजौ गुरुशनी अपररात्रिभागेऽर्धरात्रादुपरिभागे बलिनौ स्तः । नराः पुरुषग्रहाः = सूर्यकुजगुरवः, अह्नि दिने सवीर्याः सबला भवन्ति । अन्ये=स्त्रीग्रहाः, निशि=रात्रौ, बलिनः स्युः । तथा सूर्यस्य एकभागे एकांशे न वा स्थिता ग्रहा चन्द्रबुधशुक्रशनयः, बलिनः, अर्थात्सूर्याधिष्ठितनवांशे स्थिता दुर्बला अतस्तदन्यत्र भागे बलिनः । तथा स्थिरर्क्षे स्थिरराशौ वृषसिंहालिघटराशौ स्थिता ग्रहा बलेन युक्ता भवन्ति ॥ ६९ ॥

भाषा—उदित, मार्गी, शुभग्रहसे युत दृष्ट, पापग्रह की शुभदृष्टिसे बचा हुआ पाप ग्रहसे वियुक्त ग्रह बली होता है। अब कालबल कहते हैं—जब शुक्र चन्द्र भौम साम को उदित हों तो वे बली होते हैं। गुरु शनि पिछली रात्रिमें उदित होने से बली होते हैं । पुरुषग्रह ( रवि कुज गुरु ) दिन में बली होते हैं। और ग्रह ( स्त्रीग्रह ) चन्द्र बुध शुक्र शनि रात में बली होते है, इस ताजिक ग्रन्थ में नपुंसक ग्रह नहीं होते हैं। सूर्य जिस नवांश में हो उसमें जो नहीं होय वे बली होते हैं। और स्थिर राशि ( वृष, सिंह, वृश्चिक, कुम्भ ) में स्थित ग्रह बली होते हैं ॥ ६९ ॥

**स्त्रियश्चतुर्थात्पुरुषा वियद्भाद्भषट्कगा ओजभगाः पुमांसः ।**
**समे परे स्युर्बलिनो विमृश्य विशेषमेतेषु फलं निगद्यम् ॥ ७० ॥**

स्त्रियः स्त्रीग्रहाश्चन्द्रबुधशुक्रशनयः चतुर्थाच्चतुर्थभावाद्भषट्कगाः, चतुर्थपञ्चमषष्टसप्तमाष्टमनवमगताः सन्तो बलिनः । पुरुषाः = सूर्जकुजगुरवः, वियद्भादशमभावाद्भषट्गाः दशमैकादशद्वादशप्रथमद्वितीयतृतीयगता बलिनः स्युः । तथा पुमांसः = पुरुषग्रहाः, ओजभगाः=विषमराशिगताः (१।३।५।७।९।११) एषु स्थिता बलिनः स्युः। परे = स्त्रीग्रहाः, समे = २।४।६।८।१०।१२ एतत्संख्यकराश्यन्यतमगताः बलिनः स्युः । एतेषु विशेषं, स्वक्षेत्रोच्चमित्र वर्गादिभेदेन विमृश्य तारतम्यं कृत्वा फलं शुभाशुभं निगद्यं=वाच्यम् ॥ ७० ॥

भाषा—स्त्रीग्रह चन्द्र बुध शुक्र शनि चतुर्थ स्थान से छै स्थान तक स्थित हों तो बली होते हैं। पुरुषग्रह दशमस्थानसे तृतीयस्थान तक छै स्थानों में स्थित हों, तो बली होते हैं। और पुरुषग्रह विषमराशि (मेष, मिथुन, सिंह, तुला, धनु, कुंभ में गत हों तो बली, स्त्री ग्रह समराशि ( वृष, कर्क, वृश्चिक, मकर, मीन ) में हों तो बली, इन स्थानों में भीविशेष स्वक्षेत्र, मित्रक्षेत्र, हद्दा नवांश उच्च आदि का फल कहे ॥७०॥

अथ दुरुष्फलक्षणमाह—

**लग्नात्षष्ठाष्टमेऽन्त्येऽनृजुररिगृहगो नीचगो वक्रगामी**
**क्रूरैर्युक्तोऽस्तगो वा यदि च मुथशिली क्रूरनीचादिभस्थैः।**

**सुदृष्टया क्रूरदृष्टो व्ययरिपुमृतिगैरित्थशालं विधित्सुः**
**कुर्वन्वा निर्बलोऽयं स्वगृहनगभगो राहुपुच्छास्यवर्ती ॥ ७१ ॥**

लग्नात् षष्ठाष्टमे, अन्त्ये=द्वादशे स्थितः, अनृजुः=वक्री· अरिगृहगतः, नीचगः =नीचराशिगतः, वक्रगामी = वक्राभिलाषी, क्रूरैः = पापैः, युक्तः=संयुतः, वाऽस्तगतः=सूर्यसामीप्याल्लुप्तकिरणः, यदि वा क्रूरनीचारिभस्थैर्ग्रहैः-पापर्क्षनीचर्क्षशत्रुराशिगतैर्ग्रहैर्मुथशिली=इत्थशाली, क्षुद्दृष्ट्या (१।४।७।१०) एतत्संख्यादृष्ट्या क्रूरदृष्टः, क्रूरेण क्रूराभ्यां क्रूरैर्वा दृष्टः। व्ययरिपुमृतिगैः=द्वादशषष्ठाष्टमस्थानगतग्रहैरित्थशालं विधित्सुः=कर्तुमिच्छुः, वा तैरित्थशालं कुर्वन्, स्वगृहनगभगः-=स्वराशेः सप्तमराशिगतः, राहुपुच्छास्यवर्ती=राह्वाक्रान्तराशेर्भुक्तभोग्यांशवर्ती ग्रहो निर्बलः स्यात् ॥ ६७ ॥

भाषा—लग्न से छठे आठवें बारहवें स्थान में स्थित, वक्री, शत्रुगृह में गत नीच में स्थित वक्रहोने वाला, पापग्रहों से युत, अस्तगत, पापग्रह के राशि, नीच, शत्रु के राशि में स्थित ग्रहों से इत्थशाल करने वाला वा करता हुआ, या अपने गृह से सातवें राशि में वर्त्तमान, राहु के पुच्छ मुख में स्थित जो ग्रह सो निर्बल होता है। राहु के भोग्य लव को = मुख, भुक्तलव को पुच्छ कहते हैं ॥ ७१ ॥

**अनीक्षमाणस्तनुमस्तभागस्थितः स्वभोच्चादिपदैश्च शून्यः।**
**क्रूरेसराफी न स वीर्ययुक्तः कार्य विधातुं न विभुर्यतोऽसौ ॥ ७२ ॥**

यो ग्रहः तनुं = लग्नम्, अनीक्षमाणः=अदर्शकः, अस्तभागस्थितः=सूर्यनवांशात्सप्तमनवांशगतः, स्वभोच्चादिपदैः=निजराश्युच्चादिशुभाधिकारैः, शून्यः = वर्जितः। क्रूरेसराफी=पापेनेसराफयोगकर्त्ता, स ग्रहो वीर्ययुक्तः न भवति, यतः= यस्मात्। असौ ग्रहः कार्यं विधातुं=कर्त्तुं, विभुः=समर्थो न भवति ॥ ७२ ॥

भाषा—लग्न को नहीं देखने वाला, सूर्य के नवांश से सातवें नवांश में वर्त्तमान, अपने उच्च, अपने गृह हद्दा आदि पदों से वञ्चित जो ग्रह, या पापग्रह से ईसराफ योग करने वाला, ग्रह बलवान् नहीं होता है। जिससे यह ग्रह कार्य करने के लिये समर्थ नहीं होता। ॥ ७२ ॥

**चन्द्रः सूर्याद्द्वादशे वृश्चिकाद्ये खण्डे नेष्टोऽन्त्ये तुलायां विशेषात्।**
**राशीशेनादृष्टमूर्तिर्न सद्भिर्दृष्टो ज्ञेयः शून्यमार्गः पदोनः ॥ ७३ ॥**

चन्द्रः, सूर्याद्द्वादशे स्थाने स्थितः, तथा वृश्चिकाद्ये खण्डे वृश्चिकपूर्वार्धे स्थितो नेष्टो भवति। तथा तुलाया अन्त्ये खण्डे=उत्तरार्धे वर्त्तमानश्चन्द्रो विशेषान्नेष्टः

स्यात्। नीचारोहित्वात्। तथा राशीशेन = चन्द्राक्रान्तराशिपतिनाऽदृष्टमूर्त्तिः, सर्वैर्ग्रहैश्च न दृष्टः, एवं भूतश्चन्द्रः शून्यमार्गः, पदोनः=अधिकारहीनश्च भवति॥७३॥

भाषा—चन्द्रमा सूर्य से बारहवें स्थान में हो, या वृश्चिक के पूर्वार्ध (७।१५) में हो तो नेष्ट है। और तुला राशि के अन्त्य उत्तरार्ध में (६।१५ के बाद) में हो तो विशेष रूप से नेष्ट होता है। जिस राशि में चन्द्रमा हो, उसके स्वामी से यदि देखा न जाय, और सब ग्रहोंसे भी देखा न जाय, तो वैसा चन्द्रमा शून्यमार्ग या पदोन कहाताहै७३

**क्षीणो भांते नो शुभो जन्मकाले पृच्छायां वा चन्द्र एवं विचिन्त्यः।**
**शुक्ले भौमः कृष्णपक्षेऽर्कसूनुः क्षुद्दृष्ट्येन्दुं वीक्षते नो शुभोऽसौ ॥७४॥**

क्षीणः=कृष्णाष्टम्यादि शुक्लाष्टम्यवधिकः, भान्ते=राश्यन्तिमनवांशे वर्त्तमानः। चन्द्रः शुभो न भवति। एवं जन्मकाले, पृच्छायां = प्रश्नकाले, चन्द्रो विचिन्त्यः। शुक्लपक्षे भौमः क्षुद्दृष्ट्या चन्द्रं वीक्षते, तथा कृष्णपक्षेऽर्कसूनुः शनिः क्षुद्दृष्ट्या इन्दुं वीक्षते तदाऽसौ चन्द्रः शुभो न ॥ ७४ ॥

भाषा—क्षीणबली चन्द्रमा, राशि के नववें नवांश में वर्त्तमान चन्द्रमा शुभ नहीं होते हैं। इस प्रकार जन्मकाल में, तथा प्रश्नकाल में चन्द्रमा का विचार करना चाहिये। शुक्लपक्ष में मंगल कृष्णपक्ष में शनि यदि क्षुतदृष्टि (१।४।७।१०) इन दृष्टियों में से चन्द्रमा को देखे, तो चन्द्रमा शुभ नहीं है ॥ ७४ ॥

**शुक्लेदिवा नृगृहगोऽर्कसुतः शशाङ्कं कृष्णे कुजोनिशि समर्क्षगतःप्रपश्येत्।**
**दोषाल्पतां वितनुते परथा बहुत्वं प्रश्नेऽथवा जनुषि बुद्धिमतोहनीयम्॥७५॥**

शुक्ले=शुक्लपक्षे, दिवा = दिवसे, नृगृहगः = विषमराशिगतः, अर्कसुतः = शनिः, शशाङ्कं = चन्द्रं, वीक्षते। कृष्णे=कृष्णपक्षे, समर्क्षगतः=समराशिगः, कुजः= मङ्गलः, चन्द्रं प्रपश्येत् तदा दोषाल्पतां दोषस्य न्यूनतां वितनुते, परथा=अन्यथा, शनिकुजयोर्दृष्ट्यभावे, बहुत्वं = दोषबाहुल्यं भवति। प्रश्ने, अथवा जनुषि= जन्मकाले, बुद्धिमता एवमूहनीयम् = विचारणीयम् ॥ ७५ ॥

भाषा—शुक्लपक्ष में दिन में विषमराशिगत शनि यदि चन्द्रमा को देखे, तथा कृष्णपक्ष में समराशिगत मङ्गल यदि चन्द्रमा को देखे, तो दोष को थोड़ा करता है। इससे अन्यथा दोष जादे होते हैं। यह प्रश्न समय में भी बुद्धिमान से विचारनाचाहिये७५

अथ हर्षस्थानान्याह—

**नन्द ९ त्रि ३ षट् ६ लग्न १ भवक्ष ११ पुत्र ५ व्यया १२ इनाद्धर्षपदं स्वभोच्चे।**
**त्रिभं त्रिभं लग्नभतः क्रमेण स्त्रीणां नृणां रात्रिदिने च तेषाम् ॥ ७६ ॥**

इनात् = सूर्यात्, नन्दत्रिषट्लग्नभवर्क्षपुत्रव्ययाः क्रमेण हर्षस्थानानि। इदं स्थानबलम्। तथा स्वभोच्चे = निजनिजराशिनिजनिजोच्चे हर्षपदे भवतः। लग्न-

भतः = लग्नात् क्रमेण त्रिभं त्रिभं स्त्रीणां नृणां हर्षपदं, अर्थात् लग्नात् १।२।३।७।८।९। एतानि स्त्रीग्रहाणां, पुरुषग्रहाणां ४।५।६।१०।११।१२ एतानि स्थानानि हर्षपदानि । तथा तेषां रात्रिदिने च हर्षपदे । हर्षपदम् अर्थात् रात्रौ वर्षप्रवेशे स्त्रीग्रहा बलिनः । दिने वर्षप्रवेशे पुरुषग्रहा बलिनः ॥ ७६ ॥

अथ हर्षस्थानबोधकं चक्रम् ।

| ग्रहाः | सू० | चं० | कु० | बु० | बृ० | शु० | श० |
|---|---|---|---|---|---|---|---|
| हर्षस्थानानि | ९ | ३ | ६ | १ | ११ | ५ | १२ |

भाषा—सूर्यादिग्रहों के क्रमसे ९।३।६।१।११।५।१२ इतने हर्षस्थान होते हैं। और अपना २ गृही, और उच्च भी हर्षस्थान होता है। तथा लग्न से तीन स्थान स्त्रीग्रहों के हर्षपद, चार से छ तक पुरुष ग्रहों के हर्षपद, फिर सातसे ९ तक स्त्री ग्रहों के हर्षपद, १० से १२ तक पुरुषग्रहों के हर्षपद हैं ॥ ७६ ॥

अर्थात्। स्त्रीग्रहों के लग्न से हर्षस्थान १।२।३।७।८।९

पुरुषग्रहों के हर्षस्थान ४।५।६।१०।११।१२ इतने होते हैं ॥

और स्त्रीग्रह रात्रि में हर्षित होते हैं पुरुषग्रह दिन में हर्षपद में होते हैं। यहां उदाहरण यथा—

सूर्य लग्नसे दशम में हैं, इसलिये हर्षपद में नहीं हैं। चन्द्रमा लग्न से षष्ठस्थान में है। अतः वह भी नहीं। यहां कोई भी ग्रह हर्ष स्थान में नहीं है।

यह प्रथम प्रकार से हुआ। अब देखिये कि अपने गृही अपने उच्च में कौन कौन हैं। यहां केवल अपने गृही में शुक्र ही हैं। और अपने उच्चराशि में केवल सूर्य ही हैं, अतः ये दोनों ग्रह हर्षपद में हुए।




अब 'त्रिभं त्रिभं लग्नभतः' इस प्रकार से देखिये—

यहां पुरुषग्रह सू० बृ० मं० होते हैं, स्त्रीग्रह चं, बु० शु० श, हैं, नपुंसक यहां नहीं होते हैं। जैसे हिन्दी व्याकरण में दोही लिङ्ग होते हैं, नपुंसक लिङ्ग नहीं, वैसे समझना। अब देखिये सू० बृ० ये दशम स्थान में हैं, इसलिये हर्षपद में हुए मङ्गल ११में

हैं, यह नहीं हर्षपद में हुआ, क्योंकि ११ वां स्थान स्त्रीग्रहों का हर्षपद है।

और चन्द्रमा छठे में हैं, यह हर्षपद में नहीं हुआ, क्योंकि पुरुषग्रह के हर्षपद छठा है। चन्द्रमा स्त्री ग्रह है। तथा बुध हर्षपद में हुआ, यह स्त्री ग्रह, ९ वां स्थान स्त्रीग्रहों का हर्षपद है। और शुक्र भी हर्षपद में हुआ। क्योंकि शुक्र स्त्री ग्रह और ११ वां स्थान भी स्त्रीग्रहों का हर्षस्थान है। शनि हर्षपद में नहीं है, क्योंकि पुरुष ग्रहों का हर्षपद दशम है, इसलिये स्त्री ग्रह शनि पुरुष के हर्षपद में कैसे होगा।

अब और प्रकार देखिये—यहां दिन में वर्षप्रवेश हुआ है, इसलिये पुरुष ग्रह ( सू० मं० बृ० ) ये सब हर्षपद में हुए। स्त्री ग्रह नहीं। यहां जो हर्षपद में हो उनका बल ५ मान लेने से निम्नलिखित योगाङ्क बनते हैं।

उदाहरणचक्रम्।

| ग्रहाः | सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|
| प्र.हर्षपदंनन्देति | ० | ० | ० | ० | ० | ० | ० |
| स्वभहर्षपद | ० | ० | ० | ० | ० | ५ | ० |
| उच्चहर्षपद | ५ | ० | ० | ० | ० | ० | ० |
| त्रिभंत्रिभं | ५ | ० | ० | ५ | ५ | ५ | ० |
| रात्रिदिन | ५ | ० | ५ | ० | ५ | ०० | ०० |
| योगबल | १५ | ० | ५ | ५ | १० | १० | ०० |

श्रीगर्गान्वयभूषणं गणितविच्चिन्तामणिरतत्सुतो-
ऽनन्तोनन्तमतिर्व्यधात्खलमतध्वस्त्यै जनुःपद्धतिम्।
तत्सूनुः खलु नीलकण्ठविबुधो विद्वच्छिवानुज्ञया
योगान् षोडश हर्षभानि च तथा संज्ञाविवेकेऽभ्यधात्॥ ७७॥

श्रीगर्गान्वयभूषणं गणितविच्चिन्तामणिः॥ ७७॥
व्याख्यातमेव पूर्वमतोऽत्रोपेक्षितम्।

इति संज्ञातन्त्रे षोडशयोगाध्यायः समाप्तः।

## अथ सहमाध्यायः।

तत्र तावत्पञ्चाशत्सहमनामान्याह—

पुण्यं गुरु-ज्ञान-यशोऽथ मित्रं माहात्म्य-माशा च समर्थता च ॥
भ्राता ततो गौरव-राज-तात-माता सुतो जीवितमम्बु कर्म ॥१॥
मान्द्यं च मन्मथ-कली परतः क्षमोक्ता
शास्त्रं सबन्धुसहमं त्वथ बन्दकं च।
मृत्योश्च सद्म परदेश-धनाऽन्यदारा
स्यादन्यकर्म सवणिक् त्वथ कार्यसिद्धिः ॥ २ ॥
उद्वाह-सूति-सन्तापाः श्रद्धा प्रीतिर्बलं तनुः।
जाड्य-व्यापारसहमे पानीयपतनं रिपुः ॥ ३ ॥
शौर्योपाय-दरिद्रत्वं गुरुताऽम्बुपथाभिधम्।
बन्धनं दुहिताऽश्वश्च पञ्चाशत्सहमानि हि ॥ ४ ॥

१ पुण्यम्। २ गुरुः। ३ ज्ञानम्। ४ यशः। ५ मित्रम्। ६ माहात्म्यम्। ७ आशा, ८ समर्थता ( सामर्थ्यम् ) ९ भ्राता। १० गौरवम्। ११ राज्यम्। १२ तात (पितृ) सहमम्। १३ माता। १४ सुतः। १५ जीवितम्। १६ अम्बु। १७ कर्म। १८ मान्द्यम् ( रोगसहमम् )। १९ मन्मथः। २० कलिः। २१ क्षमा। २२ शास्त्रम्। २३ बन्धुः। २४ बन्दकम्। २५ मृत्युसहमम्। २६ परदेशः। २७ धनम्। २८ अन्यदारा। २९ अन्यकर्म। ३० वणिक्। ३१ कार्यसिद्धिः। ३२ उद्वाहः। ३३ सूतिः। ३४ सन्तापः। ३५ श्रद्धा। ३६ प्रीतिः। ३७ बलम्। ३८ तनुः ( देहसहमम् )। ३९ जाड्यम्। ४० व्यापारः। ४१ पानीयपतनम्। ४२ रिपुः। ४३ शौर्यम्। ४४ उपायसहमम्। ४५ दरिद्रत्वम् ( दारिद्र्यम् ); ४६ गौरवम्। ४७ अम्बुपथसहमम्। ४८ बन्धनं। ४९ दुहिता। ५० अश्वः'। एतानि पञ्चाशत्संख्यकानि सहमानि। यथा भावात्तत्तद्विषया विचार्यन्ते तथैव सहमेभ्योऽपि तत्तद्विषया विचिन्त्यन्ते। इति ॥ १-४ ॥

भाषा—पुण्य, गुरु, ज्ञान, आदि पचाश सहम होते हैं, जैसे द्वादश भावों से सब विषय का विचार, वैसे ही इन सहमों से सब विषय के विचार किये जाते हैं ॥१-४॥

तत्रादौ पुण्यसहमसाधनमाह—

सूर्योनचन्द्रान्वितमह्नि लग्नं वीन्द्वर्कयुक्तं निशि पुण्यसंज्ञम्।

**शोध्यर्क्षशुद्ध्याश्रयभान्तराले लग्नं न चेत्सैकभमेतदुक्तम् ॥ ५ ॥**

अह्नि=दिने, वर्षारम्भश्चेत्तदा लग्नं सूर्योनचन्द्रान्वितं = रविराश्यादिना शोधितेन चन्द्रेण युतं कार्यम्। निशि = रात्रौ, वर्षप्रवेशश्चेत्तदा लग्नं वीन्द्वर्कयुक्तं=विगतः विशोधितश्चन्द्रोऽर्कादिति वीन्द्वर्कस्तेन संयुतं कार्यं, ततः शोध्यर्क्षशुद्धाश्रयभान्तराले लग्नं न चेत्तदा सैकभं कार्यम्, एतत्पुण्यसंज्ञं सहममुक्तम्। अत्र यो ग्रहः शोध्यते विशोध्यते स शोध्यः यथाऽत्र दिवसे वर्षप्रवेशे सूर्यः। यस्माद्ग्रहाच्छोध्यते तस्य भं शुद्ध्याश्रयभम्। यथा अत्र दिने वर्षप्रवेशे चन्द्रः। इति ॥ ५ ॥

भाषा—दिन में वर्ष प्रवेश हो तो रवि को चन्द्रमा में घटाकर शेष को लग्न में जोड़ना, रात में वर्ष प्रवेश हो तो चन्द्रमा को सूर्य में घटा कर लग्न में जोड़ना। यहां जो ग्रह घटाया जाय वह शोध्य है। जिस में घटाया जाय, वह शुद्ध्याश्रय है, यदि शोध्यर्क्ष शुद्ध्याश्रय राशि के बीच में लग्न न होय, तो एकराशि जोड़दे, तो यह पुण्यसहम होता है ॥ ५ ॥

उदाहरण—सूर्य ०।१२।२७।२० चन्द्रमा ८।५।३९।३३। लग्न ३।२७।७।४ यहां दिन में वर्ष प्रवेश हुआ है, इसलिये चन्द्रमा ८।५।३९।३३ में सूर्य को घटाकर शेष ७।२२।४१।४३ में लग्न ३।२७।७।४ जोड़ा तो ११।१९।४८।४७ इतना हुआ, यहां शोध्यर्क्ष ( जो घटता है ) और शुद्धाश्रयभ (जिसमें घटाते हैं) इन दोनों के मध्य लग्न है, इसलिये सैकता विधि न करने से ही पुण्य सहम ११।१९।४८।४६ हुआ। यदि उतने ही इष्ट रात्रि गत है, मान लीजिये तो सूर्य ०।१२।२७।२० में चन्द्रमा ८।५।३९।३३ को घटाया, ४।७।१८।१७ लग्न जोड़ा, ८।४।२५।२१ यहां शोध्यर्क्ष शोध्याश्रय के बीच में लग्न है, इसलिये १ राशि जोड़ने पर पुण्यसहम ९।४।२५।२० यह रात का पुण्यसहम हुआ ॥ ५ ॥

अथ गुरुविद्यायशःसहमानां साधनमाह—

**व्यत्यस्तमस्माद्गुरुविद्ययोस्तु संसाधनं पुण्यवियुक्सुरेज्यः।**
**दिवा विलोमं निशि पूर्ववत्तु यशोभिधं तत्सहमं वदन्ति ॥ ६ ॥**

अस्मात्पुण्यसहमसाधनात्, गुरुविद्ययोः सहमयोः संसाधनं व्यत्यस्तं =विलोमं ज्ञेयम्। अर्थाद्रात्रिसाधितं पुण्यसहमं दिवा गुरुसहमं, दिवासाधितं पुण्यसहमं रात्रौ पुण्यसहमम्। शोध्यशोधकयोर्वैपरीत्यम्, अर्थात् दिवाऽब्दप्रवेशे चंद्रात् सूर्यःशोध्यः, रात्रौ सूर्याचन्द्रः शोध्यः। लग्नयोगः सैकता च कार्या तदा गुरुविद्ये सहमे भवतः।

सुरेज्यो गुरुः, पुण्यवियुक् = पुण्यसहमेन शोधितः कार्यः। निशि रात्रौ विलोमम्। पुण्यसहमादेव सुरेज्यो विशोध्यः। पूर्ववत् = पूर्वोक्तवत्, लग्नयोगस्तथा

शोध्यर्क्षशुद्ध्याश्रयभान्तराले लग्नं न चेत्तदा सैकभं कार्यमेवं कृते यशोऽभिधं तत् सहमम्, आचार्या वदन्ति ॥ ६ ॥

भाषा—इस पुण्य सहम से उलटी रीति से गुरु सहम, विद्यासहम का साधन समझना। जैसे दिन का पुण्य सहम रात्रि में गुरुसहम, रात का पुण्य सहम दिनका गुरु सहम होता है। गुरु सहम के बराबर ही विद्यासहम होता है। अब यशः-सहम कहते हैं।

दिन को वर्ष प्रवेश हो तो बृहस्पति में पुण्य सहम घटावे, रात में, पुण्य सहम में बृहस्पति को घटावे, पहले के ऐसी क्रिया करे अर्थात् शुध्यर्क्ष, शुद्ध्याश्रय के मध्य में लग्न न हो तो एक राशि जोड़ देना, और लग्न भी जोड़ना तो यशःसहम होता है।

उदाहरण—यहां दिन में वर्ष प्रवेश हुआ है, इसलिये सूर्य ··।१२।८७।५० में चन्द्रमा ८।५।३१।३३ को घटा कर शेष ४।७।१८।१७ में लग्न ३।२७।७।४ जोड़ा तो ८।४।२५।२१ हुआ, यहां शोध्य शुद्धयाश्रयराशि के बीच लग्न नहीं है, अतः १ राशि और जोड़ दिया ९।४।२५।२१ यही गुरु सहम, वा विद्या सहम हुआ।

और दिन में इष्ट है, अतः पुण्य सहम ११।११।४८।४६ को बृहस्पति ··।२।४९।८ में घटाया शेष ..।१३।..।२२ इसमें लग्न ३।२७।७।४ जोड़ा ४।१०।७।२६ यहां शोध्यभ शुद्धयाश्रयभ के बीच लग्न नहीं है, अतः सैक किया तो यशःसहम ५।१०।७। २६ हुआ ॥ ६ ॥

अथ मित्रसहमसाधनमाह—

**पुण्यसद्म गुरुसद्मतस्त्यजेद्व्यत्ययो निशि सितान्वितं च तत्।**
**सैकता तनुवदुक्तरीतितो मित्रनाम सहमं विदुर्बुधाः ॥ ७ ॥**

दिवा वर्षप्रवेशे, गुरुसद्मतः = गुरुसहमतः, पुण्यसद्म = पुण्यसहमं, त्यजेत् विशोधयेत्। निशि = रात्रौ, व्यत्ययः वैपरीत्यम्, अर्थात् पुण्यसहमाद्गुरुसहमं त्यजेत्। शेषं सितान्वितं = शुक्रसंयुतं कार्यम्। अत्र लग्नयोगस्थाने शुक्रयोगो ज्ञेयः। तनुवत् = लग्नवत्, उक्तरीतिः = कथितविधिवत् सैकता = एकराशियोगः, अर्थात् शोध्यर्क्षशुद्धयाश्रयभान्तराले शुक्रो न चेत्तदा सैकभं कार्यमित्यर्थः। तदा तन्मित्रनामसहमं बुधा जगुर्विदुः ॥ ७ ॥

भाषा—दिन में वर्ष प्रवेश हो, तो गुरु सहम में पुण्य सहम को घटावे, रात में उलटी रीति अर्थात् पुण्य सहम में ही गुरु सहम को घटावे, और शुक्र को जोड़ दे, लग्न की ऐसी पहले कहने के अनुसार क्रिया करे, अर्थात् जैसे पहले शोध्यर्क्ष शुध्या-श्रयभ इनके बीच लग्न न होने से एक जोड़ना कहा गया, वैसे यहां शोध्यर्क्ष शुद्धया-

अयभ के मध्य में शुक्र को न रहने से एक जोड़ना चाहिये तो पण्डित लोग मित्र नाम का सहम कहते हैं ॥ ७ ॥

उदाहरण—यहां दिन में होने से गुरु सहम ९।४।२८।५० में पुण्य सहम ११।१६। ४८।४६ को घटा कर शेष ९।१४।३६।३४ में शुक्र १।२८।१६।१७ को जोड़ा तो ११।१२। ५१।५१ यही मित्र सहम हुआ, यहां सैक करने की क्रिया नहीं लगी ॥ ७ ॥

अथ महात्म्याशासहमयोः साधनमाह—

**पुण्याद्भौमं शोधयेदुक्तवत्स्यान्माहात्म्यं तन्नक्तमस्माद्विलोमम्।**
**शुक्रं मन्दादह्नि नक्तं विलोममाशाख्यं स्यादुक्तवच्छेषमूह्यम्॥ ८ ॥**

दिवा वर्षप्रवेशे पुण्याद्भौमं शोधयेत्, नक्तं = रात्रौ, अस्माद्विलोमम्, अर्थात् भौमात् पुण्यं शोधयेत्। उक्तवत् = कथितवत्, लग्नयोगः सैकता च कार्या। तदा माहात्म्यं सहमं स्यात्। अह्नि दिवसे वर्षप्रवेशश्चेत् तदा मन्दात् = शनितः शुक्रं विशोध्य. नक्तं = रात्रौ विलोमं शुक्राच्छनिं विशोध्य, शेषमुक्तवत्, लग्नयोगः, सैकता चेति कार्यं तदा आशाख्यं सहमं स्यात् ॥ ८ ॥

भाषा—दिन में वर्षप्रवेश हो तो पुण्यसहम में मंगल को घटावे, रात में विलोम अर्थात् मङ्गल में पुण्य सहम को घटावे, उक्तवत् लग्न जोड़ना, एक भी जोड़ना, तो माहात्म्य सहम होता है। दिन में शनि में शुक्र को, रात में शुक्र में शनि को घटाना शेषकार्य पूर्ववत् अर्थात् लग्नजोड़ना, सैक करना, तो आशा सहम होता है।

उदाहरण—पुण्य सहम में ११।१९।४८।४६। मङ्गल १।२२।१३।५३ को घटाया शेष ९।२७।३४।५३ में लग्न ३।२७।७।४ को जोड़ा तो १।२४।४१।५७। यहां सैकता नहीं लगती, अतः १।२४।४१।२७ यही माहात्म्य सहम हुआ। रात्रि में विलोम क्रिया करनी चाहिये।

और शनि..।१०।२५।१३ में शुक्र १।२८।१६।१७को घटाया तो शेष बचा १०।१२। ३९।५६, इस में लग्न, ३।२७।७।४ जोड़ा, तो २।६।४३।०० यहां भी सैकता की क्रिया नहीं लगी, इसलिये यह २।६।४३।०० आशा सहम हुआ ॥ ८ ॥

अथ सामर्थ्यसहम-भ्रातृसहमयोः साधनमाह—

**सामर्थ्यमारात्तनुपं विशोध्य नक्तं विलोमं तनुपे कुजे तु।**
**जीवाद्विशुध्येत्सततं पुरावद् भ्राताऽर्किहीनाद्गुरुतः सदोह्यः॥ ९॥**

दिवा वर्षप्रवेशे, आरात् = कुजात्। तनुपं = लग्नेशं, विशोध्य, नक्तं = रात्रौ विलोमं किन्तु लग्नेशात्कुजमेव विशोध्य लग्नयोगः सैकता च पूर्ववत्तदा सामर्थ्य-सहमं स्यात्। तत्र तनुपे = लग्नेशे, कुजे = मङ्गले सति, सततं दिवा रात्रौ च जीवात् = गुरुतः, लग्नेशं विशुध्येत्, शेषं पूर्वोक्तवत्।

अथ सदा दिवा रात्रौ च वर्षप्रवेशे आर्किहीनाच्छनिविहीनिताद् गुरुतो बृहस्पतितो भ्राता ऊह्यः। अर्थाद् गुरौ शनिं विशोध्य शेषं लग्नयुतं शोध्यर्क्षशुद्ध्याश्रयभान्तराले लग्नं न चेत्तदा सैकभं च कार्यं तदा भ्रातृसहमं स्यात् ॥ ९ ॥

भाषा—दिन में वर्षप्रवेश हो तो मङ्गल में लग्नेश को घटावे, रात में लग्नेशही में मङ्गल को घटावे, लग्न जोड़े, शोध्यर्क्ष शुद्ध्याश्रय राशियों के बीच यदि लग्न न हो तो एक राशि और जोड़े, तो यह सामर्थ्य सहम होता है। यहां यदि लग्नेश मङ्गल ही हो जाय तो दिन में रात में भी बृहस्पति में मङ्गल को घटावें। लग्न जोड़ना सैकताविधि पूर्ववत् समझना। तो सामर्थ्य सहम होता है।

और दिन वा रात्रि में वर्षप्रवेश हो तो बृहस्पति में शनि को घटावे, लग्नजोड़ना, सैक करना पहले के ऐसे, तो भ्रातृसहम होता है।

उदाहरण—मङ्गल १।२२।१३।२३ में लग्नेश चन्द्रमा ८।५।३९।३२ को घटाया शेष ५।१६।३४।२० में लग्न ३।२७।७।४ जोड़ा ९।१३।४१।२४ यहां शोध्यर्क्षशुद्ध्याश्रयभ के बीच में लग्न नहीं है। अतः १ राशि और जोड़ा १०।१३।४१।२४ यही सामर्थ्य सहम हुआ।

और बृहस्पति ९।२।४३।८ में शनि १०।२९।१२ को घटाया शेष बचा ११। २१।५३।५५ इस में लग्न ३।२७।७।४ जोड़ा तो ३।१९।०।५९ यही भ्रातृ सहम हुआ यहां शोध्यर्क्ष शुद्ध्याश्रयभ के बीच में लग्न पड़ता है इसलिये सैकता नहीं लगी ॥९॥

अथ गौरव-राज-तात-सहमसाधनमाह—

**दिने गुरोश्चन्द्रमपास्य नक्तं रविं क्रमादर्कविधू च देयौ।**
**रीत्योक्तया गौरवमर्कमार्केरपास्य वामं निशि राजतातौ ॥ १० ॥**

दिने वर्षप्रवेशे गुरोः सकाशाच्चन्द्रं, अपास्य = विशोध्य, नक्तं रात्रौ, गुरो रविं विशोध्य क्रमात्तत्र शेषे अर्कविधू = सूर्यचन्द्रौ, देयौ = योज्यौ, उक्तया रीत्या क्रिया सैकता च कार्या। अर्थात् दिने गुरोश्चन्द्रं विशोध्य रवियोज्यस्तत्र गुरुचन्द्रयोर्मध्ये रविश्चेन्न तदा सैकभं कार्यं, तदा गौरवं सहमम्। रात्रौ तु गुरो रविं विशोध्य चन्द्रो योज्यः, तत्र गुरुरव्योर्मध्ये चन्द्रश्चेन्न तदा सैकभं, कार्यं, तदा गौरवं सहमं स्यात्। अथ दिवसे वर्षप्रवेशे आर्केः शनेरर्कं सूर्यमपास्य, निशि = रात्रौ वाममर्थात् अर्काच्छनिं विशोध्य लग्नयोगः सैकता च पूर्ववत्, तदा राजतातौ सहमे भवतः ॥ १० ॥

**भाषा**—दिन में वर्षप्रवेश हो तो बृहस्पति में चन्द्रमा को घटावे, सूर्यजोड़े बृहस्पति चन्द्रमा के बीच लग्न नहीं पड़े तो एक राशि जोड़ना यह गौरव सहम होता

है रात में बृहस्पति में सूर्यको घटावे, चन्द्रमा जोड़े, चन्द्रमा बृहस्पति के मध्य में लग्न नहीं पड़े तो एकराशि और जोड़ना यह रात में गौरव सहम होता है।

दिन में शनि में सूर्य को, रात को सूर्य में शनि को घटाना, लग्न जोड़ना, सैक करना पूर्ववत् तो यह राज सहम, तातसहम होता है ॥ १० ॥

उदाहरण—बृहस्पति···।२।४१।८ में चन्द्रमा ८।५।३९।२३ को घटाया शेष ३।२७।१।३५ में सूर्य···।१२।५७।५० जोड़ा, सैकक्रिया तो दिन में गौरव सहम ४। १०।७।२५ हुआ। यदि रात में बनाना हो, तो बृहस्पति···।२।४१।८ में सूर्य ···।१२।५७।५० को घटाया शेष ११।१९।५१।१८ में चन्द्रमा ८।५।३९।२३ जोड़दिया, यहां शोध्यर्त्त शुद्ध्याश्रयभ के बीच चन्द्रमा हैं, इस लिये सैक नहीं किया तो रात में गौरव सहम ७।२५।३०।५१ हुआ। यहां शोध्यर्त्त शुद्ध्याश्रयभ के बीच लग्न को नहीं देखना, जहां लग्न जोड़ा जाता है, वहां लग्न देखा जाता है।

और दिन में वर्षप्रवेश होने से शनि···।१०।५९।१२ में सूर्य ०।१२।५७।५० को घटा कर शेष ११।१७।५७।२२ में लग्न ३।२७।७।४ जोड़ा तो ३।१५।४।२७ यहां सैकता नहीं लगी, अतः ३।१५।४।२७ यही राज, अथवा तात सहम हुआ ॥ १० ॥

अथ मातृ-सुत-जीविताम्बुसहमसाधनमाह—

**मातेन्दुतोपास्य सितं विलोमं नक्तं सुतोऽहर्निशमिन्दुमीज्यात्।**
**स्याज्जीविताख्यं गुरुमार्कितोऽह्नि वामं निशीदं सममम्बयाऽम्बु ॥ ११ ॥**

दिवा इन्दुतश्चन्द्रात्, सितं = शुक्रम्, अपास्य, निशि=रात्रौ विलोममर्थात्, शुक्राच्चन्द्रं विशोध्य लग्नयोगः, सैकता च कार्या, तदा माता सहमम्। अहर्निशं दिवारात्रौ वर्षप्रवेशे तु ईज्यात् = गुरुतः, इन्दुं = चन्द्रं विशोध्य लग्नयोगः सैकता च पूर्ववत्कार्या तदा सुतःसुतसहम स्यात्। अथ अह्नि=दिने, आर्कितः=शनितः, गुरुं=बृहस्पतिं, विशोध्य, निशि=रात्रौ, वाम=गुरोःशनिं विशोध्य लग्नयोगः सैकताविधिः पूर्ववत्तदा एतज्जीवितसंज्ञं सहमं स्यात्। अथ अम्बया=मात्रा, समं=तुल्यमेव, अम्बु सहमं भवति ११

भाषा—दिन में चन्द्रमा में शुक्र को रात में शुक्र ही में चन्द्रमा को घटावे, लग्न जोड़ने का राशि जोड़ने का नियम पूर्ववत् तो माता सहम होता है। और दिन रात में कभी भी वर्षप्रवेश हो तो—बृहस्पति में चन्द्रमा को घटावे, लग्न जोड़ना सैकविधिपूर्ववत् करना तो पुत्र सहम होता है। दिन में शनि में बृहस्पति को, रात में बृहस्पति में शनि को घटा कर एक जोड़ना सैक करना पूर्ववत् तो जीवित सहम होता है। यश माता सहम के बराबर ही अम्बु सहम होता है। क्योंकि दोनों चतुर्थ स्थान ही हैं ॥ ११ ॥

उदाहरण—दिन में वर्ष प्रवेश हुआ है, अतः चन्द्रमा ८।५।३९।२३ में शुक्र १।२८

१९।१७ को घटाया शेष ६।७।२०।१६ में लग्न ३।२७।७४ जोड़ा तो १०।४।२७।२० यहां सैकता नहीं लगी, अतः यहां यही मातृ-सहम हुआ।

और बृहस्पति ००।२।४९।८ में चन्द्रमा ८।४।३६।३३ के घटाकर शेष ३।२७।९।३९ में लग्न ३।२७।७४ जोड़ा तो–७।२४।१६।३९ यहां सैकता लगी, अतः ८।२४।१६।३८ यह सुत ( पुत्र ) सहम हुआ।

और दिन में वर्ष प्रवेश होने से शनि ···।१०।२२।१३ में बृहस्पति ···।२।४६।८ को घटाया शेष ···।८।३।५ में लग्न ३।२७।७४ जोड़ा ४।५।१३।६ यहां सैकता लगी, अतः ४।४।१३।६ यह जीवित सहम हुआ। यहां मातृ सहम के बराबर ही अम्बु ( जल ) सहम -१०।४।२७।२० हुआ ॥ ११ ॥

अथ कर्म–रोग–मन्मथसहमानयनमाह—

**कर्म क्षमारान्निशि वामनुक्तं रोगाख्यमिन्दुं तनुतः सदैव।**
**स्यान्मन्मथो लग्नपमिन्दुतोऽह्नि वामं निशीन्दुं तनुपं सदाऽर्कात् ॥ १२ ॥**

दिवा आरात्=कुजात्, ज्ञं = बुधं, निशि = रात्रौ, वामम् = विलोमं, अर्थात् बुधात् कुजं विशोध्य लग्नयोगः सैकता च पूर्ववत् तदा कर्म सहमं स्यात्। सदैव दिवारात्रौ वर्षप्रवेशे तनुतः = लग्नात्, इन्दुं = चन्द्रं विशोध्य लग्नयोगः सैकता च कार्या, तद्रोगाख्यं सहमं स्यात्। अह्नि = दिवसे, इन्दुतः = चन्द्रात्, लग्नपं=लग्नेशं, विशोध्य, निशि = रात्रौ, वामं = विलोमम्, लग्नेशाच्चन्द्रं विशोध्य शेषं कर्म प्राग्वत् तदा मन्मथसहमं स्यात्। यदि इन्दुश्चन्द्र एव तनुपो लग्नेशः, तदा सदैवार्कात् सूर्यात् तनुपं विशोध्य केवलं लग्नयोगः कार्यः अत्र सैकता न कार्या। तदुक्तं रसालायाम् "अत्र शुद्धाश्रययोजकयोरेकरूपत्वादेकराशियोगो नैव भवती"ति ॥ १२ ॥

भाषा—दिन में मङ्गल में बुध, रात में बुध में मङ्गल को घटाकर लग्न जोड़ना सैक करना पूर्ववत् समझना, तब कर्म सहम होता है। दिन में और रात में भी लग्न में चन्द्रमा को घटाकर शेष कर्म पूर्ववत् करने से रोग सहम होता है। और दिन में चन्द्रमा में लग्नेश को, रात में लग्नेश में चन्द्रमा को घटाकर लग्नयोग सैकता पूर्ववत् करना, तब मन्मथ सहम होता है।

यहां यदि चन्द्रमा ही लग्नेश हो, तो दिन में रात में सूर्य ही में लग्नेश को घटावे। बाँकी क्रिया पूर्ववत् तो मन्मथ सहम होता है ॥१२॥

उदाहरण—दिन में वर्ष प्रवेश हुआ है। अतः मंगल १।२२।१३।५३ में बुध ११।२३।२९।१६ को घटाया, शेष १।२८।१४।४४ में लग्न ३।२७।७४ को जोड़ा ५।२५।२१।४८ यहां सैकता लगी, इसलिये यही कर्म सहम ६।२५।२१।४८ हुआ।

और यहां लग्न ३।२७।७।४ में चन्द्रमा ८।४।३९।३३ को घटाया, शेष ७।२१।२७।२९ में लग्न ३।२७।७।४ जोड़ा तो ११।१८।३४।३३ यहां सैकता का विचार नहीं करना चाहिये। अतः ११।१८।३४।३३ यही रोग सहम हुआ।

और दिन में वर्ष प्रवेश होने से चन्द्रमा ८।५।३९।३३ में लग्नेश चन्द्रमा ही को घटाने से शून्य हुआ। अतः सूर्य ०।१२।४७।५० में लग्नेश चन्द्रमा ८।४।३९।३३ को घटाया, शेष ४।७।१८।१७ में लग्न ३।२७।७।४ जोड़ा ८।४।२५।२१ सैकता लगी, अतः मन्मथ सहम ६।४।२५।२१ यही हुआ॥ १२॥

अथ कलिक्षमाशास्त्रसहमानयनमाह—

**कलिक्षमे स्तो गुरुतो विशुद्धे कुजे विलोमं निशि पूर्वरीत्या।**
**शास्त्रं दिने सौरिमपास्य जीवाद् वामं निशि ज्ञस्य युतिः पुरावत्॥१३॥**

दिवा गुरुतः कुजे विशुद्धे, निशि कुजाद् गुरौ विशुद्धे पूर्वरीत्या लग्नयोगः सैकता च कार्या, तदा कलिक्षमे सहमे स्तः। एतन्महद्वैचित्र्यं यत्कलिसहममेव क्षमा· सहममुक्तम्। कलिक्षमयोर्मिथो विरुद्धत्वात्।

दिने वर्षप्रवेशे जीवात् = गुरोः, सौरिं = शनिम्, रात्रौ वामं = विलोमम्। शनेर्गुरुं विशोध्य ज्ञस्य = बुधस्य, द्युतिर्योगः, अत्र लग्नयोगस्थले बुधयोगो ज्ञेयः। पुरावत् सैकता च कार्या तदा शास्त्रं सहमं स्यात्॥ १३॥

भाषा—दिन में बृहस्पति में मङ्गल को, रात में मङ्गल में बृहस्पति को घटावे लग्न जोड़ना, सैक करना पूर्ववत् तब कलि सहम, और क्षमा सहम होता है। और दिन में बृहस्पति में शनि को, रात में शनि में बृहस्पति को घटावे बुध जोड़े, और बृहस्पति से मङ्गल तक इसके बीच में यदि बुध नहीं हो तो सैक करना तो शास्त्र सहम होता है॥ १३॥

उदाहरण—दिन में बृहस्पति ..।२।४३।८ में मङ्गल १।२२।१३।५३ को घटाया शेष १०।१०।२९।१५ में लग्न ३।२७।७।४ जोड़ा २।७।४२।१९ यहां सैकता नहीं लगी वही २।७।४२।१९ कलि सहम, और क्षमा सहम हुआ।

और दिन में वर्ष प्रवेश होने से बृहस्पति ..।२।४३।८ में शनि ..।१०।५५।१३ को घटाया, शेष ११।२१।५३।२५ में बुध ११।२३।५८।९ जोड़ा ११।१५।५३।४ यहां बृहस्पति और शनि के बीच में बुध नहीं है, इसलिये सैकता नहीं लगी, अतः वही ११।१५।५३।४ शास्त्र सहम हुआ॥ १३॥

अथ बन्धुवन्दकमृत्युसहमानयनमाह—

**दिवानिशं ज्ञाच्छशिनं विशोध्य बन्ध्वाख्यमेतन्निशि बन्दकं स्यात्।**
**वामं दिवैतन्मृतिरष्टमर्क्षादिन्दुं विशोध्योक्तवदार्कियोगात्॥ १४॥**

दिवानिशं = दिवारात्रौ, ज्ञात् = बुधात्, शशिनं=चन्द्रं, विशोध्य, चन्द्रबुधयोर्मध्ये लग्नं न चेत्तदा सैकतालग्नयोगश्च कार्यस्तदा बन्धुसहमं स्यात्। निशि=रात्रौ, एतद्बन्धुसहममेव बन्दकसहमम्। दिवा वाममर्थाच्चन्द्राद् बुधं विशोध्य शेषं कर्म पूर्ववत् कार्यं तदा बन्दकसहमम्। दिवा रात्रौ वर्षप्रवेशे-अष्टमर्क्षान्मृत्युभावादिन्दुं चन्द्रं, विशोध्य उक्तवत् सैककरणं, आर्किंयोगाच्छनियोगान्मृतिर्मृत्युसहमं स्यात् ॥१४॥

भाषा—दिन में या रात में वर्ष प्रवेश होने से बुध में से चन्द्रमा को घटाकर लग्न जोड़ना सैक करना पूर्ववत् करना, तो बन्धुसहम होता है। यहां यही बन्धुसहम रात में बन्दक सहम होता है। दिन में चन्द्रमामें बुध को घटाकर लग्न जोड़ना, सैक करना पूर्ववत् समझना तब बन्दक सहम होता है।

दिन या रात में किसी समय वर्षप्रवेश होने से अष्टमभाव में से चन्द्रमा को घटाकर बुध जोड़ना, चन्द्रमा से अष्टमेश तक बीच में लग्न होने से एक और जोड़ना तो मृत्यु सहम होता है ॥ १४ ॥

उदाहरण—यहां बुध ११।२३।५९।९ में चन्द्रमा ८।५।३९।३३ को घटाया, शेष ३।१८।१९।३६ में लग्न ३।२७।७।४ जोड़ा, सैक किया तो बन्धुसहम हुआ ८।१४।२६। ३९ और चन्द्रमा ही ८।५।३९।३३ में बुध ११।२३।५९।९ को घटाया, शेष ८।११।४०।२४ में लग्न जोड़ा ००।८।४७।२८ यहां सैकता नहीं लगी, अतः ००।८।४७।२८ यही बन्दक सहम हुआ। तथा अष्टमभाव १०।२६।१८।४६ में चन्द्र ८।५।३९।३३ को घटाया, शेष २।२०।२६।१३ में लग्न ३।२७।७।४ जोड़ा, सैक किया तो ७।१७।४६।१७ यह मृत्युसहम हुआ ॥ १४ ॥

अथ देशान्तरसहमार्थसहमयोः साधनमाह—

**देशान्तराख्यं नवमाद्विशोध्य धर्मेश्वरं सन्ततमुक्तवत्स्यात्।**
**अहर्निशं वित्तपमर्थभावाद्विशोध्य पूर्वोक्तवदर्थसद्म ॥ १५ ॥**

सन्ततं = दिवा रात्रौ, च वर्षप्रवेशे, नवमान्नवमभावाद्धर्मेश्वरं = नवमभावेश्वरं विशोध्य शेषं कर्म उक्तवत्। लग्नयोगः सैकता च कार्येति, तदा देशान्तरसंज्ञं सहमं भवति।

अहर्निशं = दिवारात्रौ, वर्षारम्भे, अर्थभावाद्धनभावाद्वित्तपं = धनेशं, विशोध्य पूर्वोक्तवत् कर्म कार्यम् तदाऽर्थसद्म = धनसहमं स्यात् ॥ १५ ॥

भाषा—दिनमें या रात में वर्ष प्रवेश हो तो नवम भाव में नवमभावेश ही को घटाकर, लग्न जोड़ना, और नवमेश नवमभाव इनदोनों के बीच लग्न न होने से एक राशि जोड़ना। यह देशान्तर सहम होता है।

और दिन में या रात में धन भाव से धनेश को घटाकर लग्न जोड़ना, धनेश,

धन भाव, इन दोनों के बीच में लग्न नहीं होने से एक राशि और जोड़ना तब अर्थ-सहम होता है ॥ १५ ॥

उदाहरण—नवम भाव ११।२४।३०।२६ में नवमेश्वर बृहस्पति ०।२।१६।१८ को घटाया, शेष ११।२२।४१।२१ में लग्न जोड़ा ३।१९।४८।२५ यह देशान्तर सहम हुआ। और धनभाव ४।२६।१८।४६ में धन भावेश सूर्य ०।१२।५७।५० को घटाया, शेष ४।१३।२०।५६ में लग्न ३।२७।७।४ जोड़ा, तो ८।१०।२८।०० यह अर्थ ( धन ) सहम हुआ। इन दोनों सहमों में सैकता नहीं लगी ॥ १५ ॥

अथ परदाराऽन्यकर्मवणिक्सहमसाधनमाह—

**सितादपास्यार्कमथान्यदाराह्वयं सदा प्राग्वदथान्यकर्म ।**
**चन्द्राच्छनिं वाममथो निशायां शश्वद्वणिज्यं दिनबन्दकोक्त्या ॥ १६ ॥**

सदा = दिवानिशं, सितात् = शुक्रात्, अर्क = सूर्यं, अपास्य, शेषं लग्नयोगः कृता च कार्या तदा अन्यदारासंज्ञकं सहमम् । दिवा चन्द्राच्छनिं विशोध्य, निशायां वामं = शनेश्चन्द्रं विशोध्य शेषं कर्म पूर्ववत् तदाऽन्यकर्मसहमं भवति, अथोऽनन्तरं शश्वत् = सदा, वर्षप्रवेशे दिनबन्दकोक्त्या वणिज्यं सहमं भवति । एतदुक्तं भवति चन्द्राद्बुधं विशोध्य लग्नयोगः सैकता च कार्या तदा वणिज्यमिति ॥ १६ ॥

भाषा—दिन में या रात में शुक्र में सूर्य को घटाकर लग्न जोड़े, और रवि शुक्र के बीच में लग्न नहीं होने से १ राशि और जोड़े। तो 'अन्यदार' सहम होता है। और दिन में चन्द्रमा में शनि को रात में शनि में चन्द्रमा को घटाकर उसमें लग्न जोड़ना सैक करना पूर्ववत्। तब अन्यकर्म सहम होता है। दिन में और रात में भी दिन में जो बन्दक सहम कहा है, अर्थात् चन्द्रमा में बुध को घटाकर लग्न जोड़े बुध चन्द्रमा के बीच लग्न नहीं पड़ने से एक और जोड़ना तो वणिज्य (व्यापार) सहम होता है।

उदाहरण—शुक्र १।२८।१९।१७ में सूर्य ०।१२।५७।५० को घटाया, शेष १।१५।२१।२७ में लग्न जोड़ा सैक किया तो अन्यदार सहम ६।१२।२८।३१ हुआ। और चन्द्रमा ०।८।५।३९।३३ में शनि ०।१०।५२।१३ को घटाया, शेष ७।२४।४४।२० में लग्न ३।२७।७।४ जोड़ा तो अन्यकर्म सहम हुआ ११।२१।५१।२४ यहां सैकता नहीं लगी। और दिन में जो बन्दक सहम हुआ, वही यहां वाणिज्य सहम ०।०८।४७।२८ हुआ ॥ १६ ॥

अथ कार्यसिद्धि-विवाहसहमयोः साधनमाह—

**शनेर्दिवाऽर्कं निशि चन्द्रमार्किर्विशोध्य सूर्येन्दुभनाथयोगात् ।**
**स्यात्कार्यसिद्धिः सततं विशोध्य मन्दं सितात्स्यात्तु विवाहसद्म ॥ १७ ॥**

दिवा वर्षप्रवेशे शनेरर्कं सूर्यं विशोध्य, निशि = रात्रौ, आर्किः = शनेः, चन्द्रं

विशोध्य, क्रमेण सूर्येन्दुभनाथयोगात्, दिवा सूर्यराशीशयोगात्, रात्रौ चन्द्रराशीशयोगात् सैककरणाच्च कार्यसिद्धिः सहमं स्यात्। सततं = सदा, वर्षारम्भे, सितात् = शुक्रात्, मन्दं=शनिं विशोध्य लग्नयोगः सैकता च कार्या तदा विवाहसद्म=विवाहसहमं स्यात् ॥ १७ ॥

भाषा—दिन में शनि में सूर्य को घटाकर सूर्यराशि के स्वामी को जोड़ना सैकता करना, रात में शनि में चन्द्र को घटाकर चन्द्रराशि को जोड़ना सैक करना तो कार्यसिद्धि सहम होता है। दिन में या रात में वर्षप्रवेश होने से शुक्र में से शनि को घटाकर लग्न जोड़कर शनि शुक्र के बीच लग्न न होने से एक राशि जोड़ना, तो विवाह सहम होता है ॥ १७ ॥

उदाहरण—शनि ..।१०।२९।१३ में सूर्य ..।११।५७।५० को घटाया, शेष में सूर्यराशीश ( मङ्गल ) १।२२।१३।५३ को जोड़दिया तो हुआ १।२०।११।१६। यहां शोध्यर्क्ष ( सूर्यराशि ) और शुद्ध्याश्रयभ ( शनि राशि ) इन दोनों के बीच हो में सूर्यराशीश मङ्गल है, अतः सैकता नहीं लगी, अर्थात् १।२०।११।१६ यही कार्यसिद्धि सहम हुआ। और शुक्र १।२८।१३।१७ में शनि ..।१०।२९।१३ को घटाया, शेष में लग्न जोड़ा ५।१४।३१।८, सैककिया तो ६।१४।३१।८ यही विवाह सहम हुआ ॥ १७ ॥

अथ प्रसव-सन्ताप-सहमयोः साधनमाह—

**गुरोर्बुधं प्रोज्झ्य भवेत्प्रसूतिर्वामं निशीन्दुं शनितो विशोध्य ।**
**षष्ठं क्षिपेदुक्तदिशा सदैव सन्तापसद्माऽरमपास्यशुक्रात् ॥ १८ ॥**
**श्रद्धा सदा प्रोक्तदिशाऽथ पुण्यं विद्याख्यतः प्रोज्झ्य सदा पुरोक्त्या ।**
**प्रीत्याख्यमुक्तं बलदेहसंज्ञे यशःसमे जाड्यमपास्य भौमात् ॥ १९ ॥**
**शनिं विलोमं निशि चान्द्रियोगाद् व्यापारमाराज्ज्ञमपास्य शश्वत् ।**
**पानीयपातः शशिनं विशोध्य सौरेर्विलोमं निशि पूर्ववत्स्यात् ॥ २० ॥**

दिवा वर्षारम्भे गुरोः सकाशाद् बुधं, प्रोज्झ्य=विशोध्य, निशि=रात्रौ, वामं विलोमं, बुधाद्गुरुं विशोध्य लग्नयोगः सैकता कार्या तदा तत् प्रसूतिसहमं स्यात् सदैव दिवारात्रौ नववर्षारम्भे शनितः इन्दुं चन्द्रं विशोध्य षष्ठं भावं क्षिपेद्योजयेत्, उक्तदिशा = कथितरीत्या, लग्नयोगः सैकता च कार्या तदा सन्तापसहमं भवति। सदा=दिवारात्रौ, शुक्रात् आरं=कुजम् अपास्य विशोध्य, प्रोक्तदिशा लग्नयोगः सैकता च कार्या तदा श्रद्धासहमं स्यात्। अथ सदा विद्याख्यतः = शास्त्रसहमात्, पुण्यं पुण्यसहमं प्रोज्झ्य, पुरोक्त्या क्रिया लग्नयोगः सैकता च कार्या तदा प्रीत्याख्यं

सहमं प्रीतिसहमं भवति । अथ यशःसमे यशःसहमसमाने एव बलदेहसंज्ञे सहमे स्तः । अर्थाद्बलदेहयशःसहमानि एकरूपाण्येव भवन्ति । दिवा भौमात्, शनिं विशोध्य, निशि = रात्रौ विलोमं, शनेर्भौमं विशोध्य चान्द्रियोगात् = बुधयोगात् । शोध्यर्क्षेत्यादिना सैकविधानात्, जाड्यं सहमं, स्यात् । शश्वत् = दिवारात्रौ आरात् = कुजात्, ज्ञं = बुधं, अपास्य लग्नयोगः सैकता चेति करणेन व्यापारसहमं स्यात् । दिवा सौरेः = शनेः, चन्द्रं, विशोध्य, निशि = रात्रौ, विलोमं=विपरीतं, चन्द्राच्छनिं विशोध्य पूर्ववत् क्रिया कार्या तदा पानीयपातः सहमं स्यात् ॥१८-२०॥

भाषा—दिन में बृहस्पति में बुधको, रात में बुध में बृहस्पति को घटाकर, लग्न जोड़ना, सैक करना तो प्रसूति सहम होता है । दिन में और रात में भी शनि में चन्द्रमा को घटाकर छठा भाव (रिपुभाव) जोड़ना, लग्नयोग, सैकता करना तो सन्ताप सहम होगा । दिन और रात में भी शुक्र से मङ्गल को घटाकर लग्नयोग, सैकता करना तो श्रद्धा सहम होता है । और सदैव शास्त्र सहम में पुण्यसहम को घटाकर। लग्न योग, सैकता करना तो प्रीति सहम होता है । और बलसहम, देहसहम यशःसहम एक ही होते हैं । दिन में मंगल में शनि को, रात में शनि में मङ्गल को घटाकर बुध को जोड़ने से सैकविधि करने से जाडय सहम होता है ।

दिन में और रात में भी मङ्गल में बुध को घटाकर लग्न जोड़ना, सैकताविधि पूर्ववत् करने से व्यापार सहम होता है । दिन में शनि में चन्द्रमा को, रात में चन्द्रमा में शनि को घटाकर लग्न जोड़ना, सैकता करना तो पानीयपात सहम होगा ॥ १८-२० ॥

उदाहरण—गुरु ..।२।४१।८ में बुध, ११।२३।५८।१९ को घटाया, शेष ..।८।४१।४९ में लग्न ३।२७।७।४ जोड़ा ४।५।५७।३ सैक किया तो प्रसूति सहम ५।५।५७।३ हुआ । और शनि ..।१०।२५।१३ में चन्द्र, ८।२।३१।३३ को घटाया, शेष, ४।९।१५।४० में षष्ठ भाव, ८।२६।१८।४६ जोड़ा तो १।१।३४।२६ सन्ताप सहम हुआ ।

और शुक्र, १।२८।१९।१७ में मंगल, १।२२।१३।५३ को घटाया, शेष ०।६। ५।२४ में लग्न ३।२७।७।४ जोड़ा सैक किया तो ५।३।१२।२८ यह श्रद्धा सहम हुआ ।

और शास्त्र सहम ११।१२।५३।४ में पुण्य ११।१३।४८।४६ को घटाया, शेष में लग्न जोड़ा तो प्रीति सहम हुआ ३।२३।११।२२ यहां सैकता नहीं लगी ।

और मङ्गल १।२२।१३।५३ में बुध ११।२३।५८।१९ को घटाया तो शेष १।२८।१४।४४ में लग्न, ३।२७।७।४ जोड़ दिया ५।२५।२१।४८ सैक किया, तो व्यापार सहम, ६।२५।२१।४८ हुआ ।

और शनि ..।१०।५५।१३ में चन्द्रमा, ८।५।३१।३३ को घटाया, शेष ४।५।

३८।४० में लग्न जोड़ा, ८।२।२८।४४ यहाँ सैकता लगी ६।२।२२।४४ यही पानीयपात अर्थात् वृष्टि सहम हुआ ॥ १८-२० ॥

अथ शत्रु—शौर्योपायदरिद्रगुरुतासहमानामानयनमाह—

**मन्दं कुजात्प्रोज्झ्य रिपुर्विलोमं रात्रौ भवेद्भौमविहीनपुण्यात् ।**
**शौर्यं विलोमं निशि पूर्ववत्स्यादुपाय ईज्यं शनितो विशोध्य ॥ २१ ॥**
**वामं निशि ज्ञं तु विशोध्य पुण्याज्ज्ञं युग्विलोमं निशि तद्दरिद्रम् ।**
**सूर्योच्चतः सूर्यमपास्य नक्तं चन्द्रं तदुच्चाद् गुरुता पुरोक्त्या ॥ २२ ॥**

दिने कुजान्मन्दं = शनिं प्रोज्झ्य=विशोध्य, रात्रौ विलोमं शनेः=कुजं विशोध्य, लग्नयोगः सैकता च कार्या तदा तद्रिपुसहमं स्यात् । दिने भौमविहीनपुण्यात्=पुण्यसहमात्कुजः शोध्यः, निशि विलोमं = कुजात् पुण्यसहमं शोध्यं, पूर्ववत् लग्नयोगः सैकता च कार्या, तदा शौर्यं शौर्यसहमं भवेत् । दिने शनित ईज्यं = गुरुं, निशि = रात्रौ, वामं = विलोमं, गुरोः शनिं विशोध्य लग्नयोगः सैकता च कार्या, तदा उपाय उपायसहमं भवेत्, दिने पुण्यात् = पुण्यसहमात् ज्ञं = बुधम्, विशोध्य, निशि = रात्रौ, विलोमं बुधात् पुण्यं विशोध्य, लग्नयोगस्थले ज्ञयुग्=बुधयुक्तः, तदा दरिद्रसहमं स्यात् ।

दिवा सूर्योच्चतः सूर्यमपास्य, नक्तं = रात्रौ, तदुच्चात्—चन्द्रोच्चात्, चन्द्रं, विशोध्य पुरोक्त्या क्रिया कार्या, तदा गुरुता सहमं स्यात् ॥ २१-२२ ॥

भाषा—दिन में वर्ष प्रवेश होने से मङ्गल में शनि को, रात में शनि में मङ्गल को घटा कर लग्न जोड़ना सैकता करना पूर्ववत् तो यह रिपु सहम होता है ।

दिन में पुण्य सहम में मङ्गल को घटा कर, रात में मङ्गल ही में पुण्य सहम को घटाकर पूर्ववत् लग्नयोग, सैकता करना तब शौर्य सहम होता है । दिन में शनि में बृहस्पति, रात में बृहस्पति में शनि घटा कर, लग्नयोग, सैकता करना, तो उपाय सहम होता है । दिन में पुण्यसहम में बुध को रात में बुध में पुण्य सहम को घटा कर बुध जोड़े, सैकता विधि करे तो दरिद्र सहम होता है । दिन में सूर्योच्च में सूर्य को, रात में चन्द्रोच्च में चन्द्रमा को घटावे, लग्न योग सैकता पूर्ववत् करे तो गुरुता सहम होता है ॥ २१-२२ ॥

उदाहरण—दिन में वर्ष प्रवेश हुआ है अतः मंगल १।२२।१३।५३ में शनि ००।१०।५५।१३ को घटा कर शेष १।११।१८।४० में लग्न ३।२७।७।४ जोड़ा ५।८।२५।४४ सैकक्रिया तो ६।८।२५।४४ रिपुसहम हुआ ।

और पुण्य सहम ११।१९।४८।४६ में मङ्गल १।२२।१३।५३ को घटाकर शेष ९।२५।

२४।९३ में लग्न ३।२७।७।४ जोड़ा १।२४।४१।२७ सैकता नहीं. यही १।२४।४१।९७ शौर्य सहम हुआ ।

और शनि – ।१०।९९।१३ में बृहस्पति -- ।२।४१।८ को घटाकर, शेष --।८।६।९ में लग्न ३।२७।७।४ जोड़ा, तो ४।५।१३।१ सैककिया ५।५।१३।९ वह उपाय सहम हुआ । और पुण्य सहम११।१९।४८।४६ में बुधको ११।२३।५६।९ घटाकर, शेष,११।२२।४९।३७ में बुध ११।२३।१९।.९ जोड़ा तो वैसाही पुण्य सहम यहाँ दिन में दरिद्र सहम हुआ ११।१९।४८।४६ ॥ रात में फर्क पड़ेगा । और सूर्य के उच्च ००।१० में सूर्य -- ।१२।२७।५० को घटाकर, शेष ११।२७।२।१० में लग्न ३।२७।७।४ जोड़ा ३।२४।९।१४ सैक किया तो गुरुता सहम ४।२४।९।१४ हुआ ॥ २१-२२ ॥

जलपथबन्धनसहमानयनमाह—

**कर्कार्धतः ३।१५ प्रोज्झय शनिं स्याज्जलाध्वान्यथा निशि ।**
**पुण्याच्छनिं विशोध्याह्नि वामं निशि तु बन्धनम् ॥ २३ ॥**

दिवा कर्कार्धतः=सार्धराशित्रयात् ३।१५ शनिं विशोध्य, निशि=रात्रौ, अन्यथा शनेः सार्धराशित्रयं विशोध्य लग्नयोगः सैकता स्मर्तव्या, तदा जलाध्वसहमं स्यात् ।

अह्नि=दिने, पुण्यात्=पुण्यसहमात्, शनिं विशोध्य, निशि रात्रौ वाममर्थात्, शनेः पुण्यं विशोध्य लग्नयोगः सैकता च कार्या तदा बन्धनं सहमं स्यात् ॥ २३ ॥

भाषा—दिन में वर्षप्रवेश होने से कर्कार्ध ३।१५ में शनि को घटावे, रात में शनि ही में कर्कार्ध को घटाके लग्न जोड़ना, एक जोड़ने का विचार करना तो जलाध्व (अम्बुपथ) सहम होता है । जिससे आजकल्ह जहाजी यात्रा नौका यात्रा का विचार होता है ।

दिन में वर्ष प्रवेश होने से पुण्य सहम में शनि को घटावे, रातको शनि ही में पुण्यसहम को घटावे, लग्नयोग सैकता तारतम्य पूर्ववत् तो बन्धन सहम होता है॥२३॥

उदाहरण—कर्कार्ध ३।१५।०।० में शनि ..।१०।२५।१३ को घटा कर शेष ३।४।४।४७ में लग्न ३।२७।७।४. जोड़ा, ७।१।११।५१, सैक किया. ८।१।११।५१ यह जलाध्व, ( जलपथ ) सहम हुआ ।

और पुण्य सहम . ११।१९।४८।४६ में शनि ..।१०।२५।१३ को घटा कर शेष ११।८।५३।३३ में लग्न ३।२७।७।४ जोड़ा, तो ३।६।०।३७ यहां सैकता नहीं लगी, अतः यही ३।६।०।३७, बन्धन सहम हुआ ॥ २३ ॥

अथ कन्याऽश्वसहमयोः साधनमाह—

**चन्द्रः सितादपास्योक्तं सदा कन्याख्यमुक्तवत् ।**
**पुण्यादर्कमपास्यायायोगादश्वोऽन्यथा निशि ॥ २४ ॥**

सदा=दिने रात्रौ च सितात्=शुक्रात्, चन्द्रं, अपास्य उक्तवत् क्रिया लग्नयोगः सैकता च कार्या तदा कन्याख्यं सहममुक्तं=कथितम् । दिवा वर्षप्रवेशे पुण्यात्=पुण्यसहमात्, अर्कं=सूर्यम्, अपास्य=विशोध्य, निशि=रात्रौ, अन्यथा, सूर्यादेव पुण्यसहमं विशोध्य, लग्नयोगस्थले आयभावयोगात्, अश्वः=अश्वसहमं स्यात् ॥ २४ ॥

भाषा—दिन में और रात में भी, शुक्र में चन्द्रमा को, घटा कर लग्न योग, सैकता विधि पूर्ववत् करना तो कन्या सहम होता है । तथा दिन में पुण्य सहम में सूर्य को, रात में सूर्य ही में से पुण्य सहम को घटा कर आय ( एकादश ) भाव जोड़ना, सैक करना पूर्ववत्, तो अश्व सहम होता है ॥ २४ ॥

उदाहरण—शुक्र । १।२८।१९।१७ में चन्द्रमा । ८।४।३९।३३ को घटा कर शेष ४।२२।३६।४४ में लग्न । ३।२७।७।४ जोड़ा सैक किया । १०।१९।४६।४८ यही कन्या सहम हुआ ॥

और पुण्य सहम ११।१६।४८।४६ में सूर्य--१२।५३।५० घटा कर शेष ११।६।५०।५६ में आय भाव ११२५।३०।२८ जोड़ा तो ११।२१।२४ यही अश्व ( घोड़ा ) सहम हुआ । यहां सैकता क्रिया नहीं लगी ॥ २४ ॥

पञ्चाशदधिकान्यपि सहमान्युक्तानि यादवेन । तानि बहुत्वात्प्रयोजनाभावाच्चोपेक्षितानि । परन्तु पितृव्याखेटकभृत्यबुद्धिसहमान्युक्तानि ताजिकमुक्तावल्याम्—

सूर्ये मन्दविशुद्धे पितृव्यसहम विलग्नाढ्ये ।
षष्ठं षष्ठेशोने सव्ययमाखेटकं भवति ॥
सौम्यं विशोध्य चन्द्राल्लग्नाढ्यं भृत्यसहमं स्यात् ।
जीवः सूर्यविहीनो लग्नयुतो बुद्धिसहमं स्यात् ॥
रात्रौ तद्विपरीतं ज्ञेयं सर्वत्र पूर्ववद्ध्येयम् ॥ इति ।

अथान्यसहमानामानयनमुक्तं हिल्लाजताजिके—

लाभं लाभेशोनं लग्नयुतं प्राप्तिसहमं स्यात् ।
लग्नं तुर्येशोनं लग्नयुतं स्यान्निधेः सहमम् ॥
वैर्यं माहात्म्यसहम, ज्ञानसमं ज्ञातिसहमं स्यात् ।
मन्दः शुक्रविहीनो लग्नयुतः स्याद्रणं सहमम् ॥
सुतपो लग्नविहीनः पञ्चमभावान्वितोऽथ गर्भसहमं स्यात् ।
चन्द्रो बुधेन हीनो लग्नयुतः सत्यसहमं स्यात् ॥
एषां वै सहमानां दिनरात्रिकृतो न भेदोऽस्ति ॥ इति ॥

इति सहमसाधनप्रकरणम् ।

अथ सहमफलप्राप्तिसमयसाधनमाह—

**स्वनाथहीनं सहमं तदंशाः स्वीयोदयघ्ना विहृतास्त्रिशत्या ।**
**तत्सद्मपाको दिवसैर्हि लब्धैः स्यात्तद्दशायां तदसम्भवे वा ॥ २५ ॥**

सहमं स्वनाथहीनं = तत्सहमेशग्रहवर्जितं कार्यम् , तदंशाः = कार्याः, स्वीयोदयघ्नाः=सहमाश्रयराशेः स्वदेशोदयेन गुणिताः, शतत्रयेण विहृताः=भक्ताः, तत्र लब्धैर्दिवसैः तत्सद्मपाकः = तत्सहमफलप्राप्तिसमयः स्यात् । एतदागतफलं दिनादिकं सौरमानेन लवादिकम् , तदंशस्थाने शतत्रयेण भक्तं, तदा सौरमानेन मासादिकमर्थाद्राश्यादिकं जातं, तद्वर्षप्रवेशकालिकसूर्ये योजितं सद्यद्भवति, तत्तुल्ये सूर्ये तत्सहमफलं भवतीति स्पष्टम् । केषांचिदेवं मतम्-सहमेश्वरदशारंभदिनात्तावद्भिरेवानीतैः सौरदिनाद्यैस्तत्सहमफलप्राप्तिरिति । तदसम्भवे=तत्सहमफललाभसमयाभावे, तद्दशायां तत्सहमेश्वरदशायां तत्सहमफलं स्यात् । अर्थाद्यदा सहमराश्यादितुल्यमेव तत्सहमेश्वरग्रहराश्यादिमानं तदा स्वनाथहीनं सहममित्यादिना शेषस्य शून्यत्वात्तत्सहमफलप्राप्तिसमयः शून्यसम एवातस्तत्रोपायः प्रदर्शितः ॥ २५ ॥

भाषा—सहम के राश्यादि में उसके स्वामी ग्रह के राश्यादि को घटावे शेष जो राश्यादिक हो, उसमें राशि को तीस से गुणा करके उसमें अग्रिम अवयव जो अंश है उसको जोड़े, तो अंशादिक हुआ, अब सहम जिसराशि में है, उसका जो स्वोदय हो उससे उस अंशादिक को गुणा करे, तीनसौ से भाग दे, प्रथम लब्ध दिन हुआ, शेष को साठ से गुणा कर कला जोड़े फिर तीन सौसे भाग दे, लब्धि दण्ड ( घटी ) हुआ । शेष को फिर साठसे गुणा कर विकलाजोड़े, तीन सौ से भाग दे, तो लब्धि पल होगा। इस प्रकार सब एक जगह लिखने से दिन दण्ड पल दशाभोगकाल होगा । दिन को ३० से भाग दिया तो मासादिक फलपाकसमय हुआ । इसको वर्षप्रवेशकालिक सूर्य में जोड़ा, जो हुआ, उतनेसूर्य होने से उस सहम का फलभोगसमय हुआ । यदि सहम, सहमेश्वर ग्रह समान होय तो उन दोनों का अन्तर शून्य हो जायगा, उसको तीस से भाग देनेपर भी दिनादि शून्य ही होगा, वहां सहमपति की दशा में सहमफल कहना ।

उदाहरणम्—यथा पुण्यसहम ११।१९।४८।४६ इतना है, इस का स्वामी बृहस्पति ००।२।४९।८ हैं इसलिये पुण्य सहम ११।१९।४८।४६ में बृहस्पति को घटाकर, शेष ११।१६।५९।३८ को पुण्य सहम के राशि ( मीन ) के उदय मान २२१ से गुणा किया, तो ७६४६६।१३०३१।८३९८ सठिआया ७६६८५।३८।५८ तीन सौ से भाग देने पर लब्धि २५५।३७।७ यह दिन घटी पल क्रम से हुई । वर्षारम्भ समय से इतने दिनादि में सहमफल का लाभ होगा, ऐसा समझना ॥ २५ ॥

इति सहमसाधनप्रकरणम्

---

अथ सहमफलानि व्याख्यायन्ते—

**स्वोच्चादिसत्पदगतो यदि लग्नदर्शी वीर्यान्वितः सहमपो यदि नेक्षतेऽङ्गम्।**
**नासौबलीरविशशिश्रितमेशदर्शपूर्णान्तलग्नपबलस्य विचारणेत्थम् ॥२६॥**

यदि सहमपः = सहमस्वामी, स्वोच्चादिसत्पदगतः, लग्नदर्शी च भवेत्तदा-वीर्यान्वितः=बलयुक्तः, स्यात् । यदि च स्वोच्चादिसत्पदगतोऽपि अङ्गं= लग्नं, न ईक्षते=न पश्यति, तदाऽसौ सहमपः बली नैव भवति । इत्थममुना प्रकारेण, रविशशिश्रितमेशदर्शपूर्णान्तलग्नपबलस्य=रविराशीशस्य चन्द्रराशीशस्य, गतदर्शान्तकालिकलग्नेशस्य गतपूर्णान्तकालिकलग्नेशस्य च विचारणा=बलाबलविवेचना कार्या ॥ २६ ॥

भाषा—यदि जिस सहम का स्वामी, अपने उच्च गृही, नवांश आदि शुभवर्ग में गत हो, लग्नदर्शी भी हो तो बलयुक्त होता है। यदि स्वोच्चादि सत्पद में रह कर भी लग्न को नहीं देखे तो बलवान् नहीं होता। इस तरह रविराशीशका, चन्द्रराशीशका अमान्त पूर्णान्त कालिक लग्न के स्वामी की, बल-विवेचना करनी चाहिये ॥ २६ ॥

अथ निर्बलग्रहलक्षणमाह—

**पञ्चवर्गीबलेनोनो न हर्षस्थानमाश्रितः ।**
**अबलोऽयं लग्नदर्शी बली स्वल्पेऽस्ति चेत्पदे ॥ २७ ॥**

यो ग्रहः पञ्चवर्गीबलेन=क्षेत्रोच्चहद्दाद्दकनवांशसिद्धबलयोगबलेन हीनो वर्जितः, पञ्चाल्पसंख्यात्मकबलवान् स्यात् । तथा हर्षस्थानं नन्दत्रिषडित्यादिविदितं न आश्रितः = स्थितः, तदा सोऽयं ग्रहोऽबलः स्यात् । चेत् स्वल्पेऽपि पदे स्थितो ग्रहो लग्नदर्शी भवेत्तदाऽसौ बली भवति । वा केचित्, लग्नादर्शीति पाठं मन्यन्ते, तत्र लग्नादर्शी=लग्नाद्द्वितीयषष्ठाष्टमव्ययस्थानगतो ग्रहोऽबलः स्यात्तेषु दृष्ट्यभावात्॥२७॥

भाषा—पञ्चवर्गी बल से हीन जो ग्रह, तथा हर्ष स्थान में अप्राप्त जो ग्रह सो निर्बल कहाता है। लग्न को देखने वाला यदि स्वल्प भी पद पर बैठा हो, तो बलवान् होता है। वा लग्नादर्शी पाठ से, लग्न को नहीं देखने वाला ग्रह निर्बल होता है ॥२७॥

अथ सहमबलविवेकमाह—

**स्वस्वामिना शुभखगैः सहितं च दृष्टं स्वामी बली च यदि तत्सहमस्य वृद्धिः।**
**यत्स्वामिना शुभखगैश्च न युक्दृष्टं तत्संभवो नहि भवेदिति चिन्त्यमादौ २८**

यत् सहमं स्वस्वामिना, शुभखगैः = शुभग्रहैः = चन्द्रबुधगुरुभृगुभिः सहितं दृष्टं च भवेत्, तथा तस्य स्वामी ग्रहो बली = पञ्चवर्गबलाधिकः, हर्षस्थानस्वो-

च्चादिपदगतः । तदा तत्सहमस्य वृद्धिर्भवति । यत् सहमं स्वामिना = सहमपतिना, शुभखगैश्च न युक्तदृष्टं तत्सम्भवः = तत्सहमविषयलाभो नहि भवेदित्यादौ विचिन्त्यम् ॥ २८ ॥

भाषा—जो सहम, अपने स्वामी ग्रह से, शुभग्रहोंसे भी युत दृष्ट हो और उसका स्वामी ग्रह बली हो, तो उस सहम की वृद्धि ( बढ़ती ) होती है । और जो सहम स्वामी से शुभग्रहों से युत दृष्ट नहीं हो, उस सहम में जिस विषय का विचार करना हो उसका सम्भव भी नहीं होता है ऐसा पहले समझना चाहिये ॥ २८ ॥

अथान्यत्सहमासम्भवलक्षणमाह—

**अष्टमाधिपतिना युतेक्षितं पापदृग्युतमथेत्थशालि तैः ।**
**सम्भवेऽपि विलयं प्रयाति तत्तेन जन्मनि पुरेदमीक्ष्यताम् ॥ २९ ॥**

यत् सहमं, अष्टमाधिपतिना = अष्टमेशेन युतेक्षितं, पापदृग्युतं; तैः पापैः इत्थशालि, तत् सहमफलं, सम्भवेऽपि विलयं=नाशं प्रयाति तेन हेतुना तदिदं पुरा पूर्वं, जन्मनि = जन्मकाले ईक्ष्यतां=विचार्यताम् ॥ २९ ॥

भाषा—जो सहम अष्टमेश से युत दृष्ट हो, और पापग्रहों से इत्थशाल करता हो तो वह सहम सम्भव रहने पर भी नाश हो जाता, अर्थात् उसका फल कुछ नहीं होता है । इस कारण से उस सहम को जन्मकाल में पहले विचार कीजिये ॥ २९ ॥

वर्षे बलिष्ठसहमस्यैव विचारः कार्यस्तदाह—

**आदौ जन्मनि सर्वेषां सहमानां बलाबलम् ।**
**विमृश्य सम्भवो येषां वर्षे तानि विचिन्तयेत् ॥ ३० ॥**

आदौ=पूर्वं, जन्मनि=जन्मकाले, सर्वेषां सहमानां बलाबलं, विमृश्य=विचार्य, येषां सहमानां सम्भवः=फलदातृत्वसम्भवस्तान्येव सहमानि वर्षे विचिन्तयेत् ॥ ३० ॥

भाषा—पहले जन्मकालमें सब सहमों के बलाबल का विचार कर, जिन २ सहमोंके सम्भव मालुम पड़े, वे ही सहम वर्षकालमें विचारने चाहिये ॥ ३० ॥

अथ पुण्यसहमविचारमाह—

**सबले पुण्यसहमे धर्मसिद्धिर्धनागमः ।**
**शुभस्वामीक्षितयुते व्यत्यये व्यत्ययं विदुः ॥ ३१ ॥**

पुण्यसहमे सबले स्वामिशुभयुतदृष्टे, सति धर्मसिद्धिः, धनागमः स्यात् । व्यत्यये=विपरीतेऽर्थात्पुण्यसहमे=दुर्बले, व्यत्ययं=पापप्रवृत्तिः अपव्ययश्चेति विदुः । ३१ ।

भाषा—पुण्यसहम सबल हो, शुभ स्वामी से दृष्ट युत हो, तो धर्मप्राप्ति, धनलाभ होता है । विपरीतमें विपरीत फल कहते हैं ॥ ३१ ॥

अथ पुण्यसहमस्याशुभफलत्वं सापवादमाह—

**लग्नात्षष्ठाष्टरिःफस्थं धर्मभाग्ययशोहरम् ।**
**शुभस्वामिदृशा प्रान्ते सुखधर्मादिसम्भवः ॥ ३२ ॥**

पुण्यसहमं वर्षलग्नात् षष्ठाष्टरिःफस्थं=रिपुमृत्युव्ययभावगतं, तदा धर्मभाग्ययशोहरं भवति । शुभस्वामिदृशा प्रान्ते=वर्षान्ते, सुखधर्मादिसम्भवो भवति ॥ ३२ ॥

भाषा—पुण्य सहम वर्ष लग्न से छठे आठवें वारहवें में हो तो धर्म भाग्य यशको हरण करता है । शुभ ग्रह, स्वामीग्रह से देखा जाय तो वर्षके अन्त में सुख, धर्म आदि का सम्भव होता है ॥ ३२ ॥

शुभपापग्रहसम्बन्धेन युतिदृष्ट्योः फलमाह—

**पापयुक्शुभदृष्टं चेदशुभं प्राक् ततः शुभम् ।**
**शुभयुक्तं पापदृष्टमादौ शुभमसत्परे ॥ ३३ ॥**

पुण्यसहमं पापयुक् शुभदृष्टं च भवेत्तदा प्राक् पूर्वमशुभं, ततः पश्चाच्छुभं भवेत् । यदि शुभयुक्तं पापदृष्टं तदाऽऽदौ शुभं परे = तत्परस्मिन् काले असदशुभं स्यादिति ॥ ३३ ॥

भाषा—जिस वर्षमें पुण्यसहम पापग्रहसे युत, शुभग्रहसे दृष्ट हो, उस वर्षमें पहले अशुभ पीछे शुभ हो । जहां पुण्यसहम शुभयुक्त, पापदृष्ट हो वहां पहले शुभ, बाद अशुभ होय । जहां पापयुक्त, पापदृष्ट भी हो शुभग्रहसे युत दृष्ट नहीं हो, वहां वर्ष भर अशुभ ही कहना । जहां शुभयुक्त दृष्ट भी हो, तो साल भर शुभ कहना । इतना अपने तरफ से समझना ॥ ३३ ॥

**यत्राब्दे पुण्यसहमं शुभं सोऽत्र शुभावहः ।**
**अनिष्टेऽस्मिन् शुभो नेति पुण्यमादौ विचारयेत् ॥ ३४ ॥**

यत्र=यस्मिन् , अब्दे=वर्षे, पुण्यसहमं शुभं अत्र सः अब्दः शुभावहः=शुभप्रदो भवति । अस्मिन्=पुण्यसहमे, अनिष्टे=अशुभे, दुर्बले, पापयुतेक्षिते, तदा, शुभो नैवेत्यादौ पुण्यसहममेव विचारयेत् ॥ ३४ ॥

भाषा—जिसवर्ष में पुण्यसहम शुभ ( शुभदायक ) हो वह वर्ष शुभ होता है । वह पुण्यसहम अशुभ (पापयुत, पापदृष्ट तथा दुर्बल) हो तो वह वर्ष शुभ नहीं होता, इसलिये वर्ष में पहले पुण्य सहम को विचारना चाहिये ॥ ३४ ॥

**सूतौ षष्ठाष्टरिःफस्थं मध्ये पापहतं पुनः ।**
**पुण्यधर्मार्थसौख्यघ्नं पत्यौ दग्धे फलं तथा ॥ ३५ ॥**

सूतौ जन्मनि पुण्यं सहमं षष्ठाष्टरिःफस्थं, वर्षे पुनः पापहतं=पापयुतेक्षितं,

तदा धर्मार्थसौख्यघ्नं धर्मधनसुखनाशकं भवति । तथा पुण्यसहमस्य पत्यौ=स्वामिग्रहे, दग्धे=अस्तङ्गते सत्यपि तथाऽनिष्टं फलं ज्ञेयम् ॥ ३५ ॥

भाषा—जन्मकालमें पुण्यसहम ६।८।१२ इन स्थानोंमें हो, वर्षकालमें फिर पापग्रहसे युत दृष्ट हो, तो धर्म, धन, सुख का नाश होता है। और पुण्य सहम का स्वामी अस्तङ्गत हो तो वैसे ही फल समझना ॥ ३५ ॥

सहमान्यखिलानीत्थं सूतौ वर्षे विचिन्तयेत् ।
मान्द्यारिकलिमृत्यूनां व्यत्ययादादिशेत्फलम् ॥ ३६ ॥

सूतौ=जन्मनि, वर्षे=वर्षकाले, इत्थममुना प्रकारेण अखिलानि=सर्वाणि, सहमानि विचिन्तयेत् । मान्द्यारिकलिमृत्यूनां सहमानां व्यत्ययात्=विलोमात्, फलमादिशेत्=कथयेत् । रोग-शत्रु-कलि-मृत्युसहमानां सबलत्वे तत्फलस्याशुभस्य पुष्टत्वाद्दुर्बलत्वे तदशुभफलस्य क्षीणत्वात्फलवैपरीत्यं ज्ञेयम् ॥ ३६ ॥

भाषा—जन्मकालमें और वर्षकालमें इस प्रकार सब सहमों को विचारे। रोगसहम, शत्रुसहम, कलिसहम, मृत्युसहमों का फल विपरीत से कहना। अर्थात् जो अनिष्ट सहम है, वह यदि बलवान् होगा, तो अनिष्ट फल अधिक होगा। जो अनिष्ट सहम दुर्बल होगा, तो अनिष्टफल कम होगा। यह सारांश है ॥ ३६ ॥

अथ कार्यसिद्धिसहमशुभाशुभफलमाह—

कार्यसिद्धिसहमं युतं शुभैर्दृष्टमूथशिलगं जयप्रदम् ।
सङ्गरेऽथ शुभपापदृष्टियुक् क्लेशतो जय उदीरितो बुधैः ॥३७॥

कार्यसिद्धिसहमं शुभैर्युतं वा दृष्टमूथशिलगं दृष्टं कृतेत्थशालं च, तदा सङ्गरे=सङ्ग्रामे, जयप्रदं भवति । अथ तत् कार्यसिद्धिसहमं शुभपापदृष्टियुक्=शुभदृष्टं पापयुक्तं, वा शुभयुक्तं पापदृष्टं तदा क्लेशतः=कष्टात्, बुधैः, पण्डितैर्जयः=शत्रुपराजयः, उदीरितः=कथितः ॥ ३७ ॥

भाषा—कार्यसिद्धि सहम शुभ ग्रहों से युत हो, दृष्ट हो, या इत्थशाल करता हो, तो लड़ाई में जय देता है। यदि कार्यसिद्धिसहम शुभग्रह तथा पाप ग्रहोंसे दृष्ट युत हो, तो कष्ट से ( अधिक प्रयास से ) जय होता है, यह पण्डितोंसे कहा गया है ॥३७॥

अथ कलिसहमस्य शुभाशुभमाह—

कलिसद्म मिश्रखगदृष्टिसंयुतं यदि पापमूथशिलगं कलेर्मृतिम् ।
अथ तत्र सौम्यसहितावलोकिते जयमेति मिश्रदृशितः कलिव्यथे ॥३८॥

कलिसद्म=कलिसहमं, यदि मिश्रखगदृष्टि युतं=पापशुभदृष्टिसंयुतं, वा पापमूथशिलगं=पापग्रहेत्थशालयुक्तं, तदा कलेः=कलहात् झकटकात्, मृतिं मृत्युं

प्राप्नोति । अथ तत्र = कलिसहमे सौम्यसहितावलोकिते = शुभयुक्ते शुभदृष्टे च सति जयमेति मिश्रदृगितः=पापशुभदृशितः, कलिव्यथे=कलहपीड़े, च भवतः ॥३८॥

भाषा—यदि कलिसहम पाप शुभग्रहों से दृष्ट या युत हो, वा पापग्रहसे इत्थशाल करता हो, तो कलह ( लड़ाई ) से मरण ( मौत ) होती है। यदि कलिसहम शुभ ग्रहसे युक्त दृष्ट हो तो जय कहना। पाप शुभकी दृष्टि से कलह और पीड़ा कहना॥३८॥

अथ विवाहसहमस्य शुभाशुभफलमाह—

**विवाहसद्माधिपसौम्यदृष्टं युतं शुभैर्मूथशिलं शुभाप्तिम् ।**
**कुर्याद्यदा मिश्रसमेतदृष्टं कष्टादथ क्रूरमृतीश्वरैर्न ॥ ३९ ॥**

विवाहसद्म, आधपसौम्यदृष्टं=स्वस्वामिग्रहशुभग्रहाभ्यामवलोकितं वा युतं, शुभैर्मूथशिलं=कृतेत्थशालं च भवेत्तदा शुभाप्तिं=विवाहसम्भवं कुर्यात्। तत्रापि तत्सहमराशेः स्वामिनि शुभग्रहे, शुभयोगे बलवति तद्राशौ महतो जनस्य गृहे विवाहः। वा तत्सहमराशौ क्रूरे क्रूरस्वामिके, नीचगृहे विवाह इति स्वतर्कः कार्यः। यदा तत्सहमं मिश्रसमेतदृष्टं=पापशुभयुतवीक्षितं, तदा कष्टात्=प्रयासाधिक्यात्, विवाहसम्भवः। यदि विवाहसहमं क्रूरैः पापैः मृतीश्वरेणाष्टमेश्वरेण युतं वीक्षितमित्थशालि च भवेत्तदा न विवाहसम्भवः॥ ३९ ॥

भाषा—विवाहसहम अपने स्वामी, शुभ ग्रहोंसे दृष्ट, युत हो, शुभग्रहसे इत्थशाल करता हो तो शुभकी प्राप्ति अर्थात् विवाह सम्भव होता है। अगर शुभग्रह, पापग्रह से युत दृष्ट हो तो कष्टसे अधिक प्रयाससे विवाहसम्भव कहना। यदि पाप ग्रहसे तथा अष्टमेश्वर से युत दृष्ट हो, या इत्थशाल होता हो तो विवाह नहीं होता है॥ ३९ ॥

अथ यशःसहमस्य फलमाह—

**यशोऽधिपे नैधनगे खलेन युतेक्षिते सद्यशसो विनाशः ।**
**पापार्जितस्यायशसोऽस्ति लाभो नष्टौजसि स्यात्कुलकीर्तिनाशः ॥४०॥**

यशोऽधिपे=यशःसहमनाथे, नैधनगेऽष्टमस्थानस्थिते, खलेन = पापेन, युतेक्षिते=संयुतदृष्टे, तदा सति सद्यशसः सत्कीर्तेर्विनाशः = क्षयः, स्यात्। पापार्जितस्य=दुराचरणजनितस्य, अयशः = अपवादस्य, लाभः = प्राप्तिः, अस्ति। यशःसहमेश्वरे नष्टौजसि = अस्तगते, नितान्तक्षीणबले च सति कुलकीर्तिनाशः = वंशपरम्परागतप्रतिष्ठालोपः स्यात् ॥ ४० ॥

भाषा—यशःसहम के स्वामी अष्टम स्थान में हो, पापग्रह से युत दृष्ट हो, तो उत्तम यश का नाश होता है। और खराब कामों से होने वाला अयश होता है।

यश सहम के स्वामी यदि क्षीणबल, अस्तंगत हो तो कुलक्रमागत ( बापदादों के ) यश का भी नाश होता है ॥ ४० ॥

**शुभेत्थशाले शुभदृग्युते वा बलान्विते स्याद्यशसोऽभिवृद्धिः ।**
**युद्धे जयो वाहनशस्त्रलाभः पापेसराफाद्यशोऽर्थनाशः ॥ ४१ ॥**

यशःसहमाधिपे, शुभेत्थशाले शुभदृग्युते, वा बलान्विते तदा सद्यशसः, अभिवृद्धिः = परिपूर्णत्वं स्यात् युद्धे = संग्रामे, जयः = शत्रुपराजयपूर्वकस्वोन्नतिः स्यात् । वाहनशस्त्रलाभः स्यात् । पापेसराफात् = पापग्रहकृतेसराफयोगात्, अयशः, अर्थनाशः = धनक्षयः स्यात् ॥ ४१ ॥

भाषा—यश सहम के स्वामी को शुभग्रह से इत्थशाल होता हो, तथा दृष्ट युत हो या बलपूर्ण हो तो अच्छे यश की वृद्धि होती है । लड़ाई में जय, वाहन शस्त्र का लाभ होता है । पापग्रह से ईसराफ योग होनेसे अयश तथा धनका नाश होता है॥४१॥

अथाशासहमविचारमाह—

**आशा तदीशश्च षडष्टरिःफविवर्जितः सौम्ययुतेक्षितश्च ।**
**स्याद्वाञ्छितार्थाम्बरवाहनादिलाभः खलेक्षायुतितोऽतिदुःखम् ॥ ४२ ॥**

आशासहमं, तदीशः = आशासहमेश्वरश्च, षडष्टरिःफवर्जितः=षष्ठाष्टमद्वादशस्थानेभ्योऽन्यत्र गतः, सौम्ययुतेक्षितः = शुभग्रहेण संयुतो दृष्टश्च भवेत्तदा वाञ्छितार्थाम्बरवाहनादिलाभः = अभीष्टार्थवस्त्रवाहनप्रभृतिलाभः, स्यात् । खलेक्षायुतितः = पापग्रहदृष्टियोगाद् अतिदुःखं स्यात् ॥ ४२ ॥

भाषा—आशासहम और उसका ( आशासहमका ) स्वामी लग्न से ६, ८, १२ इन स्थानों में न हों, तथा दोनों, शुभग्रहों से युत, या दृष्ट हों तो अभिलषित धन, वस्त्र, वाहन आदि का लाभ होता है । उन दोनों ( आशासहम और उसके पति ) को पापग्रह से युत या दृष्ट होने से अत्यन्त दुःख होता है ॥ ४२ ॥

अथ रोगसहमशुभाशुभविचारमाह—

**मान्द्याधिपः पापयुतेक्षितश्च पापः स्वयं रोगकरो विचिन्त्यः ।**
**चेदित्थशालो मृतिपेन मृत्युस्तदा भवेद्धीनबलेऽतिकष्टात् ॥ ४३ ॥**

मान्द्याधिपः = रोगसहमेश्वरः, पापयुतेक्षितः, स्वयमपि पापस्तदा रोगकरो विचिन्त्यः । चेत्तादृशः स रोगसहमेशः, मृतिपेन = अष्टमाधिपतिना, इत्थशाली=मुथशिली, तदा मृत्युः स्यात् । अथ तादृशे रोगसहमेशे हीनबले = क्षीणबले, सति अतिकष्टाद्विशेषक्लेशान्मृत्युः स्यात् ॥ ४३ ॥

भाषा—रोगसहमेश यदि पापयुत, पापदृष्ट हो, स्वयं भी पापग्रह हो तो रोग करता है। यदि वैसा ही रोगसहमेश अष्टमेश से इत्थशाल करता हो, तो मरण होता है। यदि वैसे ही रोग सहमेश बलहीन हो, तो क्लेशाधिक से मरण कहना ॥ ४३ ॥

**स्वस्वामिसौम्येक्षणभाजि मान्द्ये नाथे सबले ऽष्टषडन्त्यवर्ज्ये।**
**रोगस्तदा नैव भवेद्विमिश्रैर्युतेक्षिते रुग्भयमस्ति किंचित् ॥ ४४ ॥**

मान्द्ये=रोगसहमे, स्वस्वामिसौम्येक्षणभाजि=रोगसहमेशशुभग्रहदृष्टियुक्ते सति, तथा तन्नाथे सबलेऽष्टषडन्त्यवर्ज्ये = अष्टमषष्ठव्ययस्थानरहिते, तदा रोगो रोगप्राप्तिर्नैव भवेत्। विमिश्रैः = पापशुभैः, युतेक्षिते = संयुतदृष्टे, किंचित् = स्वल्पं, रुग्भयं=रोगभयमस्ति। इति विज्ञेयम् ॥ ४४ ॥

भाषा—रोगसहम यदि अपने स्वामी ग्रह से, या शुभग्रह से दृष्ट हो, तथा रोगसहमेश सबल हो ६।८।१२ इन स्थानों से अलग हो, तो रोग नहीं होता। यदि पाप ग्रह शुभग्रह दोनों से युत दृष्ट हो, तो थोड़ा रोग का भय होता है ॥ ४४ ॥

अथ अर्थसहमविचारमाह—

**अर्थाख्यं शुभनाथदृष्टसहितं द्रव्यागमात्साख्यदं**
**पापैर्दृष्टयुतं च वित्तविलयं कुर्यादथो पापयुक्।**
**सद्दृष्टं च शुभेत्थशालि यदि तत्पूर्वं धनं नाशये-**
**त्पश्चादर्थसमुद्भवं च ससुखं व्यत्यासतो व्यत्ययः ॥ ४५ ॥**

अर्थाख्यं=अर्थसहमं, शुभनाथदृष्टसहितं, तदा द्रव्यागमात् सौख्यदं भवति। यदि पापैर्दृष्टयुतं तदा वित्तविलयं=धनक्षयं, कुर्यात्। अथो यदि तदर्थसहमं पापयुक्, सद्दृष्टं=शुभग्रहदृष्टं, तथा शुभग्रहेण इत्थशालकर्तृ भवेत्, तदा पूर्वं = पूर्वार्जितं, धनं नाशयेत्। पश्चात् = अनन्तरं, ससुखं = सानन्दं, अर्थसमुद्भवं = धनलाभं कुर्यात्। व्यत्यासतः=उक्तविलोमात्, अर्थात् शुभयुक्, पापदृष्टं च यदि भवेत्तदा व्यत्ययः=उक्तफलविलोममर्थात् सदुःखं धनक्षयः स्यादिति ॥ ४५ ॥

भाषा—अर्थसहम शुभग्रहों से या अपने स्वामी से दृष्ट युत हो तो द्रव्य के लाभ से सुख होता है। और यदि पापग्रहों से दृष्ट युत हो तो धनक्षय करता है। यदि पाप से युक्त, शुभग्रह से दृष्ट हो तथा शुभग्रह से इत्थशाल करता हो तो पहले की सम्पत्ति को नाश करता है। पीछे धन का लाभ और आनन्द मिलता है। इससे विपरीत रहने से विपरीत फल होता है ॥ ४५ ॥

अथ शत्रुमित्रदृष्ट्योः फलमाह—

**रिपुदृष्ट्या रिपोर्भीतिस्तस्करादेर्धनक्षयः।**
**मित्रदृष्ट्या मित्रयोगाद्धनं मानो यशः सुखम् ॥ ४६ ॥**

रिपुदृष्ट्या १।४।७।१० एतदन्यतमदृष्ट्या, रिपोः = शत्रोर्भीतिर्भयं स्यात् । तस्करादेः=चौरादेः, सकाशात्, धनक्षयः=धननाशः, स्यात् । मित्रदृष्ट्या ३।५।९। ११ एतदन्यतमदृष्ट्या, मित्रयोगाद्धनं, मानः = सम्मानः, यशः = प्रतिष्ठा, सुखम् = मनोविनोदश्च भवतीति ॥ ४६ ॥

भाषा—शत्रुदृष्टि से शत्रुभय, अग्नि राजा से भय, और धन नाश होता है । मित्र दृष्टि से मित्र के द्वारा धनलाभ, सम्मान लाभ, यश, सुख, ये सब होते हैं ॥ ४६ ॥

अथ पुत्रसहमविचारमाह—

**सत्स्वामिदृष्टं युतमात्मजस्य लाभं सुखं यच्छति पुत्रसद्म ।**
**पापान्वितं सौम्यखगेत्थशालि प्राग्दुःखदं पुत्रसुखाय पश्चात् ॥ ४७ ॥**

पुत्रसद्म=पुत्रसहमं, सत्स्वामिदृष्टं=शुभस्वामिवीक्षितं, युतं च भवेत् तदाऽऽत्मजस्य = पुत्रस्य, लाभं, सुखं च यच्छति = ददाति । यदि पुत्रसहमं पापान्वितं, सौम्यग्रहेत्थशालयुक्तं, तदा प्राक्=पूर्वं, दुःखदं पश्चात् पुत्रसुखाय भवतीति स्पष्टम् ॥ ४७ ॥

भाषा—यदि पुत्र सहम स्वस्वामी से, शुभग्रह से दृष्ट हो, तथा युत भी हो, तो पुत्रप्राप्ति होती है, सुख होता है । यदि पुत्रसहम, पापग्रह से युक्त हो शुभग्रह से इत्थशाल करता हो, तो पहले दुःखद होता, पीछे पुत्रसुख के लिये होता है ॥ ४७ ॥

अथ पुनः पुत्रसहमविचारमाह—

**पापान्वितं पापकृतेसराफं नाशाय पुत्रस्य गतौजसीशे ।**
**सूतौ सुतेशः सहमेश्वरोऽब्दे पुत्रस्य लब्ध्यै शुभमित्रदृष्टः ॥ ४८ ॥**

पुत्रसहमं पापयुतं, पापकृतेसराफे, तथा ईशे = तत्स्वामिनि, गतौजसि = निर्बलेऽस्तङ्गते च सति, पुत्रस्य नाशाय भवति। अथवा सूतौ = जन्मकाले, यः सुतेशः = पञ्चमभावेशः, स यदि अब्दे = वर्षे, सहमेश्वरः = पुत्रसहमेशः स्यात्तथा शुभमित्रदृष्टश्च स्यात्तदा पुत्रस्य लब्ध्यै = प्राप्त्यै भवति ॥ ४८ ॥

भाषा—यदि पुत्रसहम पापग्रह से युत हो, पापग्रह से ईसराफ योग करता हो तथा पुत्र सहमेश अस्तङ्गत हो या निर्बल हो तो पुत्र नाश होता है ।

अथवा जन्मकाल में जो ग्रह पञ्चमेश होता है, वह यदि वर्षप्रवेश काल में पुत्र सहमेश हो, शुभग्रह मित्र ग्रह से दृष्ट हो तो पुत्र का लाभ होता है ॥ ४८ ॥

अथ पित्र्यसहमशुभाशुभविचारमाह—

**पित्र्यं सदीक्षितयुतं पतियुक्तदृष्टं तातस्य यच्छति धनाम्बरमानसौख्यम् ।**
**पत्यौ गतौजसि मृतौ खलमूशरीफे नाशः पितुश्चरगृहे परदेशयानात् ॥ ४९ ॥**

पित्र्यं = पितृसहमं, सदीक्षितयुतं = शुभग्रहदृष्टयुतं, पतियुक्तदृष्टं च भवेत्तदा तातस्य = पितुः धनाम्बरमानसौख्यं यच्छति। तथा पत्यौ = पितृसहमेशे, गतौजसि निर्बलेऽस्तङ्गते च सति मृतौ = अष्टमस्थानस्थे सति, खलमूसरीफे = पापग्रहमूसरिफे सति, चरगृहे = मेषकर्कतुलामकरराश्यन्यतमराशौ स्थिते सति परदेशयानात् = परदेशगमनात् पितुर्नाशः स्यात् ॥ ४९ ॥

भाषा—पितृसहम शुभग्रह से दृष्ट युत हो, अपने स्वामी से भी युत दृष्ट हो तो पिता को धन, वस्त्र सम्मान-सुख होता है। तथा यदि पितृसहम का स्वामी, अस्त हो निर्बल हो, अष्टम स्थान में चरराशि में हो, पापग्रह से मूसरीफ योग करता हो तो परदेश में जाने से पिता का नाश होता है ॥ ४९ ॥

पुनरपि पितृसहमशुभाशुभविचारमाह—

**शुभेत्थशाले खलखेटयोगे गदप्रकोपः प्रथमं महान् स्यात्।**
**पश्चात् सुखं विन्दति पूर्णवीर्ये नाथे नृपान्मानयशोऽभिवृद्धिः ॥ ५० ॥**

पितृसहमे, तदीशे च शुभेत्थशाले, खलखेटयोगे = पापग्रहसंयोगे च प्रथमं महान् गदप्रकोपः = रोगोपद्रवः, स्यात् पश्चात् सुखं = कल्याणं, नैरुज्यं, विन्दति = प्राप्नोति। तथा नाथे = पितृसहमनाथे, पूर्णवीर्ये = पूर्णबले सति नृपात् = भूपात्, मानयशोऽभिवृद्धिः = सम्मानकीर्त्तिवृद्धिः स्यात् ॥ ५० ॥

भाषा—पितृसहम को शुभग्रह से इत्थशाल और पापग्रह से संयोग होता हो, तो पहले विशेष रोग का प्रकोप, पीछे सुख ( नैरुज्य ) मिलता है। तथा उसका स्वामी पूर्णबली हो तो राजा से सम्मान यश की वृद्धि होती है ॥ ५० ॥

अथ बन्धनसहमविचारमाह—

**बन्धनाख्यसहमं युतेक्षितं स्वामिना नहि तदाऽस्ति बन्धनम्।**
**पापवीक्षितयुतेऽस्ति बन्धनं पापजे मुथशिले विशेषतः ॥ ५१ ॥**

बन्धनाख्यसहमं स्वामिना, शुभखगैः = शुभग्रहैश्च युतेक्षितं तदा बन्धनं नहि अस्ति। वा तत्सहमे, सहमेश्वरे च पापवीक्षितयुते तदा बन्धनमस्ति, तत्रापि पापजे मुथशिले विशेषतो बन्धनयोगो भवति ॥ ५१ ॥

भाषा—बन्धनसहम यदि अपने स्वामी से, शुभग्रहों से युत हो या दृष्ट हो, तो बन्धन नहीं होता है। यदि बन्धनसहम या उसका स्वामी पाप दृष्ट युत हो तो बन्धन होता है। वहां यदि पापग्रहसे इत्थशाल करता हो, तो विशेषरूप से बन्धन होताहै ५१

अथ गौरवसहमस्य शुभाशुभविचारमाह—

**गौरवाख्यसहमं युतेक्षितं स्वामिना शुभखगैः सुखाप्तये।**

**राजगौरवयशोऽम्बराप्तये पापवीक्षितयुते पदक्षतिः ॥ ५२ ॥**

गौरवाख्यसहमं = गौरवसहमं, स्वामिना, शुभखगैः=शुभग्रहैश्च युतेक्षितं, तदा सुखाप्तये भवति । राजगौरवयशोऽम्बराप्तये भवति ! पापवीक्षितयुते पदक्षतिः= अधिकारनाशो भवति ॥ ५२ ॥

भाषा—गौरवसहम यदि अपने स्वामी से, तथा शुभग्रहों से युत दृष्ट हो तो सुख मिलता है, राजा से सम्मान, यश, वस्त्र की प्राप्ति होती है । पाप दृष्ट युत हो तो अधिकार ( स्थान ) नाश होता है ॥ ५२ ॥

अथ पुनर्गौरवसहमविचारमाह—

**शुभाशुभैर्दृष्टयुतं खलैश्चेत् कृतेत्थशालं धनमाननाशम् ।**
**पूर्वं विधत्ते, चरमे शुभेत्थशाले सुखं वाहनशस्त्रलाभम् ॥ ५३ ॥**

गौरवसहमं शुभाशुभैर्ग्रहैर्दृष्टयुतं, खलैः पापग्रहैश्चेत्कृतेत्थशालं तदा पूर्वं धन-माननाशं विधत्ते करोति । चरमे = पश्चात्, शुभेत्थशाले सति, सुखं, वाहनशस्त्रलाभं यच्छति ॥ ५३ ॥

भाषा—गौरवसहम, यदि शुभग्रह तथा पापग्रहसे दृष्ट युत हो, पापग्रहों से इत्थ-शाल करता हो, तो, पहले धन नाश, अपमान होता है । पीछे शुभग्रहके इत्थशालसे सुख तथा सवारी का लाभ, शस्त्र का लाभ होता है, अर्थात् लड़ाईमें जय होती है॥५३॥

अथ कर्मसहमविचारमाह—

**कर्मभावसहमाधिपाः शुभैः स्वामिना मुथशिला बलान्विताः ।**
**हेमवाजिगजभूमिलाभदाः पापदृष्टियुतितोऽशुभप्रदाः ॥ ५४ ॥**

कर्म-भावसहमाधिपाः = कर्मभावः कर्मसहमञ्च तयोरधिपौ स्वामिनौ, चेते शुभैः स्वामिना च मुथशिलाः, बलान्विताः, तदा हेमवाजिगजभूमिलाभदाः = सुवर्ण-घोटक-हस्ति-भूक्षेत्रप्राप्तिकरा भवन्ति । पापदृष्टयुतितः, अशुभप्रदा धनक्षति-वाह-ननाश-क्षेत्रनाशकरा भवन्ति ॥ ५३ ॥

भाषा—कर्मभाव कर्मसहम कर्मभावेश, कर्मसहमेश ये सब शुभग्रहों से, अपने क्षेत्राधिपति ग्रह से यदि इत्थशाल करते हों, बलयुक्त हों, तो सोना घोड़ा हाथी, जमीन, इन सबों को देते हैं । वे यदि पापग्रह से दृष्ट युत हों तो अशुभप्रद अर्थात् धन-नाश, सवारी का नाश-क्षेत्र जमीन का नाश होता है ॥ ५४ ॥

अथ पुनरपि कर्मभावसहमाधिपाशुभविचारमाह—

**दग्धा वक्राः कर्मवैकल्यदास्ते युक्ता दृष्टाः सौरिणा ते विशेषात् ।**
**राज्यभ्रंशः कर्मनाशश्च राजकर्मेशौ चेन्मूसरीफौ खलेन ॥ ५५ ॥**

ते कर्मभावकर्मसहमतन्नाथाश्च दग्धाः = अस्तङ्गताः, वक्राः = वक्रिणश्च स्युस्तदा कर्मवैकल्यदाः कर्महानिकरा भवन्ति। अथ तादृशास्ते सौरिणा=शनिना, युक्ता दृष्टास्तदा विशेषात् कर्मवैकल्यदा भवन्ति।

तथा राजकर्मेशौ राजसहमकर्मसहमेशौ, वा राज्यसहमकर्मभावेशौ, खलेन = पापेन मूसरिफौ तदा राज्यभ्रंशः=राज्यनाशः, कर्मनाशश्च भवतीति ॥ ५५ ॥

भाषा—कर्मसहम, कर्मभाव, कर्मसहमेश, कर्मभावेश ये सब अस्तङ्गत, वक्री हों तो कर्म हानिको करते हैं। और वैसे ही वे सब यदि शनिसे युत दृष्ट हों, तो विशेषरूप से कर्मकी विकलताको करते हैं। और राजसहम या कर्मसहम यदि पापग्रहसे मूसरिफ योग करते हों, तो राज्य नाश और कर्मनाश होता है ॥ ५५ ॥

अथ केषांचित्सन्दिग्धार्थानां सहमानां निःसन्दिग्धार्थमाह—

**उपदेष्टा गुरुर्ज्ञानं विद्या शास्त्रं श्रुतिस्मृती।**
**मोहो जाड्यं बलं सैन्यमंगं देहो जलं द्युतिः ॥ ५६ ॥**

गुरुरुपदेष्टोपदेशकः, ज्ञानं तु विद्या, शास्त्रं श्रुतिस्मृती, जाड्यं जडता मोहः, बलं = सैन्यम्, देहोऽङ्गं, जलं = द्युतिः कान्तिरिति बोध्यम् ॥ ५६ ॥

भाषा—गुरु सहमसे उपदेशदाता समझना, ज्ञान सहमसे विद्या, शास्त्रसहमसे वेद, धर्मशास्त्र, जाड्यसहमसे मोह, बलसहमसे सेना, देहसहमसे शरीर, जल (अम्बु) सहमसे शरीर की कान्ति समझनी चाहिये ॥ ५६ ॥

**गुरुता मण्डलेशत्वं गौरवं मानशालिता।**
**निग्रहानुग्रहविभू राजा छत्रादिलिङ्गभाक् ॥ ५७ ॥**

गुरुता = मण्डलेशत्वं=खण्डभूस्वामित्वम्, गौरवम् = मानशालिता=संमानयुक्तत्वम्। राजा तु निग्रहानुग्रहविभुः = दुष्टदण्डशिष्टाभीष्टकरणसमर्थः। छत्रादिलिङ्गभाक् = छत्रचामरादिचिह्नयुक्तो भवति ॥ ५७ ॥

भाषा—गुरुतासे छोटे जमीन्दार, गौरवसे संमानशाली। राजासे दुष्टोंके दण्ड सज्जनोंके पालन करनेमें दक्ष, छत्र मुकुट चामर आदि चिह्नोंसे युक्त समझा जाता है ॥ ५७ ॥

**महात्म्यं मन्त्रगाम्भीर्यं धृतिर्बुद्ध्यादिशालिता।**
**सामर्थ्यं देहजा शक्तिः शौर्यं यत्नोऽरिनिग्रहे ॥ ५८ ॥**

महात्मनो भावो माहात्म्यं तु मन्त्रगाम्भीर्यं=तन्त्रमन्त्रज्ञानलब्धमहत्वं, धृतिः= बुद्ध्यादिशालिनी बुद्धिसमृद्धियुक्तता, देहजा शक्तिः=सामर्थ्यं, शौर्यं तु अरिनिग्रहे= शत्रुघातने यत्नः = प्रयासः कथ्यते ॥ ५८ ॥

भाषा—माहात्म्यसे मन्त्र तन्त्र प्रयोगसे महत्ता का बोध होता है। धृतिसे स्थिरबुद्धि युक्तता, सामर्थ्यसे देह की शक्ति ( ताकत ), शौर्यसे शत्रुको वश करने का प्रयास यह समझा जाता है ॥ ५८ ॥

आशेच्छोक्ता मतिर्धर्म्या श्रद्धा बन्दः पराश्रयः ।
पानीयपतनं वृष्टिर्जलेऽकस्माच्च मज्जनम् ॥ ५९ ॥

आशा तु इच्छा उक्ता, धर्म्या=धर्मसम्बन्धिनी मतिः = श्रद्धा, बन्दः=पराश्रयः= पराधीनता, पानीयपतनं=वृष्टिः=जलवर्षणम् । जलेऽकस्मान्मज्जनं इति ज्ञायते ॥५९॥

भाषा—आशा इच्छा कहाती है। धर्मयुक्त बुद्धि श्रद्धा कहाती है। बन्दसे पराधीनता। पानीयपतनसे वर्षा, जलमें दैवात् डूबना गोता लगाना यह समझा जाता है ॥५९॥

आधिव्याधी तापमान्द्ये सपिण्डा बन्धवः स्मृताः ।
सत्यालीकं वणिग्वृत्तिराधानं प्रसवः स्मृतः ॥ ६० ॥

तापमान्द्ये सन्तापरोगौ क्रमेण आधिव्याधी कथ्येते । बान्धवाः = सपिण्डाः सप्तपुरुषान्तर्गतसगोत्राः, स्मृताः = कथिताः । वणिग्वृत्तिः=सत्यालीकम्=सत्यमिथ्यात्मकम् । प्रसवः=प्रसूतिः, आधानं = गर्भाधानं स्मृतम् ॥ ६० ॥

भाषा—तापसे आधि ( मनोव्यथा ), मान्द्य ( रोग ) से व्याधि, बान्धवसे सपिण्ड, वणिग्वृत्तिसे सत्य मिथ्या दोनों का बोध, प्रसवसे गर्भाधान समझा जाता है॥६०॥

दासत्वं परकर्मोक्तमन्यत्स्पष्टं स्वनामतः ।
निरूप्याणि यथायोग्यं कुलजातिस्वरूपतः ॥ ६१ ॥

परकर्म दासत्वमुक्तं, अन्यसहमं स्वनामतः स्पष्टम् । तथा कुलजातिस्वरूपतः यथायोग्यं सहमानि निरूप्याणि ॥ ६१ ॥

भाषा—परकर्मसे दूसरेकी दासता=नौकरी समझना। और जो बांकी हैं, वे नाम ही से स्पष्ट हैं। कुल जाति स्वरूपसे यथायोग्य सहमों को निरूपण करें ॥६१॥

शुभयोगेक्षणात्सौख्यं पत्युर्वीर्यानुसारतः ।
दारिद्र्यमृतिमांद्यारिकलिषूक्तो विपर्ययः ॥ ६२ ॥

शुभयोगेक्षणात् पत्युर्वीर्यानुसारतश्च सौख्यं भवति, दारिद्र्यमृतिमान्द्यारिकलिषु= दरिद्र-मृति-रोग-शत्रु कलिसहमेषु विपर्यय उक्तः । पूर्वमप्युक्तम् ॥ ६२ ॥

भाषा—शुभ योगसे ।शुभ दृष्टिसे सुख कहना, स्वामीके बलानुसार भी शुभ कहना। दारिद्र्यसहम-मृत्युसहम-रोगसहम-शत्रुसहमोंमें विपर्यय कहा गया है। अर्थात् ये सब यदि बलयुक्त शुभ स्वामियुक्त हों तो ये सब विशेष रूप होते हैं,

अर्थात् विशेष अनिष्ट ही होते हैं। यदि ये सब दुर्बल होते हैं पापदृष्ट युत होते हैं, तो थोड़ा अनिष्ट अर्थात् शुभ होता है। इसलिये उलटा फल इन सहमों का कहा है६२

प्रश्नकालेऽपि सहमं विचार्यं प्रष्टुरिच्छया।
सर्वेषामुपयोगोऽत्र चित्रं पृच्छन्ति यज्जनाः ॥ ६३ ॥

वर्षकाले तु सहमं विचार्यमेव परन्तु प्रश्नकालेऽपि प्रष्टुः = प्रश्नकर्तुः, इच्छया सर्वं सहमं विचार्यम्। अत्र वर्षे सर्वेषां सहमानामुपयोगो भवति, यतो यस्मात् कारणात्, जनाः = प्रच्छकाः लोकाश्चित्रमनेकरूपं प्रश्नं पृच्छन्ति ॥ ६३ ॥

भाषा—वर्षमें शुभाशुभ फल कहने के लिये वर्षारम्भ में सहमों का विचार किया जाता है, परन्तु प्रश्नकाल में भी प्रश्नकर्त्ता के अभीष्ट सहम का विचार करना चाहिये। प्रश्नकाल में भी प्रत्येक सहम उपयोगी होते हैं, क्योंकि प्रश्नकर्त्ता हर तरह का प्रश्न पूछ बैठता है ॥ ६३ ॥

इति सहमफलविचारप्रकरणम्।

---

## अथ पात्यायिनीदशानिरूपणम्।

अथ दशानयनमाह—

स्पष्टान्सलग्नान्खचरान् विधाय राशीन्विनाऽत्यल्पलवं तु पूर्वम्।
निवेश्य तस्मादधिकाधिकांशक्रमादयं स्यात्तु दशाक्रमोऽब्दे ॥ १ ॥
ऊनं विशोध्याधिकतः क्रमेण शोध्यं विशुद्धांशकशेषकैक्यम्।
सर्वाधिकांशोन्मितमेव तत्स्यादनेन वर्षस्य मितिस्तु भाज्या ॥ २ ॥
शुद्धांशकांस्तान् गुणयेदनेन लब्धध्रुवाङ्केन भवेद्दशायाः।
मानं दिनाद्यं खलु तद्ग्रहस्य फलान्यथासां निगदेत्तु शास्त्रात् ॥ ३ ॥

अब्दे = वर्षप्रवेशसमये, प्रथमं सलग्नान् स्पष्टान् खचरान् = रव्यादिग्रहान्, विधाय = प्रसाध्य, तान् राशीन् विना, कृत्वा, केवलमंशादिकानेव स्थापयेत्। तत्र पूर्वं = प्रथमम्, अत्यल्पलवं = सर्वाल्पांशं निवेश्य, तस्मात् परमधिकाधिकांशक्रमात् निवेशयेत्। तदाऽयं दशाक्रमः स्यात्। अथ अधिकत ऊनमल्पं विशोध्य अर्थाद्द्वितीयपङ्क्तिस्थादूर्ध्वपङ्क्तिस्थं सर्वाल्पांशं विशोध्य, तृतीयपंक्तिस्थाद्द्वितीयपङ्क्तिस्थं विशोध्य, तदाऽष्टौ पात्यंशाः स्युः। तत्र विशुद्धांशकशेषकैक्यं=सकलपात्यांशयोगमानं, यत्तत् सर्वाधिकांशोन्मितमेव स्यात्, अनेन शेषांशयोगेन वर्षस्य

मितिः सौरमानेन ३६० एतावद्दिनमितिर्वा सावनदिनमितिः ३६५।१५।३०।२२।२० भाज्या तत्र लब्धिर्ध्रुवाङ्कः स्यात् ।

अत्र भजने प्रथमस्थाने यल्लब्धं तत्प्रथमस्थानाङ्कः । शेषं षष्ट्या सङ्गुण्य पुनर्योगेन भक्तं तदा द्वितीयस्थानाङ्कः । एवं तृतीयस्थानाङ्कः साध्यः । अथ तान् शुद्धांशकान् = पात्यंशान् , अनेन लब्धध्रुवाङ्केन गुणयेत् , गोमूत्रिकयेतिशेषः । तत ऊर्ध्वाधः खण्डयोगः कार्यः । तदा गुणनफलमन्ततः षष्ट्या विभज्य अर्थात् अन्ते षष्टिभजनेन लब्धमुपान्तिमे योज्यं, उपान्तिमं षष्ट्या विभज्य उपोपान्तिमे योज्यमेवं करणेन तत्तद्ग्रहस्य दशाया दिनाद्यं मानं खलु भवेत् । यस्य पात्यंशा ध्रुवाङ्केन गुणितास्तद्ग्रहस्य दिनाद्यं दशामानं स्यात् । अथ दशामाने सिद्धे आसां फलानि = शुभाशुभानि, शास्त्रात् = वर्षतन्त्रात्, निगदेत् = कथयेत् ॥ १-३ ॥

अत्रोपपत्तिः ।

यदि भचक्रस्य द्वादशविभागं विधाय, सर्वे विभागा यदि उपर्युपरिक्रमेण स्थाप्यन्ते तदा राश्यादिः सर्वेषामेकत्रैव राश्यन्तोऽपि सर्वेषामेकत्रैव तथा सर्वेषां राशीनां सर्वांशक्रमेण संयोगः स्यात् । तत्र यथा सूर्यो द्वादशेंऽशे, चन्द्रः पञ्चमेंऽशे कुजः द्वाविंशे; बुधस्त्रयोविंशेंऽशे गुरुद्व्यंशे, शुक्रोऽष्टाविंशेंऽशे, शनिर्दशमेंशे, लग्नं सप्तविंशेंऽशे वर्त्तते, अतस्तेषां राशीनां भिन्नत्वेऽपि, मेलनेनैकरूपत्वात्स्वस्वांशे सकलग्रहनिवेशेन एवं स्यात् ।

| अंशाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | ० | बृ | ० | ० | चं | ० | ० | ० | ० | श | ० | सू | ०० | ०० | |

| अंशाः | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | ०० | ० | ० | ० | ० | ० | मं | बु. | ० | ० | ० | ल. | शु | ० | ० |

अत्र स्पष्टतयाऽवलोक्यते गुरोरनन्तरं चन्द्रस्ततः शनिस्ततः सूर्यस्ततः कुजस्ततोबुधस्ततोलग्नं, ततः शुक्रः इति । अर्थाद्यस्य सर्वन्यूना अंशाः स पूर्वं लेख्यः, ततस्तदधिकस्ततस्तदधिक एवमधिकाधिकांशक्रमेण सलग्नग्रहा निवेशिता दृश्यन्ते ।

अथैकसौरवर्षान्तरेव सकलग्रहदशाभोगोचितत्वात् वर्षादितः प्रथमहीनांशग्रह (गुरु) पर्यन्तं गुरोस्ततो गुरोश्चन्द्रं यावद्भागाद्यमन्तरं तावच्चन्द्रस्य एवं प्रथमहीनांशा अविकृता एव, प्रथमहीनांशोनतदग्रिमहीनांशान्तरं प्रथमद्वितीययोर्गुरु-

चन्द्रयोरन्तरं, तथा द्वितीयतृतीययोरन्तरं तृतीयमेवं पात्यांशाः साध्याः। तत्र तेषां स्वरूपम्, प्र, द्वि-प्र, तृ-द्वि, च-तृ, पं-च, ष-पं, स-ष, अ-स, एतेषां यदि योगः क्रियते तदा धनर्णयोः समत्वनाशात् सर्वाधिकांशसममेवावशिष्यते। तत्र सर्वाधिकांशसमेन सकलयोगेनैकवर्षसम्बन्धिदिनानि लभ्यन्ते, तदा स्वस्वहीनांशैः किमित्यनुपातेन स्वस्वग्रहदशादिनादय आगच्छन्ति।

अथ ग्रहयोः पात्यांशसाम्ये कस्यैकतरस्य दशा प्रथमेति प्रश्ने दुर्बलापेक्षया बलिनो मान्यत्वात् प्रभावाधिक्यात् तस्यैव प्रथमा दशा समुचितैव। अथ पात्यांशसाम्ये बलस्यापि यदि साम्य भवेत् तदा कस्येति जिज्ञासायां मन्दशीघ्रग्रहयोरेकविन्दौ योगक्षणात्तदुत्तरक्षणे मन्दगतेः पृष्ठवर्तित्वात्प्रथमा दशा मन्दगतेरेवेति स्प सर्वमुपपन्नं चेति ॥ १-२ ॥

भाषा—वर्षप्रवेश समय में पहले लग्न सहित स्पष्ट रव्यादिग्रहों को बनाकर पीछे राशि स्थानके अङ्कों को छोड़कर केवल अंशादिमान ही रक्खे। उन सबों में जो सबसे स्वल्प हो, उसको सबसे ऊपर लिखे, उससे बाद जो आसन्न अधिक अंश वाला हो उसको लिखे, उसके बाद उससे जो अधिक अंश वाला हो उसको लिखे, ऐसे ही सब आठोंके हीनांशा हुए। उसके बाद ऊपरके सबसे जो थोड़ा अंश वाला है, उसको उसके नीचे वाले अधिकांशमें घटावे, अर्थात् पहले को दूसरेमें, दूसरे को तीसरेमें तीसरे को चौथेमें, चौथे को पांचवेंमें, पांचवें को छठेंमें, छठे को सातवेंमें, सातवें को आठवेंमें घटाकर जो शेष बचे वे ही पात्यंशा बन गए। प्रथम ग्रह की पात्यंशा प्रथम ग्रह की हीनांशा ही समझना॥

अब सब पात्यंशाओं का योग सबसे अधिक नीचे वाली जो हीनांशा है, उसी के बराबर होता है, यह पात्यंशाओंके शुद्ध प्रतीत्यर्थ कहा है। अब सावन वर्षकी दिन संख्या को या सौर वर्ष दिन संख्या को हीनांशाओं के योग से भाग देवें, वहां लब्ध जो होगा वह ध्रुवाङ्क होगा। यह अंश कला विकला तीन खण्ड के जो हीनांशा है उसमें अंशस्थान को साठ से गुणाकर कला जोड़ कर फिर साठ से गुणा करके विकला जोड़े यह एक जाति का सकल हीनांशा योग हुआ। ऐसे ही सावन दिन संख्याको सवर्णन करे, अर्थात् दिन ३६९ स्थान को साठ से गुणा कर १५ जोड़े, फिर साठ से गुणा करके ३० जोड़े इस प्रकार सावन वर्ष के दिनों का सवर्णन हुआ। सौर वर्षके दिनको दो वार साठ से गुणा करे ३६० × ६० × ६० = १२९६००० । इसमें हीनांशाओं के योग के सवर्णन से भाग दे, तो ध्रुवाङ्क होता है। उसके बाद प्रत्येक पात्यंशाको गोमूत्रिका के रूप से रखकर ध्रुवाङ्क से गुणा करे, नीचे पंक्ति ऊपर के पंक्ति के गुणकाङ्क को योग करे, बाद अन्त के अंक को साठ से भाग देकर लब्धि को उसके पहले अंक

अर्थात् उपान्त्य में जोड़े, फिर उसको भी साठ से भाग देकर लब्धि को उसके पहले अर्थात् उपान्त्य के उपान्त्य में जोड़े, ऐसे करने से दिनादिक दशामान होंगे । इन दशाओं के फल अन्य शास्त्र से, तथा यहां भी वर्षतन्त्र से कहे हैं ॥ १–३ ॥

उदाहरण—यहां राहु केतु को छोड़ कर और सब ग्रहों के तथा लग्न के राशिस्थान में जो अङ्क है, उसको छोड़कर केवल सबों के अंशादिक को लिखिये ।

| तात्कालिक अंशादिक सूर्यादिग्रह |
| --- |
| सू. ।१२।५७।५० |
| चं. ।५।३९।३२ |
| मं. ।२२।१३।५३ |
| बु. ।२३।५९।१९ |
| बृ. ।२।४९।८ |
| शु. ।२८।१९।१७ |
| श. ०।१०।५५।१३ |
| ल. ।२७।७।४ |

अब देखिये कि, इन सबों के अंशस्थान में बृहस्पति का सबसे न्यून है । उसको पहले लिखिये, उसके बाद उससे अधिक चन्द्रमा को, उसके बाद उससे अधिक शनि को, उससे अधिक सूर्यको, उसके बाद उससे अधिक मङ्गल को, तब बुध को, उसके बाद लग्न को, उसके बाद शुक्र को लिखिये, उत्तरोत्तर अधिक अंशवाले को लिखना चाहिये, इसक्रम से लिखने से हीनांशा बन गयी । अब सबसे पहले बृहस्पति की जो हीनांशा है, उतनी ही उसकी पात्यांशा समझिये, क्योंकि उससे न्यून तो कोई नहीं है, तो घटाया जाय क्या? इसलिये बृहस्पति की जितनी ही हीनांशा है, उतनी ही उसकी पात्यांशा हुई । उस के बाद चलिये, बृहस्पति से अधिक चन्द्रमा है, इसलिये चन्द्रमा की हीनांशा ५।३९।३३ में बृहस्पति की हीनांशा २।४९।८ को घटाया, तो शेष २।५०।२५ यह चन्द्रमा की पात्यांशा बन गयी । उसके बाद शनि की हीनांशा १०।५५।१३ में चन्द्रमा की हीनांशा ५।३९।३३ को घटाया, शेष ५।१५।४० यह शनि की पात्यांशा हुई । ऐसे ही शनि की हीनांशा १०।५५।१३ को सूर्य की हीनांशा १२।५७।५० में घटाया, तो शेष २।२।३७ यह सूर्य की पात्यांशा हुई, ऐसे सब ग्रहों का बनाना ।

| |
| --- |
| बृ. २।४९।८ |
| चं. ५।३९।३३ |
| श. १०।५५।१३ |
| सू. १२।५७।५० |
| मं. २२।१३।५३ |
| बु. २३।५९।१९ |
| ल. २७।७।४ |
| शु. २८।१९।१७ |

ये सब शुद्ध हुई या नहीं ! इस जांच के लिये सब पात्यांशा का योग उतना ही होगा, जितनी सब से अधिक हीनांशा यहां शुक्र की २८।१९।१७ है ।

अब सब ग्रहों के पात्यांशाओं के योग २८।१९।१७ से वर्ष के सौरदिनसमूह ३६०

को भाग दिया, जैसे यहां योग के प्रथम अङ्क २८ को साठ से गुणाकर १९ जोड़ा १६९९, फिर इस को साठ से गुणाकर १७ जोड़ा तो १०१९५७ इतना भाजक हुआ। भाजक को दो दफे साठ से गुणा किया है। इसलिये ३६० को भी दो दफे गुणा करने पर १२९६००० इतना सवर्णित भाज्य हुआ। सर्वत्र भाज्याङ्क स्थिर ही रहता है। केवल भाजक ही बदलता रहता है। अब भाजक से भाज्य को भाग देनेपर लब्धि १२।४२।४० यह ध्रुवाङ्क हुआ। इससे हरेक पात्यांशा को गुणाकर सठिया कर दशादिनादि होगा। यहां ध्रुवाङ्क १२।४२।४० से बृहस्पति की पात्यांशा ०२।४९।८ को गोमूत्रिका विधि से गुणा किया योग किया तो गुणन फल २४।६७२।२२३४।२२९६।३२० सठिया कर ३५।४८।५१।२७।२० यहां तीन ही खण्ड लेते हैं, जो दिन दण्ड पल होते हैं। और को स्वल्पान्तर से छोड़ दिया तो बृहस्पति की दशादिनादि हुई ३५।४९।५२ इसको वर्षकालिक सूर्य के अंश में जोड़ने से दशान्त पर्यन्त की सूर्यांशा बन गयी, उस अंश में जो तारीख वह अंग्रेजी तारीख हुई ॥ १-३ ॥

## अथ पात्यायिनीदशाचक्रम्।

| दशेशाः ग्रहाः | हीनांशाः | | | पात्यांशाः | | | दशादिनादिः | | | सूर्यराश्यादयः | | | | अंग्रेजीतारीख. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | अं० | क० | वि. | अं. | क० | वि० | दि. | द. | प. | रा. | अं. | क. | वि. | |
| बृ. | २ | ४९ | ८ | २ | ४९ | .८ | ३५ | ४९ | ५२ | १ | १८ | ४७ | ४२ | |
| चं. | ५ | ३९ | ३३ | ०२ | ५० | २५ | ३६ | .६ | ११ | २ | २४ | ५३ | ५३ | |
| श. | १० | ५५ | १३ | ०५ | १५ | ४० | ६६ | ५२ | २८ | .५ | .१ | ४६ | २१ | |
| सू. | १२ | ५७ | ५० | २ | २ | ३७ | २५ | ५८ | ३६ | ५ | २७ | ४४ | ५७ | |
| मं. | २२ | १३ | ५२ | ०९ | १६ | ३ | ११० | ४८ | १३ | ९ | २५ | ३३ | १० | |
| बु. | २३ | ५९ | ९ | १ | ४५ | १६ | २२ | १७ | ५१ | १० | १७ | ५१ | १ | |
| ल. | २७ | ७ | ४ | ३ | ७ | ५५ | ४४ | २९ | ४५ | .. | .२ | २० | ४८ | |
| शु. | २८ | १९ | १७ | १ | १२ | १३ | १० | १६ | ५० | ०० | १२ | ५७ | ३६ | |

अथ शुद्धांशसाम्ये दशानिर्णयमाह—

**शुद्धांशसाम्ये बलिनो दशाऽद्या बलस्य साम्येऽल्पगतेस्तु पूर्वा।**
**साम्ये विलग्नस्य खगेन चिन्त्या बलाधिका लग्नपतेर्विचिन्त्या ॥ ४ ॥**

प्रश्नयोः शुद्धांशसाम्ये = पात्यांशसमत्वे, द्वयोर्यो बलवांस्तस्य आद्या = प्रथमा,

दशा भवेत् । अथ शुद्धांशसाम्ये सति बलस्यापि साम्येऽल्पगतेस्तद्ग्रहद्वये यस्य गतिरल्पा तस्य पूर्वा=प्रथमा, दशा, तत्परं तदधिकगतिग्रहस्य दशा भवेत्, खगेन केनापि ग्रहेण विलग्नस्य साम्ये तदा लग्नपतेर्बलाधिका दशा विचिन्त्या लग्न-तुल्यग्रहस्य, लग्नेशस्य च मध्ये योऽधिकबलवाँस्तस्य प्रथमा दशा । तयोर्बलसा-म्येऽल्पगतेः प्रथमाऽधिकगतेस्तत्परेति ॥ ४ ॥

भाषा—शुद्धांश ( पात्यांश ) यदि दो ग्रहों के समान हों, तो दोनों में जो अधिक बलवान् हो उसकी पहली दशा होती है । यदि पात्यांश समान होते हुऐ बल भी दोनों के समान हों, तो जिसकी गति थोड़ी हो, उसकी पहली दशा होती है । यदि लग्न के समान अंश वाला कोई ग्रह हो, तो लग्नेश ग्रह और उस ग्रहों में जो विशेष बलवान् हो उसकी पहली दशा होती है । यदि दोनों के बल समान हो तो जिसकी गति थोड़ी हो उसी की पहली दशा होती है ॥ ४ ॥

अथान्तर्दशानयनमाह—

दशामानं समामानं प्रकल्प्योक्तेन वर्त्मना ।
अन्तर्दशा साधनीया प्राक्पात्यांशवशेन तु
आदावन्तर्दशापाकपतेस्तत्क्रमतोऽपरा ॥ ५ ॥
इति दशानिरूपणम् ।

---

यस्य ग्रहस्य यद्दशामानमागतं तस्य तदेव समामानं=दशावर्षमानं प्रकल्प्य उक्तेन वर्त्मना=कथितमार्गेण, प्राक् पात्यांशवशेन अन्तर्दशा साधनीया, यथा सकलपात्यांशयोगेन कस्यापि दशादिनाद्यो लभ्यन्ते तदा प्रत्येकपात्यांशेन कि-मित्यनुपातेन प्रत्येकमहान्तर्दशा सिद्ध्यति ॥ ५ ॥

भाषा—जिस ग्रह की जो दशादिनादि आयी है, उसीको महादशा मान कर, कथित प्रकार से, ही पहले के पात्यांशा के वश से अन्तर्दशा साधन करना, जैसे पा-त्यांशाओं के योग में किसी ग्रह की दशादिनादि मिलते हैं, तो प्रत्येकग्रहों के पा-त्यांशा में क्या ? इस त्रैराशिक से अन्तर्दशा प्रत्येक ग्रहों की होगी ॥ ५ ॥

अथ मासदिनप्रवेशानयनमाह—

एकैकराशिवृद्ध्या चेत्तुल्योंऽशाद्यैर्यदा रविः ।
तदा मासप्रवेशो द्युप्रवेशश्चेत्कलासमः ॥ १ ॥

एकैकराशिवृद्ध्याऽब्दशाद्यैः=अंशकलाविकलाभिर्यदा रविः स्यात्तदा मासप्रवेशः स्यात् । चेद्यदा सूर्यः कलासमस्तदा द्युप्रवेशः स्यात् । अर्थाद्वर्षप्रवेशकालिकः सूर्य-

एव प्रथममासप्रवेशकालिकः सूर्यः। प्रथममासप्रवेशकुण्डली तु वर्षकुण्डल्येव। वर्षप्रवेशकालिकसूर्ये एकराशियोजनेन द्वितीयमासप्रवेशकालिकः सूर्यः। राशिद्वययोजनेन तृतीयमासप्रवेशे सूर्यः। राशित्रययोजनेन चतुर्थमासप्रवेशे सूर्यः। राशिचतुष्टययोजनेन पञ्चममासप्रवेशे सूर्यः। एकैकराशिवृद्धयाऽंशाद्यैस्तुल्यो यदा सूर्यस्तदा द्वित्रिचतुर्थपञ्चमादिमासप्रवेशे सूर्यः सिद्धः। एवमेकैकांशयोजनेन एकैकसौरदिनप्रवेशे सूर्यः स्यादत एव कलासमः सूर्यो यदा तदा दिनप्रवेशः स्यात् ॥१॥

भाषा—एक एक राशि वृद्धिसे अंशादिक समान सूर्य जब हो, तब मासप्रवेश होता है। अर्थात् वर्षप्रवेशकालिक सूर्यमें एक राशि जोड़नेसे द्वितीयमास प्रवेश कालिक सूर्य होते हैं। वर्षप्रवेश कालिक सूर्यमें दो राशि जोड़नेसे तृतीय मासप्रवेश कालिक सूर्य होते हैं। ऐसे ही आगे भी समझना। और वर्षप्रवेशकालिक सूर्य ही प्रथमदिन प्रवेश कालिक सूर्य हुए। उसमें एक अंश जोड़नेसे दूसरे दिनप्रवेश कालिक सूर्य हुए। दो अंश जोड़नेसे तीसरे दिनप्रवेश का सूर्य। ऐसे ही सब दिनप्रवेश का सूर्य समझना।

उदाहरण—यथा वर्षप्रवेश कालिक सूर्य ०।१२।५७।५० प्रथममासप्रवेश, या प्रथमदिनप्रवेश कालिक यही सूर्य हुआ। उसमें १ राशि जोड़नेसे १।१२।५७।५० यह द्वितीयमासप्रवेश कालिक सूर्य हुआ। तथा २ राशि जोड़नेसे २।१२।५७।५० यह तृतीयमासप्रवेश कालिक सूर्य हुआ। और वर्षकालिक सूर्यमें १ अंश जोड़ा तो प्रथममासके द्वितीयदिनप्रवेश काल का सूर्य ०।१३।५७।५० एवं दो अंश जोड़ने से ०।१४।५७।५० यह तृतीयदिनप्रवेश काल का सूर्य हुआ। चतुर्थमास में नवमदिनप्रवेश कालिक सूर्य कितना होगा? उत्तर ३।२०।५७।५० ॥ १ ॥

अथ मासप्रवेशघटकाद्यानयनमाह—

मासार्कस्य तदासन्नपङ्क्तिस्थेन सहान्तरम्।
कलीकृत्वाऽर्कगत्याप्तं दिनाद्येन युतोनितम् ॥ २ ॥
तत्पङ्क्तिस्थं वारपूर्वं मासार्केऽधिकहीनके।
तद्वाराद्ये मासवेशो द्युवेशोऽप्येवमेव च ॥ ३ ॥

मासार्कस्य=एकैकराशियुक्तवर्षप्रवेशकालिकसूर्यस्य, तदासन्नपंक्तिस्थेनार्केण सहान्तरं यत्तत्कलीकृत्य षष्ट्या सङ्गुण्य, अर्कगत्याऽऽप्तदिनाद्येन पंक्तिस्थं वारपूर्वं=दिनादिकं. पंक्तिस्थार्कान्मासार्केऽधिकहीनके सति युतोनितं, तदा तद्वाराद्ये मासवेश=मासप्रवेशः स्यात्। एवमेव द्युवेश =दिनप्रवेशकालः सिद्ध्यति ॥ २–३ ॥

सत्रोपपत्तिः—अथ मासप्रवेश-दिनप्रवेशयोर्दिनादिसाधनमत्र क्रियते। तत्र

वर्षप्रवेशकालिकसूर्यस्यांशादिसम एव सर्वेषु सौरमासप्रवेशेषु सूर्यो भवति । तथा च वर्षप्रवेशकालिकसूर्यस्य कलासमः सर्वेषु दिनप्रवेशेषु सूर्य इति सुविदितं सर्वेषाम् । तत्र वर्षप्रवेशकालिकसूर्ये राशिस्थाने एकाद्यङ्कयोजनेन द्व्यादिमासप्रवेशकालिकाः सूर्यराश्यादयो जातास्त एव मासार्काः । तत्र कश्चिन्मासार्को यत्पङ्क्तिस्थार्कासन्नोऽङ्कादिना भवेत्तस्य पङ्क्तिस्थार्कस्य मासार्कस्य चान्तरं कृतं सन्मासप्रवेशपङ्क्तिकालयोरन्तरेऽर्कस्य चलनमानं जातम् । तत्र महत्कालखण्डापेक्षया स्वल्पकालखण्डे त्रैराशिककरणेन स्वल्पान्तरदर्शनादासन्नपङ्क्तिस्थार्केणान्तरं मासार्कस्य कार्यमित्युक्तम् । तत्र मासप्रवेशकालज्ञानायानुपातः—यदि रविगतिकलया एकं दिनं लभ्यते, तदा मासार्कपङ्क्त्यर्कान्तरकलाभिः किमिति मासप्रवेशपङ्क्तिकालयोरन्तरवर्त्तिकालखण्डमागतम् । तत्र पङ्क्तिस्थेऽर्केऽधिके पङ्क्तिकाले ऋणं पङ्क्तिस्थार्कान्मासप्रवेशेऽर्के अधिके पङ्क्तिकाले धनं तत्कालखण्डे कृत सन्मासप्रवेशकालः स्यादेवमेव दिनप्रवेशकालसाधनं कार्यमिति सर्वमुपपन्नम् ॥ २–३ ॥

भाषा—जिस मासका मासप्रवेश बनाना हो, उस मासका तथा उसके समीपवर्त्ती पङ्क्ति ( वल्ली ) के सूर्य, इन दोनों के अन्तर करके कला बनाना, उसको सूर्यकी गतिसे भाग देना, जो लब्ध दिनादिक होगा, सो यदि पंक्ति ( वल्ली ) स्थ सूर्यसे मासार्क अधिक हो तो पंक्तिस्थ दिनादिमें जोड़ना । यदि पंक्ति (वल्ली) स्थ सूर्य से मासार्क न्यून हो, तो पंक्तिस्थ वारादि में उस दिनादिकको घटाना, तो मासप्रवेश कालिक दिनादिक ( इष्टकाल ) होगा । ऐसे ही दिनप्रवेश समझना ॥ २–३ ॥

उदाहरण—जैसे किसी के वर्षप्रवेश कालिक सूर्य ६।२७।२१।२ इसमें राशिस्थान में ४ जोड़ने से छठे मासप्रवेश का सूर्य हुआ १०।२७।२१।२ अब इसको देखता हूं तो फाल्गुन शुक्लदशमी शनि के मिश्रमान कालिक सूर्य से आसन्न पड़ता है । इसलिये पंक्तिस्थ सूर्य १०।२४।२१।२ और मासार्क १०।२७।२१।२ इन दोनों का अन्तर किया तो ०।३।०।० इस को कलात्मक किया तो १८०', यहां रविगति ( ६ । ० ) से भाग दिया, तो लब्धि दिनादि २।३० यहां पंक्तिकाल से मास प्रवेश बनाना है । और पंक्तिस्थ सूर्य से मासार्क अधिक है, इसलिये पंक्तिकाल दिनादि ७।४४।३२ में वह लब्धदिनादि जोड़ देने पर छठे मासप्रवेश का दिनादि समय हुआ ।

यथा— { २।३०।०० / ७।४४।३२ / १०।१४।३२ } यहां दिनस्थान में सात से ज्यादे होने से सात से भाग देने पर दिनादि ३।१४।३२ अर्थात् फाल्गुन शुक्ल त्रयोदशी मङ्गलवार को १४ घड़ी ३२ पल पर छठेमास का प्रवेश हुआ । ऐसे दिनप्रवेश काल भी साधना ॥ २–३ ॥

अथ वर्षेशानयनमाह—

भूः १ पञ्चचन्द्राः १५ कुगुणाः ३१ कुरामाः ३१
सिद्धाः २४ गताब्दैर्गुणिताः समेताः ।
खेना ० ब्धिदस्रै २४ र्गुणलोचनैश्च २३
तष्टा नगै ७ रर्कमुखोऽब्दपः स्यात् ॥ ४ ॥

भूः=१, पञ्चचन्द्राः=१५, कुगुणाः = ३१, कुरामाः=३१, सिद्धाः=२४, एते गताब्दैर्गतवर्षैर्गुणिताः । क्रमेण खेन=०, अब्धिदस्रैः=२४, गुणलोचनैः=२३ ( ०।०।२४।२३ ) समेताः=युक्ताः । नगैः=सप्तभिस्तष्टाः = शेषिताः । तदा अर्कमुखः=सूर्यादिकः, अब्दपः = वर्षेशः स्यात् ॥ ४ ॥

भाषा—एक वर्षमें दिनादि १।१५।३१।३१।२४ इतने को गत वर्षसे गुणा करे, ०।०।२४।२३ एतने जोड़े, सातसे शेषित करे तो सूर्यादिक वर्षेश होंगे ॥ ४ ॥

अब्दौघतः शैलनखै २०७ र्विनिघ्नात् पुनर्मनुघ्नं गतवर्षवृन्दम् ।
शराब्धिभक्तं ४५ घटिकादिलब्धं युतं नभोऽश्व्यग्नि३२० युतात्खखेभैः। ८००
हृताद्दिनाद्यं गतवर्षयुक्तं सप्तोद्धृतं मेषमुखोऽब्दपः स्यात् ॥ ५ ॥

शैलनखैः = २०७ विनिघ्नात् = गुणितात्, अब्दौघतः = गतवर्षसमूहात् । पुनर्गतवर्षवृन्दं मनुघ्नं = चतुर्दशघ्नं, शराब्धिभक्तं = पञ्चचत्वारिंशद्भक्तं, लब्धं घटिकादियुतं, नभोऽश्व्यग्नियुतात्, खखेभैः ८०० हृतात् । लब्धं गतवर्षयुक्तं, सप्तोद्धृतं, तदा मेषमुखोऽब्दपः स्यात् ॥ ५ ॥

भाषा—गतवर्ष की सङ्ख्या को २०७ से गुणाकर पृथक् रखे । फिर गतवर्ष को १४ से गुणाकर उसमें ४५ से भाग देकर लब्ध घटिकादिक पूर्व के गुणनफल में जोड़े, उस योग में ३२० जोड़कर ८०० से भाग देने पर जो दिनादि लब्ध हो, उसमें गतवर्ष सङ्ख्या जोड़कर योग में ७ से भाग देकर शेषाङ्क तुल्य अब्दपति होता है यह अब्दपति मेषार्ककालिक होता है ॥ ५ ॥

आसीदसीमगुणमण्डितपण्डिताग्र्यो-
व्याख्यद्भुजङ्गपगवीः श्रुतिवित्सुवृत्तः ।
साहित्यरीतिनिपुणो गणितागमज्ञ-
श्चिन्तामणिर्विपुलगर्गकुलावतंसः ॥ ६ ॥

असीमगुणमण्डितपण्डिताग्र्यः = अगणितगुणालङ्कृतविद्वद्गणधुरीणः, व्याख्यद्भुजङ्गपगवीः = व्याख्यापितमहाभाष्यः, वा, विवरणीकृतमहाभाष्यः, श्रुतिवित् =

वेदविज्ञः, सुवृत्तः = सदाचारी, साहित्यरीतिनिपुणः = अलङ्कारदोषरीतिरचनपटुः, गणितागमज्ञः = ज्योतिर्गणनाविषयवेत्ता, विपुलगर्गकुलावतंसः = विस्तृतगर्गवंशोत्पन्नः, चिन्तामणिरेतन्नाम्ना प्रसिद्धो विद्वानासीत् ॥ ६ ॥

भाषा—अगणित गुणोंसे अलङ्कृत जो पण्डित लोग, उनमें अग्रगण्य, महाभाष्य को पढ़ाने वाला, या व्याख्या करने वाला, वेद जानने वाला, सदाचारी, साहित्य रीतिमें निपुण, ज्योतिष शास्त्र को जानने वाला, विशाल गर्ग कुलमें उत्पन्न, चिन्तामणि नाम का विद्वान् था ॥ ६ ॥

**तदात्मजोऽनन्तगुणोऽस्त्यनन्तो योऽधोक्तदुक्तीः किल कामधेनुम् ।**
**सत्तुष्टये जातकपद्धतिं च न्यरूपयद् दुष्टमतं निरस्य ॥ ७ ॥**

तदात्मजः = तत्पुत्रः, चिन्तामणितनय इत्यर्थः । अनन्तगुणः=असंख्यगुणगणयुक्तः, अनन्तः = अनन्तदैवज्ञो यः प्रसिद्धोऽस्ति, तदुक्तीस्तद्वचनानि, कामधेनुं = पञ्चाङ्गसाधकं कामधेनुग्रन्थम्, अधोक् = दुदोह । तथा दुष्टमतं=दूषितमतं, निरस्य = दूरीकृत्य, सत्तुष्टये = सज्जनविद्वज्जनसन्तोषाय जातकपद्धतिं च यो न्यरूपयत् = निरूपितवान् ॥ ७ ॥

भाषा—चिन्तामणि का पुत्र अनन्त दैवज्ञ हुआ, जिसके गुणों का अन्त नहीं था जिसकी उक्ति 'कामधेनु'—नामके ग्रन्थ को दूहा । और दुष्ट मतको दूर करके, सज्जनों के सन्तोषके लिये जातकपद्धति को निरूपण किया = बनाया ॥ ७ ॥

**पद्माम्बयाऽसावि ततो विपश्चिच्छ्रीनीलकण्ठः श्रुतिशास्त्रनिष्ठः ।**
**विद्वच्छिवप्रीतिकरं व्यधात्तं संज्ञाविवेके सहमावतंसम् ॥ ८ ॥**

इति संज्ञातन्त्रं समाप्तम् ।

ततोऽनन्तदैवज्ञात्, पद्माम्बया = पद्मेतिनामिकया मात्रा, श्रुतिशास्त्रनिष्ठः = वेदशास्त्राचारसम्पन्नः, विपश्चित्=विद्वान्, नीलकण्ठदैवज्ञः, असावि=प्रसूतः स नीलकण्ठः, विद्वच्छिवप्रीतिकरं=पण्डितशिवहर्षदायकं संज्ञाविवेके तन्त्रे=संज्ञातन्त्रे, तं सहमावतंसं=सहमप्रकरणं, व्यधात्=कृतवान् ॥ ८ ॥

भाषा—अनन्त दैवज्ञ नाम के पितासे, पद्मा नामकी मातासे वेद शास्त्र पटु पण्डित, नीलकण्ठ उत्पन्न हुए । जो वह विद्वान् शिवदैवज्ञ की प्रीति करने वाले संज्ञातन्त्रमें सहमप्रकरण को किये, ये शिवदैवज्ञ के छात्र थे । इन्हीं की बनाई पीयूषधारा और इसी ग्रन्थ की टीका रसाला है ॥ ८ ॥

इति श्रीनीलकण्ठज्योतिर्वित्कृतसंज्ञातन्त्रे मिथिलादेशान्तर्गतभागलपुरमण्डलान्तर्गतचयनपुरग्रामनिवासिपण्डितहंसराजमिश्रात्मजश्रीगङ्गाधरमिश्रकृता जलदगर्जनाख्या सवासनसंस्कृतटीका गूढग्रन्थिमोचनी भाषाटीका समाप्ता ।

# अथ वर्षतन्त्रप्रारम्भः ।

**स्वस्वाभिलाषं नहि लब्धुमीशा निर्विघ्नमीशानमुखाः सुरौघाः ।**
**विना प्रसादं किल यस्य नौमि तं ढुण्ढिराजं मतिलाभहेतुम् ॥ १ ॥**

यस्य देवस्य प्रसादं=प्रसन्नतां, विना ईशानमुखाः=शिवादयः, सुरौघाः=देवसमूहाः, स्वस्वाभिलाषं = निजनिजमनोरथं, निर्विघ्नं=निर्बाधं यथा स्यात्तथा लब्धुं = प्राप्तुं, ईशाः = समर्थाः, नहि किल भवन्ति, तं=तादृशं, महाप्रभावं ढुण्ढिराजं=लम्बोदरं = गणेशं, नौमि = प्रणमामि ॥ १ ॥

भाषा—जिस देवता की प्रसन्नता विना शिव प्रभृति देवसमूह भी अपने २ मनोरथ को निर्विघ्न प्राप्त करनेमें समर्थ नहीं होते हैं, उस गणेशजी को मैं नमस्कार करता हूं ॥ १ ॥

अथ वर्षफलद्योतकं वर्षपत्रकरणप्रयोजनमाह—

**जातकोदितदशाफलं च यत् स्थूलकालफलदं स्फुटं नृणाम् ।**
**तत्र न स्फुरति दैवविन्मतिस्तद्ब्रुवेऽब्दफलमादिताजिकात् ॥२॥**

यत् = यस्मात् कारणात् , नृणां=नराणां, शुभाशुभफलजिज्ञासूनां, जातकोदितदशाफलं = बृहज्जातकादिग्रन्थकथितदशाफलं, स्थूलकालफलदं भवति । तत्र स्थूलकालफलदे जातके दैवविन्मतिः = गणकबुद्धिर्यतो न स्फुरति, ततस्मात् कारणात् , आदिताजिकात् = प्राचीनसमरसिंहादिकृतताजिकग्रन्थात् , अब्दफलं = वर्षफलं, अहं वच्मीति ॥ २ ॥

भाषा—जिस लिये मनुष्योंको जातक ग्रन्थोंमें कहा हुआ दशा का फल, स्थूल (मोटे) समयमें घटता है । उसमें ज्योतिषी की बुद्धि नहीं दौड़ती है । इसलिये प्राचीन ताजिक ग्रन्थोंसे वर्षफल मैं कहता हूं ॥ २ ॥

**गताः समाः पादयुताः प्रकृतिघ्नसमागणात् ।**
**खवेदाप्तघटीयुक्ता जन्मवारादिसंयुताः ॥ ३ ॥**
**अब्दप्रवेशे वारादि सप्ततष्टेऽत्र निर्दिशेत् ।**
**शिवघ्नोऽब्दः स्वखाद्रीन्दुलवाढ्यः खाग्निशेषितः ॥ ४ ॥**
**जन्मतिथ्यन्वितस्तत्र तिथावब्दप्रवेशनम् ।**
**तत्कालेऽर्को जन्मकालरविणा स्याद्यतः समः ॥ ५ ॥**
**तदैवाब्दप्रवेशः स्यात् तिथ्यादेर्नियमो न तु ।**
**एकैकराशिवृद्ध्या चेत्तुल्यांशावेव रविः ॥ ६ ॥**

**तदा मासप्रवेशो द्युप्रवेशश्चेत्कलासमः ॥ ६ ॥**

'गताः समा' इत्यादि 'द्युप्रवेशश्चेत्कलासम' इत्यन्तश्लोकचतुष्टयस्य व्याख्याः संज्ञातन्त्रे कृताः । तत्रैव द्रष्टव्याः । किमत्र पुनः पिष्टपेषणेनेति ॥ ३-६ ॥

भाषा—इन श्लोकों का अर्थ संज्ञातन्त्रमें देखिये ॥ ३-६ ॥

अथ वर्षप्रवेशोपकरणान्याह—

**तात्कालिकास्तु खचराः सुधिया विधेयाः**
**स्पष्टो विलग्नमुखभावगणो विधेयः ।**
**वीर्यं तथोक्तविधिना निखिलग्रहाणा-**
**मब्दाधिपस्य विधये कथयामि युक्तिम् ॥ ७ ॥**

तात्कालिकाः = वर्षकालिकाः, खचराः = ग्रहाः, सुधिया = पण्डितेन, विधेयाः = कार्याः । तथा स्पष्टः, विलग्नमुखभावगणः = लग्नादिद्वादशभावसमूहः, विधेयः । तथोक्तविधिना 'त्रिंशत्स्वभे विंशतिरात्मतुङ्गे' इत्यादिनाऽऽदौ निखिलग्रहाणां = सकलग्रहाणां वीर्यं = बलं पञ्चवर्गीसंज्ञकं साध्यम् । ततोऽब्दाधिपस्य = वर्षेशस्य, विधये = निर्णयकरणाय, युक्तिं = विचारं कथयामि ॥ ७ ॥

भाषा—पहले पण्डित वर्षकालिक सब ग्रह बनावें, और लग्नादि द्वादश भाव बनावें, बाद सब ग्रहोंके पञ्चवर्गी बल बनावें । उसके बाद वर्षेश निर्णयमें मैं युक्ति कहता हूँ ॥ ७ ॥

अथ प्रश्नलग्नात् वर्षपत्रानयनमाह—

**द्विघ्नं प्रश्नांगभागाद्यं शरलब्धं स्फुटेन्थिहा ।**
**प्रश्नाङ्गाद्धायनफले तुर्येशो लग्नपो भवेत् ॥ ८ ॥**

यस्य जन्मपत्रं न विद्यते, तस्य वर्षपत्रसाधनाय प्रकारोऽयम् । तत्र हायनफले = वर्षशुभाशुभत्वनिर्णये कर्त्तव्ये, प्रश्नाङ्गभागाद्यं = प्रश्नकालिकलग्नांशादिकं, द्विघ्नं = द्विगुणं, शरलब्धं = पञ्चभिर्विभज्य यत् प्राप्तं, सा स्फुटा इन्थिहा = मुथहा, भवेत् । तत्र प्रश्नाङ्गात् = प्रश्नलग्नात् तुर्येशः = चतुर्थराशीशग्रहः, लग्नपः = वर्षलग्नेशः, भवेत् । तथा चोक्तं ताजिकसारे—"प्रश्नाङ्गपो वर्षपतिः प्रकल्प्यस्तुर्येश्वरो जन्मविलग्ननाथः । मुन्थाधिपः प्रश्नविलपश्च त्रैराशिपो घस्रपतिः पुरावत् ॥"

अत्रोपपत्तिः—

एकैकस्मिन् वर्षे मुथहा एकैकराशिं भुनक्तीति स्पष्टमेव, परन्त्वेकराशौ त्रिंशदंशास्तेष्वेव वर्षपर्यन्तं तस्या अवस्थानमतस्तज्ज्ञानाय त्रैराशिकमेवम्, यदि त्रिंशद्भिरंशैर्द्वादशसमा राशयस्तदा प्रश्नलग्नभुक्तांशैः क इति मुथहामानम् =

$\frac{\text{प्रलग्नं} \times 12}{30} = \frac{\text{प्रलग्नं} \times 2}{5}$ अत उपपन्नं पूर्वार्धम् । प्रश्नाङ्गाच्चतुर्थेशो लग्नपो भवतीत्यस्य युक्तिस्तु, अङ्गं नाम मित्रपर्यायः । मित्रविचारश्चतुर्थभावादतश्चतुर्थेशो लग्नप इति सर्वं युक्तम् ॥ ८ ॥

भाषा—प्रश्नलग्न के जो अंशादिक हो, उसको दो से गुणा करके पांच से भाग देने पर जो लब्धि हो, वह राश्यादि मुथहा होती है। और प्रश्नलग्न से जो चौथे राशि का स्वामी वह लग्नेश अर्थात् वर्षलग्नेश समझना ॥ ८ ॥

अथ वर्षेश्वरनिर्णयमाह—

**जन्मलग्नपतिरब्दलग्नपो मुन्थहाधिप इति त्रिराशिपः ।**
**सूर्यराशिपतिरह्नि चन्द्रभाधीश्वरो निशि विमृश्य पञ्चकम् ॥ ९ ॥**
**बली य एषां तनुमीक्षमाणः स वर्षपो लग्नमनीक्षमाणः ।**
**नवाब्दपो दृष्ट्यतिरेकतः स्याद् बलस्य साम्ये विदुरेवमाद्याः ॥ १० ॥**
**दृगादिसाम्येऽप्यथ निर्बलत्वे वर्षाधिपः स्यान्मुथहेश्वरस्तु ।**
**पञ्चापि नो चेत्तनुमीक्षमाणा वीर्याधिकोऽब्दस्य विभुर्विचिन्त्यः ॥ ११ ॥**

जन्मलग्नपतिः = जन्मलग्नेशः, अब्दलग्नेशः = वर्षलग्नेशः, मुन्थहापतिः = प्रतिवर्षमेकैकराशिचलितजन्मलग्नेशः, अह्नि=दिवसे, वर्षप्रवेशे, सूर्यराशिपतिः = सूर्यो यस्मिन् राशौ वर्तते तदीशः, रात्रौ वर्षप्रवेशे, चन्द्रराशीशः = चन्द्रो यस्मिन् राशौ वर्तते तदीशः । एतत्पञ्चकं एतत्पञ्चाधिकारिणः के के ? इति विमृश्य, एषां मध्ये यः सर्वाधिकबली, तनुं = वर्षलग्नम् , ईक्षमाणः = पश्यन् , ग्रहो, वर्षपः = वर्षेशः, स्यात् । लग्नं = वर्षलग्नं, अनीक्षमाणः = अदर्शको बली=बलवान् , सन्नपि अब्दपः= वर्षेशः, नैव स्यात् । अथ लग्नदर्शकानां पञ्चाधिकारिणां मध्ये, बलसाम्ये = पञ्चवर्गीबलसंख्यासमत्वे, दृष्ट्यतिरेकतः = दृष्टिविशेषतः । लग्नं यो हि सर्वाधिकदृष्ट्या पश्यति स वर्षेशः, एवं आद्याः = प्राचीनाचार्याः विदुः ।

अथ दृगादिसाम्ये = दृष्टिबलसाम्ये, अथ तेषां निर्बलत्वे तु मुथहेश्वरोऽब्दाधिपः स्यात् । चेत्पञ्च=पञ्चाधिकारिणोऽपि, तनुं = लग्नं, ईक्षमाणाः=पश्यन्तो नैव, भवेयुस्तदा तेषां यो वीर्याधिकः=बलाधिकः, स अब्दस्य=वर्षस्य, विभुः=स्वामी विचिन्त्यः ॥ ९-११ ॥

भाषा—जन्मलग्न का स्वामी (१), वर्षलग्नेश(२), मुथहेश (३), त्रिराशीश(४), दिन में वर्षप्रवेश होने से सूर्य जिस राशि में हो उसका स्वामी, रात में वर्षप्रवेश होने से तो चन्द्रराशीश अर्थात् चन्द्र जिस राशि में हो, उसका स्वामी(५), इन पांचों

को विचार कर के, कौन ग्रह कौन अधिकारी है? यह विचार कर के, इन पाचों में जो सब से बली हो, और लग्न को भी देखे वही वर्षेश होगा। सब से अधिक बली होकर भी अगर लग्न को नहीं देखे, तो वह वर्षेश नहीं होता ॥ ९ ॥

अगर पाचों अधिकारी समान बल वाले हों, तो जो ग्रह लग्न को अधिक दृष्टि से देखे, वही वर्षेश होगा। ऐसे प्राचीन आचार्य कहते हैं ॥ १० ॥

यदि पञ्चाधिकारियों के बल और दृष्टि भी समान हो, और पांचों दुर्बल ही हों ऐसी स्थिति में मुथहेश्वर जो ग्रह है, उसी को वर्षेश समझना। अगर पाचों में एक भी ग्रह लग्न को नहीं देखे, तो जो ग्रह सब से (पञ्चाधिकारियों में) अधिक बलवान् हो वही वर्षेश होता है ॥ ११ ॥

अथ केषाञ्चिन्मतमाह—

**बलादिसाम्ये रविराशिपोऽह्नि निशीन्दुराशीडिति केचिदाहुः।**
**येनेत्थशाल्यब्दविभुः शशी स वर्षाधिपश्चन्द्रभपोऽन्यथात्वे ॥ १२ ॥**

बलादिसाम्ये=बलदृष्टिसमत्वे, अह्नि=दिवसे, रविराशिपः = सूर्याश्रयराशीशः। निशि=रात्रौ, इन्दुराशीशः = चन्द्राकान्तराशीशः, वर्षेशो भवतीति केचिदाचार्या आहुः। परन्तु उक्तसिद्धान्तेन सिद्धोऽब्दविभुः=वर्षेशः, शशी = चन्द्रः, येन ग्रहेणेत्थशाली = इत्थशालयोगकर्त्ता, भवेत् स वर्षेशः। यदि बहुभिर्ग्रहैश्चन्द्र इत्थशालयोगकर्त्ता भवेत्तदा यस्तेषां सर्वाधिकबली स वर्षेशः। अन्यथात्वे = केनापि ग्रहेण चन्द्रस्येत्थशालाभावे, चन्द्रभपः = चन्द्रराशीशो वर्षेशः स्यादित्यनेन चन्द्रस्य वर्षेशत्वमसम्भवं सिद्धम्। यदि च निशि चन्द्रः कर्कराशावेव भवेत्तदैव चन्द्रो वर्षेशः संभवेत् ॥ १२ ॥

भाषा—यदि पञ्चाधिकारियों में सबों के बल और दृष्टि समान हों, तो दिन में वर्षप्रवेश होने से जिस राशि में सूर्य हों, उसका स्वामी, रात में जिस राशिमें चन्द्रमा हों, उसका स्वामी वर्षेश होता है। यह कोई आचार्य कहते हैं। अब पूर्वप्रकार से सिद्ध वर्षेश चन्द्रमा यदि जिस किसी ग्रहसे इत्थशाल करता हो, तो वही वर्षेश होता है। यदि इत्थशाल नहीं होता हो, तो चन्द्रराशि के स्वामी ही वर्षेश होता है ॥ १२ ॥

अथ वर्षफलाध्यायः—

**अब्दाधिपो व्ययषडष्टमभिन्नसंस्थो लब्धोदयोऽब्दजनुषोः सदृशो बलेन।**
**निःशेषमुत्तमफलं विदधाति काये नैरुज्यराज्यबललब्धिरतीव सौख्यम् १३**

अब्दाधिपः = वर्षेशग्रहः, व्ययषडष्टमभिन्नसंस्थः = द्वादशषष्ठाष्टमस्थानान्यस्थानगतः, लब्धोदयः = प्राप्तोदयः, अस्तङ्गतो नेत्यर्थः। अब्दजनुषोः = वर्षजन्मका-

लग्नोः, बलेन सदृशः = समः, अर्थाज्जन्मनि, वर्षे च बलवान्, तदा निःशेषम्, उत्तमफलम् = शुभफलं, भवति । काये = शरीरे, नैरुज्यराज्यबललब्धिः, अतीव सौख्यं च भवति ॥ १३ ॥

भाषा—यदि वर्षेश १।३।६।८ इन स्थानों से अन्यत्र हों, उदित हों, वर्षप्रवेश और जन्मकाल में भी बलवान् हों तो सब फल उत्तम होते हैं। शरीर में आरोग्य, बल, पुष्टि, राज्यप्राप्ति और अत्यन्त सुख होता है ॥ १३ ॥

अथ बलानुसारेण वर्षेश्वरफलमाह—

बलपूर्णेऽब्दपे पूर्णं शुभं मध्ये च मध्यमम् ।
अधमे दुःखशोकारिभयानि विविधाः शुचः ॥ १४ ॥

अब्दपे = वर्षेशे, बलपूर्णे सति, शुभमुत्तमफलं पूर्णं भवति । अब्दपे मध्ये = मध्यबले सति शुभं फलं मध्यमं ज्ञेयम् । वर्षेशेऽधमे=हीनबले, दुःखशोकारिभयानि= क्लेश-शोक-शत्रु-भयानि, विविधाः = अनेकप्रकाराः, शुचः=रोगाः, भवन्ति ॥१४॥

भाषा—वर्षेश पूर्णबली हो तो शुभ फल पूर्ण होता है यदि मध्यबली हो तो मध्यम फल होता है, यदि अल्पबली हो तो सब अशुभ ही फल होता है ॥ १४ ॥

अथ सूर्यस्य वर्षेशत्वफलं, तत्र पूर्णबलिनो वर्षेशसूर्यस्य फलमाह—

सूर्येऽब्दपे बलिनि राज्यसुखात्मजार्थलाभःकुलोचितविभुः परिवारसौख्यम्
पुष्टं यशो गृहसुखंविविधा प्रतिष्ठा शत्रुर्विनश्यति फलं जनिखेटयुक्त्या १५

बलिनि=दशाधिकबलयुक्ते, सूर्ये=रवौ, अब्दपे=वर्षेशे, सति राज्यसुखात्मजार्थलाभः = राज्यसुखस्य, आत्मजस्य = पुत्रस्यापि लाभः स्यात्, कुलोचितविभुः= वंशक्रमागतसामर्थ्यवान् । परिवारसौख्यं = परिजनसुखम्, पुष्टम्=अधिकं, यशः= लोके प्रशंसनीयत्वम्, गृहसुखम्=धनधान्यस्त्रीपुत्रसुखं, विविधा=नानारूपा, प्रतिष्ठा= ख्यातिः, भवति । शत्रुः=विरोधी विनश्यति । जनिखेटयुक्त्या=जन्मकालिकग्रहबलतारतम्यरीत्या फलमूहनीयम् । यथोभयत्र पूर्णबलत्वे पूर्णं शुभम् । एकत्र पूर्णबलत्वेऽन्यत्र मध्यबलत्वे किञ्चिन्न्यूनं पूर्णं फलम् । यदि एकत्र पूर्णबलोऽन्यत्र हीनबलस्तदा समं फलम् । यद्युभयत्र मध्यबलस्तदा फलं मध्यमम् । यद्येकत्र मध्यबलोऽन्यत्र हीनबलस्तदाऽल्पं फलं, यदि उभयत्र हीनबलस्तदाऽत्यन्तहीनफलमिति ॥ १५ ॥

भाषा—पूर्णबली सूर्य वर्षेश होने से, राज्यसुख, पुत्र, धन लाभ, वंश के अनुसार समुचित अधिकार, परिजन सुख, पूर्णयश, गृहसुख, अनेक प्रकार की प्रतिष्ठा, शत्रुनाश, ये फल होते हैं। यहां जन्मकाल के ग्रहोंके बल समझ कर फल विषय में विचार

करना । जैसे जन्म, और वर्ष समय में पूर्ण बली हो तो पूरा शुभफल । यदि दोनों काल में एक में पूर्णबली, दूसरे में मध्यबली तो कुछ कमती पूरा शुभ फल हो । यदि, एक काल में पूर्णबली दूसरे काल में हीनबली हो, तो मध्यमफल, यदि दोनों समय में मध्यम बली ही हो, तो मध्यमफल ही कहना । यदि एक काल में मध्यमबली दूसरे में हीणबली हो, तो न्यून शुभफल कहना । यदि दोनों काल में हीनबली ही हो, तो अत्यन्त न्यून शुभफल, प्रत्युत विशेष अशुभ ही फल कहना, जैसे—शुभफल की मात्रा घटेगी, वैसे अशुभ फल की मात्रा बढ़ेगी यह भी समझना ॥ १५ ॥

अथ मध्यबलसूर्यस्य वर्षेशफलम्—

**स्यान्मध्यमे फलमिदं निखिलं तु मध्यं**
**स्वल्पं सुखं स्वजनतोऽपि विषादमाहुः ।**
**स्थानच्युतिर्न च सुखं कृशता शरीरे**
**भीतिर्नृपान्मुथशिलो न शुभेन चेत्स्यात् ॥ १६ ॥**

मध्यमे=मध्यमबले, पञ्चाधिकदशाल्पसंख्यकबलयुक्ते, सूर्ये वर्षेशे सति, इदं पूर्वोक्तं निखिलं=सर्वं, फलं, मध्यममेव=सामान्यमेव ज्ञेयम्, तथा सुखं, स्वल्पम् , स्वजनतः=स्त्रीपुत्रभ्रातृभिः, अपि, विवादं=साग्रहविरसकटुवचनालापम् , आहुः । स्थानच्युतिः = पदभ्रंशः, सुखं न, च = पुनः, शरीरे=देहे, कृशता = क्षीणत्वम्, नृपात् = भूपात्, भीतिर्भयम् , चेद्यदि शुभेन = शुभग्रहेण, वर्षेशस्य मुथशिल इत्थशालो न स्यात्तदैवम् । शुभेत्थशाले शुभमेव फलं वाच्यम् ॥ १६ ॥

भाषा—पांच दश के बीच बल वाले ( मध्यम बली ) सूर्य यदि वर्षेश हों तो यह जो पूर्णबली वर्षेश में फल सब कहे हैं, वे सब साधारण समझना । और थोड़ा सुख, अपने परिजनसे भी विवाद हो, और स्थान नाश, सुख नहीं, शरीर में दुर्बलता, राजा से भय हो, यदि शुभग्रह से वर्षेश का इत्थशाल नहीं होता हो तो ऐसा समझना । अर्थात् मध्यबली होता हुआ भी यदि शुभग्रह से इत्थशाल करता हो, तो शुभ फल ही कहना ॥ १६ ॥

अथ हीनबलसूर्यस्य वर्षेशफलमाह—

**सूर्ये बलेन रहितेऽब्दपतौ विदेशयानं धनक्षयशुचोऽरिभयं च तन्द्राः ।**
**लोकापवादभयमुग्ररुजोऽतिदुःखं पित्रादितोऽपि न सुखं सुतमित्रभीतिः१७**

बलेन रहितेऽर्थात्पञ्चाल्पबलशालिनि सूर्येऽब्दपतौ = वर्षेशे, विदेशयानं = परदेशगमनम् , धनक्षयशुचः=धनव्ययो रोगश्च, अरिभयं= शत्रुभीतिः तन्द्रा = आलस्यम् । लोकापवादभयं = जनकर्तृकदुर्यशःख्यापनभयम् , उग्ररुजः = कठिनरोगाः,

अतिदुःखं, पित्रादितः=प्रियतमजनकादिपरिजनात्, अपि सुखं न, सुतमित्रभीतिः = पुत्रसुहृदोऽपि भयम्, भवतीति शेषः ॥ १७ ॥

भाषा—बलहीन (पांच से न्यून बल युक्त) सूर्य यदि वर्षेश हो, तो परदेश गमन, धननाश, शोक, रोग, शत्रुभय, आलस्य, लोकापवाद (कलङ्क), कठिन रोग, अत्यन्त क्लेश, पिता आदि प्रेमी परिजनों से भी सुख नहीं, प्रत्युत पुत्र, दोस्त से भी डर हो॥१७।

अथ विशेषफलमुक्तं हायनसुन्दरे—

वर्षस्वामी यदा सूर्यस्तन्मध्ये संस्थितोऽपि वा । पूर्णं पश्यति वा वर्षे तदा राजभयं भवेत् ज्वरः पित्तभ्रमो वा स्याद्धानिर्वा पूर्वदेशतः ।

धातुव्यापारतो हानिर्विरोधो मित्रबान्धवैः । वियोगो देशगमनं, यदि चन्द्रमसा युतः॥२।

पूर्णदृष्टेऽथ शत्रूणां जेता द्रविणलाभदः। वायव्योत्तरतो लब्धिः सौख्यं तेजोविवर्धनम्॥३॥

सयोगता मित्रसङ्गः स्त्रीसङ्गात्सुखमाप्नुयात्।श्वेतक्रयाणकाल्लाभो विशेषात् कलपत्तनम्॥४॥

शयनाशनवस्त्रादि मिष्टान्नस्वादुभोजनम्। सौधोत्सङ्गे स्थितो गीतनृत्यलोलुपमानसः ॥५॥

स्त्रीवत्सलः सुगन्धाढ्यो रात्रौ सुखितचेतसः।श्लेष्मकोपः क्वचित्काले वान्तिर्वा भवति ध्रुवम्६

स्याद्भौमयुतदृष्टोऽर्को भवेद्विद्रुमलाभकृत्।स्वर्णलाभो यशोलाभः शत्रूणां च पराजयः॥७॥

राजसन्मानमधिकं त्वतिपित्तप्रकोपता । स्याद्दक्षिणदिशो लाभो वह्नितस्करसाध्वसम्॥८॥

मृषाभयं भवेद्भौमयुतदृष्टे च भास्करे ।

सूर्यो बुधेन सहितोऽथ निरीक्षितोऽपि स्यात्तद्गुणः किमपि कच्छुरता कदाचित् ।

शत्रोर्भयं भवति किञ्चन कष्टमिष्टैर्विद्वेषिता स्वसदनेऽपि रुजाऽर्दितः स्यात् ॥ ९ ॥

यदि गुरुयुतदृष्टः स्यादसौ चण्डरोचिः सृजति वितथमार्गं पापमार्गं विहाय ॥

गुरुपदमथ तीर्थं प्राप्नुयात् पुत्रसौख्यं नृपकुलबहुमान्यस्त्रीप्रसङ्गेन लाभः ॥ १० ॥

सज्जनैः सह सम्बन्धः शत्रुनाशो धनागमः। चित्तोत्साहो मनोऽभीष्टं कार्यसिद्धिर्भवेन्नृणाम् ११

रविरथ सितदृष्टः संयुतो वा ज्वरार्त्तिर्भवति शिरसि पीडा छर्दिरप्येति वान्तिम् ।

भवति जठरशूलं कासपित्तातिसारै रिपुभयमथ चिन्ता स्थानतो भ्रंशमेति ॥ १२ ॥

स्यादाग्नेयदिशो लाभः पित्तकामलदद्रुता । गलः शुष्यति शुक्रेण रविर्दृष्टो युतो यदि॥१३॥

शनिना यदि संयुतोऽथ दृष्टस्तपनस्तापकरो नृणां रिपुभ्यः ।

धनहानिरुदासतोद्यमात् स्याद्विफलः क्लेशकरः सुहृद्वियोगात् ॥ १४ ॥

स्याच्चतुष्पदतो हानिरसितादपि मानवात्। असौख्यं पश्चिमाशातो हानिः शनियुतो रविः।

राहुणाऽप्यथ युतो यदि दृष्टो घर्मदीधितिरमङ्गलकर्त्ता ॥

नीचकर्मनिरतो धनहीनः पीडितो भवति दुर्व्यसनेन ॥ १६ ॥

पुत्र-मित्र-सहजादिपीडितः कष्टमेति सुखहानिरद्भुता ।
आधिमेति ननु नैर्ऋतेर्दिशो मूत्रकृच्छ्रसदृशा रुजाऽर्दितः ॥ १७ ॥
वियोगो बन्धुवर्गेभ्यो विकाराः पीडयन्ति च । नीचसञ्चरतो नित्यं राहुणा संयुतो रविः १८
केतुना युतदृष्टोऽर्कः स्थानभ्रंशमवाप्नुयात् । बन्धुमित्रकृता पीडा सौदास्यं शोचनीयता १९
हानिर्नीचजनात्कृष्णमनुजेनार्दितो भवेत् । सर्वाशुभफलं दत्ते केतुना संयुतो रविः।इति २०

अथ चन्द्रस्य वर्षेशफलमाह—

चन्द्रेऽब्दपे मुथशिलं येनासावब्दपोऽस्य चेत् ।
कम्बूलमिन्दुना जन्म निशि वर्षं तदोत्तमम् ॥ १८ ॥

चन्द्रेऽब्दपे = वर्षेशे सति, येन ग्रहेणाऽस्य चन्द्रस्य मुथशिलं, असौ ग्रहो वर्षेशस्तस्य चेत् इन्दुना चन्द्रेण कबूलं तथा यदि निशि = रात्रौ, जन्म, तदा वर्षमुत्तमं = शुभफलयुक्तमिति ॥ १८ ॥

भाषा—चन्द्रमा वर्षेश होकर जिस किसी ग्रह से इत्थशाल करै, वही वर्षेश होता है यह कह आये हैं, अब वह वर्षेश यदि चन्द्रमा से कबूल योग करता है और रात में जन्म है तो वह वर्ष उत्तम होता है ॥ १८ ॥

अथ पूर्णबलचन्द्रस्य वर्षेशत्वफलमाह—

वीर्यान्विते शशिनि वित्तकलत्रपुत्र-
मित्रालयस्य विविधं सुखमाहुरार्याः ।
स्रग्गन्धमौक्तिकदुकूलसुखानुभूति-
र्लाभः कुलोचितपदस्य नृपैः सखित्वम् ॥ १९ ॥

वीर्यान्विते=पूर्णबले = दशाधिकबले, शशिनि=चन्द्रे, वर्षेशे सति, वित्तकलत्रपुत्रमित्रालयस्य = धन-स्त्री-सुत-मित्र-गृहस्य, विविधमनेकप्रकारकं सुखमार्याः पूज्या आहुः । स्रगन्धिमौक्तिकदुकूलसुखानुभूतिः = माल्य-सुगन्धद्रव्य-मौक्तिक-वस्त्र-सुखानुभवः । कुलोचितपदस्य लाभः । विप्रस्याध्यापनं, क्षत्रियस्य शासनं, वैश्यस्य व्यापारकरणं, शूद्रस्य सेवा जीविका, एवं रूपस्य लाभः स्यात् । नृपैः = भूपैः, सखित्वं = मित्रत्वम् , भवति ॥ १९ ॥

भाषा—पूर्णबली ( १० से अधिक बल वाला ) चन्द्रमा यदि वर्षेश हो, तो धन स्त्री-पुत्र-मकान के अनेक प्रकार का सुख कहना । माला, सुगन्धित द्रव्य, मोती, वस्त्र, सुखों का अनुभव हो । अपने कुलोचित पद ( स्थानाधिकार ) का लाभ हो । राजाओंसे मित्रता हो । यह पूज्य आचार्य कहे हैं ॥ १९ ॥

अथ मध्यबलचन्द्रस्य वर्षेशबलमाह—

वर्षाधिपे शशिनि मध्यबले फलानि
मध्यान्यमूनि रिपुता सुतमित्रवर्गैः।
स्थानान्तरे गतिरथो कृशता शरीरे
श्लेष्मोद्भवश्च यदि पापकृतेसराफः॥ २०॥

मध्यबले ( पञ्चाधिकदशाल्पबले ) शशिनि = चन्द्रे वर्षाधिपे सति अमूनि पूर्वोक्तानि पूर्णबलचन्द्रस्य वर्षेशत्वे कथितानि वित्तकलत्रपुत्रमित्रालयस्य विविधं सुखमित्यादीनि फलानि मध्यानि=साधारणानि, भवेयुः। सुतमित्रवर्गैः, रिपुता=शत्रुता, स्थानान्तरे गतिः=गमनं, अथो=अनन्तरं, शरीरे=देहे, कृशता=दौर्बल्यं, भवति। यदि तादृशो मध्यबलचन्द्रः पापकृतेसराफस्तदा श्लेष्मोद्भवः = कफप्रकोपोदयः स्यात्॥२०॥

भाषा—यदि मध्यबली चन्द्रमा वर्षेश हो तो पूर्णबली चन्द्रमा वर्षेश होनेसे जो फल कहा है, वे सब साधारण समझना, और पुत्र मित्र वर्गों से भी शत्रुता, दूसरे जगहमें जाना पड़े, शरीरमें दुर्बलता हो। यदि वैसा मध्यबली चन्द्रमा वर्षेश होकर पापग्रह से ईसराफ योग करता हो तो कफ का प्रकोप होता है॥ २०॥

अथ क्षीणबलचन्द्रस्य वर्षेशफलमाह—

नष्टेऽब्दपे शशिनि शीतकफादिरोगश्चौर्यादिभीः स्वजनविग्रहमप्युशन्ति।
दूरे गतिः सुतकलत्रसुखक्षयश्च स्यान्मृत्युतुल्यमतिहीनबले शशांके॥२१॥

नष्टे = अस्तङ्गते, शशिनि = चन्द्रेऽब्दपे=वर्षेशे, सति शीतकफादिरोगः, चौर्यादिभीः=चौरतस्करभयम्, स्वजनविग्रहम्, अपि उशन्ति=कथयन्ति। अथ च अतिहीनबले=पञ्चाल्पबले, चन्द्रे वर्षेशे सति, दूरे = दूरदेशे, गतिः=गमनं, सुतकलत्रसुखक्षयः, मृत्युतुल्यं, कष्टं भवति॥ २१॥

भाषा—अस्तङ्गत चन्द्रमा वर्षेश होने से शीत, कफ, यक्ष्मा, खांसी, रोग होता है। चोरी आदि की डर, अपने परिजन से भी ( विरोध ) दूसरों से तो बात ही क्या है। और यदि अतिहीन बल चन्द्रमा वर्षेश हों, तो दूर देश जाना पड़े, पुत्र, स्त्री का सुख नष्ट हो, मृत्युतुल्य कष्ट हो। ये फल आचार्य लोग कहे हैं॥ २१॥

अथात्र विशेषफलमुक्तं हायनसुन्दरे—

वर्षपो यदि चन्द्रः स्यात्पूर्णं पश्यति वर्षपम्'। वर्षे वा स्त्रीप्रसङ्गेन मनुजः सुखमेधते॥
कन्याप्रसूतिः सितवस्तुतः स्याल्लाभस्तथाऽलङ्करणं च किञ्चित्।
स्वप्ने युवत्या सह सङ्गमेति लाभस्तु वायव्यदिशोऽपि भूयात्॥ २॥

भुङ्क्तेऽतिमधुरं वस्त्राभरणप्राप्तिरुत्तमा । किञ्चित् स्वपक्षतो वैरं लाभः स्यादुत्तरादिशः ॥

चन्द्रः सूर्येण युतो दृष्टो वा राजसङ्गमं कुरुते ।
क्षामो ज्वराच्छिरोऽर्त्तिर्गात्रे शूलादिविस्फोटः ॥ ४ ॥

किञ्चिदपि वह्नितः सुरपनृपवर्गाद्भीतिमेति साशङ्कम् ।
कुद्धत्यनुसमयमयं यदि चन्द्रः सूर्ययुतदृष्टः ॥ ५ ॥

भौमेन सहितश्चन्द्रो दृष्टो वाग्नेऽश्वतुष्पदात् । भयं विधत्ते याम्यातो हानिः कफज्वरौ तथा ॥
भयं च स्खलनाद्भूमौ शस्त्राद्रुधिरविक्रिया । कासं विस्फोटकादि स्याद्भयं हानिरथाल्पिका ॥
क्षामं वपुर्नृपाद्दण्डभयं स्यादिन्द्रलुप्तकम् । मङ्गलेन युतो दृष्टो मङ्गलं कुरुते शशी ॥
बुधेन बुधदृष्टो वा रोहिणीरमणस्तदा । स्वर्णादिधातुसम्बन्धाल्लाभो वाहनवाजिनाम् ॥
मेधावृद्धिर्भोगयुतः सदाऽऽनन्दमयः सुखी । समक्षं रिपुपक्षः स्याल्लिखने पठने भयम् ॥
स्यादुत्तरदिशो लाभः स्वजनात् सुखमाप्नुयात् । सदा शुभफलं दत्ते बुधेन सहितः शशी ॥

यदि गुरुयुतदृष्टस्तारकेशो धनाप्तिं सुखवसनसुतस्त्रीसद्विलासं विधत्ते ।
भवति विशदविद्यालब्धिरैन्द्रीदिशातः किमपि च धनदाशातो महालाभमेति ॥

वाहनाप्तिः वेदोक्ता भगवत्यतिवत्सलः । लोके मानयशःस्वर्णलाभस्तूत्तमसङ्गतः ॥

जगदीश्वरपदभक्तो लाभो जलजातवस्तुनः सततम् ।
सुखमेति स्त्रीसङ्गात् कन्यासूतिः स्त्रिया लाभः ॥

स्यादाग्नेयदिशो लाभः सौख्यं पुण्यविवर्धनम् । गीतादुत्तमवस्त्रादिशयनासनभोजनम् ॥
स्यादुत्तमगतिप्राप्तिः सविलासः सहोदितः । सुगन्धं दिव्यवस्त्रादि लभते मनुजोत्तमः ॥
सौरिणा युतदृष्टेन्दुरुद्वेगं कुरुते भयम् । नृपशत्रुभयाच्छोकं हानिं वा वारुणीदिशः ॥
काणात्पङ्गोरल्पलाभो धननाशो भयं भवेत् । गात्रे रक्तविकारेण दद्रुर्नीचेन सङ्गतिः ॥
कुटुम्बमध्ये कलहो दुर्बुद्धेर्व्यसनागमः । कृशता गात्रसङ्कोचः शनियुक्तो यदा शशी ॥
स्यात्तमोयुतदृष्टेन्दुस्तदा शत्रुरुजार्दितः । भयोद्वेगौ शरीरे च रक्तवातस्य विक्रिया ॥

मूर्च्छाज्वरामयः सर्पजलभीः कलहोऽसकृत् ।
स्यान्नैर्ऋतदिशो हानिः केतुना सहितः शशी ॥ इति वर्षेशचन्द्रफलम् ॥

अथ पूर्णबलभौमस्य वर्षेशफलमाह—

**भौमेऽब्दपे बलिनि कीर्तिजयारिनाशः**
**सेनापतित्वरणनायकता प्रदिष्टा ।**

लाभः कुलोचितधनस्य नमस्यता च
लोकेषु मित्रसुतवित्तकलत्रसौख्यम् ॥ २२ ॥

बलिनि = पूर्णबले, भौमे = कुजे, अब्दपे=वर्षेशे, सति, कीर्त्तिजयः, अरिनाशः, सेनापतित्वरणनायकता, प्रदिष्टा । कुलोचितधनस्य, ब्राह्मणस्य विद्या, क्षत्रियस्य राज्यं, वैश्यस्य धनधान्यादि, शूद्रस्य सेवालब्धद्रव्यम् इतिरूपस्य लाभः । लोकेषु = जनेषु, नमस्यता = माननीयता, सुतमित्रकलत्रसौख्यं च भवति ॥ २२ ॥

भाषा—पूर्णबली मङ्गल वर्षेश होनेसे, कीर्त्ति, जय, शत्रु का नाश, सेनापति या संग्राममें प्रधान, ( वस्तुतः ये दोनों एक ही हैं )। और कुलोचित धन सम्पत्ति की प्राप्ति, लोगोंमें मान्य पूज्य होना, और पुत्र, मित्र, स्त्री का सुख होता है ॥ २२ ॥

अथ मध्यबलभौमस्य वर्षेशफलमाह—

मध्येऽब्दपेऽवनिसुते रुधिरस्रुतिश्च
कोपोऽधिको झकटशस्त्रहतिक्षतानि ।
स्वामित्वमात्मगणतो बलगौरवं च
मध्यं सुखं निखिलमुक्तफलं विचिन्त्यम् ॥ २३ ॥

मध्ये = मध्यबले, भौमे = कुजे, अब्दपे=वर्षेशे, सति, रुधिरस्रुतिः=शोणितक्षरणम् , अधिकः, कोपः = क्रोधः । झकटशस्त्रहतिक्षतानि = कलह-शस्त्राघात-व्रणानि, आत्मगणतः=स्ववर्गात् , स्वामित्वम् , बलगौरवं च, भवति, तथा निखिलं=सकलम् , उक्तफलं=पूर्णबलकुजफलं, मध्यं=साधारणं, सुखं च साधारणं विचिन्त्यम् ॥ २३ ॥

भाषा—मध्यम (६-१०) बली मंगल यदि वर्षेश हो, तो खून गिरे, अधिक क्रोध, झगड़ा, शस्त्र की चोट, घाव होवे, अपने परिजन का मालिक हो, बल, गौरव, मध्यम सुख हो, और पूर्ण बल मंगल वर्षेशमें जो फल कहा है, वह मध्यम (साधारण) हो ॥

अथ क्षीणबलकुजस्य वर्षेशफलमाह—

हीनेऽब्दपेऽसृजि भयं रिपुतस्कराग्निलोकापवादभयमात्मधियां विनाशः।
कार्यस्य विघ्नमतिरोगभयं विदेशयानं क्षयोऽपनयतो गुरुदृष्ट्यभावे ॥२४॥

हीने = हीनबले (१-५) असृजि = कुजे, अब्दपे = वर्षेशे सति, भयं = भीतिः, रिपुतस्कराग्निलोकापवादभयम् = शत्रु–चौर–वह्नि–जननिन्दनभयम् , आत्मधियां= स्वबुद्धीनां, विनाशः = क्षयः, कार्यस्य सिद्धौ, विघ्नमन्तरायः । अतिरोगभयं=विशेषरोगभयम् , विदेशयानं = परदेशगमनम् , गुरुदृष्ट्यभावे सति अपनयतः = अन्यायात् , क्षयो नाशः सम्भवति ॥ २४ ॥

भाषा—हीन बली मङ्गल वर्षेश होने से भय होता, और शत्रु भय, चोर भय, अग्नि भय, लोकापवाद भय, और अपनी बुद्धि का नाश, काम काज में बाधा, अत्यन्त रोगभय, परदेश जाना, ये सब फल होते हैं। यहां बृहस्पति की दृष्टि तादृश हीनबल मङ्गल पर नहीं हो तो अन्याय से क्षय ( नाश ) होता है ॥ २४ ॥

अथ विशेषफलमुक्तं हायनसुन्दरे—

वर्षपो यदि माहेयो वर्षेण युतदृग् यदि । पित्तरक्तप्रकोपोऽन्यदारदुर्व्यसने रतः ॥
दुर्नये निरतो मित्रबान्धवैर्विग्रहोऽधिकः । तस्कराग्निभयं धत्ते यदि भौमोऽस्ति वर्षपः ॥
रविणा युतदृष्टोऽथ वक्रो नृपकुलाद्धनम् । तत्सन्मानमवाप्नोति कुर्यात् साहसमुत्तमम् ॥
रणे जयः प्राग्दिशातः सुखलाभो ज्वरस्तनौ । पश्चिमस्यामलाभोऽश्वभयं वित्तभयं क्वचित् ॥
चन्द्रेण युतदृष्टश्चेदारो नानार्थलाभदः । सुहृदः सुखमुत्साहमाप्नोति मणिमौक्तिकान् ॥

पुत्रभ्रातृप्रवृद्धिः स्यात् सुखं युवतिसंगमात् ।
वस्त्राभरणभोज्यानां लाभो वायव्यदिग्भवः ॥
चान्द्रिणा धरणिजो युतदृष्टो वैरिवर्गपरितापमुपैति ।
राजवह्निनृपभीर्धनहानिः पीडनं पशुगणस्य नितान्तम् ॥
रक्तपित्तप्रकोपः स्याच्चिन्ता धनददिग्भवा ।
भौमेन युतदृष्टश्चेद् बुधोऽशुभफलप्रदः ॥
भौमो गुरुयुतदृष्टस्तीर्थप्राप्तिः सदैव गुरुभक्तः ।
पुण्यमतिः शुभसंगतिमासाद्य शुभार्थसञ्चयं कुरुते ॥
विख्यातः सर्वसुजने कुलमध्ये सुप्रतिष्ठितो भवति ।
ईशानदिशो लाभः स्वल्पभयं किमपि सुखमसौ धत्ते ॥
भौमः सितयुतदृष्टः शत्रुक्रोधाद्भयं वपुर्दुःखम् ।
सोपद्रवता हानिर्गमनं दुर्व्यसनमग्निदिग्भीतिः ॥
शनियुतदृष्टे भौमे दुःखमुदासो विचिन्तिता दौःस्थ्यम् ।
हानिर्दुर्व्यसनत्वं दुर्बुद्धिर्नीचसङ्गमतः ॥

उद्वेगः स्यात् पश्चिमाशाभवो हानिः सितेतरात् । मनुजाद्वा यशोहानिर्भवेच्छनिदृग्युतः ॥
राहुणा युतदृष्टश्चेल्लोहिताङ्गो भयङ्करः । चौराग्निनृपशत्रूणां भीतिदः सुखहानिकृत् ॥
शरीरे वातकष्टं स्याद्भयं नैर्ऋत्यदिग्भवम् । तथोद्वेगो हानिरर्थे नीचसङ्गादधर्मकृत् ॥
स्यात् केतुयुतदृष्टश्चेत्कुजो विद्युद्भयङ्करः । स्यान्मेघगर्जनाद्भीतिश्चोदराग्निरिपोरपि ॥

शरीरेऽपि रुजातङ्कौ क्लेशश्चौरादहेर्भयम् । शोकचिन्तापरो भूपाद्भौमः केतुदृशा युतः ॥

इति वर्षेशभौमफलम् ।

अथ पूर्णबलस्य बुधस्य वर्षेशफलमाह—

सौम्येऽब्दपे बलवति प्रतिवादलेख्य-
सच्छास्त्रसद्व्यवहृतौ विजयोऽर्थलाभः ।
ज्ञानं कलागणितवैद्यभवं गुरुत्वं
राजाश्रयेण नृपता नृपमन्त्रिता वा ॥ २५ ॥

बलवति सौम्ये=बुधे, अब्दपे = वर्षेशे, सति, प्रतिवादलेख्यसच्छास्त्रसद्व्यवहृतौ= विवाद-लिपिकर्म-शुभशास्त्रव्यवहारे शास्त्रार्थे च विजयः = स्वजयः, अर्थलाभः = धनलाभः, कलागणितवैद्यभवं = ज्ञानं, राजाश्रयेण गुरुत्वं=गौरवं, नृपता=राजत्वं, वा नृपमन्त्रिता = भूपमन्त्रित्वं च भवति ॥ २५ ॥

भाषा—पूर्ण बलवान् बुध वर्षेश होनेसे लोगों से विवाद में, लेख कागज पत्र के बावत् में, अच्छे शास्त्रों के व्यवहार ( शास्त्रार्थ ) में, यदि वकील हो तो जिरह बहस में जय होती है और धन लाभ होता है। नाना प्रकार की कलाओं में गणित (हसाब) में वैद्यक ( आयुर्वेद ) में ज्ञान उत्पन्न होता है। राजा के आश्रय से, गौरव (संमान) होता है और राजा, या राजमन्त्री ( मिनिष्टर ) होता है ॥ २५ ॥

अथ मध्यबलबुधस्य वर्षेशफलमाह—

अब्दाधिपे शशिसुते खलुमध्यवीर्ये स्यान्मध्यमं निखिलमेतदथाध्वयानम् ।
वाणिज्यवर्तनमथात्मजमित्रसौख्यं सौम्येत्थशालवशतोऽपरथा न सम्यक् ॥

मध्यवीर्ये = मध्यबले ( ५-१० ) शशिसुते=बुधे अब्दाधिपे=वर्षेशे, सति, एतत् पूर्वोक्तं ( प्रतिवादलेख्येत्यादिकं ) सकलं फलं मध्यमं भवति । अथ अध्वयानम् = मार्गचलनं, परदेशगमनमित्यर्थः । वाणिज्यवर्त्तनं=व्यापारप्रचारः, अथ सौम्येत्थशालवशतः = शुभग्रहेत्थशालवशात् आत्मजमित्रसौख्यम् = पुत्र-मित्र-सौख्यम् । भवति । अपरथा = अन्यथा शुभेत्थशालाभावे सम्यक् फलं नेति विज्ञेयम् ॥२६॥

भाषा—मध्यबली बुध वर्षेश होने से पूर्वोक्त ( पूर्ण बली बुध में जो जो फल कहे हैं) वे सब साधारण होते हैं। और रास्ता चलना, व्यापार का प्रचार होता है। शुभग्रह से इत्थशाल होने से, पुत्रसुख, मित्रसुख, होता है, अन्यथा अच्छा नहीं होता है॥२६॥

अथ हीनबलबुधस्य वर्षेशफलमाह—

सौम्येऽब्दपेऽधमबले बलबुद्धिहानिर्धर्मक्षयः परिभवो निजवाक्यदोषात् ।

**निक्षेपतो विपदतीव मृषैव साक्ष्यं हानिः परव्यवहृतेः सुतवित्तमित्रैः॥२७॥**

अधमबले = हीनबले ( १-५ ) सौम्ये = बुधे, अब्दपे = वर्षेशे, सति बलबुद्धिहानिः, धर्मक्षयः = धर्मनाशः, निजवाक्यदोषात् = स्ववचनापराधात्, परिभवः = पराभवः, निक्षेपतः = गर्त्तगतवित्ततः, अतीव = अत्यन्तं, विपत् । मृषैव = मिथ्यैव, साक्ष्यं=परमतपोष्टयं, परव्यवहृतेः=अन्यजनव्यवहारात्, सुतवित्तमित्रैः = पुत्रधनसुहृद्भिर्हानिः=क्षयो भवति ॥ २७ ॥

भाषा—हीन बली ( १-५ ) बुध वर्षेश होनेसे, बल बुद्धि की हानि होती है। धर्म का नाश ( अधर्म का उदय ), अपने ही वचन के दोष से पराभव, और गाड़े हुए धन से अत्यन्त विपत्ति होती है, झूठे ही गवाही देनी पड़ती है। दूसरों के व्यवहार से, तथा पुत्र, धन, मित्र से हानि होती है ॥ २७ ॥

अथ विशेषफलं हायनसुन्दरे—

वर्षलग्नपतिश्चान्द्रिर्युतदृष्टोऽथ सत्फलम् । दत्ते दिव्याङ्गनाभोगं धिषणामतिसुन्दरीम् ॥
स्वधर्मनिरतः पुत्रमित्रवर्गेण संयुतः । सुहृदां सुतकन्यादिवृद्धिः सानन्दमोदितः ॥
कदाचित् स्याद्वपुःपीडा लाभः स्यादुत्तरादिशः ।
सर्वशास्त्रप्रवीणश्च वर्षपः स्याद् बुधो यदि ॥
तथा राजकुलात् प्रीतिः स्त्रीपुत्रस्वजनोत्सवः ।
तीर्थप्राप्तिस्तथा लाभः पूर्वाशातः फलोद्भवः ॥
सुवर्णाश्वप्रवालादिपशुवर्गादिसञ्चयः ।
अकस्मादपि लब्धिः स्याद् बुधो रवियुतो यदा ॥
स्याच्चन्द्रयुतदृष्टस्तु सौम्योऽसौम्यकरः स्मृतः ।
कासदद्रुकृतां पीडां करोति गजसाध्वसम् ॥
पामाखर्जूरगं भङ्गः पशूनां वधपीडनम् ।
शत्रोर्भयं विनाशो वा चिन्ता वायव्यदिग्भवा ॥
सुहृद्भयोऽपि विरोधः स्यान्महिषादिरणाद्भयम् ।
स्याद्भौमयुतदृष्टश्चेच्चन्द्रजो दीर्घरोगकृत् ॥
कुले वा दुष्कलंकोऽथ स्थानभ्रंशमवाप्नुयात् ।
आधिर्वा दस्युभिः क्लेशः सम्भ्रमः परसङ्गमात् ॥
शिरोऽर्त्तिः स्वर्णकाराद्वा हानिर्याम्यदिशो भवेत् ।
गुरुणा युक्दृक् सौम्यो भयव्याधिनिकृन्तनः ॥

शत्रुनाशो नरेन्द्रादिसन्मानो महनीयता । सत्यवक्ता पुण्यतीर्थे लाभो धर्मव्रते दृढः ॥
ईशानदिग्भवं सौख्यं प्रीतिलाभं प्रयच्छति । भार्गवेण युतो दृष्टो ज्ञो विज्ञानकलापकृत्॥
बहुस्त्रीसङ्गमाद्रामारतिप्रीतिप्रमोददः । स्त्रीसङ्गमात् सुखप्राप्तिर्लाभः श्वेतक्रयाणकात् ॥
स्वदेवगुरुभक्तः स्याद्वदान्यो नाटकप्रियः । सुखमाङ्गल्यमुत्साहं कुरुते मित्रसङ्गमम् ॥
राजचिह्नपदप्राप्तिः शत्रुनाशं करोति च। स्यादाग्नेयदिशः सौख्यं बुधः शुक्रेण दृष्टयुक्॥
सौरिणा युतदृष्टस्तु धर्मभ्रंशकरो बुधः । सम्भोगसमये कार्श्यं शीतलत्वं प्रजायते ॥
प्रमेहादिविकारो वा नीचसङ्गाद्धनव्ययः। क्लीबे प्रीतिर्गृहे क्लेशो वेश्यादासीषु वा रतिः॥
बुधस्तमोदृष्टयुतः साहसं कुरुतेऽधिकम् । सर्वकार्यकृतोत्साहः किञ्चिच्चित्तभ्रमोऽपि च ॥
स्यान्नैर्ऋतदिशो लाभो वातोद्भूतरुजादितः ।
किञ्चिन्नीचजनात् सौख्यं लभते मनुजः सदा ॥
रोहिणीतनयः केतुयुतदृष्टो यदा भवेत् । शोकहानिकरो नीचसङ्गमादसुखं करः ॥

इति बुधवर्षेशफलम् ।

अथ गुरोरुत्तमबलिनो वर्षेशफलमाह—

**जीवेऽब्दपे बलयुते परिवारसौख्यं**
**धर्मो गुणग्रहिलता धनकीर्तिपुत्राः ।**
**विश्वास्यता जगति सम्मतिविक्रमाप्ति-**
**र्लाभो निधेर्नृपतिगौरवमप्यरिघ्नम् ॥ २८ ॥**

बलयुते = पूर्णबले ( १० <२० बल ) दशाधिकबले, जीवे=गुरौ, अब्दपे=वर्षेशे परिवारसौख्यं, धर्मः, = धर्मप्रवृत्तिः, गुणग्रहिलता = गुणग्राहकता, धनकीर्त्तिपुत्राः, भवन्ति । जगति = संसारे, विश्वास्यता = प्रतीतियुक्तता, सन्मतिविक्रमाप्तिः=शुभ-बुद्धि-पराक्रमलाभः, निधेः = निखातद्रव्यस्य, लाभः=प्राप्तिः, अरिघ्नं=शत्रुनाशकरं, नृपतिगौरवम् = राज्ञः सम्मानभाजनत्वम् , एतानि भवन्तीति ॥ २८ ॥

भाषा—पूर्णबली बृहस्पति वर्षेश होनेसे परिवार का सुख, धर्म, गुणग्रहण प्रेम, धन, यश, पुत्र ये शुभ फल होते हैं। संसारमें विश्वास पात्र, अच्छी बुद्धि, अच्छे पराक्रमकी प्राप्ति, गाड़े हुए धन का लाभ, और शत्रुके नाश करने वाला राजा का संमान प्राप्त होता है ॥ २८ ॥

अथ मध्यबलगुरोर्वर्षेशफलमाह—

**अब्दाधिपे सुरगुरौ किल मध्यवीर्यं स्यान्मध्यमं फलमिदं नृपसङ्गमश्च ।**

**विज्ञानशास्त्रपरताऽप्यशुभेसराफे दारिद्र्यमर्थविलयश्च कलत्रपीडा ॥२९॥**

मध्यवीर्ये = मध्यबले ( ५-१० ) सुरगुरौ = बृहस्पतौ, अब्दाधिपे=वर्षेशे सति इदं पूर्वोक्तं फलम् ( परिवारसौख्यं धर्मो गुणग्रहिलता, धनकीर्त्तिपुत्राः। विश्वास्यता जगति सन्मतिविक्रमाप्तिर्लाभो निधेर्नृपतिगौरवमप्यरिघ्नम् ) इति फलं मध्यमं=साधारणं ज्ञेयम्, नृपसङ्गमः = राजसमागमः, विज्ञानशास्त्रपरता = विशिष्टज्ञानविषयग्रन्थदर्शनासक्तिः। च स्यात् अशुभेसराफे=पापग्रहकृतेसराफयोगे सति, दारिद्रयम् = धनाल्पत्वम्, अर्थविलयः = धनव्ययः कलत्रपीडा = स्त्रीकष्टं च किल भवति ॥ २९ ॥

भाषा—मध्यबली बृहस्पति वर्षेश होनेसे पूर्णबलीके जो फल, सो सब साधारण समझना और राजासे मिलन, विज्ञान-शास्त्रमें, तत्परता हो यदि पापग्रहसे ईसराफ योग होता हो तो दरिद्रता, धन का नाश, स्त्रीकष्ट ये सब अशुभ फल होते हैं ॥२९॥

अथ हीनबलस्य गुरोर्वर्षेशफलमाह—

**जीवेऽब्दपेऽधमबले धनधर्मसौख्यहानिस्त्यजन्ति सुतमित्रजनाः सभार्याः।**
**लोकापवादभयमाकुलताऽतिकष्टं वृत्तिस्तनौ कफरुजो रिपुभीः कलिश्च ३०**

अधमबले=हीनबले, जीवे=गुरौ, अब्दपे=वर्षेशे, सति धनधर्मसौख्यहानिः, सभार्याः = सस्त्रियः, सुतमित्रजनास्त्यजन्ति, लोकापवादभयम्, आकुलता = व्यग्रता, अतिकष्टम्=विशेषक्लेशः, वृत्तिः=वर्त्तनं, तनौ=शरीरे, कफरुजः=श्लेष्मप्रधानरोगाः, रिपुभीः = शत्रुभयम्, कलिः = कलहश्च भवति ॥ ३० ॥

भाषा—हीनबली बृहस्पति वर्षेश होनेसे धन, धर्म, सुखों की हानि, और स्त्री पुत्र मित्र लोग भी छोड़ दें, लोकापवाद की डर हो, आकुलता, अतिकष्ट हो, शरीर में कफ का रोग खांसी दमा आदि हो, शत्रु का भय और कलह भी हो ॥ ३० ॥

अथ विशेषफलमुक्तं हायनसुन्दरे—

वर्षपो यदि गुरुर्युतदृष्टो दीप्तिकृद्दिशति धान्यधनाप्तिम्।
राजमान्यसुतसन्ततिकर्त्ता काञ्चनादिमणिमौक्तिकलाभः ॥
पुण्यतीर्थादिगमनं लाभस्तूत्तरदिग्भवः। वस्त्ररत्नविभूषादि लब्धिरुत्तममानुषात् ॥
रविणा युतदृष्टश्चेज्जीवः शत्रुनिकृन्तनः। ख्यातो राजकुले तेजोवृद्धिर्बाधाज्वरार्दितः ॥
शिरोऽर्त्तिर्वा वातपीडा किञ्चिद्राजभयं भवेत्।
स्वल्पः पूर्वदिशो लाभः सहजात्कलहप्रियः ॥
विधुयुतदृष्टो जीवो ललनाभोगं करोति सुखवृद्धिम्।

शुभशयनासनभोजनयुतसुहृदां प्राप्तिमधिपसन्मानम् ॥
सितवस्तुतस्तु लाभः स्त्रियोऽपि वरभोगसौख्यमधिकतरम् ।
वायव्यदिशो लाभः कामादिव्यसनमपि किञ्चित् ॥
भौमेन युतदृष्टश्चेद्धनसौख्यपदप्रदः ।
रणे जयो रक्तवस्तुव्यापाराल्लब्धिरुत्तमा ॥
यशो नीरोगता सौख्यं स्याद्दक्षिणदिशस्तथा ।
नृपाद्भयं ज्वरं किञ्चिद्भौमदृष्टयुते गुरौ ॥
बुधेन युतदृष्टश्चेदतिसौख्यपदप्रदः ।
वित्तलाभः सुखं दुःखं साम्यं वा शत्रुमित्रयोः ॥
लाभव्ययौ समौ देवगुरुपादरतः सदा ।
लब्धिरुत्तरतः किञ्चिच्छिरोऽर्त्तिर्बुद्धिवैभवम् ॥
सितयुतदृष्टे जीवे धनहानिः क्लेशता रिपोः काचित् ।
बुद्धिभ्रंशो युवतीवियोजितो हानिरपि च रुद्रदिशः ॥
शनियुतदृष्टे धिषणे म्लेच्छभयं स्थानमानहानिः स्यात् ।
द्यूतक्रीडामधुपाने कलिरतिश्चाधमैः सङ्गः ॥
विस्फोटकादिविकृतिर्वाताधिक्यं जलाद्भयं करभात् ।
हानिर्मनुजात् कृष्णात् कृपाणकादपि च महिषभयम् ॥
चिन्ता वरुणदिग्भूता धनहानिरपि ध्रुवम् ।
महिषात् करभात् प्राप्तिः काचिच्छनियुते गुरौ ॥
सैंहकेयेन युतदृग्गुरुर्बन्धनकष्टदः । बन्धुपीडा वपुर्वातपीडितं ज्वरयक्ष्मणा ॥
सुहृद्वियोगादुद्वेगो मनस्तापो मृतेर्भयम् । कुले शोकः पदभ्रंशो जलसर्पभयं भवेत् ॥
स्यादाग्नेयदिशो भीतिर्भवेदसितभानुभात् ।
हानिर्वा युतदृष्टश्चेद् गुरू राहुग्रहेण च ॥
स्यात् केतुयुतदृष्टश्चेत् सुरराजपुरोहितः ।
पुत्रभ्रात्रादिसम्बन्धात् स्थानभ्रंशमवाप्नुयात् ॥
देशभ्रमणशीलः स्याच्चिन्ता वै नीचसङ्गमात् ।
अशुभं कुरुते केतुयुतदृष्टो गुरुर्यदि ॥

इति गुरुवर्षेशफलम् ।

अथ पूर्णबलस्य शुक्रस्य वर्षेशफलमाह—

**शुक्रेऽब्दपे बलिनि नीरुजता विलाससच्छास्त्ररत्नमधुराशनभोगतोषाः ।**
**क्षेमप्रतापविजया वनिताविलासो हास्यं नृपाश्रयवशेन धनं सुखं च॥३१॥**

बलिनि शुक्रेऽब्दपे = वर्षेशे सति, नीरुजता=आरोग्यम् , विलासः=विशेषमनोविनोदः । सच्छास्त्रप्रेम, रत्नप्राप्तिः, मधुराशनं = मिष्टान्नभोजनम् , भोगः = इच्छितवस्तुसुखानुभवः । तोषः = सन्तोषः, क्षेमप्रतापविजयाः = कल्याण-भाग्योदय-शत्रुपराजयाः, भवन्ति । वनिताविलासः = स्त्रीविहारः, हास्यं = हर्षसूचकवचनरचनम् , नृपाश्रयवशेन = राजद्वारवशात् , धनम् = धनलाभः, सुखम् = अभिलषितपदार्थलाभः भवति ॥ ३१ ॥

भाषा—पूर्णबली शुक्र वर्षेश होनेसे, नीरोग रहना, क्रीड़ा, अच्छे शास्त्र ग्रन्थोंमें प्रेम, रत्न जवाहिरों का लाभ, मिष्टान्न भोजन,भोग,सन्तोष, कल्याण मङ्गल, प्रताप, विजय, स्त्री सुख, हंसी खुशी, राजा के आश्रय से धन लाभ, और सुख होता है ॥ ३१ ॥

अथ मध्यबलस्य शुक्रस्य वर्षेशफलमाह—

**अब्दाधिपे भृगुसुते खलु मध्यवीर्ये स्यान्मध्यमं निखिलमेतदथाल्पवृत्तिः ।**
**गुप्तं च दुःखमखिलं सुनिबद्धवृत्तिः पापारिवीक्षितयुते विपदोऽर्थनाशः ३२**

मध्यवीर्ये = मध्यबले ( ५-१० ) भृगुसुते=शुक्रे, अब्दाधिपे=वर्षेशे, सति एतत्पूर्वोक्तं पूर्णबलभृगुवर्षेशफलं नीरुजता विलासेत्यादि निखिलं= सकलं, मध्यमं=साधारणं ज्ञेयम् । अथ अल्पवृत्तिः = स्वल्पवर्त्तनम् , अखिलं = सकलं, गुप्तम्=अप्रकटं, दुःखं, भवति, सुनिबद्धवृत्तिः = अतिप्रतिरुद्धजीविका वाच्या । पापारिवीक्षितयुते=पापग्रहशत्रुदृष्टयुते सति, विपदः = विपत्तयः, अर्थनाशः = धनव्ययः भवति ॥ ३२ ॥

भाषा—मध्य बली (५-१०) शुक्र वर्षेश होने से पूर्वोक्त पूर्ण बली शुक्र को वर्षेश होने में जो फल कहा है, वह सब मध्यम समझना । थोड़ी जीविका, अनेक प्रकार का गुप्त दुःख हो, जीविका रोकी जाय । पाप शत्रु से दृष्ट युत हो तो विपत्ति हो, धन नाश हो ॥ ३२ ॥

अथ हीनबलस्य शुक्रस्य वर्षेशफलमाह—

**शुक्रेऽब्दपेऽधमबले मनसोऽतितापो लोकोपहासविपदो निजवृत्तिनाशः।**
**द्वेषः कलत्रसुतमित्रजनेषु कष्टादन्नाशनं च विफलक्रियता न सौख्यम् ३३**

अधमबले = हीनबले ( १-५ ) शुक्रेऽब्दपे = वर्षेशे सति, मनसः = चित्तस्य, अतितापः = सन्तापः, लोकोपहासविपदः=लोकनिन्दाविपत्तयः निजवृत्तिनाशः = स्वजीविकाहानिः, कलत्रसुतमित्रजनेषु = स्त्रीपुत्रमित्रेषु, द्वेषः = विरोधः, कष्टात् = क्ले-

शात्, अन्नाशनं=भोजनम्, विफलक्रियता = व्यर्थकार्यश्रमः, सौख्यं न अर्थाद् दुःखं भवतीति ॥ ३३ ॥

भाषा—हीन बली शुक्र यदि वर्षेश हो तो मन का सन्ताप, लोगों में हंसी दिल्लगी विपत्ति भी हो, अपनी जीविका का नाश हो, ( यदि नोकरी करे तो नोकरी छूट जाय ) स्त्री, पुत्र मित्रों से विरोध हो, क्लेश से कुछ अन्न खाने को मिले, जो काम करे, सो व्यर्थ हो जाय सुख नहीं हो ॥ ३३ ॥

अथ विशेषफलमुक्तं हायनसुन्दरे—

वर्षाधिपो यदि भृगोस्तनयोऽथ दृष्टो युक्तश्च वाहनविभूषणतादिलाभः ।
कन्याप्रसूतिरथ धर्मपदार्थसार्थबुद्धिप्रकाशकुशलत्वमुपैति जन्तुः ॥

भूतनयो रविणा युतदृष्टः कष्टं वै जाठरं कुरुते ।
ज्वरबाधा च शिरोऽर्त्तिर्नेत्रे वा दुष्टतो रिपोर्भीतिः ॥
वपुषि दुर्बलता नृपतेर्भयं दहनभीतिरमित्रकृतः कलिः ।
किमपि कासमुपैति धनक्षयं भवति हायनके रवियुक् कविः ॥

चन्द्रेण युतदृष्टश्चेद्भार्गवः पशुनाशनः । नखदन्तशिरोबाधा याति कामलपित्तताम् ॥
स्त्रियाः सौख्यमवाप्नोति काचिद्वातोद्भवा व्यथा । भौमेन युतदृष्टश्चेदुशना धनलाभकृत् ॥

बुद्धिप्रकाशो मित्रादिपुत्रोत्साहोऽधिमानता ।
चातुरी चतुरो लाभः स्यादुदीचीदिशो ध्रुवम् ॥
गुरौ शुक्रेण युक्ते स्यात् सुशीलदृढधर्मभाक् ।
पुण्यतीर्थपदप्राप्तिर्ज्ञातिबन्धुजनात् सुखम् ॥
कुटुम्बिभिः प्रकुपितो रौद्रीदिग्जनितं सुखम् ।
लभते धनसन्मानं लाभः स्यात् सितवस्तुतः ॥
सितस्तु शनिना युक्तो वीक्षितो लाभदायकः ।
पुरग्रामाधिपत्यं च मित्रप्रीतिविवर्धनम् ॥
वारुणीदिग्भवो लाभः कृष्णवस्तुकृतो भवेत् ।
ज्ञातिसम्बन्धतः सौख्यं दौर्बल्यं वातविक्रिया ॥
शीतज्वरो जलाद्भीतिर्महिषादश्वतो भयम् ।
स्त्रिया जरत्या सम्भोगः सितश्चेच्छनिदृष्टयुक् ॥
सितस्तमोयुतो धत्ते नखदन्तशिरोव्यथाम् ।
वित्तनाशनतः क्षीणः शरीरे क्लेशमश्नुते ॥

नैर्ऋत्याशीचतो हानिर्जलसर्पभयं वदेत् ।
शीतज्वरोपद्रवः स्यान्नीचसङ्गाद्धनव्ययः ॥
सितस्तु केतुयुग्दृष्टः सुहृद्भिर्बान्धवैः कलिः ।
पुत्रादिकष्टं शत्रुभ्यो विग्रहो नीचसङ्गमात् ॥
हानिर्भयं नैर्ऋतेः स्याद्रक्तवातप्रकोपतः ।
विस्फोटकाजलभयं फणिभीर्भ्रममूर्च्छना ॥
कृष्णवस्तुमनुष्याद्वा हानिश्च दशनाद्भयम् ।
सितः केतुयुतो दृष्टोऽशुभं दत्ते सदा फलम् ॥ ३३ ॥

इति वर्षेशशुक्रफलम् ।

अथ पूर्णबलस्य शनेर्वर्षेशफलमाह—

**मन्देऽब्दपे बलिनि नूतनभूमिवेश्म-**
**क्षेत्राप्तिरर्थनिचयो यवनावनीशात् ।**
**आरामनिर्मितिजलाशयसौख्यमङ्ग-**
**पुष्टिः कुलोचितपदाप्तिगुणाग्रणित्वम् ॥ ३४ ॥**

बलिनि = पूर्णबले ( १०–२० ) मन्दे=शनौ, अब्दपे=वर्षेशे, सति नूतनभूमिवेश्मक्षेत्राप्तिः = नवीन–क्षेत्र–गृहादिलाभः, यवनावनीशात् = म्लेच्छभूपात् , अर्थनिचयः = धनसमूहलाभः, आरामनिर्मितिजलाशयसौख्यं=पुष्पवाटिकानिर्माणकरणम्, जलाशयविहरणसुखं च, अङ्गपुष्टिः = शरीरपोषणम् , कुलोचितपदाप्तिगुणाग्रणित्वम्= वंशक्रमागतस्थानलाभपूर्वकगुणज्ञाग्रगण्यत्वं च भवति ॥ ३५ ॥

भाषा—पूर्ण बली शनि वर्षेश होने से-नवीन–जमीन, घर, खेतवाड़ियों के लाभ हों, म्लेच्छ ( अनार्य ) राजा से धन समूहों के लाभ हो। फुलवाड़ी ( बगीचा ) बनाना, जलाशय का सुख, शरीर की पुष्टि, वंश के अनुसार स्थानों का लाभ, गुणियों में अग्रगण्य हो ॥ ३४ ॥

अथ मध्यबलस्य शनेर्वर्षेशफलमाह—

**अब्दाधिपे रविसुते खलु मध्यवीर्ये**
**स्यान्मध्यमं निखिलमन्नभुजिस्तु कष्टात् ।**
**दासोष्ट्रमाहिषकुलान्यरतस्तु लाभः**
**पापं फलं भवति पापयुगीक्षणेन ॥ ३५ ॥**

मध्यवीर्ये=( ५-१० ) रविसुते = शनौ, वर्षेशे सति पूर्णबलशनेर्वर्षेशत्वे प्रोक्तं निखिलं = सर्वं फलम् ( नूतनभूमिवेशमक्षेत्राप्तिरित्यादिकं ) मध्यमं ज्ञेयम् । कष्टात्= क्लेशात्, अन्नभुजिः = अन्नभोजनं मिलति । दासोष्ट्रमाहिषकुलान्यरतः = दासजनरतः, उष्ट्रपालकः, महिषपालकः, अन्यनीचजनसंसर्गी च भवेत् । लाभः=प्राप्तिः, पापयुगीक्षणेन=पापग्रहयोगदृष्ट्या, पापम् = अशुभं, फलं भवति ॥ ३५ ॥

भाषा—मध्यबली शनि वर्षेश होने से पूर्वोक्त फल मध्यम जानना और कष्ट से भोजन मिले। नोकर के, ऊँट व भैंस पालने वालों के तथा अन्य नीचों के संसर्ग में आसक्त रहै। लाभ हो, पाप ग्रह के संयोग तथा दृष्टि से अशुभ फल हो ॥ ३५ ॥

अथ हीनबलशनेर्वर्षेशफलमाह—

**मन्दे बलेन रहितेऽब्दपतौ क्रियाणां वन्ध्यत्वमर्थविलयो विपदोऽरिभीतिः।**
**स्त्रीपुत्रमित्रजनवैरकदन्नभुक्तं सौम्येत्थशालयुजि सौख्यमपीषदाहुः ॥३६॥**

बलेन रहिते = हीनबले, मन्दे = शनौ, अब्दपे = वर्षेशे सति, क्रियाणां = कर्मणां, वन्ध्यत्वं = व्यर्थत्वम्, अर्थविलयः=धनव्ययः, विपदः = विपत्तयः, अरिभीतिः= शत्रुभयम् । स्त्रीपुत्रमित्रजनवैरकदन्नभुक्तं = स्त्रीपुत्रमित्रजनविरोधः कुत्सितान्नभोजनं च भवति । अथ वर्षेशे शनौ सौम्येत्थशालयुजि = शुभग्रहमुथशिलयुक्ते सति ईषत्= स्वल्पं, सौख्यम् अपि, आहुराचार्या इति ॥ ३६ ॥

भाषा—हीन बली शनि वर्षेश होने से, कामों की असफलता, धनव्यय, विपत्ति, शत्रु की डर, स्त्री, पुत्र, मित्र, बान्धवों से शत्रुता, खराब अन्न का भोजन मिले। वर्षेश शनि को यदि शुभ ग्रह से इत्थशाल होता हो, तो थोड़ा सुख भी मिले, यह पुराने आचार्य कहे हैं ॥ ३६ ॥

अथ विशेषफलमुक्तं हायनसुन्दरे—

वर्षपो यदि शनिर्भयमार्त्तिः पीडनं वपुषि वातविकारात् ।
पुत्रदारकलहो मतिहानिर्ग्रामयानमतिभीर्जलदेशात् ॥
नीचप्रसङ्गतश्चिन्ता हानिः पश्चिमदेशतः । कष्टं क्रयाणकात् सौरिर्दत्ते वर्षे शुभं फलम् ॥
रवियुतदृष्टः सौरिः सुतयुवतीक्लेशदस्तनौ कष्टम् ।
मित्रविरोधोद्वेगः प्रवासिता वपुषि दुर्बलता ॥
ज्वरबाधा च शिरोऽर्त्तिर्नृपवह्निभयं तथा च धनहानिः ।
स्यादुद्वेगो मनुजैर्महद्भिरपि रवियुते मन्दे ॥
शशियुतदृष्टः सौरिर्युवतीमरणान्तकष्टदो भवति ।

कुक्षिव्यथां विधत्ते धननाशं किञ्चिदाप्नोति ॥
बन्धुवियोगक्लेशो मित्रैः कष्टं कफवातसम्भवविकारः ।
हानिर्वायव्यदिशः स्वल्पसुखं वैश्यतोऽल्पभयम् ॥
भौमेन युतदृष्टः सौरिः स्थानभ्रंशोऽग्नितस्कारादिभयम् ।
सह बान्धवैर्विरोधो हानिर्दक्षिणदिशातः ॥
न विश्वास्यौ स्वर्णकारक्षत्रियौ धनहानिदौ ।
रक्तवातविकारः स्यात् सौरिणा मङ्गले युते ॥
बुधयुतदृष्टो मन्दः करोति सौभाग्यसौख्यधनलाभम् ।
हेमादिलाभः सुतजन्म अमात्यतोऽथोत्तरदिशो लाभः ॥
गुरुयुतदृष्टस्तु शनिर्गुरुदेवरतः सुवर्णधनलब्धिः ।
सौख्यं तीर्थप्राप्तिर्महापदाप्तिश्च रौद्रीतः ॥
स्त्रीसङ्गात् सुखवृद्धिः स्याद् ग्रामभूम्यर्थलाभकृत् ।
लाभः पूर्वदिशो भूयान् सौरिर्गुरुयुतेक्षितः ॥
सितयुतदृष्टः क्रोडः सुहृत्प्रसङ्गः सहोदरैर्मैत्री ।
लाभः सुतादिसम्मतिराग्नेयदिशो भवेल्लाभः ॥
प्रीतिरङ्गनयाऽत्यन्तं माननीयः कुले भवेत् । कफादिविक्रिया सौरिः शुक्रेण युतवीक्षितः ॥
राहुणा युतदृष्टोऽर्किः सन्निपातरुजाकरः ।
मूर्च्छा च शीतलारोगः पित्तकोपोऽङ्गपीडनम् ॥
जलसर्पारिभीर्नीचसम्बन्धाद्धनसङ्क्षयः । नैर्ऋत्याद्धनहानिः स्यादतीसारभ्रमादपि ॥
स्यात् केतुयुतदृष्टश्चेच्छनिर्वातप्रकोपकृत् ।
विग्रहः सुतमित्राद्यैः क्लेशः पुण्यपरिक्षयः ॥
पापबुद्धिरथोद्वेगो नीचाद् दुःखमवाप्नुयात् । आग्नेयनैर्ऋतीदेशाद्धनहानिः क्वचिद्भवेत् ॥
इति वर्षेशशनिफलम् ।

---

अथ विशेषमाह—

**वर्षेश्वरो भवति यः स दशाधिपोऽब्दे**
**ज्ञेयोऽखिलेऽब्दजनुषोर्बलमस्य चिन्त्यम् ।**
**वीर्यान्विते़ऽत्र निखिलं शुभमब्दमाहु-**
**र्हीने त्वनिष्टफलता समता समत्वे ॥ ३७ ॥**

यो ग्रहोऽब्देश्वरः = वर्षेशः, भवति, स ग्रहः, अखिले = सम्पूर्णेऽपि अब्दे = वर्षे दशाधिपो ज्ञेयस्तस्य दशाफलं सम्पूर्णेऽपि वर्षे वोध्यमित्यर्थः। न तु पात्यायनीमुद्दादशामात्रसमयपर्यन्तमेवेत्यर्थः। अस्य वर्षेशस्य बलम्, अब्दजनुषोः=वर्षजन्मकालयोः, चिन्त्यं=विचिन्त्यम्। अत्रोभयत्र जन्मनि वर्षे च वर्षेशे वीर्यान्विते सति निखिलं = सकलं वर्षं, शुभं = शुभफलमेवाहुः। हीने=उभयत्र हीनबले सति अनिष्टफलता = अशुभफल बोध्यम्। समत्वे=उभयत्र बलस्य मध्यमत्वे, समता = मध्यफलं ज्ञेयम्।

अत्र यदि जन्मनि पूर्णबली, वर्षे मध्यबली तदा किंचिन्न्यूनं शुभफलम्। अथवा जन्मनि पूर्णबली, वर्षे हीनबली तदा मध्यमादपि न्यूनं फलमेवं बलतारतम्यं कृत्वा गणको वर्षेशफलं लिखेन्नतु केवलवर्षकालिकवर्षेशबलवशेनेति विशेषविशेषम्॥ ३७॥

भाषा—जो ग्रह वर्षेश होता है, वह सम्पूर्ण वर्ष भरमें दशापति होता है। अर्थात् उसका दशाफल सालभर तक समझना। उस ( वर्षेश ) का बल जन्म काल तथा वर्षकालमें भी विचारना। यदि दोनों समय में पूर्ण बली हो तो शुभफल पूर्ण कहना। यदि दोनोंमें मध्यबली हो तो मध्यम, दोनोंमें हीन बली हो तो अधम फल कहना। यदि जन्ममें पूर्णबली, वर्षमें मध्यबली हो तो मध्यमफल, यदि जन्ममें पूर्णबली, वर्षमें हीन बली तो उससे भी कमती, इस प्रकार बलोंका विचार करके वर्षेश का फल लिखे, न कि केवल वर्षकालिक ही बलके अनुसार फल लिखे। ये जो श्लोक सब लिखे गये हैं वह रास्ता दिखाने के लिये। लेकिन चलना होगा अपने तर्क से। तभी कुछ फल भी मिलेंगे। यदि अपना तर्क नहीं करेंगे तो जरा शोचिये जिस बच्चे का वर्षेश बली शुक्र होगा उसमें वनिताविलास लिखा हुआ कैसे घटेगा? और जिस बच्चे का वर्षेश मध्यबली बुध होगा उसको आत्मजसौख्य = पुत्रसुख, कैसे घटेगा? इसलिये जाति वय कुलदेश विचार कर फलादेश कहना। पूज्य वराहमिहिर लिखे भी हैं "बुद्ध्वा वा जातिकुलदेशान्" ॥ ३७ ॥

**येनेत्थशालोऽब्दपतेर्ग्रहोऽसौ स्वीयस्वभावात्सुफलं ददाति।**
**शुभेसराफे शुभमस्ति किञ्चिदनिष्टमेवाशुभमूसरीफे ॥ ३८ ॥**

अब्दपतेः = वर्षेशस्य, येन ग्रहेण इत्थशालो भवति, असौ ग्रहः स्वीयस्वभावात्=निजप्रकृत्यानुकूल्यात्, सुफलं = शुभफलं, ददाति। शुभेसराफे, किञ्चित् शुभं फलमस्ति। अशुभमूसरीफे = पापकृतमूसरीफयोगे सति, अनिष्टम् = अशुभमेव फलं भवति ॥ ३८ ॥

भाषा—वर्षेश को जिस ग्रह से इत्थशाल होता है, वह ग्रह अपने प्रकृति से शुभ फल देता है। वर्षेश को यदि शुभ ग्रह से ईसराफ योग होता हो तो कुछ शुभ फल होता है। पाप ग्रह से वर्षेश को यदि इत्थशाल होता हो तो अशुभ फल ही होता है ॥ ३८ ॥

हद्दे यादृशि यः खेट आधत्तेऽत्र च यो महः।
जन्मन्यब्दे च तादृक्चेत्तदात्मफलदस्त्वसौ ॥ ३९ ॥

अत्र वर्षे यः कश्चिद् ग्रहो वर्षेशोऽन्योऽपि वा यादृशि=यथारूपे, स्वमित्रसमशत्रुसम्बन्धिनि हद्दे स्थितः सन्महस्तेज आधत्ते, जन्मनि जन्मकाले, वाऽब्दे = वर्षे च तादृक् = एकरूपेण भवेत्तदाऽसौ ग्रहः आत्मफलदो भवतीति ॥ ३९ ॥

भाषा—वर्ष काल में जो ग्रह जैसी हद्दा में हो, और तेज धारण करता हो, वह ग्रह जन्म काल वर्ष काल में भी वैसा रहने पर अपना फल को देता है ॥ ३९ ॥

यो जन्मनि फलं दातुं विभुर्मूसरिफोऽस्य चेत्।
अब्दलग्नाब्दपभवस्तस्मिन्नब्दे न तत्फलम् ॥ ४० ॥
व्यत्यासे फलमादेश्यमित्थशाले विशेषतः।
नोभयं चेत्तदाऽप्यस्ति जन्माश्रयमिति स्फुटम् ॥ ४१ ॥

यो ग्रहो जन्मनि यत् फलं दातुं विभुः = समर्थः, अस्य ग्रहस्य यदि वर्षे अब्दलग्नाब्दपभवः = वर्षकालिक—लग्नेश—वर्षेशयोरुत्पन्नः, मूसरिफः = ईसराफयोगः, स्यात्तदा, तस्मिन् अब्दे=वर्षे, तत्फलं=तद्ग्रहवशजनितं शुभाशुभं फलं न वाच्यम्। व्यत्यासे=उक्तविलोमे, अर्थादीसराफयोगाभावे, तु फलं=तद्ग्रहघटितम्, आदेश्यं = कथनीयम्, तत्र तद्ग्रहस्य वर्षलग्नवर्षेशयोरित्थशाले विशेषतः फलमादेश्यम्। चेत् = यदि, उभयम् = ईसराफेत्थशालौ न स्तस्तदाऽपि जन्माश्रयं फलमस्ति, इति स्फुटम्। अनेन वर्षप्रवेशविचारस्यातीवावश्यकता प्रकाशिता। केवलजन्मकालग्रहदशानवशान्न समुचितफलज्ञानं जायते इति सिद्धम् ॥ ४०–४१ ॥

भाषा—जो ग्रह जन्म काल में जो फल देने में समर्थ है, उसको यदि वर्ष काल में वर्षलग्नेश तथा वर्षेशों में किसीसे ईसराफ योग होता हो, तो उस वर्ष में उस ग्रहका फल नहीं कहना चाहिये। यदि ईसराफ योग न होता हो, तो उस ग्रह का जन्मकालिक फल कहना चाहिये। यदि—वर्ष लग्नेश वर्षेश इन दोनों में किसी से इत्थशाल योग करता हो तो विशेष रूपसे फल कहना। यदि उस ग्रह को वर्षेश या वर्ष लग्नेश से न तो ईसराफ, न तो इत्थशाल होता हो, तो भी जन्मकाल का ल है, यह समझना ॥ ४०–४१ ॥

उदाहरणम्—

**पुत्राधिपो जन्मनि पुत्रभावं पश्यन् सुतं दातुमसौ समर्थः ।**
**वर्षेशपुत्राधिपमूसरीफे पुत्रस्य नाशो भवतीति वर्षे ॥ ४२ ॥**

जन्मनि = जन्मकुण्डल्यां, पुत्राधिपः=पञ्चमेशः, पुत्रभावं = पञ्चमभावं, पश्यन् सन् असौ ग्रहः सुतं = पुत्रं, दातुं समर्थः । वर्षेशपुत्राधिपमूसरीफे सति वर्षे पुत्रस्य नाशो भवतीति ॥ ४२ ॥

भाषा—यदि जन्म काल में पञ्चमेश ग्रह पुत्र भाव को देखता हुआ हो तो वह पुत्र को देने में समर्थ होता है । यदि वर्षेश और पञ्चमेश में मूसरिफ योग होता हो तो पुत्र का नाश होता है ॥ ४२ ॥

हद्दे यादृशीत्यादि सोदाहरणं स्पष्टयति—

**अब्देश्वरो गुरुर्मित्रहद्दे मित्रदृशा शशी ।**
**महोऽत्राधाद्मूदृक्स वर्षेऽब्दस्तेन शोभनः ॥ ४३ ॥**

अब्देश्वरः = वर्षेशः, गुरुः=बृहस्पतिः, मित्रहद्दे स्थितः, शशी=चन्द्रः, मित्रदृष्टया महस्तेजः अत्र गुरौ, अधात् धारयति, ददाति, दीप्तांशान्तर्गतो भूत्वा स्थित इति स्पष्टम् ।

अर्थादित्थशालयोगकारी चन्द्रः स्यात् । तदा वर्षप्रवेशे स चन्द्रः, अमूदृक् = अमुं ( गुरुं ) पश्यतीति अमूदृक् स्यात्तर्हि तेन हेतुना सोऽब्दः शोभनः = शुभप्रदो बोध्यः ॥ ४३ ॥

भाषा—वर्षेश हो कर बृहस्पति मित्र की हद्दा में हो, और चन्द्रमा मित्र दृष्टि से अपना तेज उस ग्रहको देता हो, और वर्ष-प्रवेश में उस गुरु को देखने वाला चन्द्रमा जिस लिये है, इस लिये वह वर्ष शुभ प्रद है ॥ ४३ ॥

अथोपसंहरन्नाह—

**एवमुन्नेयमन्यच्च शुभाशुभफलं बुधैः ।**
**बलाबलविवेकेन योगत्रयविमर्शतः ॥ ४४ ॥**

**इति वर्षफलाध्यायः ।**

एवममुना प्रकारेण अन्यदनुक्तमपि शुभाशुभफलं बुधैर्बलाबलविवेकेन तथा योगत्रयविमर्शतः = इत्थशालकबूलेसराफयोगविचारत उन्नेयं ज्ञेयम् ॥ ४४ ॥

भाषा—इस प्रकार और भी शुभाशुभफल योगकारक ग्रहोंके बलाबल विचारसे और इत्थशाल, कबूल, ईसराफ इन योगोंके विचार से समझना ॥ ४४ ॥

इति वर्षफलाध्यायः ।

# अथ मुथहाफलाध्यायः ।

तत्र तावन्मुथहाऽऽनयनमाह—

**स्वजन्मलग्नात्प्रतिवर्षमेकैकराशिभोगान्मुथहा भ्रमेण ।**
**स्वजन्मलग्नं रवितष्टयातशरद्युतं सा भमुखेन्थिहा स्यात् ॥ १ ॥**

स्वजन्मलग्नात्, स्वजन्मलग्नमारभ्य ततः प्रतिवर्षमेकैकराशिभोगाद् भ्रमेण मुथहा भवति । अतः स्वजन्मलग्नं रवितष्टयातशरद्युतं=द्वादशशेषितगतवर्षसङ्ख्यायुतं, तदा सा भमुखा=राश्यादिका, इन्थिहा=मुथहा, स्यात् । मुन्थाशब्दव्याख्यानमाह यादवः—"प्रसूतिलग्नभ्रमणेन भावान् मन्थानि मुन्थेति च रूढिरस्याः । इति ॥"१॥

भाषा—अपने जन्मलग्न के कोष्ठ से हर एक वर्ष एक एक राशि भोग से मुथहा का भ्रमण होता है। इसलिये गतवर्ष को बारह से भाग देने पर जो शेष बचे, सो जन्मलग्न में जोड़ दे तो राश्यादिक मुथहा होगी। यहां संभव है कि जोड़ने पर फिर राशिस्थान में बारह से ज्यादा हो जाय, तो, फिर बारह से शेषित करने पर मुथहा होती है ॥१॥

उदाहरण—जन्मलग्न ११।२०।२८।४०, गतवर्ष ४७ इसको बारह से भाग दिया तो शेष ११ रहा इसको ११।२०।२८।४० इस जन्मलग्न के राशिस्थान में जोड़ा तो २२।२०।२८।४० हुआ। अब देखते हैं कि राशिस्थान में २२ बारह से अधिक है। इसलिये फिर बारह से शेषित करने पर मुथहा १०।२०।२८।४० हुई ॥ १ ॥

अथ मुथहाया दैनिकमासिकगती आह—

**प्रत्यहं शरलिप्ताभिर्वर्द्धते साऽनुपाततः ।**
**सार्धमंशद्वयं मास इत्याहुः केऽपि सूरयः ॥ २ ॥**

प्रत्यहं = प्रत्येकदिनं, सा मुथहाऽनुपाततः=त्रैराशिकतः, शरलिप्ताभिः=पञ्चकलाभिः, वर्द्धते, चलतीत्यर्थः । मासे=प्रत्येकमासे, तु सा मुथहा सार्धं=त्रिंशत्कलायुक्तं, अंशद्वयं = २।३०', वर्धते, इति स्पष्टार्थं मासप्रवेश—दिनप्रवेशप्रयोजनार्थं केऽपि = अन्ये सूरयः=पण्डिता आहुः ॥ २ ॥

भाषा—प्रत्येक दिन वह मुथहा पांच पांच कला करके अनुपात से बढ़ती है। एक महीने में अढ़ाई अंश करके बढ़ती है, यहा कोई पण्डित कहते हैं—इसकी युक्ति—यदि एक वर्ष याने बारहमास में १ एकराशि याने ३० अंश चलती है, तो एक मास में क्या ?, $\frac{३० \times १}{१२} = \frac{५}{२} = २ - \frac{१}{२}$, यह मासिक गति हुई। और यदि एक वर्ष में ( ३६० ) दिन में यदि ३० अंश चलती है, तो एक दिन में क्या ? एक दिन की गति= $\frac{३०^\circ \times १^\circ}{३६०} = \frac{१^\circ}{१२}$, इसको कलात्मक बनाने के लिये साठ से गुणा

किया ०/१६ × ६०=३′ यह दैनिक गति कलात्मक हुई ॥ २ ॥

अथ सामान्यतो मुथहाफलमाह—

**स्वामिसौम्येक्षणात्सौख्यं क्षुतदृष्ट्या भयं रुजः ।**
**भावालोकनसंयोगात्फलमस्या निरूप्यते ॥ ३ ॥**

स्वामिसौम्येक्षणात्=मुथहेशशुभग्रहदृष्टिवशतः, सौख्यम्, भवति, तत्र क्षुतदृष्ट्या=१।४।७।१० दृष्ट्या, भयं = अशुभम् , रुजः=रोगाः, भवन्ति । अस्याः=मुथहायाः, भावालोकनसंयोगात् = प्रत्येकभावस्थितत्वेन, ग्रहदृष्टिसंयोगेन च यत्फलं, तत् पुरतो निरुप्यते = कथ्यते ॥ ३ ॥

**भाषा—अपने स्वामी अर्थात् मुथहेश तथा शुभग्रहों की दृष्टि से सुख होता है । वहां यदि क्षुतदृष्टि से देखे तो भय और रोग होता है । भावों में स्थित के और ग्रहों के दृष्टि के संयोग से जो फल, उसको आगे कहते हैं ॥ ३ ॥**

अथ स्थानवशेन मुथहायाः फलमाह—

**वर्षलग्नात्सुखास्तांत्यरिपुरंध्रेष्वशोभना ।**
**पुण्यकर्मायगा स्वाम्यं दत्तेऽन्यत्रोद्यमाद्धनम् ॥ ४ ॥**

वर्षलग्नात् = वर्षप्रवेशकालिकलग्नात् सुखास्तान्त्यरिपुरन्ध्रेषु=चतुर्थसप्तमद्वादशषष्ठाष्टमस्थानेषु, स्थिता मुथहा, अशोभना=अनिष्टफलदा भवति । पुण्यकर्मायगा = नवमदशमैकादशगता = मुथहा, स्वाम्यमाधिपत्यं दत्ते, तथाऽन्यत्र उद्यमात्= उद्योगात् धनं दत्ते । इति ॥ ४ ॥

**भाषा—वर्षलग्न से ४,७,१२,६ और ८ वें स्थानों में मुथहा अशुभ फल देनेवाली होती है । वर्षलग्न से ९,१० और ११वें स्थानों में स्थित मुथहा आधिपत्य फल देती है । इससे भिन्न १,२,३,५ स्थानों में उद्योग से धन देती है ॥ ४ ॥**

अथ मुथहाभावफलम् , तत्रादौ तनुभावस्थमुथहाफलम्—

**शत्रुक्षयं मानसुताश्वलाभं प्रतापवृद्धिं नृपतः प्रसादम् ।**
**शरीरपुष्टिं विविधोद्यमांश्च ददाति वित्तं मुथहा तनुस्था ॥५॥**

तनुस्था = लग्नस्था, मुथहा, शत्रुक्षयं = वैरिनाशं, मानसुताश्वलाभं=संमानपुत्रघोटकप्राप्तिं, प्रतापवृद्धिम् = माहात्म्योन्नतिं, नृपतेः=राज्ञः, प्रसादम् = प्रसन्नताम्, शरीरपुष्टिम्=देहविकाशं, विविधोद्यमान्=नानोद्योगान्, वित्तं=धनं च ददाति॥५॥

**भाषा—लग्न भाव में स्थित मुथहा, शत्रुओं के संहार, संमान, पुत्रलाभ, घोड़े का लाभ, प्रताप की वृद्धि, राजा की प्रसन्नता, शरीर की पुष्टि, नाना प्रकार के उद्योग और धन को देती है ॥ ५ ॥**

अथ धनभावस्थमुथहाफलम्—

**उत्साहतोऽर्थागमनं यशश्च स्वबन्धुसन्माननृपाश्रयाश्च ।**
**मिष्टान्नभोगो बलपुष्टिसौख्यं स्यादर्थभावे मुथहा यदाऽब्दे ॥ ६ ॥**

यदा मुथहा अर्थभावे = धनभावे, भवेत् तदा उत्साहतः = यत्नतः, अर्थागमनं= धनागमं, यशः = कीर्त्तिः, स्वबन्धुसन्माननृपाश्रयाः=निजबान्धवादरराजाश्रयाः, भवन्ति । मिष्टान्नभोगः = सरसमधुररसप्रधानान्नभोजनम् , बलपुष्टिसौख्यं = वीर्यवृद्धिसुखं च स्यात् ॥ ६ ॥

भाषा—यदि मुथहा दूसरे भाव में स्थित हो, तो उद्योग से धन प्राप्ति और यश प्रतिष्ठा अपने परिजनों से सन्मान, और राजा के आश्रय होते हैं। और मधुर भोजन, बल, पुष्टि, सुख ये फल होते हैं ॥ ६ ॥

अथ सहजभावस्थमुथहाफलम्—

**पराक्रमाद्वित्तयशःसुखानि सोदर्यसौख्यं द्विजदेवपूजा ।**
**सर्वोपकारस्तनुपुष्टिकीर्तिर्नृपाश्रयश्चेन्मुथहा तृतीया ॥ ७ ॥**

यदा मुथहा तृतीया = तृतीयस्थानगता भवति, तदा पराक्रमात् = विक्रमात्, वित्तयशःसुखानि, सौदर्यसौख्यं = सहोदरबन्धुविनोदः, द्विजदेवपूजा = विप्र-देवतापूजनम् । सर्वोपकारः=सकलप्रकारकोपकारः, तनुपुष्टिकीर्त्तिः=देहवृद्धिर्यशश्च, नृपाश्रयः = राजाश्रयश्च, भवति । ( सौन्दर्यसौख्यमिति वा पाठः )

भाषा—यदि लग्न से तीसरे भाव में मुथहा हो तो पराक्रम से धन, यश, सुख के लाभ, सहोदर बन्धुओं के सुख, ब्राह्मण देवताओं के पूजन करना, सब प्रकार का उपकार शरीर की पुष्टि, कीर्त्ति, राजा का आश्रय, ये सब फल होते हैं ॥ ७ ॥

अथ चतुर्थभावस्थितमुथहाफलम्—

**शरीरपीडा रिपुभीः स्ववर्ग्यवैरं मनस्तापनिरुद्यमत्वे ।**
**स्यान्मुन्थहायां सुखभावगायां जनापवादामयवृद्धिदुःखम् ॥ ८ ॥**

सुखभावगायां = चतुर्थस्थानस्थितायां, मुथहायां सत्यां, शरीरपीडा = देहकष्टं, रिपुभीः = शत्रुतो भयं, स्ववर्ग्यवैरं=निजबन्धुबान्धवविरोधः, मनस्तापनिरुद्यमत्वे, मनसः सन्तापः, उद्योगहीनत्वं च, जनापवादामयवृद्धिदुःखम् = लोकापवादरोगवृद्धि-क्लेशश्च भवति ॥ ८ ॥

भाषा—चौथे भाव में मुथहा रहने से, देह में पीड़ा, शत्रु से भय, अपने बन्धुवर्गों से विरोध, मन में सन्ताप ( अशान्ति ), उद्योग में हीनता, लोकापवाद, रोगभय, और दुःख ये सब फल होते हैं ॥ ८ ॥

अथ पञ्चमभावस्थमुथहाफलम्—

**यदीन्थिहा पञ्चमगाऽब्दवेशे सद्बुद्धिसौख्यात्मजवित्तलाभः।**
**प्रतापवृद्धिर्विविधा विलासा देवद्विजार्चा नृपतेः प्रसादः ॥ ९ ॥**

यदि अब्दवेशे=वर्षप्रवेशे, मुथहा, पञ्चमगा=पञ्चमभावगता, भवेत्तदा, सद्बुद्धिसौख्यात्मजवित्तलाभः = उत्तममतिलाभः, सुखलाभः, धनलाभश्च भवति। प्रतापवृद्धिः=महत्त्वाधिकत्वम्, विविधाः=अनेकप्रकारकाः, विलासाः=क्रीडाः, देवद्विजार्चा=देवताब्राह्मणपूजा, नृपतेः = राज्ञः, प्रसादः = अनुकूलत्वं, चैतत्फलं भवति ॥ ९ ॥

भाषा—वर्षप्रवेश में मुथहा यदि पञ्चमभाव में हो, तो अच्छी बुद्धि हो, सुख हो, पुत्र लाभ, धन लाभ, प्रताप की वृद्धि, नाना प्रकार के भोग विलास, और देवता ब्राह्मणों का पूजन करना और राजा की अच्छी नजर रहना, ये सब फल होते हैं ॥ ९ ॥

अथ षष्ठस्थानस्थितमुथहाफलम्—

**कृशत्वमङ्गेषु रिपूदयश्च भयं रुजस्तस्करतो नृपाद्वा।**
**कार्यार्थनाशो मुथहाऽरिगा चेद् दुर्बुद्धिवृद्धिः स्वकृतेऽनुतापः ॥ १० ॥**

चेत्, मुथहा, अरिगा=षष्ठस्थानगता भवेत्तदा, अङ्गेषु=शरीरावयवेषु, कृशत्वं=दौर्बल्यं, रिपूदयः=शत्रुवृद्धिः, भयं=भीतिः, रुजः=रोगाः, अथवा रुजो रोगाद्भयम्। तस्करतः = चौरात्, वा नृपात् = नरेशात्, भयम्, कार्यार्थनाशः = कार्यनाशः, धननाशश्च, दुर्बुद्धिवृद्धिः = दुर्मतिवृद्धिः, स्वकृते = निजकृते, कर्मणि, अनुतापः = पश्चात्तापः, भवति ॥ १० ॥

भाषा—यदि मुथहा छठे स्थान में हो, तो देह में दुर्बलता, शत्रु की वृद्धि, रोग-भय, चोर भय वा राजा का भय, कार्य नाश, धन नाश, कुबुद्धि की वृद्धि, अपने कर्म में पछताव, ये सब होते हैं ॥ १० ॥

अथ सप्तमभावगतमुथहाफलम्—

**कलत्रबन्धुव्यसनारिभीतिरुत्साहभङ्गो धनधर्मनाशः।**
**द्यूनोपगा चेन्मुथहा तनौ स्याद्रुजा मनोमोहविरुद्धचेष्टा ॥ ११ ॥**

चेद्यदि मुथहा द्यूनोपगा=सप्तमभावगता, भवेत्तदा, कलत्रबन्धुव्यसनारिभीतिः=स्त्रीभय-बन्धुभय-व्यसनभय-शत्रुभयानि भवन्ति, उत्साहभङ्गः = आलस्यवृद्धिः। धनधर्मनाशः = धनधर्मयोर्नाशः, तनौ=देहे, रुजा=रोगेण, मनोमोहविरुद्धचेष्टा=चित्तभ्रम-प्रतिकूलव्यापारः भवति ॥ ११ ॥

भाषा—यदि मुथहा सातवें भाव में स्थित हो, तो स्त्री से, बान्धवों से, झंझटों से

शत्रुओं से भी भय हो, उत्साह का भङ्ग हो, धन धर्मों का नाश हो, शरीर में रोग हो, मतिभ्रम, और विरुद्ध कार्य की चेष्टा होती है ॥ ११ ॥

अथाष्टमभावगतमुथहाफलम्—

**भयं रिपोस्तस्करतो विनाशो धर्मार्थयोर्दुर्व्यसनामयश्च ।**
**मृत्युस्थिता चेन्मुथहा नराणां बलक्षयः स्याद्गमनं सुदूरे ॥१२॥**

यदि मुथहा मृत्युभावस्थिता स्यात्तदा, नराणां=मनुष्याणां, रिपोर्भयं=शत्रुभयम्, तस्करतः = चौरात्, भयम्, धर्मार्थयोर्धर्मधनयोर्विनाशः, दुर्व्यसनामयः = अधिकक्लेशरोगलाभः, बलक्षयः = वीर्यहानिः, सुदूरे देशे गमनं च स्यात् ॥ १२ ॥

भाषा—यदि मुथहा अष्टमभाव में स्थित हो तो मनुष्य को शत्रु से, चौर से, भय हो, धर्म और धन का नाश हो, दुर्व्यसन, कठिन रोग, बल का नाश, और दूर देश जाना पड़े ॥ १२ ॥

अथ धर्मभावगतमुथहाफलम्—

**स्वामित्वमर्थोपगमो नृपेभ्यो धर्मोत्सवः पुत्रकलत्रसौख्यम् ।**
**देवद्विजार्चा परमं यशश्च भाग्योदयो भाग्यगतेथिहायाम् ॥ १३ ॥**

भाग्यगतेन्थिहायां = नवमस्थानगतमुथहायां सत्यां, स्वामित्वम् = आधिपत्यं, नृपेभ्यः = भूपेभ्यः, अर्थोपगमः = धनागमः, धर्मोत्सवः = यज्ञोत्सवः, पुत्रकलत्रसौख्यम् = अपत्यस्त्रीविनोदः । देवद्विजार्चा = देवब्राह्मणपूजा, परमम्=अत्यन्तं, यशः= कीर्तिः, भाग्योदयः=अभ्युदयश्च भवति ॥ १३ ॥

भाषा—नवमभाव में मुथहा होने से कार्मों में आधिपत्य ( अधिकार ) राजा से धन लाभ, धर्मकार्यों में उत्साह, पुत्र स्त्री का सुख हो, घर में देवता ब्राह्मणों की पूजा और अधिक यश हो तथा भाग्य की उन्नति हो ॥ १३ ॥

अथ कर्मभावस्थितमुथहाफलम्—

**नृपप्रसादं स्वजनोपकारं सत्कर्मसिद्धिं द्विजदेवभक्तिम् ।**
**यशोऽभिवृद्धिं विविधार्थलाभं दत्तेऽम्बरस्था मुथहा पदाप्तिम् ॥ १४ ॥**

अम्बरस्था=दशमभावगता, मुथहा, नृपप्रसादं = राजप्रसन्नत्वं, स्वजनोपकारं= निजपरिजनसाहाय्यं, सत्कर्मसिद्धिं = शुभकार्यसाफल्यं, द्विजदेवभक्तिम् = विप्रदेवतोपरि श्रद्धाम् । यशोऽभिवृद्धिं = कीर्त्तिसमुन्नतिं, विविधार्थलाभं = नानाविधधनप्राप्तिं, दत्ते = ददाति ॥ १४ ॥

भाषा—यदि दशवें भाव में मुथहा हो, तो राजा की प्रसन्नता, अपने परिजनों

का उपकार, अच्छे कार्यों की सिद्धि, देवता, ब्राह्मणों में भक्ति, यश की वृद्धि और अनेक प्रकार के धनलाभ को देती है ॥ १४ ॥

अथैकादशभावगतमुथहाफलम्—

यदीन्थिहा लाभगता विलाससौभाग्यनैरुज्यमनःप्रसादाः ।
भवन्ति राजाश्रयतो धनानि सन्मित्रपुत्राभिमताप्तयश्च ॥ १५ ॥

यदि इन्थिहा = मुथहा, लाभगता = एकादशस्थानस्थिता, स्यात् तदा विलास-सौभाग्य-नैरुज्यमनःप्रसादाः = विलासो मनोविनोदः, सौभाग्यम्=भाग्याऽभ्युदयः, नैरुज्यम् = आरोग्यम्, मनःप्रसादः = चित्तप्रसन्नता, एते भवन्ति । राजाश्रयतो धनानि भवन्ति, सन्मित्रपुत्राभिमताप्तयः = समीचीनमित्रसमागमः, अभिमतार्थप्राप्तयश्च भवन्तीति ॥ १५ ॥

भाषा—यदि मुथहा एकादश भावमें हो तो सुख, सौभाग्य, आरोग्य, मन का आनन्द, राजाश्रय से धन लाभ, सुमित्र प्राप्ति, इच्छित अर्थ की प्राप्ति ये सब फल होते हैं॥१५॥

अथ व्ययस्थानस्थितमुथहाफलम्—

व्ययोऽधिको दुष्टजनैश्च सङ्गो रुजा तनौ विक्रमतोऽप्यसिद्धिः ।
धर्मार्थहानिर्मुथहा व्ययस्था यदा तदा सज्जनतोऽपि वैरम् ॥ १६ ॥

यदा मुथहा व्ययस्था=द्वादशभावस्थिता, स्यात्तदाऽधिकः=लाभापेक्षया महान्, व्ययः = धनक्षयः, दुष्टजनैः = दुर्जनैः, सङ्गः = समागमः, तनौ=शरीरे, रुजा=रोगेण, विक्रमतः = पराक्रमतः, अपि असिद्धिः = कार्यवैफल्यम्, धर्मार्थहानिः=धर्मधनयोः क्षतिः । सज्जनतः=सहिष्णुजनादपि, वैरं=विरोधः, एतानि फलानि भवन्तीति ॥१६॥

भाषा—यदि मुथहा बारहवें स्थान में हो, तो अधिक खर्च, दुर्जनों से सङ्गति, देह में रोग और उद्योग से भी कार्य विफल हो, धर्म हानि, धन हानि, और सज्जन से भी शत्रुता हो ॥ १६ ॥

अथ मुथहास्थितिवशेन विशेषफलम्—

क्रूरैर्दृष्टः क्षुतदृशा यो भावो मुथहाऽत्र चेत् ।
शुभं तद्भावजं नश्येदशुभं चापि वर्द्धते ॥ १७ ॥

यः कश्चिद्भावः, क्रूरैः=पापैः, क्षुतदृशा=शत्रुदृष्ट्या, दृष्टः,अत्रकिन्तु पापदृष्टभावे मुथहा चेत्, स्यात्, तदा तद्भावजं शुभं फलं नश्येत । अशुभं फलं चापीति निश्चयेन वर्द्धते । पापग्रहदृष्टा मुथहा यद्भावे भवेत्तद्भावाद्विचारणीयफलं न भवतीत्यर्थः॥१७॥

भाषा—जो भाव पापग्रहों से क्षुत (शत्रु) दृष्टि से देखाजाय, उस भाव में यदि

मुथहा हो, तो उस भाव से विचारणीय शुभ फल का नाश हो जाता है और अशुभ फल बढ़ता है ॥ १७ ॥

अथ मुथहाविशेषफलम्—

**शुभस्वामियुक्तेक्षिता वीर्ययुक्तेन्थिहा स्वामिसौम्येत्थशालं प्रपन्ना ।**
**शुभं भावजं पोषयेन्नाशुभं साऽन्यथात्वेऽन्यथाभाव ऊह्यो विमृश्य ॥१८॥**

या इन्थिहा शुभस्वामियुक्तेक्षिता = स्वामिसौम्येत्थशालं प्रपन्ना, सा वीर्ययुक्ता मुथहा यद्भावे स्यात्तद्भावजं शुभं फलं पोषयेत् = वर्धयेत् । अशुभं फलं न भवेत् । अन्यथात्वे = पापशत्रुप्राप्तेत्थशालेन्थिहा दुर्बला यद्भावे भवेत्तद्भावजं शुभफलं नाशयेदशुभं फलं च वर्धयेत् । एवं विमृश्य = विचार्य, ऊह्यः-ज्ञातव्यः ॥ १८ ॥

भाषा—शुभग्रहों से युक्त, अपने स्वामीग्रह से भी युक्त, दृष्ट, शुभस्वामी ग्रहों से इत्थशाल करती हुई बलवती मुथहा जिसभाव में हो उस भाव के शुभफल को पुष्ट करती ( बढ़ाती ) है। अशुभ फल नहीं होता। इससे विपरीत में विपरीत फल समझना, अर्थात् पापग्रह, शत्रुग्रह से युक्त दृष्ट होकर पापग्रहों से इत्थशाल करती हुई मुथहा जिस भाव में हो, उस भाव के शुभफल को नाश करती है, और अशुभ फल को बढ़ाती है ॥ १८ ॥

अथ स्थानवशेन मुथहाफलम्—

**जनुर्लग्नतोऽस्तांत्यषण्मृत्युबन्धुस्थिताऽब्दे हता क्रूरखेटैस्तु सा चेत् ।**
**विनश्येत्स यत्रेन्थिहा भाव एवं शुभस्वामिदृष्टौ न नाशः शुभञ्च ॥ १९ ॥**

जनुर्लग्नतः = जन्मलग्नात्, अस्तान्त्यषण्मृत्युबन्धुस्थिता = सप्तमद्वादशषष्ठाष्टमचतुर्थस्थानान्यतमस्थानगता, अर्थात् वर्षकुण्डल्यां जन्मलग्नराशिर्यत्र भवेत्तत एतदुक्तस्थानस्थिता मुथहा, अब्दे = वर्षे, क्रूरखेटैः=पापग्रहैः, हता = विद्धा, युता, दृष्टा च चेत् स्यात् तदा तादृशी सा मुथहा यत्र भावे भवेत्स च भावो विनश्येत् । एवं शुभस्वामिदृष्टौ तस्यां सत्यां नाशः न, किन्तु शुभमेव फलं स्यात् ॥ १९ ॥

भाषा—वर्षकुण्डली में जहां जन्मलग्न हो, वहां से यदि ७।१२।६।८।४ इन स्थानों में होकर पापग्रहों से हत युत दृष्ट भी हो, तो वैसी मुथहा वर्षलग्न से जिस भाव में पड़े, उस भाव के फल को नाश करती है। यदि शुभग्रहों से अपने स्वामी (मुथहेश) से दृष्ट हो, तो हानि नहीं होती है, और शुभ ही होता है ॥ १९ ॥

**यदोभयत्रापि हता भावो नश्येत्स सर्वथा ।**
**उभयत्र शुभत्वे तु भावोऽसौ वर्धतेतराम् ॥ २० ॥**

यदा उभयत्र, जन्मकुण्डल्यां वर्षकुण्डल्यां चापि यत्र भावे स्थिता मुथहा

हता=पापैर्युतदृष्टा, तदा स च भावः सर्वथा नश्येत्। यदि उभयत्र जन्मनि वर्षे च यद्भावे स्थिता मुथहा शुभैर्युतदृष्टा तदाऽसौ भावो वर्धतेतरामतिशयेन वर्धते ॥२०॥

भाषा—यदि जन्मकाल वर्षकाल में भी जिस भाव में मुथहा स्थित होकर पापग्रह से युत दृष्ट हो, तो वह भाव सब तरह से नाश होता है। यदि दोनों काल में जिस भाव में रह कर मुथहा शुभग्रहों से युत दृष्ट हो, तो वह भाव सब तरह से बढ़ता है ॥ २० ॥

**वर्षेऽप्यनिष्टगेहस्था यद्भावे जनुषि स्थिता।**
**क्रूरोपघातात्तं भावं नाशयेच्छुभयुक् शुभा ॥ २१ ॥**

वर्षेऽपि अनिष्टगेहस्था, तथा जनुषि = जन्मनि यद्भावे स्थिता भवेत् तत्र सम्भवात् क्रूरोपघातात् = पापयोगेक्षणात् तं जन्मस्थभावं नाशयेत्। यदि वर्षेऽनिष्टगेहस्थाऽपि शुभदृक् तदा शुभा भवति ॥ २१ ॥

भाषा—वर्षकाल में अनिष्ट स्थान में होकर जन्मलग्न से जिस भाव में पड़े, वहां यदि पापग्रहों से युत दृष्ट भी हो, तो उस भाव का नाश कर देती है। यदि शुभ ग्रहों से युत दृष्ट हो, तो मुथहा शुभफल दायिनी होती है ॥ २१ ॥

उदाहरति—

**जनुर्लग्नतस्तुर्यगा सौम्ययुक्ताऽब्दवेशे पितृस्वस्य लाभं विधत्ते।**
**नृपाद्भीतिदा पापयुक्ताऽतिकष्टप्रदाऽऽदावपीत्थं विमर्शो विधेयः ॥२२॥**

अब्दवेशे=वर्षप्रवेशे, जनुर्लग्नतः = जन्मलग्नात्, वर्षकुण्डल्यां यत्र जन्मलग्नं तस्मात्तुर्यगा=चतुर्थस्थानगता सौम्ययुक्ता=शुभग्रहयुता, भवेत् तदा पितृस्वस्य = पितृधनस्य लाभं विधत्ते। यदि तादृशी मुथहा पापयुक्ता तदा नृपात् = भूपात्, भीतिदा=भयदायिनी, तथाऽतिकष्टं भवति। इत्थममुना प्रकारेणादावपि विमर्शो विवेको-विधेयः = कार्यः ॥ २२ ॥

भाषा—वर्षप्रवेश समय में वर्षकुण्डली में जन्मलग्न जहां हो, वहां से चौथे स्थान में यदि मुथहा हो, शुभग्रह से युक्त हो, तो पिता के धन को पाता है। यदि पापग्रहों से युक्त हो, तो राजा से भय देती है, और अतिकष्ट देती है। इस प्रकार पहले भी विचार करना चाहिये ॥ २२ ॥

**यस्मिन्भावे स्वामिसौम्येक्षिता चेद्भावो जन्मन्येष यस्तस्य वृद्धिः।**
**एवं पापैर्नाश उक्तस्य तस्येत्यूह्यं वीर्याद्धर्षपः सौख्यमेव ॥ २३ ॥**

स्वामिसौम्येक्षिता मुथहा वर्षप्रवेशकुण्डल्यां यस्मिन् भावे स्थिताऽस्ति एष भावराशिर्जन्मनि = जन्मकुण्डल्यां यो भावस्तस्य वृद्धिर्वाच्या। एवं पापयुतदृष्टा

मुथहा वर्षे यद्भावे स च भावराशिर्जन्मनि यो भावस्तस्य नाश उक्तोऽस्ति, तत्र मुथहाकृतानिष्टफलेऽपि वर्षपः = वर्षेशः, वीर्यात् = बलाधिक्यात्, सौख्यं करोतीत्यूह्यम्। वर्षेशे पूर्णबले शुभयुतदृष्टे मुन्थाकृतमनिष्टं न भवतीति ॥ २३ ॥

भाषा—स्वामी और शुभग्रह से दृष्ट मुथहा वर्षकुण्डली में जिस भाव में हो, उस भाव के जो राशि वह जन्मकुण्डली में जिस भाव में पड़े, उस भाव की वृद्धि होती है। इसी तरह पाप युत दृष्ट मुथहा वर्षकुण्डली में जिस भाव में पड़े, उसमें जो राशि, वह जन्मकुण्डली में जो भावहो उसका नाश होता है और मुथहाकृत अनिष्ट फल को बली वर्षेश नाश करता है ॥ २३ ॥

अथ सूर्ययुतदृष्टतद्राशिस्थमुथहाफलम्—

**यदीन्थिहा सूर्यगृहे युता वा सूर्येण राज्यं नृपसङ्गमं च।**
**दत्ते गुणानां परमामवाप्तिं स्थानांतरस्येति फलं दृशोऽपि ॥ २४ ॥**

यदि, इन्थिहा=मुथहा, सूर्यगृहे=सिंहराशौ, भवेद्वा सूर्येण युता भवेत्तदा राज्यं=स्वाम्यं, नृपसङ्गमम्=राजसङ्गमम्, गुणानां=दयादाक्षिण्यगाम्भीर्यादीनां परमां, स्थानान्तरस्य = पूर्वापेक्षयोन्नतपदस्यावाप्तिं दत्ते दृशः = सूर्यदृष्टेरपि इत्येवं फलम् ॥२४॥

भाषा—यदि मुथहा सिंह राशि में हो, या सूर्य से युत हो, या किसी भाव में स्थित सूर्य से दृष्ट हो, तो राज्यलाभ, राजा का सङ्ग, गुणों की उत्कर्षता, दूसरे अच्छे स्थान की भी प्राप्ति होती है। सूर्य से दृष्ट मुथहा का भी यही फल समझना ॥ २४ ॥

अथ चन्द्रयुतदृष्टतद्राशिस्थमुथहाफलम्—

**चन्द्रेण युक्तेन्दुगृहेऽथ दृष्टेन्दुनाऽपि वा धर्मयशोऽभिवृद्धिम्।**
**नैरुज्यसन्तोषमतिप्रवृत्तिं ददाति पापेक्षणतोऽतिदुःखम् ॥ २५ ॥**

यदि मुथहा चन्द्रेण युक्ता, अथ इन्दुगृहे = कर्कराशौ, स्थिताऽपि वा इन्दुना दृष्टा तदा धर्मयशोऽभिवृद्धिं, नैरुज्यसन्तोषमतिप्रवृत्तिं ( नैरुज्यमारोग्यं, सन्तोषं, मतिप्रवृत्तिं=बुद्धेः प्रचारं ) ददाति, पापेक्षणतः = पापदृष्टिवशात्, अतिदुःखं ददाति ॥२५॥

भाषा—यदि मुथहा चन्द्रमा से युक्त हो या कर्कराशि में हो, या चन्द्रमा से दृष्ट हो, तो धर्म, यशों की वृद्धि, आरोग्य, सन्तोष, बुद्धि का प्रचार करती है। पाप की दृष्टि से अत्यन्त क्लेश देती है ॥ २५ ॥

अथ कुजयुक्तदृष्टतद्भस्थमुथहाफलम्—

**कुजेन युक्ता कुजभे कुजेन दृष्टा च पित्तोष्णरुजं करोति।**
**शस्त्राभिघातं रुधिरप्रकोपं सौरीक्षिता सौरिगृहे विशेषात् ॥२६॥**

यदि मुथहा कुजेन = मङ्गलेन, युक्ता, कुजभे = मेषवृश्चिकान्यतरराशौ स्थिता, कुजेन दृष्टा तदा पित्तोष्णरुजं पित्तविकारजमुष्णरोगं करोति। शस्त्राभिघातं = शस्त्रक्षतं, रुधिरप्रकोपं=रक्तविकारं, करोति, यदि भौमयुतदृष्टतद्राशिस्थेन्थिहा सौरीक्षिता= शनिदृष्टा, सौरिगृहे स्थिता तदा विशेषात् पूर्वोक्तफलमशुभमिति ॥ २६ ॥

भाषा—यदि मुथहा मङ्गल से युत हो, मंगल के घर (मेष वृश्चिकों में से किसी) में हो, या मङ्गल से दृष्ट हो, तो पित्तप्रकोप, गरमी का प्रकोप और शस्त्र की चोट लगे। यदि वैसी मुथहा शनि के घर में (मकर, कुम्भ में) हो, या शनि से देखी जाती हो, तो विशेष रूप से वह उक्तफल होता है ॥ २६ ॥

बुधशुक्रयोराह—

**बुधेन शुक्रेण युतेक्षिता वा तद्भेऽपि वा स्त्रीमतिलाभसौख्यम्।**
**धर्मं यशश्चाप्यतुलं विधत्ते कष्टं च पापेक्षणयोगतः स्यात् ॥ २७ ॥**

यदि मुथहा बुधेन, वा शुक्रेण युता ईक्षिता = दृष्टा वा तद्भे = तयोर्बुधशुक्रयोः, भे = राशौ = वृषमिथुनकन्यातुल्यान्यतमराशौ स्थिता स्यात्तदा स्त्रीमतिलाभसौख्यम्= स्त्रीलाभो मतिलाभः सौख्यं च भवति। धर्मं, अतुलं यशश्च विधत्ते। पापेक्षणयोगतः कष्टं स्यात् ॥ २७ ॥

भाषा—यदि मुथहा बुध से या शुक्र से युत या दृष्ट हो, वा उनके राशियों (वृष मिथुन कन्या तुला) में हों, तो स्त्रीलाभ, बुद्धिलाभ आदि सुख होता है। धर्म होता है। अधिक यश होता है. यदि वैसी मुथहा पर पापग्रहों की दृष्टि, संयोग हो तो कष्ट होता है ॥ २७ ॥

अथ गुरोराह—

**युतेक्षिता वा गुरुणा गुरोर्भे यदीन्थिहा पुत्रकलत्रसौख्यम्।**
**ददाति हेमाम्बररत्नभोगं शुभेत्थशालादिह राज्यलाभः ॥ २८ ॥**

यदि इन्थिहा = मुथहा, गुरुणा = बृहस्पतिना, युतेक्षिता = संयुतदृष्टा, वा गुरोर्भे= गुरुराशौ (धनुर्मीनान्यतरस्था) तदा पुत्रकलत्रसौख्यं = पुत्रस्त्रीसुखं, ददाति, हेमाम्बररत्नभोगं=सुवर्णवस्त्ररत्नसौख्यं च ददाति, अत्र शुभेत्थशालाद्राज्यलाभो भवति ॥ २८ ॥

भाषा—यदि मुथहा बृहस्पति से युत या दृष्ट हो, या गुरुगृह (धनु, मीन) में हो, तो पुत्रसुख, स्वर्ण, वस्त्र और रत्न का भोग देती है। यदि मुथहा को शुभग्रह से इत्थशाल होता हो, तो राज्य का लाभ कहना चाहिये ॥ २८ ॥

अथ शनेराह—

**शनेर्गृहे तेन युतेक्षिता वा यदीन्थिहा वातरुजं विधत्ते।**

**मानक्षयं वह्निभयं धनस्य हानिं च जीवेक्षणतः शुभाप्तिम् ॥ २९ ॥**

यदि मुथहा शनेर्गृहे ( मकरकुम्भान्यतरराशौ ) स्थिता भवेत्तथा तेन=शनिना युतेक्षिता भवेत् तदा वातरुजं=वायुप्रकोपजनितरोगं, विधत्ते । मानक्षयं=असंमानं, वह्निभयं=अग्निभयम्, धनस्य हानिं च कुर्यात् । अत्र जीवेक्षणतः=गुरुदृष्ट्या शुभाप्तिम्=उत्तमफलप्राप्तिं च कुर्यात् ॥ २९ ॥

भाषा—यदि मुथहा शनि के राशि (मकर या कुम्भ) में हो, और शनि से युत हो या दृष्ट हो, तो वातराग, अपमान, अग्निभय, धनहानि को करती है। यहां बृहस्पति से इत्थशाल होने से शुभ प्राप्ति होती है ॥ २९ ॥

**तमोमुखे चेन्मुथहा धनाप्तिं यशः सुखं धर्मसमुन्नतिं च ।**
**सितेज्ययोगेक्षणतः पदाप्तिं सुवर्णरत्नाम्बरलब्धयश्च ॥ ३० ॥**

यदि मुथहा तमोमुखे=राहुमुखे, वक्रगत्या, राहुभोग्यभागे भवेत्तदा धनाप्तिं, यशः, सुखम्, धर्मसमुन्नतिं, च करोति, तत्र सितेज्ययोगेक्षणतः=शुक्रगुरुयोगदृष्ट्या, पदाप्तिं = जीविकास्थानलाभं करोति सुवर्णरत्नाम्बरलब्धयश्च भवन्ति ॥ ३० ॥

भाषा—यदि मुथहा राहु के मुख ( भोग्य ) में हो, तो धन लाभ, यश, सुख, धर्मोन्नति को करती है। वहां शुक्र गुरु के संयोग और दृष्टि से उत्तम स्थान की प्राप्ति को करती है, सुवर्ण, रत्न, वस्त्रों के लाभ भी होते हैं ॥ ३० ॥

अथ राहोर्मुखपृष्ठपुच्छसंज्ञालक्षणमाह—

**भोग्या राहोर्लवास्तस्य मुखं पृष्ठं गता लवाः ।**
**ततः सप्तमभं पुच्छं विमृश्येति फलं वदेत् ॥ ३१ ॥**

राहोर्भोग्या लवाः, तस्य मुखं भवन्ति, तस्य राहोर्ये गता भुक्ता लवास्ते तस्य पृष्ठं भवन्ति । यथा राहुरिदानीं ६।६।३०।५५ एवमस्ति, अतस्तुलायामंश ६° भोग्यांशाः सन्ति । अत्र भोग्याः = ६° अंशा मुखसंख्याः । अन्यग्रहक्रमगत्या एते भुक्ताः, किन्तु राहोः ६।३०।५५ एते वक्रगत्या भोग्यांशादय एव । अथ भोग्या लवाः भोग्योनत्रिंशद्भागास्तस्य पृष्ठं भवन्ति । ततो राह्वाक्रान्तराशितः सप्तमं पुच्छं भवति । इति विमृश्य = विचार्य, फलं = शुभाशुभं, वदेत् = कथयेत् ॥ ३१ ॥

भाषा—राहु के जो भोग्य अंश, वह उसका मुख होता है, और भुक्त अंश पृष्ठ होता है जैसे राहु का राश्यादि ६।६।३०।५५ इतने हैं, तो तुला राशि में ६।३०।५५ इतने और ग्रह के अनुसार तो भुक्त है। लेकिन राहु चलते हैं वक्र गति से, इसलिये ये वस्तुतः भोग्य है, यही मुखसंज्ञक होता है। और गतलव २३।२९।५ ये पृष्ठ संज्ञक हैं। राहु से सप्तम अर्थात् यहां मेषराशि पुच्छ है। यह विचार कर फल कहे ॥ ३१ ॥

**तत्पृष्ठभागे न शुभप्रदा स्यात्तत्पुच्छभागाद्रिपुभीतिकष्टम् ।**
**पापेक्षणादर्थसुखस्य हानिश्चेज्जन्मनीत्थं गृहवित्तनाशः ॥ ३२ ॥**

मुथहा तत्पृष्ठभागे=तद्भुक्तांशे, शुभप्रदा न स्यात्, तत्पुच्छभागात्=राह्वाक्रान्तराशितः सप्तमराशौ, रिपुभीतिकष्टं भवति । पापेक्षणात्, अर्थसुखस्य हानिः स्यात्, इत्थं यदि जन्मनि भवेत् अर्थात् जन्मलग्नात्सप्तमस्थानस्थितो यदा राहुः स्यात्तदा लग्नमेव राहोः पुच्छराशिसंज्ञः । तत्र यतो जन्मकाले जन्मलग्नतुल्या एव मुथहाऽतः सिद्धं जन्मनि सप्तमस्थानगते राहौ मुथहा राहुपुच्छे भवतीति । तत्र गृहवित्तनाशः=भवन—धननाशः, भवनस्य धननाशो वा भवनधनयोर्नाशो भवतीति ॥ ३२ ॥

भाषा—यदि मुथहा राहु के पृष्ठभाग में ( भुक्तांश में ) हो, तो शुभप्रदा नहीं है यदि राहु के पुच्छ भाग में हो तो शत्रु का भय, कष्ट होता है। यहां यदि पाप ग्रह की दृष्टि पड़ती हो, तो धन सुख के नाश होते हैं। इस प्रकार जन्म समय में होने से अर्थात् जन्म लग्न से सप्तम स्थान में राहु के रहने से घर में सञ्चित धन, या घर और सम्पत्ति का नाश होता है। सांराश यह है कि जन्मकाल में मुथहा जन्मलग्न ही में रहती है, वहां गत वर्ष तो है ही नहीं, और राहु के सप्तमस्थान ही पुच्छ कहलाता है, सो यदि लग्न से सप्तम स्थान में राहु रहेगा, तब सप्तम स्थान से सप्तम स्थान लग्न ही होगा, अर्थात् लग्न ही पुच्छ होगा, जन्म में वहीं पर मुथहा के रहने से ऐसा घटित हुआ ॥ ३२ ॥

**ये जन्मकाले बलिनोऽब्दकाले चेद्दुर्बलास्तैरशुभं समान्ते ।**
**विपर्यये पूर्वमनिष्टमुक्तं तुल्यं फलं स्यादुभयत्र साम्ये ॥ ३३ ॥**

जन्मकाले ये ग्रहा बलयुक्तास्ते यदि वर्षकाले दुर्बलाः पश्चात्पपञ्चवर्गबलाः स्युस्तदा तैस्तादृशैर्ग्रहैः समान्ते=वर्षान्तेऽशुभं भवति । हायनोऽस्त्री शरत्समा इत्यमरः । विपर्यये = विलोमस्थितौ, ये ग्रहा जन्मनि दुर्बलास्ते यदि वर्षे सबलास्तदा पूर्वमेवाशुभं पश्चाच्छुभं भवति । उभयत्र = जन्मवर्षकालयोरपि, साम्ये=एकरूपे, सति तुल्यं फलं स्यात् अर्थात् जन्मनि वर्षे च यदि कोऽपि ग्रहः सबल एव तदा स उभयत्र शुभमेव दिशति । यदि जन्मनि वर्षे च कोऽपि ग्रहो बलहीनस्तदा स उभयत्राशुभमेव दिशति ॥ ३३ ॥

भाषा—जो ग्रह जन्मसमय में बली हों, लेकिन वर्ष प्रवेश समय में बलहीन हों तो वे ग्रह वर्ष के अन्त में अशुभ देते हैं। अर्थात् वर्ष के प्रथम भाग में शुभ ही देते। विपरीत अर्थात् जन्म काल में हीनबली, वर्षकाल में यदि वही सबल हों तो, पहलेही अशुभ फल, पीछे शुभ फल होता है। अथवा यदि जन्म और वर्ष काल में भी समान

बलवान् हो, तो पहले पीछे अर्थात् सम्पूर्ण वर्ष भर शुभ ही होता है। यदि जन्म और वर्ष काल में भी दुर्बल ही हो, तो सम्पूर्ण वर्ष अशुभ ही होता है ॥ ३३ ॥

अथ मुथहेशफलमाह—

**षष्ठेऽष्टमेऽन्त्ये भुवि वेन्थिहेशोऽस्तगोऽथ वक्रोऽशुभदृष्टयुक्तः ।**
**क्रूराच्चतुर्थास्तगतश्च भव्यो न स्याद्रुजं यच्छति वित्तनाशम् ॥ ३४ ॥**

यदि मुथहेशः=मुथहाक्रान्तराशीशः, वर्षलग्नात् षष्ठेऽष्टमे, अन्त्ये=द्वादशे, वा भुवि=चतुर्थस्थाने भवति, वाऽस्तगः=सूर्यसंनिधिस्थः, अथ वक्रः=विलोमगमनशीलो भवेत् वाऽशुभदृष्टयुक्तः=पापवीक्षितयुतः, वा क्रूरात्=पापग्रहाक्रान्तराशितः, चतुर्थास्तगतः=चतुर्थसप्तमान्यगतस्तदा भव्यः=सुखजनको न, प्रत्युत रुजं=रोगं, वित्तनाशं=धननाशं च यच्छति=ददाति ॥ ३४ ॥

भाषा—यदि मुथहेश छठे आठवें बारहवें चौथे स्थान में हो, या अस्त हो, वक्री हो, पापग्रहों से दृष्ट युत भी हो, या पापाक्रान्तराशि से चौथे सातवें में हो, तो रोग और धननाश को करते हैं ॥ ३४ ॥

अथ मुथहेशफलमेवाह—

**यद्यष्टमेशेन युतोऽथ दृष्टः क्षुताख्यदृष्ट्या न शुभस्तदाऽपि ।**
**योगद्वये स्यान्निधनं यदैकयोगस्तदा मृत्युसमत्वमाहुः ॥ ३५ ॥**

यदि दैवात् मुथहेशोऽष्टमेशेन वर्षलग्नादष्टमस्थानेशग्रहेण युतो वा क्षुताख्यया ( १।४।७।१० ) दृष्ट्या दृष्टः, तदा शुभो नैव भवति । योगद्वये=अष्टमेशयुतदृष्टे मुथहेशे, निधनं=मरणं, स्यात् । यदा एकयोगोऽर्थादष्टमेशेन क्षुतदृष्ट्या दृष्टस्तदा मृत्युसमत्वं स्यान्मरणसमं कष्टं स्यादित्यर्थः । तत्र योगद्वयस्य युगपत्सम्भवस्तु तदैव यदा एकस्मिन्नेव राशौ मुथहेशाष्टमेशौ भवतस्तदानीमेव क्षुतदृष्टिश्चेति ॥ ३५॥

भाषा—यदि मुथहेश वर्षलग्न से अष्टमेश ग्रह से युत हो, अथवा क्षुतदृष्टि ( १। ४।७।१० ) से दृष्ट हो, तो शुभप्रद नहीं होता है। यहां यदि दोनों योग हो अर्थात् दोनों ग्रह एक साथ ही किसी राशि में हों, तो मरण कहना । उसमें भी तर्क करो कि यदि ६।८।१। स्थानों में हों अष्टमेश पाप से युत हो, तो अवश्य मरण हो, वहां अष्टमेश का तथा मुथहेश का जो धातु होगा, उसके दोष से रोग कहना । यदि एक ही योग हो, अर्थात् क्षुतदृष्टि से अष्टमेश से मुथहेश देखा जाय, तो मरण के समान ही कष्ट होता है। यहां एक योग में युत क्यों नहीं कहा, उसका कारण यह है कि संयोग होने से क्षुतदृष्टि तो स्वतः ही हो जाती है। इसलिये संयोग से एक ही साथ दोनों योग घटते हैं । इस लिये दृष्ट ही कहा ॥ ३५ ॥

मुथहा तत्पतिर्वापि जन्मनीक्षितयुक् शुभैः ।
वर्षारम्भे शुभं दत्तेऽब्दे चेदन्तेऽन्यथाऽशुभम् ॥ ३६ ॥

मुथहा, अपि वा तत्पतिः=मुथहेशः, जन्मनि = जन्मकुण्डल्यां, यत्र भवेत् अर्थात् वर्षप्रवेशकाले मुथहा यद्राशौ, तद्राशावेव जन्मकुण्डल्यां मुथहा लेख्या तदा मुथहामुथहेशौ यदि शुभैरीक्षितयुतौ भवतस्तदा वर्षादौ = वर्षपूर्वार्धे शुभं दत्ते, एवं अब्दे = वर्षप्रवेशे, मुथहामुथहेशौ शुभैर्दृष्टयुतौ भवतो जन्मनि तथा न तदाऽन्ते=वर्षान्ते शुभं भवति । अन्यथा उभयत्र शुभयोगदृष्ट्यभावे सकलं वर्षमशुभं भवति । उभयत्र शुभयोगदृष्टिसद्भावे सकलं वर्षं शुभमेवेत्यनुक्तमपि विज्ञेयम् ॥ ३६ ॥

भाषा—वर्षकुण्डली में मुथहा जिस राशि में हो, जन्म कुण्डली में उस राशि में मुथहा को मान कर, तब जन्मकुण्डली के ग्रहस्थितिवश यदि मुथहा या उसके स्वामी ग्रह शुभग्रह से दृष्ट युत हो और वर्ष काल में शुभयुत दृष्ट नहीं हो, तो वर्ष के आरंभ में शुभ होता है, अर्थात् पीछे नहीं। यदि वर्षकाल ही में शुभग्रह से दृष्ट युत हो, तो वर्षकाल के अन्तिमभाग ही में शुभ होता है, पहले नहीं। यदि दोनों समय में शुभयुत दृष्ट हो, तो दोनों समय में शुभ होता है, यदि दोनों समय में युत दृष्ट नहीं हो, तो दोनों समय में भी अशुभ ही फल होता है ॥ ३६ ॥

( इति मुथहाफलाध्यायः । )

## अथारिष्टाध्यायः ।

तत्र लग्नेशाद्यरिष्टमाह—

लग्नेशेऽष्टमगेऽष्टेशे तनुस्थे वा कुजेक्षिते ।
ज्ञजीवयोरस्तगयोः शस्त्रघातो विपन्मृतिः ॥ १ ॥

लग्नेशे=वर्षलग्नपतौ, अष्टमगे = वर्षलग्नादष्टमस्थानगते, अष्टेशे=अष्टमेशे = तनुस्थे=वर्षलग्नगते, कुजेक्षिते=मङ्गलदृष्टे, अथवा ज्ञजीवयोः = बुधगुरुग्रहयोः अस्तगयोः = सूर्यसन्निधिस्थयोः सतोः, शस्त्रघातः = शस्त्रेणाङ्गच्छेदः, विपदनिष्टम्, मृतिर्मरणञ्चेति वाच्यम् ॥ १ ॥

भाषा—लग्नेश अष्टमस्थान में, अष्टमेश लग्नमें हो, और मङ्गलसे दृष्ट हो, अथवा बुधबृहस्पति अस्तङ्गत हो, तो शस्त्रका आघात और विपत्ति, मरण ये फल होते हैं ॥१॥

अब्दलग्नेशरन्ध्रेशौ व्ययाष्टहिवुकोपगौ।
मुथहासंयुतौ मृत्युप्रदौ तद्धातुकोपतः॥ २॥

अब्दलग्नेशरन्ध्रेशौ=वर्षलग्नेशाष्टमेशौ, व्ययाष्टहिवुकोपगौ=द्वादशाष्टमचतुर्थस्थानगतौ, मुथहासंयुतौ तदा तद्धातुकोपतः=तत्तद्ग्रहधातुदोषात्, मृत्युप्रदौ भवतः। तत्र धातुदोषस्तु रविकुजयोः पित्तं, रक्तं च, चन्द्रशुक्रयोः कफः, बुधस्य मज्जा, शनिराहुकेतूनां = वायुः॥ २॥

भाषा—वर्षलग्नेश और अष्टमेश यदि १२।८।४ इन स्थानों में हों, मुथहा से युत हों, तो अपने धातु के प्रकोप से मृत्युप्रद होते हैं॥ २॥

जन्मलग्नाधिपोऽवीर्यो मृतीशो लग्नगो यदा।
सूर्यदृष्टो मृतिं दत्ते कुष्ठं कण्डूं तथाऽऽपदः॥ ३॥

यदा जन्मलग्नाधिपः=जन्मलग्नेशः, अवीर्यः=बलहीनः, मृतीशः = वर्षलग्नादष्टमेशो लग्नगः, तथा सूर्यदृष्टस्तदा मृतिं दत्ते, कुष्ठं=कुष्ठरोगं, कण्डूं=खर्जूं, तथाऽऽपदो विपदो दत्ते॥ ३॥

भाषा—जन्मलग्नेश वर्षकाल में दुर्बल हों, अष्टमेश लग्न में हों, और सूर्य से दृष्ट हो, तो मरण, कुष्ठ, खुजली, और विपत्ति को भी देते हैं॥ ३॥

अस्तगौ मुथहालग्ननाथौ मन्देक्षितौ यदा।
सर्वनाशो मृतिः कष्टमाधिव्याधिभयं रुजः॥ ४॥

यदा मुथहालग्ननाथौ=मुथहेशवर्षलग्नेशौ, अस्तगौ=सूर्यसन्निस्थत्वेन लुप्तकिरणौ, मन्देक्षितौ=शनिना क्षुतदृष्ट्या दृष्टौ, तदा सर्वनाशः=सकलैश्वर्यक्षयः, मृतिर्मरणं, कष्टं आधिव्याधिभयं = आधिर्मनोव्यथा, व्याधिस्तु रोगः, तयोर्भयं, रुजः = रोगाः, एते स्युः॥ ४॥

भाषा—यदि मुथहेश, वर्षलग्नेश अस्त, हों, शनि से क्षुतदृष्टि से देखें जाय, तो सर्वनाश, मरण, कष्ट, मनोव्यथा, व्याधि रोग ये सब होते हैं॥ ४॥

क्रूरमूसरिफोऽब्देशो जन्मेशः क्रूरितः शुभैः।
कम्बूलेऽपि विपन्मृत्युरित्थमन्याधिकारतः॥ ५॥

अब्देशः=वर्षेशग्रहः, क्रूरमूसरिफः=पापग्रहेण कृतेसराफयोगः, जन्मेशः=जन्मलग्नेशः, क्रूरितः=पापयुतदृष्टः तत्र शुभैः=शुभग्रहैः, कम्बूले=कबूलयोगे जातेऽपि विपत्, मृत्युः स्यादित्थमन्याधिकारतः=अन्यग्रहाधिकारतारतम्यात्फलस्य न्यूनाधिकत्वं चिन्त्यम्॥ ५॥

भाषा—यदि वर्षेश पापग्रह से ईसराफ योग करता हो, जन्मलग्नेश पापयुत दृष्ट हो, वहां शुभ ग्रहों से कम्बूल योग होने पर भी विपत्ति, मरण, होता है, इस प्रकार दूसरे ग्रह के अधिकार से यह विचार करना ॥ ५ ॥

क्रूरा वीर्याधिकाः सौम्या निर्बला रिपुरन्ध्रगाः ।
तदाऽऽधिव्याधिभीतिः स्यात्कलिर्हानिस्तथा विपत् ॥ ६ ॥

क्रूराः = क्षीणचन्द्ररविकुजसौराः, वीर्याधिकाः = बलाधिकाः, सौम्याः=शुभग्रहाः, बुधगुरुशुक्राः, निर्बलाः, रिपुरन्ध्रगाः = षष्ठाष्टमगाः, तदाऽऽधिव्याधिभीतिः स्यात्, कलिः = कलहः, हानिः, तथा विपत् स्यात् ॥ ६ ॥

भाषा—पापग्रह ( क्षीणचन्द्र, रवि, मङ्गल, शनि, ) ये बलवान् हों, शुभग्रह पाप-रहित बुध, गुरु, शुक्र, ये निर्बल हों, और छठे आठवे स्थान में हों, तो आधि, व्याधिभय, कलह, हानि, विपत्ति ये सब फल होते हैं ॥ ६ ॥

नीचे शुक्रो गुरुः शत्रुभागे सौख्यलवोऽपि न ।
लग्नेशेऽष्टमगेऽष्टेशे तनौ वा मृतिमादिशेत् ॥ ७ ॥

शुक्रो नीचे = कन्याराशौ, गुरुः = बृहस्पतिः, शत्रुभागे = ताजिकमतेन शत्रुग्रहनवांशे स्थितः, तदा सौख्यलवः = सुखलेशः, अपि न भवति । वा लग्नेशे=वर्षलग्नेशे अष्टमगे = वर्षलग्नादष्टमस्थानगते, अष्टेशे = अष्टमेशे, तनौ = लग्ने, सति मृतिं = मरणमादिशेत् ॥ ७ ॥

भाषा—शुक्र नीच में अर्थात् कन्याराशि में, बृहस्पति शत्रु के नवांश में हों, तो सुखका लेश भी नहीं हो। अथवा वर्षलग्नेश अष्टम स्थान में, और अष्टमेश लग्न में हो, तो मरण कहना ॥ ७ ॥

निर्बलौ धर्मवित्तेशौ दुष्टखेटास्तनौ स्थिताः ।
लक्ष्मीश्चिरार्जिता नश्येद्यदि शक्रोपरक्षिता ॥ ८ ॥

धर्मवित्तेशौ = नवमद्वितीयेशौ, निर्बलौ = पञ्चाल्पबलौ, तथा दुष्टखेटाः = पापग्रहास्तनौ = लग्ने स्थिताः, तदा शक्रोपरक्षिता = इन्द्रसंरक्षिताऽपि, चिरार्जिता=दीर्घकालोपार्जिताऽपि लक्ष्मीः = श्रीः, नश्येत् = दूरं त्यक्त्वा गच्छेत् । ईदृग्योगे सधनोऽपि दरिद्रः स्यादित्यर्थः ॥ ८ ॥

भाषा—भाग्येश, धनेश यदि बलहीन हों, पापग्रह लग्न में हो, तो इन्द्र से भी सुरक्षित बहुत दिनों से जमा की गयी भी सम्पत्ति चली जाती है ॥ ८ ॥

नीचे चन्द्रेऽस्तगाः सौम्या वियोगः स्वजनैः सह ।
शरीरपीडा मृत्युर्वा साधिव्याधिभयं द्रुतम् ॥ ९ ॥

चन्द्रे नीचे = वृश्चिकराशौ सति, सौम्याः=शुभग्रहाः, अस्तगाः = सूर्यसन्निधिगताः, तदा स्वजनैः = निजपरिजनैरपि, वियोगः=विच्छेदः स्यात्। शरीरपीडा=देहदुःखम्, वा साधिव्याधिभयं मृत्युर्मरणं, द्रुतं = शीघ्रं, भवेत् ॥ ९ ॥

भाषा—यदि चन्द्रमा नीच ( वृश्चिक राशि ) में हो, शुभग्रह अस्तंगत हों तो अपने परिजनों से भी वियोग होता है, देह की पीड़ा, मरण, शीघ्र मनस्ताप व्याधि का भय होता है ॥ ९ ॥

अब्दलग्नं जन्मलग्नराशिभ्यामष्टमं यदा।
कष्टं महाव्याधिभयं मृत्युः पापयुतेक्षणात् ॥ १० ॥

यदा जन्मलग्नराशिभ्यां = जन्मलग्नजन्मराशिभ्यां, अब्दलग्नं = वर्षलग्नमष्टमं = अष्टमस्थानगतं, स्यात् तदा कष्टं, महाव्याधिभयं वाच्यम्। तत्र पापयुतेक्षणात् मृत्युर्भवेत् ॥ १० ॥

भाषा—यदि जन्मलग्न से या जन्मराशि से वर्षलग्न आठवें स्थान में पड़े, तो कष्ट, महाव्याधि का भय हो, वहां यदि पापग्रह के योग और दृष्टि पड़ती हो तो मरण कहना ॥ १० ॥

जन्मन्यष्टमगः पापो वर्षलग्ने रुगाधिदः।
चन्द्राब्दलग्नपौ नष्टबलौ चेत्स्यात्तदा मृतिः ॥ ११ ॥

जन्मनि=जन्मकुण्डल्याम्, अष्टमगः पापग्रहो यदि वर्षलग्ने भवेत्, तदा रुगाधिदः=रोगमनोव्यथाप्रदो भवति। वा चन्द्राब्दलग्नपौ=चन्द्रवर्षलग्नेशौ, यदि नष्टबलौ = पञ्चाल्पबलौ, चेद्भवतस्तदा मृतिः स्यात् ॥ ११ ॥

भाषा—जन्म कुण्डली में यदि अष्टम स्थान में कोई पापग्रह हो, वही ग्रह यदि वर्ष लग्न में स्थित हो तो रोग, मनस्ताप को देता है। या चन्द्रमा, और वर्षलग्नेश क्षीणबली हों तो मरण होता है ॥ ११ ॥

जन्माब्दलग्नपौ पापयुक्तौ पतितभस्थितौ।
रोगाधिदौ मृत्युकरावस्तगौ नेक्षितौ शुभैः ॥ १२ ॥

जन्माब्दलग्नपौ = जन्मलग्नेशवर्षलग्नेशौ, पापयुक्तौ, पतितभस्थितौ=चतुर्थषष्ठाष्टमद्वादशगतौ तदा रोगाधिदौ भवतः। यदि तादृशौ तौ, अस्तगौ=सूर्यकराक्रान्तौ शुभैर्नेक्षितौ=न दृष्टौ, तदा मृत्युकरौ भवतः ॥ १२ ॥

भाषा—यदि जन्मलग्नेश और वर्षलग्नेश पापग्रहों से युत हो, और ४।६।८।१२ इन स्थानों में हों तो रोग, मनोदुःख को देते हैं। यदि वे दोनों अस्तंगत हों, शुभग्रहों से दृष्ट नहीं हों, तो मृत्यु को करने वाले होते हैं ॥ १२ ॥

व्ययाम्बुनिधनारिस्था जन्मेशाब्दपमुन्थहाः ।
एकर्क्षगास्तदा मृत्युः पापक्षुतदृशा ध्रुवम् ॥ १३ ॥

एकर्क्षगाः=एकराशिगताः, जन्मेशाब्दपमुन्थहाः=जन्मलग्नेशवर्षेशमुथहाः, व्ययाम्बुनिधनारिस्थाः = द्वादशचतुर्थाष्टमषष्ठस्थानान्यतमस्थिताः, तदा मृत्युः स्यात् । तत्रैव पापक्षुतदृशा=पापग्रहस्य १।४।७।१० एतदन्यतमदृष्ट्या, ते दृष्टास्तदा ध्रुवं = निश्चितम्, मृत्युः स्यात् ॥ १३ ॥

भाषा—एकराशि में गत जन्मलग्नेश, वर्षेश, मुथहा यदि १२।४।८।६ इन स्थानों में हों, तो मरण होता है। वहां यदि पापग्रह की क्षुत ( १।४।७।१० ) दृष्टि से देखे जांय, तो निश्चय मरण होता है ॥ १३ ॥

चन्द्रो व्यये शनियुतः शुभः षष्ठोऽर्थनाशकृत् ।
चित्तवैकल्यमशुभेसराफाच्च शुभेक्षणात् ॥ १४ ॥

शनियुतश्चन्द्रो व्यये स्थितः, शुभः=शुभग्रहः, षष्ठः = षष्ठस्थानगतस्तदाऽर्थनाशकृत् भवति । तत्र अशुभेसराफात्=पापग्रहेसराफयोगसम्भवात् , चित्तवैकल्यं भवति । शुभेक्षणात्=शुभदृष्टिसम्भवात् , नार्थनाशचित्तवैकल्ये भवत इति ॥ १४ ॥

भाषा—शनियुक्त चन्द्रमा व्ययभाव में हो, शुभग्रह छठे स्थान में हो, तो धन का नाश करता है। यदि वहां पाप से ईसराफ योग होता हो, तो मन की विकलता होती है। यदि शुभग्रह की दृष्टि पड़ती हो, तो वैसे नहीं होता अर्थात् धननाश, चित्तवैकल्य नहीं होते ॥ १४ ॥

चन्द्रोऽर्कमण्डलगतो रिपुरिःफाष्टबन्धुगः ।
त्रिदोषतस्तस्य रुजा विविधेज्यदृशा शुभम् ॥ १५ ॥

अर्कमण्डलगतोऽस्तङ्गतश्चन्द्रो रिपुरिःफाष्टबन्धुगः = षष्ठव्ययाष्टमचतुर्थस्थानगतः, तदा तस्य त्रिदोषतः=वातपित्तकफेभ्यः, विविधा रुजा=रोगः स्यात् । तत्र ईज्यदृशा= गुरुदृष्ट्या, शुभं भवति ॥ १५ ॥

भाषा—अस्तङ्गत चन्द्रमा छठे बारहवें आठवें चौथे स्थानों में किसी में हों, तो त्रिदोष से अनेक प्रकार का रोग होता है, वहां यदि गुरु की दृष्टि हो, तो शुभ हो॥१५॥

हद्दाहायनलग्नेशौ सप्ताष्टान्त्ये खलान्वितौ ।
स्वदशायां निधनदौ शुभदृष्ट्या शुभं वदेत् ॥ १६ ॥

खलान्वितौ=पापग्रहयुक्तौ, हद्दाहायनलग्नेशौ=वर्षलग्नहद्देशवर्षलग्नेशौ, सप्ताष्टान्त्ये=सप्ताष्टमद्वादशस्थाने स्थितौ, तदा स्वदशायां, निधनदौ=मृत्युदौ, भवतः । तत्र

शुभदृष्ट्या शुभं भवेत्। तौ निधनदौ न भवत इति ॥ १६ ॥

भाषा—पापग्रह से युक्त वर्षलग्न के हद्देश, तथा वर्षलग्नेश, ये यदि ७।८।१२ इन स्थानों में हों, तो मरण को देते हैं। शुभ दृष्टिसे शुभ कहना ॥ १६ ॥

अब्दलग्नादृज्वनृजू व्ययार्थस्थौ रुजा तदा।
एवं वर्षाब्दलग्नेशजन्मेशैरपि बन्धनम् ॥ १७ ॥

अब्दलग्नात् = वर्षलग्नात्। ऋज्वनृजू=मार्गिवक्रौ, ग्रहौ व्ययार्थस्थौ=द्वादश-द्वितीयगतौ, द्वादशस्थाने मार्गी ग्रहः, द्वितीयस्थाने वक्री ग्रह एवं यदि स्यात्, तदा रुजा=रोगः, स्यात्। एवं वर्षाब्दलग्नेशजन्मेशैश्चेत्कर्त्तरीयोगस्तदा बन्धनं=राजकारागारवाससम्भवः स्यात् ॥ १७ ॥

भाषा—यदि वर्षलग्नसे मार्गीग्रह बारहवें हों, वक्रीग्रह दूसरे स्थान में हों, तो रोग होता है। इस प्रकार वर्षेश, वर्षलग्नेश, जन्मलग्नेशोंसे योग होने से बन्धन होताहै॥१७॥

नीचे त्रिराशिपे पापदृष्टे कार्यं विनश्यति।
इन्थिहेशेऽब्दपे वाऽरिमेऽस्तं याते रुजा विपत् ॥ १८ ॥

त्रिराशिपे = वर्षलग्नत्रिराशिपे, "त्रिराशिपाः सूर्यसितार्किशुक्राः", इति, नीचे= नीचराशौ स्थिते, पापदृष्टे, तदा कार्यं विनश्यति। इन्थिहेशे=मुथहेशे, वाऽब्दपे= वर्षेशे, अरिमे = शत्रुराशौ स्थिते, अस्तं याते = सूर्यकिरणाक्रान्ते, तदा रुजा = रोगः, विपत् = क्लेशः, भवतीति ॥ १८ ॥

भाषा—लग्न के त्रिराशिप नीचराशि में हो, पाप से दृष्ट हो, तो कार्य का नाश होता है। या मुथहेश, वा वर्षेश, शत्रुराशि में हों, अस्त भी हों, तो रोग और विपत्ति होती है ॥ १८ ॥

अथ चन्द्रारिष्टं सापवादमाह—

चन्द्रो रिःफषडष्टभूद्युनगतो दृष्टोऽशुभैर्नो शुभैः।
सोऽरिष्टं विदधाति मृत्युमथवा भौमेक्षणादग्निभीः।
शस्त्राद्वा शनिराहुकेतुभिररेर्भीतिं रुजं वायुजां
दारिद्र्यं रविणा शुभं शुभदृशेज्यालोकनादादिशेत् ॥ १९ ॥

चन्द्रः, रिःफषडष्टभूद्युनगतः=द्वादशषष्ठाष्टमचतुर्थसप्तमस्थानस्थितः, अशुभैः = पापैः, दृष्टः, शुभैर्नो दृष्टस्तदा सः = चन्द्रः, अरिष्टं वा मृत्युं विदधाति=करोति। तत्र भौमेक्षणात्=कुजदर्शनात्, अग्निभीः=वह्निभयम्। शनिराहुकेतुभिर्दर्शनात्, शस्त्राद्भयं, अरेः = शत्रोः, भीतिं, वायुजां रुजं=वायुप्रकोपरोगं करोति। रविणा दृष्ट-

स्तादृशश्चन्द्रः दारिद्र्यं करोति । शुभदृशा, ईज्यालोकनात्=गुरुविलोकनाच्च, शुभं= शुभफलम् आदिशेत् = कथयेत् ॥ १९ ॥

भाषा—चन्द्रमा वर्ष लग्न से १२।६।८।४।७ इन स्थानों में हों, पापग्रहों से दृष्ट हो, शुभग्रह से नहीं दृष्ट हो, तो अरिष्ट ( विशेष कष्ट ) या मरण देता है । वहां मंगल की दृष्टि से अग्निभय, शनि, राहु, केतुओं से देखे जाने पर शस्त्रभय, शत्रुभय, वायु के प्रकोप से रोग को करता है । रवि से दृष्ट हो तो दरिद्र बनाता है । यदि शुभग्रहों की दृष्टि चन्द्रमा पर पड़े या बृहस्पति की दृष्टि पड़े तो शुभ होता है ॥ १९ ॥

अथ मुथहाकृतारिष्टमाह—

**क्रूरान्वितेक्षितयुता शनिनेन्थिहाधिव्याधिप्रदा जनुषिरिःफसुखारिरन्ध्रे ।**
**द्यूने च वर्षतनुनैधनगा मृतिं सा दत्ते खलेक्षितयुतेत्यपि चिन्त्यमार्यैः॥२०॥**

क्रूरान्वितेक्षितयुता=पापग्रहयुतदृष्टा इन्थिहा=मुथहा, यदि शनिनाऽपि युतदृष्टा तदा आधिव्याधिप्रदा स्यात् । वा वर्षकुण्डल्यां यच्च जन्मलग्नं तस्माद्राशितो रिःफ-सुखारिरन्ध्रे = द्वादशचतुर्थषष्ठाष्टमस्थाने स्थिता सती द्यूने=सप्तमे, वर्षतनुनैधनगा = वर्षलग्नादष्टमभावगता स्यात्तथा खलेक्षितयुता = पापग्रहदृष्टयुक्ता, तदा सा मृतिं दत्ते इत्यपि आर्यैश्चिन्त्यम् ॥ २० ॥

भाषा—पापग्रह से युत या दृष्ट मुथहा यदि शनि से भी युत दृष्ट हो तो मनो-दुःख और रोग देती है । अथवा जन्मलग्न से १२।४।६।८।६ इनमें से किसी स्थान में स्थित होकर यदि वर्ष लग्न से ८ वें स्थान में प्राप्त हो और पापग्रह से दृष्ट युत हो तो मृत्यु देती है ॥ २० ॥

इति नीलकण्ठ्यामरिष्टाध्यायः समाप्तः ।

## अथारिष्टभङ्गाध्यायः ॥

**लग्नाधिपो बलयुतः शुभेक्षितयुतोऽपि वा ।**
**केन्द्रत्रिकोणगोऽरिष्टं नाशयेत्सुखवित्तदः ॥ १ ॥**

बलयुतः = दशाधिकबली, लग्नाधिपः = लग्नेशः, केन्द्रत्रिकोणगः = १।४।७। १०।५।९ एतदन्यतमस्थाने स्थितः । शुभेक्षितयुतः = शुभग्रहदृष्टयुतः, वा भवेत्तदाऽ-रिष्टं=अनिष्टं, नाशयेत् , तथा सुखवित्तदः=आनन्दोदयपूर्वकधनलाभप्रदो भवतीति॥ १ ॥

भाषा—बल से संयुत वर्षलग्नेश केन्द्र या त्रिकोण १।४।७।१०।५।९ इन स्थानों में हो, शुभग्रह से युत या दृष्ट हो तो अशुभफल का नाश करता है, और शुभफल सुख, धन को देता है ॥ १ ॥

**गुरुः केन्द्रे त्रिकोणे वा पापादृष्टः शुभेक्षितः।**
**लग्नचन्द्रेन्थिहारिष्टविनाशार्थसुखं दिशेत्॥ २॥**

गुरुर्बृहस्पतिः, केन्द्रे १।४।७।१० वा त्रिकोणे ५।९ स्थितः, पापादृष्टः=पापैरदृष्टः, शुभेक्षितः=शुभग्रहदृष्टः, तदा लग्नचन्द्रेन्थिहारिष्टविनाशार्थसुखं=वर्षलग्नचन्द्रमुथहाजनिताशुभफलध्वंसपूर्वकधनलाभसुखं, दिशेत्=कथयेत्॥ २॥

भाषा—बृहस्पति केन्द्र या त्रिकोण में हों, पापग्रहों से नहीं देखें जांय, किन्तु शुभग्रह से देखें जांय, तो वर्ष काल में लग्नकृत, चन्द्रमा कृत, मुथहाजनित अशुभफलों को नाश करते हैं, और धन, सुख को देते हैं॥ २॥

**सुखं स्वामियुतं सद्भिर्दृष्टं सौख्ययशोऽर्थदम्।**
**लग्ने तृतीयेऽथ गुरुर्जन्मेट् सौख्यार्थदः सुखे॥ ३॥**

सुखं=चतुर्थभावं, स्वामियुतं=लग्नेशयुतं, सद्भिः=शुभग्रहैः, दृष्टं=वीक्षितं, तदा सौख्ययशोऽर्थदं भवेत्। वा गुरुर्लग्नेऽथवा तृतीये स्यात्, जन्मेट् = जन्मलग्नेशो भूत्वा सुखे=चतुर्थस्थाने, भवेत्तदाऽपि सौख्ययशोऽर्थदो भवति॥ ३॥

भाषा—चतुर्थ भाव अपने स्वामी से युत हो, शुभग्रहों से दृष्ट हो, तो सुख, यश, धनलाभ को देता है। अथवा बृहस्पति वर्ष लग्न में या तीसरे में हो, अथवा वर्षलग्न का स्वामी होकर चौथे स्थान में हो, तो सुख, यश, धन को देता है॥ ३॥

**लग्ने द्युनेशस्तनुगः सुरेज्यः क्रूरैरदृष्टः शुभमित्रदृष्टः।**
**रिष्टं निहंस्यर्थयशःसुखाप्तिं दिशेत्स्वपाके नृपतिप्रसादम्॥ ४॥**

द्युनेशः=वर्षलग्नात्सप्तमेशः, लग्ने स्थितः, सुरेज्यः=गुरुः, तनुगः=वर्षलग्नगतः, क्रूरैः=पापैः, अदृष्टः = न दृष्टः, शुभमित्रदृष्टः, तदा रिष्टमशुभफलं निहन्ति=नाशयति। अर्थयशःसुखाप्तिं दिशेत्तथा स्वपाके = निजदशायां, नृपतिप्रसादं = राजप्रसन्नतां, दिशेत्=कथयेत्॥ ४॥

भाषा—वर्षलग्न में सप्तमेश और बृहस्पति (दोनों या एक) प्राप्त होकर पापग्रहों से देखा न जाता हो शुभग्रह और मित्रग्रह से दृष्ट हो अथवा शुभग्रहों की मित्र दृष्टि से देखा जाता हो, तो अरिष्टों का नाश करता है। धन, यश, और सुख की प्राप्ति करता है, एवं अपनी दशा में राजाकी प्रसन्नता कराता है॥ ४॥

**बलान्वितौ धर्मधनाधिनाथौ क्रूरैरदृष्टौ तनुगौ यदाऽऽस्ताम्।**
**राज्यं गजाश्वाम्बररत्नपूर्णं रिष्टस्य नाशोऽप्यतुलं यशश्च॥ ५॥**

धर्मधनाधिनाथौ = नवमेशद्वितीयेशौ, बलान्वितौ, क्रूरैः=पापैः, अदृष्टौ=अनालोकितौ, तनुगौ = लग्नगतौ, च यदा स्याताम्, तदा राज्यं, गजाश्वाम्बररत्नपूर्णं, तथा

रिष्टस्य=अशुभफलस्य नाशः, अतुलं = अधिकं, यशश्च भवति ॥ ५ ॥

भाषा—भाग्येश, और धनेश बल से युक्त हों, पापग्रहों से नहीं देखे जांय और लग्न में गत हों, तो हाथी घोड़ा वस्त्र रत्नों से पूर्ण राज्य मिलता है, और अशुभ का नाश, अधिक यश भी होता है ॥ ५ ॥

**त्रिषष्ठलाभोपगतैरसौम्यैः केन्द्रत्रिकोणोपगतैश्च सौम्यैः ।**
**रत्नाम्बरस्वर्णयशःसुखाप्तिर्नाशोऽप्यरिष्टस्य तनोश्च पुष्टिः ॥ ६ ॥**

असौम्यैः = पापग्रहैः, त्रिषष्ठलाभोपगतैः=तृतीयषष्ठैकादशस्थानस्थितैः, सौम्यैः= शुभग्रहैः केन्द्रत्रिकोणोपगतैः=१।४।७।१०।५।९ एतेषु स्थितैः, तदा रत्नाम्बरस्वर्ण-यशःसुखाप्तिः, तथा अरिष्टस्य = अशुभफलस्य, नाशः, तनोर्देहस्य पुष्टिः, भवति ॥६॥

भाषा—पापग्रह सब ३।६।११ इन स्थानों में हों, शुभग्रह सब १।४।७।१०।५।९ इन स्थानों में हों, तो रत्न, वस्त्र, सुवर्ण, यश इन सबों की प्राप्ति होती है और कष्ट का नाश, तथा शरीर की पुष्टि भी होती है ॥ ६ ॥

**यदा सवीर्यो मुथहाधिनाथो लग्नाधिपो जन्मविलग्नपो वा ।**
**केन्द्रत्रिकोणायधनस्थितास्ते सुखार्थहेमाम्बरलाभदाः स्युः ॥ ७ ॥**

यदा मुथहाधिनाथः = मुथहेशः, सवीर्यः = सबलः, लग्नाधिपः=वर्षलग्नेशः, वा जन्मविलग्नपः = जन्मलग्नेशः, केन्द्रत्रिकोणायधनस्थिताः = १।४।७।१०।५।९।११।२ एषु गता भवेयुस्तदा ते सुखार्थहेमाम्बरलाभदाः स्युः ॥ ७ ॥

भाषा—यदि मुथहेश, बली हो, वर्षलग्नेश वा जन्मलग्नेश केन्द्र १।४।७।१० त्रिकोण ५।९ और ११।२ इन स्थानोंमें हों तो सुख धन सुवर्ण वस्त्रों के लाभ को देते हैं॥७॥

**तुङ्गे शनिर्वा भृगुजो गुरुर्वा शुभेत्थशालाद्यवनाद्धनाप्तिम् ।**
**बली कुजो वित्तगतो यशोऽर्थतेजांस्यकस्माच्च सुखानि दद्यात् ॥ ८ ॥**

शनिस्तुङ्गे = तुलायां, वा भृगुजः=शुक्रः, तुङ्गे=उच्चे-मीने, वा गुरुः=बृहस्पतिः, तुङ्गे = कर्के भवेत् तत्र शुभेत्थशालात्, यवनाद्धनाप्तिं दद्यात् । वा बली कुजो मङ्गलः, वित्तगतः=द्वितीयस्थानस्थितः, तदा यशोऽर्थतेजांसि दद्यात्, तथा अकस्मात्= दैवात्, सुखानि दद्यात् ॥ ८ ॥

भाषा—शनि तुला में, शुक्र मीन राशि में, बृहस्पति कर्क में हों, वहां यदि शुभग्रह से इत्थशाल होता हो, तो यवन जाति से धनलाभ होता है। या बली मङ्गल द्वितीयस्थान में हो तो यश, धन को देता है, एकाएक सुख को भी देता है ॥ ८ ॥

**सूर्येज्यशुक्रा मिथ इत्थशालं कुर्युस्तदा राज्ययशःसुखार्थाः ।**
**सूर्यः कुजो वोपचये ददाति भद्रं यशो मङ्गलमित्थिहायाः ॥ ९ ॥**

यदि, सूर्येज्यशुक्रा मिथः परस्परमित्थशालं कुर्युस्तदा राज्ययशःसुखार्थाः स्युः। यदि सूर्यः = रविः, वा कुजः = मङ्गलः, इन्थिहायाः मुथहायाः सकाशात् उपचये=त्रिषडेकादशदशस्थाने भवेत्तदा, भद्रं=कुशलं, यशः, मङ्गलम्=उपनयनविवाहादि, ददाति ॥ ९ ॥

भाषा—यदि रवि, बृहस्पति, शुक्र ये एक दूसरे से इत्थशाल करते हों, तो राज्य यश सुख धन ये सब होते हैं। या यदि सूर्य वा मङ्गल मुथहा स्थान से ३।६।१०।११ इन स्थानों में हो तो कुशल, यश, उत्सव आनन्द को देते हैं ॥ ९ ॥

शुक्रज्ञचन्द्रा हद्दे स्वे पापास्त्र्यायगता यदि।
स्वबाहुबलतो हेमसुखकीर्तीर्नरोऽश्नुते ॥ १० ॥

यदि शुक्रज्ञचन्द्राः ग्रहाः स्वे = स्वकीये, हद्दे स्थिताः, पापाः पापग्रहाः, त्र्यायगताः=तृतीयैकादशगताः स्युस्तदा नरः=मानवः, स्वबाहुबलतः=स्वपराक्रमतः, हेमसुखकीर्तीः, अश्नुते = भुनक्ति ॥ १० ॥

भाषा—शुक्र, बुध, चन्द्रमा ये ग्रह यदि अपनी २ हद्दा में हों, पापग्रह (शनि रवि मङ्गल) यदि तीसरे एगारहवें स्थान में हों तो मनुष्य अपने बाहु के बल से, सोना, सुख, यश को भोगता है ॥ १० ॥

बुधशुक्रौ मूसरीफौ गुरुर्विक्रमभावगः।
तदा राजयशोहेममुक्ताविद्रुमलब्धयः ॥ ११ ॥

यदि बुधशुक्रौ मूसरिफौ = मूसरीफयोगकरौ, गुरुः=बृहस्पतिः, विक्रमभावगः= तृतीयस्थावस्थितः, तदा राजयशोहेममुक्ताविद्रुमलब्धयः स्युः ॥ ११ ॥

भाषा—यदि बुध शुक्र मूसरीफ योग करते हों, बृहस्पति तीसरे भाव में हों, तो राज, यश, सुवर्ण, मुक्ता, मूंगा, ये सब का लाभ होता है ॥ ११ ॥

भौमो मित्रगृहेऽब्देशः कम्बूली स्वगृहादिगैः।
गजाश्वहेमाम्बरभूलाभं धत्ते सुखादिकम् ॥ १२ ॥

अब्देशो भूत्वा भौमः कुजो मित्रगृहे=मित्रग्रहराशौ भवेत्, तथा स्वगृहादिगैः= निजराशिस्थैः ग्रहैः, कम्बूली = कम्बूलयोगकरो भवेत् तदा गजाश्वहेमाम्बरभूलाभं, सुखादिकं च धत्ते = ददाति ॥ १२ ॥

भाषा—वर्षेश होकर मङ्गल यदि मित्रगृही में हों, तथा अपने राशि में स्थित ग्रहों से कम्बूल योग करता हो, तो हाथी, घोड़ा, सुवर्ण, वस्त्र, जमीनों का लाभ और सुख कल्याण होते हैं ॥ १२ ॥

इत्थं जन्मनि वर्षे च योगकर्तुर्बलाबलम् ।
विमृश्य कथयेद्राजयोगं तद्भंगमेव च ॥ १३ ॥

इत्यमुना प्रकारेण जन्मनि=जन्मकाले, वर्षे=वर्षकाले, च योगकर्त्तुः=योगकारकग्रहस्य, बलाबलं, विमृश्य = विचार्य, राजयोगं, वा तद्भङ्गं च कथयेत् ॥ १३ ॥

भाषा—इस प्रकार जन्मकाल में, तथा वर्ष काल में भी योग कारक ग्रह के बलाबल विचार करके राजयोग (शुभयोग) या राजयोगभङ्ग (अशुभयोग) कहै ॥१३॥

अथ राजयोगभङ्गमाह—

अब्देन्थिहेशादिखगाः खलैश्चेद्युतेक्षिता अस्तगनीचगा वा ।
सौम्या बलोना नृपयोगभङ्गं तदा वदेद्वित्तसुखक्षयांश्च ॥ १४ ॥

अब्देन्थिहेशादिखगाः = वर्षेशमुथहेशादिग्रहाः, आदिपदेन जन्मलग्नवर्षलग्नस्वामी च एते यदि खलैः = पापैः, युतेक्षिताः वा अस्तगनीचगा भवेयुः । अथवा सौम्याः = शुभग्रहाः, बलोनाः = हीनबलाः पश्चाल्पबलाः, तदा नृपयोगभङ्गं=राजयोगनाशं, वित्तसुखक्षयं = धनसुखनाशं, च वदेत्=कथयेत् ॥ १४ ॥

भाषा—वर्षेश मुथहेश, जन्मलग्नेश, वर्षलग्नेश ये सब यदि पापग्रहों से युत दृष्ट हों, या अस्त हों, नीच राशि में हों, अथवा शुभग्रह बलहीन हों, तो राजयोग का भी खण्डन होता है । और धन सुख का भी नाश कहना ॥ १४ ॥

श्रीगर्गान्वयभूषणं गणितविच्चिन्तामणिस्तत्सुतो-
ऽनन्तोऽनन्तमतिर्व्यधात्खलमतध्वस्त्यै जनुःपद्धतिम् ।
तत्सूनुः खलु नीलकण्ठविबुधो विद्वच्छिवानुज्ञया-
ऽवोचद्वर्षपमुंथहाफलमथारिष्टादिसद्योगयुक् ॥ १५ ॥

अयं श्लोकः पूर्वं व्याख्यातः । इत्यरिष्टभङ्गाध्यायः ।

## अथ भावविचाराध्यायः ।

तत्रादौ तनुभावस्य विचारः—

यो भावः स्वामिसौम्याभ्यां दृष्टो युक्तोऽयमेधते ।
पापदृष्टयुतौ नाशो मिश्रैर्मिश्रफलं वदेत् ॥ १ ॥

यः कश्चिदपि भावः स्वामिशुभग्रहाभ्यां दृष्टः, वा युक्तः, भवेत् सोऽयं भावः एधते = वर्धते । यदि पापदृष्टयुतस्तदा नाशस्तद्भावफलक्षयो भवति । मिश्रैः = पापशुभैर्युतदृष्टस्तदा मिश्रफलं = शुभमशुभं च वदेत ॥ १ ॥

भाषा—जो कोई भाव अपने स्वामी से या शुभग्रह से युत दृष्ट हो, तो उस भाव का फल बढ़ता है। यदि पापग्रहसे युत दृष्ट हो तो उस भाव का फल नाश हो जाता है। यदि पाप, शुभ दोनों से युत दृष्ट हो तो शुभ अशुभ दोनों प्रकार के फल होते हैं। यह सामान्यरीति से सब भावों में समझना चाहिये ॥ १ ॥

**लग्नाधिपे वीर्ययुते सुखानि नैरुज्यमर्थागमनं विलासः।**
**स्यान्मध्यवीर्येऽल्पसुखार्थलाभः क्लेशाधिकत्वं विपदल्पवीर्ये ॥ २ ॥**

लग्नाधिपे वीर्ययुते=दशाधिकबले, सति सुखानि भवन्ति, नैरुज्यम् = आरोग्यं भवति। अर्थागमनं = धनागमः, विलासः=मनोविनोदः, भवति। लग्नेशे मध्यबले सति अल्पसुखार्थलाभः स्यात्, अल्पवीर्ये लग्नेशे सति क्लेशाधिकत्वं = कष्टप्राचुर्यम्, विपच्च भवति ॥ २ ॥

भाषा—यदि वर्षलग्नेश पूर्णबली हो, तो सुख, आरोग्य, धनलाभ, मनोविनोद ये सब होते हैं। यदि वर्षलग्नेश मध्यबली ( ५-१० ) हो, तो थोड़े सुख, धनों का लाभ होता है यदि वर्षलग्नेश हीनबल हो तो विशेष क्लेश, और विपत्ति होती है ॥ २ ॥

**जन्माब्दांगपतीन्थिहापतिसमानाथाद्यधीकारवान्**
**सूर्यो नष्टबलस्त्वगक्षिविलयं कुर्यान्निरुत्साहताम्।**
**नीचत्वं पितृमातृतोऽप्यभिभवश्चन्द्रेऽक्षिकार्यक्षयो**
**दारिद्र्यं च पराभवो गृहकलिर्व्याध्याधिभीतिस्तदा ॥ ३ ॥**

जन्मलग्नेश-वर्षलग्नेश-मुथहेश-वर्षेश-त्रिराशीशानामन्यतमाधिकारी भूत्वा सूर्यः, यदि नष्टबलः = क्षीणबलः स्यात्तदा त्वगक्षिविलयं = त्वचानयनयोर्नाशं, कुर्यात्। निरुत्साहतां=आलस्यं, च कुर्यात्। नीचत्वम् = नीचवृत्त्या वर्त्तनं, पितृमातृतः अपि अभिभवः = पराभवः, अन्येषां का कथा, एतावदनिष्टफलं भवति। अथ तेषां पञ्चाधिकारिणां मध्ये कोऽप्यधिकारी भूत्वा यदि चन्द्रो हीनबलः स्यात्तदाऽक्षिकार्यक्षयः=नयनस्य कार्यस्य च नाशः, दारिद्र्यम्=धनहीनत्वं, पराभवः=विशेषक्लेशागमः, गृहकलिः = परिजनकलहः, व्याधिभीतिः = व्याधेर्मनोव्यथायाश्च भयं स्यादिति ॥ ३ ॥

भाषा—यदि जन्मलग्नेश, वर्षलग्नेश, मुथहेश, वर्षेश त्रिराशीश इन सबोंमें कोई अधिकार वाला होकर सूर्य यदि हीनबल हो, तो, त्वचा के रोग, ( खुजली खाज, दाद कुष्ठ आदि ) नेत्र रोग ( माणा, फूला, रोहा, रतोंधी आदि ) को करते हैं। और उत्साहहीनता ( आलस्य ), नीचता क्षुद्रवृत्ति से निर्वाह, पितामाता से भी क्लेश,

फल को देते हैं। यदि पूर्वोक्त अधिकारी होकर चन्द्रमा हीनबली हो, तो नेत्रनाश, कार्यनाश, दरिद्रता, पराभव, घर में कलह, रोगभय, मनस्ताप ये सब फल होते हैं॥३॥

भौमे चलत्वं भीरुत्वं बुधे मोहपराभवौ।
जीवे धर्मक्षयः कष्टफला जीवनवृत्तयः॥ ४॥
शुक्रे विलाससौख्यानां नाशः स्त्रीभिः समं कलिः।
सौरे भृत्यजनाद्दुःखं रुजो वातप्रकोपतः॥ ५॥

भौमे = तदुक्ताधिकारी भूत्वा यदि निर्बले सति चलत्वं = चापल्यं, भीरुत्वं=कातरत्वं, भवति। एवं तदधिकारवति बुधे क्षीणबले सति मोहपराभवौ = मतिभ्रमक्लेशविशेषौ भवतः। तथा तदधिकारवति गुरौ निर्बले सति धर्मक्षयः, कष्टफलाः = क्लेशपरिणामाः, जीवनवृत्तयः = जीवनव्यापारा भवन्ति। एवं तदधिकारवति शुक्रे निर्बले सति, विलाससौख्यानां नाशः, स्त्रीभिः समं कलिः = कलहः, भवति। एवं तदधिकारवति सौरे = शनौ, निर्बले सति, भृत्यजनाद् दुःखं, वातप्रकोपतः, रुजो = रोगा भवन्ति॥ ४-५॥

भाषा—उक्त अधिकारी होकर यदि मंगल दुर्बल हो तो चञ्चलता, और कायरता होती है वैसे बुध में मतिभ्रम, और क्लेश होता है, ऐसे बृहस्पति अधिकारी होकर यदि निर्बल हो तो धर्म का नाश, और जीवन में अन्तिम समय क्लेश विशेष हो, इसी तरह शुक्र में मनोदुःख और क्लेश भी होता है। स्त्रियों के साथ कलह हो। और इसी प्रकार शनि होने से नोकर से दुःख हो, वायु के प्रकोप से रोग हो॥ ४-५॥

लग्नं पापयुतं सौम्यैरदृष्टं सहितं नृणाम्।
विवादं वञ्चनां दुष्टमशनं चापि विन्दति॥ ६॥

वर्षलग्नं=पापग्रहयुतं, सौम्यैः = शुभग्रहैः, न दृष्टं, न युतं, तदा नृणां=नराणां विवादं, वञ्चनां = अन्यजनकृतं प्रतारणं, दुष्टं=कुत्सितं, अशनं = भोजनं, च विन्दति=प्राप्नोति॥ ६॥

भाषा—वर्षलग्न यदि पापग्रहों से युत हो, शुभग्रहों से न तो दृष्ट हो, न तो युत ही हो, तो मनुष्य को विवाद, प्रतारण और कदन्नभोजन भी होते हैं॥ ६॥

जन्माब्दाङ्गपरन्ध्रपाब्दमुथहानाथा बलाढ्यास्तदा
रम्यं वर्षमुशन्ति सर्वमतुलं सौख्यं यशोऽर्थागमः।
षष्ठाष्टान्त्यगता न चेदिह पुनस्ते दुःखभीतिप्रदा
निर्वीर्या यदि वर्षमेतदशुभं वाच्यं शुभेक्षां विना॥ ७॥

यद्वर्षे जन्मलग्नेश-वर्षलग्नेशाष्टमेश-वर्षेश-मुथहेशाः यदा बलयुक्ताः, षष्ठाष्टान्त्यगता न स्युस्तदा तद्वर्षं सर्वं सम्पूर्णं रम्यं रमणीयमुशन्ति = वदन्ति । तथा सौख्यं, यशः, अर्थागमः = धनागमः भवति । चेत्ते ग्रहाः पुनर्निर्वीर्याः, षष्ठाष्टान्त्यगताश्च स्युस्तदा दुःखभीतिप्रदाः स्युः । अत्र शुभेक्षां = शुभग्रहदृष्टिं विना, एतत्सकलं वर्षमशुभं वाच्यम् ॥ ७ ॥

भाषा—यदि जन्मलग्नेश, वर्षलग्नेश, अष्टमेश, वर्षेश, मुथहेश ये चारों ग्रह बल युक्त हों और ६।८।१२ इन स्थानों में नहीं हों, तो सम्पूर्ण वर्ष शुभ ही होता है। और सुख, यश, धनलाभ होता है। यदि वे ग्रह सब दुर्बल हों, और ६।८।१२ इन स्थानों में हों, तो दुःख, भय को देते हैं, यहां शुभग्रह की दृष्टि नहीं होने से यह सम्पूर्ण वर्ष अशुभ ही कहना ॥ ७ ॥

**सूतौ धनप्रदः खेटो धनाधीशश्च तौ यदि ।**
**वर्षे नष्टौ वित्तनाशोऽन्यनिःक्षेपापवाददौ ॥ ८ ॥**

सूतौ = जन्मकाले, धनप्रदः = धनलाभयोगकर्त्ता ग्रहः, तथा धनाधीशः=धनेशश्च तौ यदि वर्षे नष्टौ = अस्तंगतौ, भवतस्तदा वित्तनाशः = धननाशः, स्यात् । अन्यनिःक्षेपापवाददौ = अन्यस्य निःक्षेपो रक्षितार्थस्तस्यापवादः = असत्यप्रचारस्तं ददतः । अर्थाद्देवदत्तस्य भवदत्तसकाशे पूर्वतो यद् धनं रक्षितमासीत्तद्भवदत्तेन देवदत्ताय समर्पितमपि न मम तद्धनं त्वया दत्तमिति मिथ्याऽपवादः, अन्यनिःक्षेपापवादः, इति ॥ ८ ॥

भाषा—जन्म काल में धनयोग करने वाला ग्रह, और धन भावेश ये दोनों ग्रह अस्तंगत हों, तो धननाश और दूसरे के रक्षित धन का कलङ्क हो ॥ ८ ॥

**एवं समस्तभावानां सूतौ नाथाश्च पोषकाः ।**
**अब्दे नष्टबलास्तेषां नाशायोह्या विचक्षणैः ॥ ९ ॥**

एवममुना प्रकारेण सूतौ जन्मकाले समस्तभावानां ये नाथास्तथा पोषकास्तद्भावविषयपुष्टिकराश्च ये ग्रहाः ते यदि वर्षे नष्टबलास्तदा तेषां भावविषयाणां नाशाय विचक्षणैः पण्डितैरुह्या ज्ञातव्या इति ॥ ९ ॥

भाषा—इसी प्रकार जन्मकुण्डली में सब भावों के जो स्वामी तथा प्रत्येक भावों के पोषक जो ग्रह हैं, वे सब यदि हीनबली हों, तो उन भावों के नाशके लिये होते हैं, यह पण्डितों से समझना चाहिये ॥ ९ ॥

अथ दैवज्ञविनोदाय ताजिकपद्मकोशोक्तानि लग्नस्थसकलग्रहफलानि लिख्यन्ते—

रविर्लग्नगो वातपित्तं करोति कलत्राङ्गपीडां शिरोऽत्यक्षिरोगम् ।

विवादं जनानां भवेद्गुप्तचिन्ता दशा नेष्टकारी भवेद्धायनेऽस्मिन् ॥ १ ॥
तनुगतस्तनुते रजनीकरो विकलतां च कफज्वरपीडनम् ।
भवति पापखगान्वितदृग्यदा तनुविनाशकरो बलवर्जितः ॥ २ ॥
धरणितनयलग्ने स्याद्व्रणो वातपीडा भवति रिपुविवादो नेत्रशीर्षे च रोगः ।
ज्वरवमनविकारादङ्गनाङ्गे च कष्टं नृपभयमथ लोहादग्नितो वा भयं स्यात् ॥ ३ ॥
रजनिकरसुतः स्याल्लग्नगो हायने चेद्बहुलबलविवृद्धिर्योषितां चापि सौख्यम् ।
भवति रिपुविनाशो भूपपक्षाच्च लाभो धनजनसुखकारी मित्रलाभं करोति ॥ ४ ॥
जीवे लग्नगते हयाम्बरसुखं प्राप्नोति वृद्धिं परां
राज्यात्सौख्यसमागमं च बहुलं व्यापारतः स्याज्जयः ।
कीर्तेश्चापि विवर्धनं रिपुजना नश्यन्त्यवश्यं तथा
जायासौख्यमथापि मौक्तिकधनं हेम्नश्च लाभो भवेत् ॥ ५ ॥
तनुस्थानगो भार्गवश्चेदिह स्यात् प्रतिष्ठाविवृद्धिं समृद्ध्यागमञ्च ।
रिपूणां विनाशं तथा भूपमानं जयं भूषणाढ्यं नराणां करोति ॥ ६ ॥
मूर्तिस्थितो रविसुतः सुतलाभकारी स्वोच्चस्थितः स्वभवने च करोति लब्धिम् ।
शेषेषु वैरिभयवायुकृता च पीडा जायाङ्गकष्टमथ रोगकृदब्दमध्ये ॥ ७ ॥
तमो लग्नगः कामिनीनाञ्च पीडां रिपोर्भीतिचिन्तां व्ययं व्यंगुतां च ।
शिरोऽर्तिं च भूपाद्भयं मानभङ्गं तथा नेत्रपीडां करोतीह वर्षे ॥ ८ ॥
यदा केतनो लग्नगो भग्नता च तदा रोगवृद्धिर्भवेद्धायनेऽस्मिन् ।
महेलासु हेला सुखासारहीना विमानं कुमित्रे विवादेऽतिहीनः ॥ ९ ॥

इति प्रथमभावविचारः ।

## अथ द्वितीय ( धन ) भावविचारः ।

**वित्ताधिपो जन्मनि वित्तगोऽब्दे जीवो यदा लग्नपतीत्थशाली ।**
**तदा धनाप्तिः सकलेऽपि वर्षे क्रूरेसराफे धनधान्यहानिः ॥ १ ॥**

जन्मनि=जन्मकुण्डल्यां, वित्ताधिपः=धनेशः, जीवः = गुरुः, अब्दे=वर्षे, वित्तगः = धनभावगतः, जन्मलग्नाद्द्वितीयेशो गुरुर्वर्षलग्नाद्द्वितीयगत इत्यर्थः। अथवा यत्र जन्मलग्नं वृश्चिककुम्भयोरन्यतरं स्यात्तत्रैव द्वितीयेशो गुरुर्भवितुं शक्यते। तादृशो जीवो लग्नपतीत्थशाली=वर्षलग्नेशेन सह मुथशिली, तदा सकले=सम्पूर्णेऽ-

पि वर्षे धनाप्तिर्भवति। अथ तादृशस्य जीवस्य क्रूरेसराफे = पापग्रहकृतेसराफे, धनधान्यहानिः स्यात् ॥ १ ॥

भाषा—जन्मकुण्डली में वृश्चिक या कुम्भ इन दोनों में कोई एक लग्न हो तब द्वितीयेश गुरु यदि वर्षप्रवेश कुण्डली में दूसरे भाव में हों, तो वर्ष भर धन लाभ होता है। यदि वैसे गुरु को पापग्रह से ईसराफ योग होता हो, तो धनधान्य का नाशहोता है॥

जन्मन्यर्थावलोकीज्योऽब्देऽब्देशो बलवान्यदा।
तदा धनाप्तिर्बहुला विनाऽऽयासेन जायते ॥ २ ॥

जन्मनि ईज्यः = गुरुः, अर्थावलोकी=धनभावद्रष्टा भवेत्, अब्दे=वर्षे, बलवान्=बली भूत्वा यदि अब्देशः=वर्षेशः स्यात्, तदा आयासेन=उद्यमेन, विनाऽपि बहुधा धनाप्तिर्जायते ॥ २ ॥

भाषा—जन्म कुण्डली में बृहस्पति लग्न को देखे, और वर्ष काल में बली होकर वर्षेश हो, तो विना प्रवास से अनेक प्रकार से धनलाभ होता है ॥ २ ॥

एवं यद्भावपो जन्मन्यब्दे तद्भावगो गुरुः।
लग्नेशेनेत्थशाली चेत्तद्भावजसुखं भवेत् ॥ ३ ॥

एवमुक्तप्रकारेण जन्मनि = जन्मकुण्डल्यां, गुरुः = बृहस्पतिः, यद्भावपः=यद्भावेशः, स्याद्वर्षे तु तद्भावगः = तस्मिन्नेव भावे गतो भवेत्। यथा जन्मनि लग्नेशोभूत्वा वर्षे लग्नगतः, अथवा जन्मनि धनेशो भूत्वा वर्षे धनगतः। जन्मनि सहजेशोभूत्वा वर्षे सहजे स्यात्तथा लग्नेशेन=वर्षलग्नेशेन, इत्थशाली=मुथशिली, तदा तद्भावजं सुखं भवेत्। इति सामान्यतः सकलभावविचारनिदर्शनं कृतं ग्रन्थकारेणेति ॥३॥

भाषा—इस प्रकार जन्मकुण्डली में बृहस्पति जिस भाव का स्वामी हो वर्षकुण्डली में यदि उसी भाव में स्थित हो जाय, और वर्षलग्नेश से इत्थशाल होता हो तो उस भाव का सुख होता है ॥ ३ ॥

तथा जनुषि यं पश्येद्भावमब्देऽब्दपो गुरुः।
तदा तद्भावजं सौख्यमुक्तं ताजिकवेदिभिः ॥ ४ ॥

तथा जनुषि=जन्मकुण्डल्यां, गुरुर्यं भावं पश्येत्, तथा वर्षेऽब्दपो वर्षेशः स्यात्तदा ताजिकवेदिभिस्तद्भावजं सौख्यमुक्तं प्रोक्तम् ॥ ४ ॥

भाषा—वैसे ही जन्म में जिस भाव को गुरु देखे, वर्ष में वर्षेश हो, तो उसभाव से जायमान सुख होता है, यह ताजिक वेत्ताओं ने कहा है ॥ ४ ॥

जन्मषष्ठाधिपः सौम्यः षष्ठोऽब्दे स्वल्पलाभदः ।
पापार्दिते गुरौ रन्ध्रेऽर्थे वा दण्डः पतेद्ध्रुवम् ॥ ५ ॥

जन्मषष्ठाधिपः = जन्मलग्नाद्रिपुभावेशः, सौम्यः=बुधः, अब्दे=वर्षे, षष्ठः=षष्ठस्थानस्थः, तदा स्वल्पलाभदः=परिमितधनप्राप्तिकरः स्यात् । वा वर्षे गुरौ पापार्दिते=पापाक्रान्ते, रन्ध्रे=अष्टमे, वा अर्थे = द्वितीयभावे, सति, तदा ध्रुवं दण्डः पतेत् ॥५॥

भाषा—जन्म काल में षष्ठेश बुध वर्षकाल में यदि षष्ठस्थान में हों, तो थोड़े लाभ को देता है। ( यह योग जिसका मेष या मकर राशि जन्म लग्न है, उसी के जन्म कुण्डली में हो सकता है, और में नहीं । ) या बृहस्पति वर्ष काल में पाप ग्रह से पीड़ित होकर आठवें दूसरे स्थान में हो, तो निश्चय करके दण्ड पड़ता है ॥ ५ ॥

गुरुर्वित्ते शुभैर्दृष्टयुतो वा राज्यसौख्यदः ।
जन्मन्यब्दे च मुथहाराशिं पश्यन्विशेषतः ॥ ६ ॥

वित्ते = धनभावे, वर्त्तमानः, गुरुः = बृहस्पतिः, शुभैः = शुभग्रहैः, दृष्टयुतस्तदा राज्यसौख्यदो भवति । वा जन्मनि—जन्मकाले, अब्दे = वर्षे, च मुथहाराशिं = मुथहाक्रान्तराशिं, पश्यन् सन् विशेषतो राज्यसौख्यदो भवति । वर्षे यद्राशौ मुथहा भवेत् तं राशिं जन्मनि वर्षे च गुरुर्यदि पश्येत्तदोक्तफलमित्यर्थः ॥ ६ ॥

भाषा—बृहस्पति द्वितीय भाव में हों, और शुभग्रहों से दृष्ट युत हों, तो राज्य सुख को देते हैं। या जन्मकाल में वर्ष काल में भी मुथहा के राशि को देखता हो तो विशेषरूप से राज्य सुख को देता है ॥ ६ ॥

एवं सितेऽब्दपे भूरि द्रव्यं धान्यं च जायते ।
वित्तलग्नेशसंयोगो वित्तसौख्यविनाशदः ॥ ७ ॥

एवममुना प्रकारेण, सिते = शुक्रे, अब्दपे = वर्षेशे, सति, भूरि = प्रचुरं, धनं धान्यं च जायते । तथा वित्तलग्नेशसंयोगः = धनेशलग्नेशयोर्योगो वित्तसौख्यविनाशदः, भवति ॥ ७ ॥

भाषा—इस प्रकार ( जैसे बृहस्पति के बारे में योग कहा है ) यदि शुक्र वर्षेश हों तो बहु द्रव्य, और धान्य होता है। वर्षकुण्डली में धनेश लग्नेश का योग होकर ईसराफ योग यदि होता हो, तो धनसुख का नाश होता है ॥ ७ ॥

एवं बुधे सवीर्ये स्याल्लिपिज्ञानोद्यमैर्धनम् ।
जन्मलग्नगताः सौम्या वर्षेऽर्थे धनलाभदाः ॥ ८ ॥

एवममुना प्रकारेण सवीर्ये=सबले बुधे, वर्षेशे वित्तस्थानगते च सति लिपिज्ञानोद्यमैः=लेखबुद्धिप्रयासैर्धनं भवेत् । वा सौम्याः=शुभाः, जन्मलग्नगताः=जन्मकाले

लग्नगताः, वर्षे=वर्षकुण्डल्याम्, अर्थे=द्वितीयभावे यदि स्थिता भवन्ति, तदा धनलाभदा भवन्तीति ॥ ८ ॥

भाषा—इस प्रकार बुध यदि बलवान् होकर धन भाव में हो, तो लेख कार्य (लेखक, पटवारी आदि) से, या ज्ञान के उद्योग (वकीली) से धन होता है। या शुभग्रह सब जन्मलग्न में हों, वर्षकाल में दूसरे भाव में पड़े तो धनलाभ को देते हैं ॥८॥

**मालसद्मनि वित्ते वा बुधेज्यसितसंयुते ।**
**तैर्वा दृष्टे धनं भूरि स्वकुले राज्यमाप्नुयात् ॥ ९ ॥**

मालसद्मनि = अर्थसहमे, वित्ते=धनभावे, बुधेज्यसितसंयुते=बुधगुरुशुक्रसहिते वा, तैः=बुधेज्यशुक्रैः, दृष्टे=वीक्षिते, तदा भूरि=बहुलं, धनं भवति । स्वकुले राज्यं धनाधिपत्यम् आप्नुयात् = प्राप्नुयात् । यवनभाषायां मालशब्देन धनं गृह्यते ॥९॥

भाषा—अर्थ सहम बुध शुक्र बृहस्पति से युत या दृष्ट होकर यदि धनभाव में ही हो तो विशेष धन होता है और अपने कुल में राज्य पाता है ॥ ९ ॥

**अर्थार्थसहमेशौ चेच्छुभैर्मित्रदृशेक्षितौ ।**
**बलिनौ सुखतो लाभप्रदौ यत्नादरेर्दृशा ॥ १० ॥**

चेत् = यदि, अर्थार्थसहमेशौ=धनभावेश-धनसहमेशौ, शुभैः = शुभग्रहैः, मित्रदृशा ३।५।९।११ एतदन्यतमदृष्ट्या दृष्टौ, तथा बलिनौ तदा सुखतः = अप्रयासात्, लाभप्रदौ भवतः । यदि तौ शुभैररेर्दृशा = शत्रुदृष्ट्या ( १।४।७।१० ) एतदन्यतमदृष्ट्या दृष्टौ तदा यत्नात्=आयासात्, लाभप्रदौ भवतः ॥ १० ॥

भाषा—धनसहमेश धनभावेश ये दोनों यदि शुभग्रहों से मित्र दृष्टि से देखे जांय, तो विना प्रयास लाभप्रद होते हैं। यदि वे दोनों शुभ ग्रहों से शत्रु दृष्टि से देखे जांय तो प्रयास से धनप्रद होते हैं ॥ १० ॥

**मित्रदृष्ट्या मुथशिलेऽर्थाङ्गपोः सुखतो धनम् ।**
**तयोर्मूसरिफे वित्तनाशदुर्नयभीतयः ॥ ११ ॥**

अर्थाङ्गपोः = धनेशलग्नेशयोः, मित्रदृष्ट्या ( ३।५।९।११ ) दृशा, मुथशिले = इत्थशाले, सति सुखतः = अक्लेशात्, धनं जायते । तयोर्लग्नेशधनेशयोर्मूसरिफे = ईसराफयोगे, सति वित्तनाशदुर्नयभीतयः = धनहानिः, दुर्नयेन = अन्यायेन, भीतयः भयानि=राजभयानि भवन्तीति ॥ ११ ॥

भाषा—लग्नेश और धनेश की मित्र ( ३।५।९।११ ) दृष्टि से इत्थशाल होने पर अनायास धनलाभ होता है। उन दोनों ( लग्नेश और धनेश ) में ईसराफयोग होने पर धननाश, अन्याय से भय ये सब होते हैं ॥ ११ ॥

**जन्मनीज्योऽस्ति यद्राशौ स राशिर्वर्षलग्नगः ।**
**शुभस्वामीक्षितयुतो नैरुज्यस्वाम्यवित्तदः ॥ १२ ॥**

जन्मनि=जन्मकाले, ईज्यः=गुरुः, यद्राशौ=यस्मिन् राशौ, भवेत्स च राशिर्वर्ष-लग्नगः स्यात् तथा शुभस्वामीक्षितयुतः=शुभैः, स्वामिना च दृष्टो वा युतस्तदा नैरु-ज्यस्वाम्यवित्तदः=आरोग्याधिपत्यधनप्रदो भवति ॥ १२ ॥

भाषा—जन्मकुण्डली में बृहस्पति जिस राशि में हो, वह राशि यदि वर्ष कुण्डली में लग्न हो और शुभग्रह से अपने स्वामी ( लग्नेश ) से दृष्ट युत हो तो, आरोग्य, आधिपत्य और धन को देता है ॥ १२ ॥

**सूतौ लग्ने रविर्वर्षे धनस्थो धनसौख्यदः ।**
**शनौ वित्ते कार्यनाशो लाभोऽल्पोऽथ धनव्ययः ॥ १३ ॥**

सूतौ = जन्मनि, रविर्लग्ने स्थितः, वर्षे = वर्षकुण्डल्यां, धनस्थः=द्वितीयस्थान-स्थितो भवेत् तदा धनसौख्यदो भवति । वा शनौ वित्ते=द्वितीयभावे सति, कार्यना-शः, अल्पः = स्वल्पः, लाभः, तथा धनव्ययः = धनहानिर्भवति ॥ १३ ॥

भाषा—जन्म कुण्डली में सूर्य लग्न में हो, वर्ष कुण्डली में दूसरे भाव में हो, तो धन सुख को देता है । अथवा शनि वर्ष कुण्डली में दूसरे भाव में हो, तो कार्य का नाश और थोड़ा लाभ और धनहानि होती है ॥ १३ ॥

**भ्रातृसौख्यं गुरुयुते भूतयः स्युः शुभेक्षणात् ।**
**क्रूरयोगेक्षणात्सर्वं विपरीतं फलं भवेत् ॥ १४ ॥**

धनस्थे शनौ गुरुयुते तदा भ्रातृसौख्यं भवति । तत्रैव शुभेक्षणात्=शुभग्रहद-र्शनात्, भूतयः = ऐश्वर्याणि, भवन्ति । क्रूरयोगेक्षणात् = पापग्रहसंयोगवीक्षणात्, सर्वमुक्तं कथितं शुभफलं, विपरीतं = अशुभं, भवेत् ॥ १४ ॥

भाषा—द्वितीयस्थानस्थित शनि यदि बृहस्पति से युत हो, तो भ्रातृसुख होता है । यदि गुरुयुक्त द्वितीयस्थान स्थित शनि पर शुभग्रहों की दृष्टि पड़ती हो, तो बहुत ऐश्वर्य होते हैं । और पापग्रहों के संयोग से दृष्टि से सब कथित फल विपरीत अर्थात् अशुभ हो जाते हैं ॥ १४ ॥

**वित्तेशो जन्मनि गुरुर्वर्षे वर्षेशतां दधत् ।**
**यद्भावगस्तमाश्रित्य लाभदो लग्न आत्मनः ॥ १५ ॥**

जन्मनि=जन्मकुण्डल्यां, वित्तेशः=धनेशो भवन् गुरुः=बृहस्पतिर्यदि वर्षे = वर्षे-शतां = वर्षेशत्वं, दधत्=धारयेत्तदाऽसौ वर्षेशगुरुर्यद्भावगः=वर्षलग्नाद्यस्मिन् भावे

स्थितो भवेत्तं भावमाश्रित्य लाभदो भवति। यथा–यदि लग्ने स्थितस्तदाऽऽत्मनः = स्वस्मात् लाभः। एवं धने तदा कुटुम्बात्। सहजे सहजात्। चतुर्थे मातृतः। पञ्चमे पुत्रतः। षष्ठे शत्रुतः। सप्तमे स्त्रीतः। अष्टमे मृत्युतः। नवमे धर्मात् एवं सर्वत्र ज्ञेयम्।

भाषा—गुरु जन्मकुण्डली में धन भाव गत हो, वर्षप्रवेशकाल में वर्षेश होकर जिस भाव में हो उस भाव का आश्रय लेकर लाभप्रद होता है। जैसे लग्न में हों तो अपने ही से धनागम हो, क्योंकि लग्न से आत्मा का विचार होता है। ऐसे धन भाव में हो तो कुटुम्ब से, तीसरे में हो तो सहज से, चौथे में माता से, वाहन से, घरसे, और जल से धन कहना॥ १५॥

वित्ते सुवर्णरूप्यादेर्भ्रात्रादेः सहजर्क्षगः।
पितृमातृक्ष्मादिभ्यो वित्तं सुहृदि पञ्चमे॥ १६॥
सुहृत्तनयतः षष्ठेऽरिवर्गाद्धानिभीतिदः।
स्त्रीभ्यो द्यूनेऽष्टमे मृत्युरर्थहेतुः पथोऽङ्कगे॥ १७॥
खे नृपादेर्नृपकुलादायेऽन्त्ये व्ययदो भवेत्।
इत्थं विमृश्य सुधिया वाच्यमित्थं परे जगुः॥ १८॥

जन्मनि धनेशो वर्षे वर्षेशो भवन् गुरुर्यदि वित्ते=धनभावे, भवेत्तदा सुवर्णरूप्यादेः लाभः। यदि सहजर्क्षगः = तृतीयगतः, तदा भ्रात्रादेः धनलाभः स्यात्। यदि तादृशो गुरुः, सुहृदि=चतुर्थस्थाने, भवेत्तदा पितृमातृक्ष्मादिभ्यः=पितृमातृभूमिक्षेत्रतः, लाभः। पञ्चमे तु सुहृत्तनयतः = मित्रपुत्रतः, धनलाभः। षष्ठेऽरिवर्गात् = शत्रुपक्षात्, हानिभीतिदः=धनकार्यक्षयभयप्रदः। यदि तादृशो गुरुर्द्यूने = सप्तमे भवेत् तदा स्त्रीभ्यो धनलाभः। अष्टमे गुरुस्तदा मृत्युर्मरणम्, यदि तादृशे गुरावङ्कगे=नवमस्थे सति अर्थहेतुः = धनलाभकृत्, पथो मार्गः स्यात्। खे दशमे यदि तादृशो गुरुस्तदा नृपादेः = भूपादेर्लाभः। आये = लाभभावे, नृपकुलात्=राजवंशात्, लाभः। अन्त्ये=व्ययभावे, यदि गुरुस्तदा व्ययदो भवेत्। इत्थमुक्तप्रकारेण सुधिया= पण्डितेन, विमृश्य = विचार्य, फलं वाच्यम्। इत्यपरे आचार्या जगुरिति॥१६–१८॥

भाषा—जन्मकाल में धनेश और वर्ष प्रवेश काल में वर्षेश होकर गुरु यदि धन भाव में हो तो सोना चान्दी का लाभ, ३ रे में भाई वगैरह से लाभ, ४ थे में माता वाहन, भूमि से लाभ, ५ वें में मित्र और पुत्र से लाभ, ६ ठे में शत्रुओं से लाभ, ७ वें में स्त्री से लाभ, ८ वें में मरण, ९ वें में धनलाभ का रास्ता, १० वें में राजा से, ११ वें में राजा के वंश से, १२ वें में व्यय (खर्च) कराता है। इस तरह विचार कर पण्डितों से फल कहना चाहिये ऐसा अन्य आचार्यों ने कहा है॥ १६–१८॥

अथ धनभावस्थसूर्यादिग्रहफलानि लिख्यन्ते ।

कुटुम्बाद्विरोधो नृपाद्भीतिकष्टं धनार्त्तिर्धनस्थे रवौ मानवानाम् ।
पशूनां प्रपीडोदरे चापदः स्युः स सौम्यान्वितो द्रव्यलाभं करोति ॥ १ ॥
कुटुम्बाज्जयं मित्रपक्षाच्च लाभं धनाढ्यं धनस्थः शशाङ्कः प्रकुर्यात् ।
रिपूणां विनाशं तथा नेत्रपीडां भवेदब्दमध्ये नृपात् सौख्यकारी ॥ २ ॥
धनस्थो धरण्यात्मजो द्रव्यलाभं शिरोऽर्त्तिं जनानां विरोधं करोति ।
तथौदर्यवह्निभयं शोकमोहौ कलत्रेऽक्षिरोगं करोतीह वर्षे ॥ ३ ॥
धनस्थः सुतः स्याद्यदा शीतरश्मेर्भवेद्द्रव्यलाभः कुटुम्बाज्जयश्च ।
रिपोर्नाशनं मानकीर्त्यादिलाभः प्रतिष्ठाऽधिका हायने स्यात् सुखं च ॥ ४ ॥
कुटुम्बराशौ च गते सुरेज्ये धनादिभोगाँल्लभते मनुष्यः ।
चतुष्पदानां च समागमः स्यात्तद्धायने भूपजनाच्च लाभः ॥ ५ ॥
धनस्थे कवौ धान्यलाभो धनाप्तिर्भवेन्म्लेच्छजातेः सुखं सम्पदां च ।
नरो राजतुल्यो भवेद्यत्र वर्षे पशूनां हयानां गृहे स्यात् सुखं च ॥ ६ ॥
दिवानाथपुत्रो धनस्थो धनानां विनाशं विधत्ते कुटुम्बाद्विरोधम् ।
प्रकुर्याच्च नेत्रोदरेषु प्रपीडां कफार्त्तिं च वर्षे भवेत् सर्वदैव ॥ ७ ॥
जनापवादं च कुटुम्बगश्चेत्तमस्तथा भूपभयं करोति ।
नेत्रोदरव्याधिभयार्त्तिदोषाद्धनापहारं च भयं तथाऽब्दे ॥ ८ ॥
धनस्थोऽत्र केतुर्मतिभ्रंशहेतुः श्रियं सौख्यहारी तथा विघ्नकारी ।
मनस्तापकारी नृपाद्भीतिकष्टं सदा दुःखभागी द्विषत्सन्निभाषी ॥ ९ ॥

॥ इति धनभावविचारः ॥

---

## अथ तृतीय( सहज ) भावविचारः ।

**अब्देशेऽर्के सिते वाऽपि सबले पापवर्जिते ।**
**सौख्यं मिथः सोदराणां व्यत्ययाद्व्यत्ययं वदेत् ॥ १ ॥**

सबले = बलयुक्तेऽर्के=सूर्येऽपि वा सबले सिते=शुक्रे, अब्देशे=वर्षेशे, पापवर्जिते = पापयोगदृष्टिवर्जिते, सति, सोदराणां = सहजानां, मिथः = परस्परं, सौख्यं भवति । व्यत्ययात् = विलोमाद्व्यत्ययं = विलोमं फलं, वदेत्=कथयेत् । यथा दुर्बले

वर्षेशे सूर्ये शुक्रे वा शुभग्रहदृष्टियोगहीने, पापयुतदृष्टे च सति सहोदराणां मिथः कलहो भवेत् ॥ १ ॥

भाषा—सबल सूर्य या सबल शुक्र वर्षेश हो, और पापग्रहों से दृष्ट, युत नहीं हो, तो सहोदरों में परस्पर सुख होता है। विपरीत से विपरीत फल कहे। अर्थात् दुर्बल रवि या शुक्र वर्षेश होकर पापग्रहों से युत दृष्ट हों, शुभग्रहसे युत दृष्ट नहीं हो, तो भाइयों में एक को दूसरे से कलह हो ॥ १ ॥

**दग्धे कलिः सहजपेऽब्दपतौ तयोर्वा जीवे बलेन रहिते सहजे सहोत्थैः।**
**वैरं तृतीयभवनाधिपतीसराफे मान्द्यं कलिं स्वजनसोदरतश्च विद्यात् ॥२॥**

सहजपे = वर्षलग्नात्तृतीयस्थानेशे, अब्दपतौ=वर्षेशे च, दग्धेऽस्तङ्गते सति तदा कलिः = कलहो भवति। वा तयोरर्कशुक्रयोरेकतरे ग्रहे सहजपे वर्षेशेऽस्तङ्गते च सति कलहः स्यात्। वा बलेन रहिते जीवे = गुरौ, सहजे = तृतीयस्थाने सति सहोत्थैः = सहजैः, वैरम् = विरोधः स्यात्। वा तादृशस्य वर्षेशस्य, तृतीयभवनाधिपतीसराफे = सहजेशेन ईसराफयोगे सति, मान्द्यम् = शरीरकष्टं, स्वजनसोदरतश्च कलिं = कलहं, विद्यात् = जानीयात् ॥ २ ॥

भाषा—यदि वर्ष लग्न से सहजेश वर्षेश होकर अस्तंगत हो, तो कलह होता है। अथवा रवि शुक्र में से एक ग्रह सहजेश तथा वर्षेश होकर अस्तंगत हो, तो कलह होता है। अथवा हीनबल बृहस्पति तृतीय स्थान में हो, तो सहोदरों से विरोध होता है। अथवा वर्षेश को सहजेश से ईसराफ योग होता हो, तो शारीरिक क्लेश, अपने परिजन और सहोदर से भी झगड़ा हो ॥ २ ॥

**यदेत्थशालः सहजेश्वरेण गुरुस्तृतीये सहजात्सुखाप्तिः।**
**सारे विधौ स्यात्कलहस्तृतीये दृष्टौ युतौ नो गुरुणा यदा तौ ॥ ३ ॥**

यदा गुरोः, सहजेश्वरेण=तृतीयेशेन, इत्थशालस्तदा सहजात् सुखम्। वा यदा सबलो गुरुः, तृतीये स्थाने भवेत्तदाऽपि सहजात् = सहोदरात् सुखाप्तिः स्यात्। वा सारे = कुजयुक्ते, विधौ = चन्द्रे तृतीये सति यदा तौ कुजचन्द्रौ गुरुणा=जीवेन, दृष्टौ वा युतौ नो भवेतां, तदा तु कलहः सहजतो झकटकं स्यादिति ॥ ३ ॥

भाषा—यदि गुरु को तृतीयेश से इत्थशाल योग होता हो, तो सहज से सुख हो, अथवा बली गुरु तीसरे स्थान में हों, तो भी सहज से सुख हो। अथवा कुज युक्त चन्द्रमा तीसरे में हों, और बृहस्पति से न तो युत हों न तो दृष्ट हों, तो सहज से कलह हो ॥ ३ ॥

सहजे सहजाधीशेऽधिकारिणि समापतेः ।
लग्नपो वा मुथशिले मिथः सौख्यं सहोत्थयोः ॥ ४ ॥

सहजाधीशे = तृतीयेशे, सहजे=तृतीयस्थानगते, तथा समापतेः=वर्षेशस्य, अधिकारिणि = पञ्चाधिकाराणामेकतमाधिकारयुक्ते, वा तेन सह लग्नपः=लग्नेशस्य मुथशिले सति तदा सहोत्थयोः=सहजयोः, मिथः सौख्यं भवेत् ॥ ४ ॥

भाषा—वर्षेश के अधिकारी होकर यदि तृतीयेश तृतीय में हो अथवा वर्षलग्नेश को उससे इत्थशाल योग होता हो, तो सहोदर में परस्पर सुख हो ॥ ४ ॥

क्रूरेसराफे कलहः शनौ भौमर्क्षगे रुजः ।
ऋक्षेऽसृज्यनुजे मान्द्यं वदेत्सहजगे स्फुटम् ॥ ५ ॥
मन्दर्क्षगेऽसृजि बुधे कुजर्क्षे सहजे शुभैः ।
युते सिते सोदराणां मिथः सौख्यं सुखं बहु ॥ ६ ॥

सहजेशस्य क्रूरेसराफे = पापग्रहकृते सराफयोगे सति, कलहः = विरोधः स्यात् । शनौ भौमर्क्षगे = मेषवृश्चिकान्यतरराशिगते सहजगते च सति, तदा सहजस्य रुजः= रोगाः, स्युः । तथा असृजि=कुजे, ऋक्षे=मिथुनकन्याऽन्यतरराशिगते, सहजस्थानस्थिते च सति मान्द्यं=मन्दता=आलस्यं रोगः स्फुटं स्यात् ॥ ५ ॥

असृजि=कुजे, मन्दर्क्षगे=मकरकुम्भान्यतरराशौ गतवति, सहजे=तृतीयभावे च गते, वा बुधे कुजर्क्षे=मेषवृश्चिकान्यतरराशौ विद्यमाने सति सहजे च गतवति अत्रोक्तयोगद्वयेऽपि शुभैः=शुभग्रहैः, युते सिते सति सोदराणां = सहजभ्रातॄणां मिथः= परस्परं सौख्यं, बहुसुखं च भवति ॥ ६ ॥

भाषा—सहजेश को पाप ग्रह से ईसराफ योग होता हो, सहज स्थान में स्थित हो, तो कलह होता है। शनि यदि मेष या वृश्चिक में होकर सहज में हो तो सहोदर को रोग होता है। यदि मंगल मिथुन या कन्या में रहकर तीसरे भाव में हों तो सहज को निश्चय रोग कहना ॥ ५ ॥

मङ्गल मकर या कुम्भ में होकर तृतीयभाव में हो, अथवा बुध मेष या वृश्चिक में होकर तृतीय भाव में हो, इन दोनों योगों में शुभग्रहों का योग या दृष्टि हो तो सहोदरों से परस्पर आनन्द और अनेक प्रकार के सुख होते हैं ॥ ६ ॥

जन्माब्दपौ बुधसितौ सबलौ तृतीये सोदर्यबन्धुगणसौख्यकरौ गुरुश्च ।
वीर्यान्वितेन्दुगृहगो भृगुजोऽधिकारी सूत्यब्दयोः सहजबन्धुगणस्य वृद्ध्यै ७

जन्माब्दपौ = जन्मलग्नवर्षलग्नेशौ, वा जन्मलग्नेशवर्षेशौ, वा जन्माब्दयो-

रिति विश्वनाथाङ्गीकृतपाठे जन्मवर्षकालयोः, बुधसितौ = बुधशुक्रौ सबलौ, तृतीये स्थितौ, च पुनः गुरुः सबलः सहजगतश्च चेद्भवति तदा तौ सोदर्यबन्धुगणसौख्यकरौ भवतः। तथा भृगुजः=शुक्रः, वीर्यान्वितेन्दुगृहगः=सबलचन्द्रराशिगतः, सूत्यब्दयोः = जन्मवर्षकालयोरधिकारी=पञ्चाधिकारान्यतमाधिकारवान् भवेत् तदा सहजबन्धुगणस्य वृद्धयै भवति ॥ ७ ॥

भाषा—जन्म लग्नेश और वर्ष लग्नेश बुध और शुक्र हों, सबल हों, तीसरे स्थान में स्थित हों, और गुरु बलवान् हो, तो सहोदर बन्धु-बान्धव को सुख करते हैं। और शुक्र यदि सबल चन्द्रमा की राशि में हो और जन्म वर्ष काल में पञ्च अधिकारी में हो, तो सहज बन्धुगण की वृद्धि होती है ॥ ७ ॥

**पापान्विते तु सहजे सहमेशभावनाथेक्षणेन रहिते सहजस्य दुःखम्। एवं सहोत्थसहमेऽपि वदेत्तदीशौ दग्धौ यदा सहजनाशकरौ विचिन्त्यौ ८**

सहजे = वर्षलग्नात्तृतीयस्थाने, पापान्विते = पापग्रहयुक्ते, सहजेशभावनाथेक्षणेन = भ्रातृसहमेशसहजभावेशदृष्ट्या रहिते सति, सहजस्य दुःखं भवति। एवं सहोत्थसहमे = भ्रातृसहमेऽपि, वदेत्, अर्थाद्भ्रातृसहमेशे पापान्विते भ्रातृसहमेशसहजेशदृष्टिरहिते तदाऽपि सहजस्य दुःखं भवति। अथ यदा तदीशौ = भ्रातृसहमभातृभावेशौ, दग्धौ=अस्तङ्गतौ, स्यातां तदा सहजनाशकरौ विचिन्त्यौ ॥ ८ ॥

भाषा—सहज स्थान यदि पापग्रह से युक्त हो, और सहजेश तथा भ्रातृसहमेश की दृष्टि सहज पर नहीं पड़ती हो, तो सहोदर को दुःख होता है। इसी तरह भ्रातृ सहम में पापग्रह हो, उस पर सहजेश तथा भ्रातृसहमेश की दृष्टि नहीं पड़ती हो, तो भी सहज को क्लेश होता है। अथवा यदि सहजभावेश भ्रातृसहमेश ये दोनों अस्तङ्गत हों तो सहजों का नाश कहना ॥ ८ ॥

**तृतीयपादब्दपतौ द्युनस्थे लग्नेश्वरे वा सहजैर्विवादः।**
**तृतीयपो जन्मनि तादृगब्दे शुभेक्षितस्तत्र सहोत्थतुष्ट्यै ॥ ९ ॥**

तृतीयपात्=सहजेशात्, अब्दपतौ=वर्षेशे, द्युनस्थे=सप्तमस्थे, वा लग्नेश्वरे = वर्षलग्नेशे, सहजेशात् सप्तमस्थे, तदा सहजैः=सहोदरैः, विवादः स्यात्। अथ जन्मनि = जन्मकाले तृतीयपः=सहजभावेशस्तत्र सहजभावे स्थितः, अब्दे = वर्षेऽपि तादृक्=सहजभावस्थः, शुभेक्षितः=शुभग्रहदृष्टस्तदा सहोत्थतुष्ट्यै भवति ॥९॥

भाषा—तृतीय स्थान के स्वामी जिस स्थान में हों, वहां से वर्षेश यदि सप्तम स्थान में हों, वा वर्षलग्नेश, सहजेश से सप्तम में हो तो सहोदरों से विवाद हो, और

जन्मकाल में सहजेश सहज भाव में हो, वर्ष में भी वैसे सहज में हो शुभग्रह से दृष्ट हो, तो सहोदरों के सन्तोष ( सुख ) के लिये होता है ॥ ६ ॥

अथ तृतीयभावस्थितसकलग्रहफलानि लिख्यन्ते—

तृतीयगोऽर्कोऽपि सहोदराणां पीडां करोत्येव हि वर्षमध्ये ।
पराक्रमं राजक्रियां च लक्ष्मीं रिपुक्षयं कान्तिविवर्धनं च ॥ १ ॥
तृतीयस्थितः शीतरश्मिर्यदा स्यात्तदा सोदराणां भवेत् सौख्यकारी ।
धनाप्तिं च पुण्योदयं गुप्तसौख्यं प्रतिष्ठाविवृद्धिं करोतीह व[र्षे] ॥ २ ॥
तृतीयस्थिते क्ष्मासुते बान्धवानां भवेदुत्कृष्टं सुखं वाहनानाम् ।
रिपूणां विनाशस्तथा द्रव्यलाभो नृपान्मित्रपक्षाज्जयो हायनेऽस्मिन् ॥ ३ ॥
शशिसुतः सहजे यदि संस्थितः सकलतापविनाशकरस्तदा ।
भवति मानविवृद्धिरथो यशस्तुतुसुखं च करोति धनागमम् ॥ ४ ॥
तृतीयसंस्थः सुरराजमन्त्री भूपाज्जयं कीर्त्तिविवर्धनं च ।
शस्याम्बराणां च तथा धनानां करोति वृद्धिं महतीं च वर्षे ॥ ५ ॥
भृगुस्तृतीयो हि सहोदराणां सुखं प्रकुर्याद्विविधैः प्रकारैः ।
अर्थागमं कान्तिविवर्धनं च जनोपकारं च करोति वर्षे ॥ ६ ॥
रविसुतो भवतीह तृतीयगो रिपुविनाशकरो हि धनप्रदः ।
भवति भूधनलाभकरस्तदा स्वजनबन्धुविरोधकरश्च सः ॥ ७ ॥
शशिविमर्दकरस्तु तृतीयगो धनयुतं नरराजसमं नरम् ।
प्रकुरुते पशुवाहनसंयुतं सहजपीडनमाशु करोत्यसौ ॥ ८ ॥
तृतीयस्थितो यस्य मर्त्यस्य केतुः सदा धैर्यतां शत्रुनाशं करोति ।
धनं धान्यलाभं तथा वीर्यवृद्धिं सदा दानशीलोऽब्दमध्ये विलासी ॥ ९ ॥

इति सहजभावविचारः ।

---

## अथ चतुर्थ( सुख )भावविचारः ।

**तुर्ये रवीन्दू पितृमातृपीडा पापान्वितौ पापनिरीक्षितौ च ।**
**जन्मस्थसूर्यर्क्षगतेऽर्कपुत्रेऽवमानना वैरकली च पित्रा ॥ १ ॥**

पापान्वितौ=पापयुतौ, पापनिरीक्षितौ=पापग्रहदृष्टौ रवीन्दू यदि तुर्ये=चतुर्थे, भवेतां, तदा क्रमेण पितृमातृपीडा वाच्या । पापयुतदृष्टे रवौ चतुर्थस्थे सति पितृपीडा, तादृशे चन्द्रे चतुर्थे सति मातृपीडेत्यर्थः । वाऽर्कपुत्रे=शनौ, जन्मस्थसूर्यर्क्षयुते =

जन्मकुण्डल्यां यस्मिन्राशौ सूर्यस्तद्राशिगते सति । अत्र वर्षगणनायाः सौरमानेन करणात् तथा 'तत्कालेऽर्को जन्मकालरविणा स्याद्यदा समः । तदैवाब्दप्रवेशः स्या' दिति नियमेन च जन्मवर्षकालयोरपि रवेरेकराशिस्थितत्वात् जन्मस्थसूर्यर्क्षयुते = इत्यस्यार्थः-शनौ रविसहिते सतीति ज्ञेयम् । तत्र अवमानना=अपमानं, पित्रा=जनकेन सह वैरकली च भवतः ॥ १ ॥

भाषा—पाप युत दृष्ट सूर्य यदि चौथे में हो, तो पिताको पीड़ा हो तथा पापयुत दृष्ट चन्द्रमा यदि चौथे में हो, तो माता को पीड़ा होती है । और यदि शनि सूर्य के साथ हो तो पिता से अपमान तथा शत्रुता कलह होता है ॥ १ ॥

**चन्द्रे जनन्यैवमुशन्ति वन्धौ सुखाधिपे प्रीतिसुखानि पित्रोः ।**
**तुर्याधिपे लग्नपतीत्थशाले वोर्यान्विते सौख्यमुशन्ति पित्रोः ॥ २ ॥**

एवं चन्द्रे जन्मचन्द्राक्रान्तराशौ वर्षे शनौ सति जनन्या=मात्रा वैरकली वाच्यौ । अथ सुखाधिपे=चतुर्थभावाधिपे, बन्धौ=चतुर्थभावे सति, पित्रोः प्रीतिसुखानि भवन्ति । वा वीर्यान्विते=बलयुक्ते तुर्याधिपे=चतुर्थभावेशे, लग्नपतीत्थशाले=लग्नेशेन सह कृतेत्थशालयोगे सति पित्रोः सौख्यमानन्दमुशन्ति कथयन्ति ॥ २ ॥

भाषा—इस प्रकार चन्द्रमा जन्मकाल में जिस राशि में हो, उस राशि में यदि वर्षकाल में शनि हो, तो माता के साथ विरोध कलह कहना । और यदि सुखेश सुख भाव में हो, तो माता पिता को सुख होता है । या बलवान् चतुर्थेश लग्नेशसे इत्थशाल करता हो, तो माता पिता को सुख होता है ॥ २ ॥

**सौख्याधिपो जनुषि नष्टबलोऽब्दसूत्योः पित्रोरनिष्टकृदथो सहमे तयोस्तु ।**
**दग्धे तुरीयगृहगे च यदीन्थिहाया नाशस्तयोःसहमयोरपि दग्धयोः स्यात् ३**

अत्र जनुषोति पदं व्यर्थम् । अब्दसूत्योः=वर्षजन्मकालयोः, सौख्याधिपः=चतुर्थस्थानेशः, नष्टबलः=क्षीणवीर्यः, तदाः पित्रोः=मातापित्रोरनिष्टकृत्=अशुभकृत् , भवति । अथो तयोर्मातृपित्रोः सहमे अपि दग्धे = पापग्रहाक्रान्ते पापयुतदृष्टे तथा इन्थिहायाः=मुथहायाः सकाशात् तुरीयगृहगे=चतुर्थस्थानगते, तयोर्मातापित्रोर्नाशः स्यात् । तयोः सहमयोः=मातृपितृसहमेशयोर्दग्धयोरस्तङ्गतयोः पापयुतदृष्टयोः सतोस्तयोर्मातापित्रोर्नाशः स्यात् ॥ ३ ॥

भाषा—वर्षकाल और जन्मकाल में चतुर्थेश यदि बलहीन हो तो माता और पिता को अनिष्ट करते हैं । या मातृसहम, पितृसहम पापग्रह से युत दृष्ट हो, मुथहा से चौथे स्थान में हो, तो माता पिता का नाश होता है । और यदि मातृसहमेश

अस्तङ्गत हो, पापग्रहसे युत या दृष्ट हो, तो माता पिता का नाश होता है ॥ ३ ॥

जन्मन्यम्बुगृहं यच्च तत्पतिस्तत्पदोपगौ।
शन्यारौ क्लेशदौ पित्रोर्न चेत्सौम्यनिरीक्षितौ ॥ ४ ॥

जन्मनि=जन्मकुण्डल्यां, यदम्बुगृहं=यच्चतुर्थस्थानं, तथा तत्पतिर्यत्र स्थितस्तत्पतेः पदं, अर्थाज्जन्मकालिकचतुर्थभावराशिश्चतुर्थभावस्य पदं, तथा चतुर्थभावेशाक्रान्तराशिश्चतुर्थेशग्रहस्य पदम्। शन्यारौ = शनिकुजौ, तत्पदोपगौ, चेद्यदि सौम्यनिरीक्षितौ=शुभग्रहदृष्टौ न स्तस्तदा पित्रोः क्लेशदौ भवतः ॥ ४ ॥

भाषा—जन्मकाल में जो चतुर्थ स्थान में राशि वह चतुर्थभाव का पद कहाता है। और चतुर्थभाव का स्वामी जिस राशि में हो, वह उसका पद कहाता है। वहां वर्ष काल में शनि और मङ्गल उन दोनों पद में स्थित हों, शुभग्रहों से यदि दृष्ट नहीं हों, तो माता पिता को क्लेश देते हैं ॥ ४ ॥

मातुः पितुश्च सहमे तनुपेत्थशाले तुर्येऽपि चेत्थमवगच्छ सुखानि पित्रोः।
चेदष्टमाधिपतिना कृतमित्थशालं पित्रोर्विपद्भयमनिष्टकृतेसराफे ॥५॥

मातुः पितुश्च सहमे, मातृसहमपितृसहमे तनुपेत्थशाले=लग्नेशकृतमुथशिलयोगे तदा पित्रोः = मातापित्रोः सुखानि अवगच्छ = जानीहि, तुर्ये = चतुर्थस्थाने स्थिते मातृपितृसहमे अपि पित्रोः सुखानि अवगच्छ।

[ वा तुर्ये लग्नेत्थशाले कृते सति पित्रोः सुखानि, जानीहि। ]

अथ मातृसहमं वा पितृसहमम् अष्टमाधिपतिना=अष्टमेशेन, इत्थशालं कृतं तदा पित्रोर्विपत् स्यात्। अनिष्टकृतेसराफे सति पित्रोर्भयं वेद्यम् ॥ ५ ॥

भाषा—मातृसहम, वा पितृसहम लग्नेश से इत्थशाल करता हो, तो माता पिता को सुख जानो। और मातृ–सहम या पितृसहम चौथे स्थान में हो, तो भी माता पिता को सुख जानो। यदि मातृसहम, या पितृसहम पापग्रह से इत्थशाल करता हो, तो माता पिता को विपत्ति होती है। यदि शत्रु से ईसराफ योग करता हो, तो भय होता है ॥ ५ ॥

अथ चतुर्थस्थानस्थितसूर्यादिग्रहफलानि लिख्यन्ते—

पशोः पीडनं तुर्यसंस्थे रवौ तु कृषेः कर्मणो हानिरत्यन्तपीडा।
नृपाद्भीतिकष्टं भवेन्मातृपीडोदरे हृद्यपि स्यात् प्रपीडाऽब्दमध्ये ॥ १ ॥

शशाङ्के चतुर्थे च भूपाज्जयश्च कृषेः कर्मणो लाभवान् स्यात् सुखी च।
धनाप्तिः क्रये विक्रये वाऽब्दमध्ये सुखं वाहनानां रिपोर्नाशनं च ॥ २ ॥

चतुर्थे कुजे वह्निपीडा तथाऽऽर्त्ति पशोः पीडनं व्यग्रतां क्लेशकष्टम्।

कृषेः कर्मणो हानिमप्येव कुर्यात् क्रये विक्रये चाब्दमध्ये तथैव ॥ ३ ॥

बुधश्चतुर्थः प्रकरोति सौख्यं द्रव्यागमं मित्रसमागमं च ।
गोभूहिरण्यादि लभेत सौख्यं महत्सुखं वाहनमत्र वर्षे ॥ ४ ॥

सुरेज्ये सुखस्थे सुखं वाहनानां क्रये विक्रये लाभकारी जनस्य ।
भवेद्भूपपक्षाज्जयो हायनेऽस्मिन् महालाभदः स्यात् कृषेः कर्मणा च ॥ ५ ॥

प्रथमदेवगुरुः(१) सुखगो यदा सुखकरः कृषिवाहनयोस्तदा ।
धरणिवाजिसुवर्णसमागमो भवति भूपसमो मनुजः सदा ॥ ६ ॥

बन्धुस्थानगतो दिवाकरसुतः स्याद्धायने कष्टदो
भीतिं हानिमुपक्रमे च कुरुते नेत्रोदरे पीडनम् ।
बन्धूनामथ पीडनं प्रकुरुते लोकापवादं वृथा
वह्नेश्चापि भयं पशोश्च मरणं हानिं कृषीणां तथा ॥ ७ ॥

हिमांशोरिपुस्तुर्यगो वाहनानां विनाशं तथा भूपपक्षाद्भयं च ।
कफार्त्तिं च कष्टं तथा वायुपीडां विदेशे भ्रमं हायनेऽस्मिन् करोति ॥ ८ ॥

मातृदुःखी नरः शूरः सत्यवादी प्रियंवदः । धनधान्यसमृद्धिश्च यस्य केतुश्चतुर्थगः ॥९॥

॥ इति चतुर्थभावविचारः ॥

## अथ पञ्चम(सुत)भावविचारः ।

**पुत्रायगो वर्षपतिर्गुरुश्चेत्सूर्यारसौम्योशनसोऽथवेत्थम् ।**
**सत्पुत्रसौख्याय खलार्दितास्ते दुःखप्रदाः पुत्रत एव चिन्त्याः ॥ १ ॥**

चेत् = यदि, वर्षपतिः=वर्षेशः, गुरुः=बृहस्पतिः, पुत्रायगः=पञ्चमैकादशस्थित-स्तदा सत्पुत्रसौख्याय भवति । अथवा इत्थममुना प्रकारेण सूर्यारसौम्योशनसः = रविकुजबुधशुक्राः, वर्षे वर्षेशा भूत्वा पञ्चमैकादशस्थानस्थितास्तदा पुत्रसौख्याय भवन्ति । अथ ते=रविकुजबुधशुक्राः खलार्दिताः=पापपीडिताः=पापाक्रान्तयुतदृष्टा-स्तदा पुत्रत एव दुःखप्रदाश्चिन्त्या ज्ञातव्याः ॥ १ ॥

भाषा—यदि बृहस्पति वर्षेश होकर पञ्चम एकादश स्थानों में हों, तो पुत्रसुख के लिये होते हैं। अथवा यदि रवि कुज बुध शुक्र भी ऐसे ही वर्षेश होकर पञ्चम एकादश स्थान में हों तो पुत्रसुख के लिये होते हैं। यदि ५।११ स्थान में रहकर पाप-ग्रहों से पीड़ित ( युत दृष्ट इत्थशाली ) हों तो पुत्र से ही दुःखप्रद होते हैं। अर्थात् पुत्र सुख नहीं होता ॥ ० ॥

( १ ) प्रथमदेवगुरुः = शुक्रः,

**पुत्रे सुतस्य सहमे सबले सुताप्तिः सौम्येक्षितेऽप्यतिसुखं यदि तत्र वर्षट् ।**
**सौम्येक्षितः शुभगृहे सकुजो बुधश्चेत्पुत्रायगः सुतसुखं विबलःसुतार्तिम् २**

पुत्रे = पञ्चमभावे सबले, वा सुतस्य=पुत्रस्य, सहमे सबले सति, वा सुतसहमे पञ्चमभावस्थे सति सबले च सति सुताप्तिः=पुत्रलाभो भवति । यदि तत्र = पञ्चमभावे, वर्षट् = वर्षेशः सौम्येक्षितः = शुभदृष्टः स्यात्तदाऽतिसुखं = पुत्रस्य परमं सुखं भवति । तथा सकुजो बुधः सबलः शुभगृहे = शुभग्रहराशौ वर्त्तमानः, वर्षलग्नात् पुत्रायगस्तदा सुतसुखं = पुत्रसुखं भवति । यदि भौमसहितो बुधः विबलो भूत्वा शुभराशौ, पञ्चमैकादशगतश्च स्यात्तदा सुतार्त्तिम् = पुत्रपीडां करोतीति ॥ २ ॥

भाषा—पञ्चमभावबली हो, या पुत्र सहम बली हो, या बली पुत्र सहम पञ्चम भाव में हो, तो पुत्र का लाभ होता है। यदि पञ्चमभाव में वर्षेश शुभग्रह से दृष्ट होकर स्थित हो, तो पुत्र का अत्यन्त सुख हो। यदि मङ्गल से युत बुध शुभग्रह की राशि में स्थित होकर वर्षलग्नसे ५।११ स्थान में हो तो पुत्रसुख होता है परन्तु ऐसा बुध यदि निर्बल हो तो पुत्र पीड़ा करता है ॥ २ ॥

**जीवो जन्मनि यद्राशावब्देऽसौ सुतगो बली ।**
**पुत्रसौख्याय भौमो ज्ञो वर्षेशोऽत्र सुताप्तिदः ॥ ३ ॥**

जीवो गुरुर्जन्मनि = जन्मकुण्डल्यां यद्राशौ तिष्ठति, असौ राशिः अब्दे = वर्षे सुतगः = पञ्चमभावगतः, तथा बली भवेत्, तदा पुत्रसौख्याय भवति । वा भौमः कुजो वा ज्ञो बुधः वर्षेशो भूत्वाऽत्र = पञ्चमभावगतस्तदा सुताप्तिदः = पुत्रप्राप्तिदो भवति ॥ ३ ॥

भाषा—बृहस्पति जन्मकुण्डली में जिस राशि में हो, वह राशि वर्षकुण्डली में पञ्चमभाव में हो और बली हो, तो पुत्र सुख के लिये होता है। अथवा मङ्गल या बुध वर्षेश होकर पञ्चमभाव में हो, तो पुत्र लाभ को देता है ॥ ३ ॥

**यत्रेज्यो जनुषि गृहे विलग्नमेतत्पुत्राप्त्यै बुधसितयोरपीत्थमूह्यम् ।**
**यद्राशौजनुषिशनिः कुजश्चसोऽब्दे पुत्रार्तिं तनुसुतगःकरोति नूनम् ॥४॥**

जनुषि = जन्मनि कुण्डल्यां यत्र = यस्मिन्, गृहे=राशौ, ईज्यः=गुरुः, भवेत, एतत्स्थानं वर्षे विलग्नं चेद्भवति, तदा पुत्राप्त्यै भवति । इत्थममुना प्रकारेण बुधसितयोर्बुधशुक्रयोरपि वशेन ऊह्यम् । अर्थात् जन्मनि यत्र यत्र बुधशुक्रौ भवतस्तौ यदि वर्षे लग्ने भवतस्तदा पुत्रलाभाय भवतः । अत्र जनुषि = जन्मकाले शनिः कुजश्च यद्राशौ भवेतां सः राशिः अब्दे = वर्षे, तनुसुतगः = लग्नपञ्चमगतस्तदा नूनं=निश्चितं पुत्रार्तिं करोति ॥ ४ ॥

भाषा—जन्मकुण्डली में बृहस्पति जिस राशि में हो, वह राशि वर्ष कुण्डली में वर्षलग्न हो तो पुत्रलाभ के लिये होता है। ऐसे बुध शुक्र से भी समझना। जैसे-जन्मकाल में जहां बुध हो वह राशि वर्षलग्न हो, वा जन्मकाल में शुक्र जिसराशि में हो वह यदि वर्षलग्न हो, तो पुत्रलाभ होता है। ऐसे शनि या मङ्गल जन्म काल में जिसराशि में हो वह राशि वर्षप्रवेश कुण्डली में लग्न, या पञ्चम भाव में हो, तो निश्चय पुत्रलाभ को करता है ॥ ४ ॥

पुत्रे पुण्यस्य सहमं पुत्राप्त्यै शुभदृष्टियुक् ।
लग्नपुत्रेश्वरौ पुत्रे पुत्रदौ बलिनौ यदि ॥ ५ ॥

पुण्यस्य सहमं पुत्रे = पञ्चमभावे स्थितं, शुभदृष्टियुक् तदा पुत्रलाभः स्यात् । वा यदि बलिनौ लग्नपुत्रेश्वरौ=लग्नेशपञ्चमेशौ, पुत्रे=पञ्चमे, स्यातां तदा पुत्रदौ भवतः॥५॥

भाषा—यदि पुण्यसहम पञ्चमभाव में हो, शुभग्रह से दृष्ट युत हो, तो पुत्र लाभ होता है। या यदि बली लग्नेश पञ्चमेश ये दोनों पञ्चमभाव में हों, तो पुत्र को देते हैं॥५॥

चन्द्रो जीवोऽथवा शुक्रः स्वोच्चगः सुतदः सुते ।
वक्री भौमः सुतस्थश्चेदुत्पन्नसुतनाशनः ॥ ६ ॥

चन्द्रः, जीवः=गुरुः, अथवा शुक्रः सुते = पञ्चमभावे स्थितस्तथा स्वोच्चगस्तदा सुतदः = पुत्रदो भवति । अर्थाद्यदि वर्षलग्नं मकरस्ततः पञ्चमे ( वृषे ) चन्द्रः वा वर्षलग्नं = मीनस्ततः पञ्चमे = कर्के यदि गुरुः स्यात् । वा वर्षलग्नं वृश्चिकः ततः पञ्चमे मीने यदि शुक्रस्तदा प्रत्येकयोगः पुत्रदः स्यात् । चेत् = यदि, वक्री=विलोमगामी, भौमः=कुजः, सुतस्थः=पुत्रभावगतस्तदा उत्पन्नसुतनाशकः स्यात् ॥ ६ ॥

भाषा—चन्द्रमा या गुरु, या शुक्र अपने अपने उच्च में गत होकर यदि पञ्चम भाव में हों तो, पुत्र को देते हैं। यदि मङ्गल वक्री होकर पञ्चमभाव में हो, तो उत्पन्न पुत्र का भी नाश करता है ॥ ६ ॥

सुताधिपो जन्मनि भार्गवोऽब्दे पुत्रे विलग्नाधिपतीत्थशाली ।
पुत्रप्रदो मन्दपदस्थपुत्रे पापाधिकारीक्षित आत्मजार्त्तिः ॥ ७ ॥

जन्मनि भार्गवः = शुक्रः, सुताधिपः=पञ्चमेशः, भवन् अब्दे=वर्षे, पुत्रे=पञ्चमभावे स्थितः, विलग्नाधिपतीत्थशाली=वर्षलग्नेशेन मुथशिली भवेत् तदा पुत्रप्रदो भवेत् । वा मन्दपदस्थपुत्रे=शन्याक्रान्तजन्मकालिकराशौ वर्षे पुत्रभावगते, पापाधिकारीक्षिते=पापग्रहवर्गाधिकारग्रहदृष्टे, तदा आत्मजार्त्तिः = पुत्रपीडा स्यात् ॥ ७ ॥

भाषा—जन्मकुण्डली में शुक्र पञ्चमेश होकर वर्षकाल में पञ्चमभावगत हो और

लग्नेश से इत्थशाल योग करता हो तो पुत्र देता है ।

या जन्मकाल में शनि जहाँ हो, वह राशि वर्षकाल में यदि पुत्रभाव में हो, और पापग्रह के अधिकारी ग्रह से दृष्ट हो, तो पुत्र पीड़ा होती है ॥ ७ ॥

**यद्राशिगो ग्रहः सूतौ स राशिस्तत्पदाभिधः ।**
**बली जन्मोत्थसौख्याय वर्षे तद्दुःखदोऽन्यथा ॥ ८ ॥**

सूतौ=जन्मनि, यो ग्रहो यद्राशिगः स राशिस्तत्पदाभिधः=तद्ग्रहस्य पदसंज्ञः । स पदसंज्ञो राशिः यदि वर्षकाले बली=बलयुक्तस्तदा जन्मोत्थसौख्याय भवति । अन्यथा बलाभावे तद्दुःखदो भवतीति ॥ ८ ॥

भाषा—जन्मकाल में जो ग्रह जिसराशि में रहता है, वह राशि उस ग्रह का पदसंज्ञक है । वह पदसंज्ञक राशि वर्ष में यदि बली हो, तो जन्म में वह राशि जिस भाव में रहता है, उस भाव सम्बन्धी शुभ फल देता है । यदि वर्ष में वह राशि निर्बल हो, तो अशुभ फल देता है ॥ ८ ॥

अथ पञ्चमभावस्थितसूर्यादिग्रहफलानि लिख्यन्ते ।

दिनेशे सुतस्थे सुताङ्गेषु पीडा स्वबुद्धेश्च हानिर्विवादो जनानाम् ।
भवेच्छोकमोहादि चाङ्गेषु रोगो धनार्त्तिश्च भूयाद्भयं तद्दशायाम् ॥ १ ॥
सुतस्थानगो रात्रिनाथः स्वबुद्धया जयं मित्रपक्षाच्च लाभं करोति ।
सुताङ्गेषु पीडा भवेत् पापदृष्टः सुतस्यापि लाभं यदा सौम्यदृष्टः ॥ २ ॥
सुतानां च पीडा कुजे पञ्चमस्थे रिपूणां विवादो भवेद्व्यग्रता च ।
स्वबुद्धेर्विनाशो भवेच्चापि घातः सशोकोदरे गुप्तपीडाऽब्दमध्ये ॥ ३ ॥
सुतभवनगतश्चेत्सोमपुत्रः सुतानां प्रबलसुखकरः स्यादर्थलाभप्रदश्च ।
भृतकजनसुखं स्याद्देहशय्याम्बराणां सुखमपि नृपपक्षान्मित्रपक्षाज्जयश्च ॥ ४ ॥
सुतस्थानगो देवमन्त्री सुतानां प्रवृद्धिः स्वबुद्धया जयो हायनेऽस्मिन् ।
रिपूणां विनाशं सुखं चापि भोगन्तथा गोहिरण्याम्बराप्तिं करोति ॥ ५ ॥
सुतानां प्रवृद्धिर्भृगौ पञ्चमस्थे भयक्लेशचिन्तापदां वै विनाशम् ।
रिपूणां विनाशं तथा वर्षमध्ये महाभोगवन्तं धनाढ्यं करोति ॥ ६ ॥
सुतगतः सुतहानिकरः शनिर्भवति चोदरपीडनकष्टदः ।
विकलता बहुतापकरो भवेन्नृपभयं प्रकरोति च हायने ॥ ७ ॥
स्वबुद्धेर्विनाशं सुतस्थानगश्चेद्विधुमांशो रिपुः सन्ततेः पीडनं च ।
स्वकीयोदरे वायुबाधां धनार्तिं तथा सर्वथा क्लेशचिन्तां करोति ॥ ८ ॥

सुतस्य नाशो यदि पञ्चमस्थः शिखी तथा भूपभयं करोति ।
मानक्षयं धर्मकर्मप्रणाशं तदा शत्रुभिर्वादनिन्दा नराणाम् ॥ ९ ॥

इति पञ्चमभावविचारः ।

## अथ षष्ठ(रिपु)भावविचारः ।

**मन्देऽब्दपेऽनृजुगतौ पतिते रुगार्तिः स्यात्सन्निपातभवभीररिगेऽत्र शूलम् ।**
**गुल्माक्षिरोगविषमज्वरभीर्गुरौ तु पापार्दितेऽनिलरुजोऽपि कबूलशून्ये ॥१॥**

अनृजुगतौ=वक्रे, पतिते=पापपीडिते, अब्दपे=वर्षेशे, मन्दे=शनौ, अरिगे = षष्ठस्थानगते, तदा रुगार्त्तिः = रोगपीडा, सन्निपातभवभीः = कफवातपित्तदोषजनितभयम्, शूलं=उदरे शूलास्त्रवेधनजनितव्यथावद्व्यथा, तथा गुल्माक्षिरोगविषमज्वरभीः,=गुल्ममुदरे वायुग्रन्थिः, अक्षिरोगः=नयनरुजा, विषमज्वरभीः = जीर्णज्वरभयं भवति । एवं गुरौ=जीवे, वर्षेशे वक्रिणि, पापार्दिते षष्ठस्थानगते च सति तथा कबूलशून्ये=चन्द्रकृतकबूलयोगरहिते सति, अनिलरुजः=वायुरोगाः भवन्ति ॥ १ ॥

**भाषा**—वक्री और पापाक्रान्त, शनि वर्षेश होकर यदि छठे स्थान में हो, तो रोग, पीड़ा हो, त्रिदोष जनित रोग का भय हो, शूल, (पेट में दर्द) हो। और गुल्म रोग, नेत्र रोग, विषमज्वर का भय हो। ऐसे ही वक्री पापपीड़ित गुरु वर्षेश हो कर यदि छठे स्थान में हो और चन्द्रमा से कबूल योग नहीं करता हो, तो वायु रोग होता है ॥ १ ॥

**स्यात्कामलाख्यरुगपीत्थमसृज्यसृग्भीः**
**पित्तं च रिःफगरवौ दृशि शूलरोगः ।**
**पित्तं पुना रिपुगृहेऽत्र भृगौ नृभेऽरौ**
**श्लेष्मा भपेक्षितयुतेऽपि कफोऽरिगेन्दौ ॥ २ ॥**

इत्थममुना प्रकारेण असृजि=कुजे, वक्रिणि पतिते वर्षेशेऽरिगे तु सति कामलाख्यरुग्=पित्तविकाराधिक्येन पीतसकलदेहः भवति । रक्तविकृतिरोगश्च भवति । अथ पतिते वर्षेशे रिःफगरवौ=द्वादशस्थानस्थे रवौ सति दृशि=नेत्रे, शूलरोगः = व्यथा स्यात् । अथ तादृशे भृगौ = शुक्रे, रिपुगृहे=षष्ठस्थाने सति, पुनः पित्तरोगः, यदा भृगौ नृभे = पुरुषराशौ, अरौ=षष्ठस्थाने, भपेक्षितयुते=राशीशदृष्टियुते सति

श्लेष्मा = कफप्रकोपः स्यात् । यदि पापपीडिते वर्षेशे, इन्दौ=चन्द्रेऽरिगे=षष्ठस्थानस्थे सति तदा कफः = कफप्रकोपः स्यात् ॥ २ ॥

भाषा—ऐसा मङ्गल यदि हो, तो कमला रोग ( पित्तविकार से सकल शरीर पीला होजाना ) होता है। रक्तविकार भी होता है। पित्तप्रकोप भी होता है यदि वैसा ही सूर्य द्वादशस्थान में गत हो तो नेत्र शूल रोग होता है। और वैसा ही शुक्र होकर यदि शत्रु गृह में हो, तो पित्त से रोग होता है। और वैसे ही शुक्र यदि पुरुष राशि में हो, छठे स्थान में हो, और राशीश से दृष्ट युत हो, तो कफ रोग होता है। ऐसा ही चन्द्रमा यदि छठे स्थान में हो, तो कफरोग होता है ॥ २ ॥

**एवं बुधे पापयुतेऽब्दपेऽरौ वातोत्थरोगो जनिलग्ननाथः ।**
**पापोऽब्दपेन क्षुतदृष्टिदृष्टो रोगप्रदो मृत्युकरः सपापः ॥ ३ ॥**

एवं पापयुते, अब्दपे = वर्षेशे, बुधे, अरौ=षष्ठस्थे सति वातोत्थरोगः=वायुजनितरोगः स्यात्, अथ जनिलग्ननाथः=जन्मलग्नेशः पापः=पापग्रहः, अब्दपेन= वर्षेशेन, क्षुतदृष्टिदृष्टः = १।४।७।१० एतदन्यतमदृष्ट्या वीक्षितः, तदा रोगप्रदः स्यात्। अथ तादृशो जन्मलग्नेशः सपापस्तदा मृत्युकरो विचिन्त्यः ॥ ३ ॥

भाषा—इस प्रकार यदि पापयुक्त, वर्षेश होकर बुध छठे स्थान में हो तो वात से उत्पन्न रोग होता है और जन्मलग्नेश स्वयं पापग्रह हो, वर्षेश से क्षुतदृष्टि से देखा जाय तो भी रोगप्रद होता है। और वैसा ही जन्मलग्नेश पापयुक्त हो तो मृत्यु को करता है ॥ ३ ॥

अथ शनिकृतारिष्टमाह—

**सूत्थार्किभे लग्नगते रूक्षशीतोष्णरुग्भयम् ।**
**शनीक्षिते याप्यता स्यात्सपापे मृत्युमादिशेत् ॥ ४ ॥**

सूत्थार्किभे = जन्मकालिकशन्याक्रान्तराशौ, लग्नगते=वर्षलग्ने सति रूक्षशीतोष्णरुग्भयं = रूक्षः शरीरकार्कश्यं, शीतोष्णं=शीतपित्तं, एतद्रोगद्वयं स्यात्।

यदि सूत्थार्किभे शनीक्षिते = शनिदृष्टे, तदा याप्यता किञ्चिन्न्यूनता स्यात्। सूत्थार्किभे सपापे सति मृत्युः स्यादिति ॥ ४ ॥

भाषा—जन्मकाल में जिस राशि में शनि हो, वह राशि यदि वर्ष लग्न हो, तो रूक्षता रोग शीत पित्त रोग होता है। यदि जन्मकालिक शनिराशि शनि से दृष्ट हो तो कुछ कम हो। यदि पापग्रह युक्त हो तो मृत्यु होता है ॥ ४ ॥

**एवं भौमे क्षुतदृशा रक्तपित्तरुजोऽग्निभीः ।**
**ततोऽन्ये बहुला रोगाः शुभदृष्टौ रुगल्पता ॥ ५ ॥**

एवं भौमे=जन्मकालिककुजाक्रान्तराशौ, वर्षलग्नगते सति, क्षुतदृशा दृष्टे च सति रक्तपित्तरुजः = रक्तपित्तसंज्ञरोगः स्यात् । अग्निभीः=अग्निभयम् । ततः=तस्मात् अन्ये अपि बहुलाः = बहवः रोगाः स्युः । शुभदृष्टौ=शुभग्रहदृष्टौ सत्यां रुगल्पता = रोगाल्पता भवति ॥ ५ ॥

भाषा—इसी प्रकार मङ्गल जन्मकाल में जिस राशि में हो, वह राशि यदि वर्षलग्न हो और क्षुत दृष्टि १।४।७।१० से देखा जाय, तो रक्तपित्त रोग होता है, अग्निभय होता है । उस से और भी रोग होते हैं । यदि शुभग्रह की दृष्टि पड़ती हो, तो रोग की अल्पता होती है ॥ ५ ॥

**लग्नाधिपाब्दपतिषष्ठपतीत्थशालो रोगप्रदः खचरधातुविकारतः स्यात् ।**
**कान्दर्पिकामयभयं पतिते सितेऽर्कस्थानेऽथ षष्ठ इह रुक्सहमं सपापम् ॥६॥**

लग्नाधिपो वर्षलग्नेशः, अब्दपतिर्वर्षेशः, षष्ठपतिः=षष्ठेशः, एतेषां मध्ये द्वयोर्यदि इत्थशालः=मुथशिलः, तदा खचरधातुविकारतः–तत्तद्ग्रहधातुदोषतः, रोगप्रदः= रोगदाता स्यात् । एवं सिते=जन्मकालिकशुक्राक्रान्तराशौ, षष्ठे=वर्षलग्नात् षष्ठभावस्थे सति, अर्कस्थाने=सूर्याक्रान्ते च सति तथा रुक्सहमं=रोगसहमं सपापं=पापयुक्तं, तदा कान्दर्पिकामयभयं=कन्दर्पविकाररोगभयं वीर्यप्रकोपरोगः स्यात् ॥ ६ ॥

भाषा—वर्षलग्नेश, वर्षेश, इन दोनों को षष्ठेश से यदि इत्थशाल योग होता हो तो उन ग्रहों के जो धातु, उसके विकार से रोग होता है । इसी प्रकार शुक्र जन्मकाल में जिस राशि में हो, वह राशि वर्ष लग्न से छठे स्थान में हो और सूर्य उसी में हो और रोगसहम पाप युक्त भी हो, तो कान्दर्पिक कन्दर्पसम्बन्धी अर्थात् वीर्यदोष से रोग होता है ॥ ६ ॥

**सपापे गुरौ रंध्रगे लग्न आरे सतन्द्राऽस्ति मूर्च्छाऽङ्गनाशः सचन्द्रे ।**
**खलाः सूतिकेन्द्रेऽब्दलग्ने रुगाप्त्यै कफो द्व्यङ्घ्रिगैरीक्ष्यमाणे सिते स्यात्॥७॥**

सपापे=पापग्रहयुक्ते, गुरौ=जीवे, रन्ध्रगे=अष्टमस्थे, आरे = कुजे, लग्ने सति तदा सतन्द्रा=आलस्ययुक्ता मूर्च्छाऽस्ति । अथ सचन्द्रे = चन्द्रसहिते गुरौ रन्ध्रगे, सचन्द्रे कुजे लग्नगते च सति, तदाऽङ्गनाशः = अवयवच्छेदः भवति । अथ खलाः = पापग्रहाः, सूतिकेन्द्रे = जन्मकालिकलग्नचतुर्थसप्तमदशमे स्थिताः, ते यदि वर्षलग्ने च वर्तमानास्तदा रुगाप्त्यै=रोगप्राप्तये, भवन्ति । अथ सिते शुक्रे द्व्यङ्घ्रिगैः= पुरुषराशिगतैः, पापैरीक्ष्यमाणे = दृष्टे च सति कफः स्यात् ॥ ७ ॥

भाषा—पापग्रह से सहित गुरु यदि अष्टम स्थान में हो, मङ्गल यदि लग्न में हो

तो आलस्य युत मूर्च्छा रोग, बदहोशी मिरगी रोग होता है। और चन्द्रमा से युत बृहस्पति आठवें स्थान में हो, या चन्द्रयुत मङ्गल लग्न में हो, तो अङ्ग का नाश होता है। तथा जन्मकाल में १।४।७।१० इन स्थानों में स्थित पापग्रह यदि वर्षलग्न में हो, तो रोगप्राप्ति के लिये होते हैं। और वैसे ही शुक्र यदि विषम (१।३।५।७।९।११) राशि में स्थित पापग्रहों से देखा जाय तो कफ रोग होता है॥ ७॥

**दिनेऽब्दप्रवेशो विलग्नेऽब्दसूत्योर्यदा दृक्कहद्दागृहाद्योऽधिकारः।**
**रवेर्वा कुजस्यात्र पीडा ज्वरात्स्याद्दृशा सौम्यखेटोत्थयाऽन्ते सुखाप्तिः॥ ८॥**

दिने=दिवसे, यदि अब्दप्रवेशः = वर्षप्रवेशः स्यात्तदाऽब्दसूत्योः=वर्षजन्मकालयोः विलग्ने रवेर्यदा दृक्कहद्दागृहाद्यः अधिकारः स्यात्, वा कुजस्य=भौमस्य दृक्कहद्दागृहाद्यः अधिकारः स्यात्तदा ज्वरात् पीडा स्यात्। तत्रैव सौम्यखेटोत्थया=शुभग्रहजनितया दृशा दृष्टे तादृशि वर्षलग्ने सति, अन्ते = वर्षान्ते, सुखाप्तिः=सुखलाभः स्यात्॥ ८॥

भाषा—दिन में वर्ष प्रवेश हो और वर्षकालिक जन्मकालिक लग्न में सूर्य का अथवा मंगल का द्रेष्काण नवांश आदि अधिकार हो, तो ज्वर से पीड़ा होती है। यदि शुभग्रह की दृष्टि वर्षलग्न पर पड़े, तो वर्षान्त में सुख लाभ होता है॥ ८॥

**निशि सूतौ वर्धमाने चन्द्रे भौमेत्थशालतः।**
**रुङ्नश्येदेधते मन्देत्थशालाद्व्यत्ययोऽन्यथा॥ ९॥**

निशि=रात्रौ, वर्षप्रवेशे सति सूतौ=जन्मनि, वर्धमाने=पूर्णचन्द्रे भौमेत्थशालतः रुक् नश्येत्। तादृशे चन्द्रे मन्देत्थशालाच्छनिकृतमुथशिलयोगात् रुक्=रोगः, एधते= वर्धते। अन्यथा=उक्तवैपरीत्ये, दिवा वर्षप्रवेशः क्षीणश्चन्द्रस्तदा रोगवृद्धिः स्यादिति॥९॥

भाषा—रात में वर्षप्रवेश हो, जन्मकाल में चन्द्रमा उपचीय मान हो, वहां यदि मङ्गल से इत्थशाल होता हो, तो रोग नाश होता है। और वैसे ही चन्द्रमा को यदि शनि से इत्थशाल हो तो रोग बढ़ता है। इससे विपरीत में उलटा फल कहना॥९॥

**रवावीदृशि वित्केतुयुतेऽब्दं निखिलं गदाः।**
**अधिकारी बली सूतावब्दे केतुज्ञयुक् तथा॥ १०॥**

वित्केतुयुते=बुधकेतुयुक्ते, रवौ=सूर्ये, ईदृशि सति किन्तु कुजेत्थशाले सति तदा निखिलं वर्षं यावत्, गदाः=रोगाः, भवन्ति। अथवा सूतौ = जन्मनि अधिकारी = लग्नेशाद्यधिकारी, बली = बलयुक्तः, कोऽपि ग्रहोऽब्दे = वर्षे केतुज्ञयुक् = केतुबुधयुक्तस्तदाऽपि तथा = (निखिलं वर्षं गदाः) इति फलं भवति॥ १०॥

भाषा—ऐसे ही बुध केतु युक्त रवि, मङ्गल से इत्थशाल करता हो, तो समूचा वर्ष रोग होता है। या जन्मकाल में लग्नेश अधिकार प्राप्त कोई ग्रह यदि केतु बुधयुक्त हो, तो सम्पूर्ण वर्ष रोग होता ही है ॥ १० ॥

चतुर्थेऽस्ते च मुथहा क्षुतदृष्ट्या शनीक्षिता।
शूलपीडा पापखगैर्दृष्टे तत्परिणामजम् ॥ ११ ॥

यदि मुथहा चतुर्थे, अस्ते=सप्तमे च स्थिता, क्षुतदृष्ट्या (१।४।७।१०) एतया दृशा शनीक्षिता=शनिदृष्टा, तदा शूलपीडा भवति। यदि वा चतुर्थ-सप्तमस्था मुथहा पापखगैः=शनिकुजरविभिः, दृष्टा तदा तत्परिणामजं=परिणामशूलं स्यात् ॥ ११ ॥

भाषा—यदि मुथहा चौथे सातवें में होकर शनि की क्षुतदृष्टि से देखी जाय, तो शूल पीडा होती है। यदि चौथे सातवें में स्थित मुथहा पापग्रहों से दृष्ट हो, तो परिणामशूल रोग होता है ॥ ११ ॥

जन्मस्थजीवसितराशिगते महीजे
सूर्यांशुगे पिटकशीतलिकादिमान्द्यम्।
शीतोष्णगण्डभवरुक्सबुधे च सेन्दौ
कुष्ठं भगन्दररुजोऽपि सगण्डमालाः ॥ १२ ॥

महीजे=कुजे, जन्मस्थजीवसितराशिगते=जन्मकालिकगुरुशुक्राक्रान्तराशिगते, सूर्यांशुगे=अस्ते च सति, पिटकशीतलिकादि=पिटकः प्लीहा, शीतलिका=शीतला-रोगः, एतदादिविचित्ररोगः स्यात्। शीतोष्णगण्डभवरुक्=शीतोष्णजनितो गलगण्डरोगः स्यात्। एवं सेन्दौ=सचन्द्रे बुधे जन्मस्थजीवसितराशिगते सति, कुष्ठं, सगण्डमालाः=गण्डमालाख्यरोगसहिताः, भगन्दररुजः = गुदव्रणरोगाः भवन्ति। गलपरिधौ परितो माला गुटिका इव व्रणपिटका यत्र सा गण्डमाला ॥ १२ ॥

भाषा—जन्मकुण्डली में बृहस्पति और शुक्र जिस राशि में हों, उसी राशि में वर्षकाल में मङ्गल हों, अस्तङ्गत भी हों, तो पिल्ही, शीतला आदि रोग होते हैं। और शीतपित्त या, शर्दी गर्मी के रोग, गलगण्ड रोग होते हैं। इसी प्रकार चन्द्रमा युत बुध जन्मकालिक गुरु शुक्र के राशि में हो, तो कुष्ठ और गण्डमाला भगन्दर रोग होता है ॥ १२ ॥

जन्मलग्नेन्थिहानाथौ षष्ठौ पापान्वितेक्षितौ।
निर्बलौ ज्वरपीडाङ्गवैकल्याद्यतिकष्टदौ ॥ १३ ॥

जन्मलग्नेन्थिहानाथौ, षष्ठौ = षष्ठस्थानस्थितौ, पापान्वितेक्षितौ=पापयुतदृष्टौ,

निर्बलौ च भवतस्तदा ज्वरपीडा, अङ्गवैकल्यादि अतिकष्टदौ भवतः ॥ १३ ॥

भाषा—जन्मलग्न के स्वामी और मुथहेश ये दोनों छठे स्थान में हों, पापग्रह से युत दृष्ट हों निर्बल हों, तो ज्वर और शरीर की विकलता आदि अत्यन्त कष्ट को देते हैं।

मुथहालग्नतन्नाथा पापान्तःस्थास्तु रोगदाः।
षष्ठेशे षष्ठगे सौम्ये स्त्रियाः प्राप्तिरितीर्यते ॥ १४ ॥

मुथहालग्नतन्नाथाः=मुथहा-वर्षलग्न-मुथहेशवर्षलग्नेशाः पापान्तःस्थाः= पापग्रहद्वयमध्यगतास्तदा रोगदा भवन्ति। वा षष्ठेशे = वर्षलग्नाद्रोगेशे सौम्ये=शुभग्रहे, षष्ठगे = षष्ठस्थानस्थे, सति स्त्रियाः = नार्याः सकाशात्, प्राप्तिः=रोगप्राप्तिः स्यादितीर्यते = ज्ञायते ॥ १४ ॥

भाषा—मुथहा, वर्षलग्न, मुथहेश, वर्षलग्नेश ये सब यदि पापग्रहों के बीच में हों, तो रोगप्रद होते हैं। या षष्ठेश शुभग्रह हो षष्ठस्थान में हो, तो स्त्री के जरिये रोगप्राप्ति होती है ॥ १४ ॥

रोगकर्ता यत्र राशावंशे स्यादनयोर्बली।
तत्स्थानं तस्य रोगस्य वाच्यं राशिस्वरूपतः ॥ १५ ॥

रोगकर्ता = रोगयोगकरो ग्रहः, यत्र = यस्मिन् राशौ, यत्र अंशे=नवांशे च स्यादनयो राशिनवांशयोर्मध्ये यो बली बलवान् स्यात्तत्स्थानं तस्य रोगस्य राशिस्वरूपतो वाच्यम् ॥ १५ ॥

भाषा—रोगकारक ग्रह जिस राशि में जिस नवांश में हों, उन (राशि नवांशों) में जो बली हो, उसका राशिस्वरूप से जो स्थान हो, वही रोग का स्थान कहना ॥ १५ ॥

जन्मषष्ठाधिपे भौमे वर्षे षष्ठगते रुजा।
क्रूरेत्थशाले विपुलः शुभदृग्योगतस्तनुः ॥ १६ ॥

जन्मषष्ठाधिपे=जन्मलग्नाधिकरणषष्ठस्थानेश्वरे भौमे=कुजे, वर्षे=वर्षकुडण्ल्यां षष्ठगते तदा रुजा=रोगः भवति। तादृशे भौमे क्रूरेत्थशाले=पापग्रहेत्थशाले सति विपुलः = महान् रोगः स्यात्। शुभदृग्योगतः=शुभदृष्टिसंयोगात्, तनुः = स्वल्पो रोगः स्यात् ॥ १६ ॥

भाषा—जन्मकुण्डली में मङ्गल षष्ठभाव का स्वामी होकर वर्षकुण्डली में छठे भाव में हो, तो रोग होता है। यदि वैसे ही मंगल को पापग्रह से इत्थशाल होता हो तो महान् रोग होता है। शुभग्रह की दृष्टि और संयोग से थोड़ा हलका रोग होता है ॥ १६ ॥

अथ षष्ठभावस्थितसूर्यादिग्रहफलानि ।

रिपूणां विनाशो रुजो मातृपक्षे रवौ षष्ठसंस्थे सुखाप्तिर्जनानाम् ।
नृपान्मित्रपक्षाज्जयश्चार्थलाभो भवेद्‌द्रव्यलाभः क्रये विक्रये वा ॥ १ ॥
अरिस्थानगो रात्रिनाथो रिपूणां विवादं विरोधं च नेत्राङ्गपीडाम् ।
व्ययं व्यग्रतां गुप्तचिन्तां तनोति कलत्राङ्गपीडां करोतीह वर्षे ॥ २ ॥
कुजः षष्ठगः शत्रुनाशं करोति स्वपक्षाज्जयं मित्रपक्षाच्च लाभम् ।
हयानां च सौख्यं भवेदङ्गनानां सुखं हायने स्याद्दशायां च तस्य ॥ ३ ॥
रिपुस्थे बुधे वैरिणां वै विवादो भवेदङ्गनानां च कष्टं करोति ।
व्ययं व्यग्रतां स्वे शरीरे च कष्टं कफार्त्तिं महाकष्टमप्यत्र वर्षे ॥ ४ ॥
कष्टं रिपूणां रिपुगः सुरेज्यो भयार्त्तिदोषान् कुरुते नराणाम् ।
भार्याङ्गपीडामथ नेत्ररोगं ज्वरातिसारं प्रकरोति वर्षे ॥ ५ ॥
अरिस्थानगो हायने दैत्यमन्त्री जनानां विवादो रिपोर्भीतिकष्टम् ।
भवेद्गुप्तचिन्ता वराङ्गप्रपीडा शिरोऽर्त्तिं च नेत्रोदरे पीडनञ्च ॥ ६ ॥
षष्ठस्थितो भवति भूधनलाभकारी सूर्यात्मजो नृपसमं मनुजं प्रकुर्यात् ।
धान्याम्बराणि विपुलानि करोति नित्यं कीर्त्तिविवर्धनमथार्त्तिविनाशनं च ॥७॥
रिपोर्विनाशं यदि सैंहिकेयः षष्ठस्थितः स्यान्नृपतुल्यकारी ।
गोभूहिरण्याम्बरलाभदश्च धनाप्तिकृद्‌दुःखविनाशनश्च ॥ ८ ॥
पुरे शालिशाला गृहे रम्यवासो गले पुष्पमाला कुले श्रीविशाला ।
मतिर्मर्दने विद्विषां तस्य मानं भवेद्यस्य षष्ठे गृहे केतुनामा ॥ ९ ॥

इति षष्ठरिपुभावविचारः ।

## अथ सप्तम(स्त्री)भावविचारः ।

**बली सितोऽब्दाधिपतिः स्मरस्थः स्त्रीपक्षतः सौख्यकरो विचिन्त्यः ।**
**ईज्येक्षितोऽत्यन्तसुखं कुजेनाऽधिकारिणा प्रीतिकरो मिथः स्यात् ॥१॥**

यदा बली = बलवान्, दशाधिकबली, अब्दाधिपः = वर्षेशः, सितः = शुक्रः, स्मरस्थः = सप्तमस्थानस्थः, तदा स्त्रीपक्षतः सौख्यकरो विचिन्त्यः । अथ तादृशः शुक्रः ईज्येक्षितः = गुरुदृष्टः, तदाऽत्यन्तसुखं भवति । अथवा तादृश एव शुक्रः, अधिका-

रिणा=पञ्चाधिकारान्यतमाधिकारवता, कुजेन=मङ्गलेन दृष्टस्तदा मिथो दम्पत्योः परस्परं प्रीतिकरः स्यात् ॥ १ ॥

भाषा—यदि बली वर्षेश शुक्र सातवें स्थान में हों, तो स्त्रीपक्ष से सुख करता है। या वैसे ही शुक्र पञ्चाधिकारों में कोई अधिकारी होकर मङ्गल से देखा जाय, तो स्त्री पुरुष को परस्पर प्रेम कराता है ॥ १ ॥

बुधेक्षिते जारता स्याल्लघ्व्या मन्देन वृद्धया।
गुरुदृष्ट्या नवा भार्या सन्ततिस्त्वरितन्ततः ॥ २ ॥

वर्षेशे सप्तमस्थे च शुक्रे, बुधेक्षिते=बुधदृष्टे, तदा लघ्व्या = अल्पवयस्कया बालिकयाऽजातरजस्कया स्त्रिया सह, जारता=व्यभिचारिता स्यात्। अथ तादृशे शुक्रे मन्देन=शनिना, दृष्टे तदा वृद्धया=अधिकवयोवत्या स्त्रिया जारता स्यात्। शनेर्वृद्धग्रहत्वात्। अथ तादृशे शुक्रे गुरुदृष्टे सति नवा = नवीना, भार्या = विवाहिता स्वस्त्री स्यात्, ततस्तस्यास्त्वरितं = शीघ्रमेव सन्ततिरपत्यप्राप्तिर्भवति ॥ २ ॥

भाषा—वर्षेश होकर शुक्र यदि सप्तमस्थान में हो, बुध से दृष्ट हो, तो थोड़ी उमर वाली स्त्री से व्यभिचार होता है। यदि ऐसे ही शुक्र शनि से दृष्ट हो, तो बूढ़ी औरत से व्यभिचार करे। यदि वैसे शुक्र बृहस्पति से देखे जांय, तो नयी अपनी विवाहिता स्त्री हो, उससे शीघ्र ही सन्तान प्राप्ति भी हो ॥ २ ॥

जन्मलग्नाधिपेऽस्तस्थे दारसौख्यं बलान्विते।
जन्मशुक्रर्क्षमस्तेऽब्दे स्त्रीलाभाय सितेऽब्दपे ॥ ३ ॥

बलान्विते = बलयुक्ते, जन्मलग्नाधिपेऽस्तस्थे=वर्षलग्नात् सप्तमस्थे सति, दारसौख्यं=स्त्रीसुखं स्यात्। जन्मशुक्रर्क्षं=जन्मनि शुक्राक्रान्तराशिर्यः स यदि अब्दे=वर्षे, अस्ते = सप्तमे सति, तथा सिते=शुक्रे, अब्दपे=वर्षेशे सति तदा स्त्रीलाभाय भवति॥३॥

भाषा—जन्मलग्नेश बलयुक्त होकर वर्षलग्न से सप्तमस्थान में हों, तो स्त्री सुख होता है। और जन्म काल में शुक्र जिस राशि में हो, वह यदि वर्षकाल में सातवें स्थान में हों, और शुक्र वर्षेश हो, तो स्त्री लाभ होता है ॥ ३ ॥

लग्नास्तनाथयोरित्थशाले स्त्रीलाभमादिशेत्।
सहमेशो भावपो वा विनष्टः कष्टदः स्त्रियाः ॥ ४ ॥

लग्नास्तनाथयोः=लग्नेशसप्तमेशयोः, इत्थशाले सति स्त्रीलाभम्, आदिशेत् = कथयेत्। सहमेशः = दारासहमेशः, भावपः = स्त्रीभावपतिः सप्तमेशः, यदि विनष्टः= अस्तङ्गतः पापयुतदृष्टः पापेत्थशाली च भवेत्तदा स्त्रियाः कष्टदः=रोगकरः स्यादिति॥४॥

भाषा—लग्नेश सप्तमेश में इत्थशाल होता हो, तो स्त्री लाभ कहना। यदि

स्त्रीसहमेश और सप्तमभावेश अस्तंगत हो पापयुत दृष्ट होतो स्त्री को कष्ट देते हैं ॥४॥

नष्टेन्दौ शुक्रपदगे मैथुनं स्वल्पमादिशेत् ।
जन्मशुक्रर्क्षगो भौमः स्त्रीसुखोत्सवकृद् बली ॥ ५ ॥

नष्टेन्दौ = नष्टचन्द्रे, शुक्रपदगे = जन्मकालिकशुक्राक्रान्तराशिगते, तदा स्वल्पं मैथुनं=स्त्रीसङ्गसुखं, आदिशेत्। नष्टलक्षणं वामनाचार्येणोक्तम् "क्रूराक्रान्तः क्रूरयुतः क्रूरदृष्टश्च यो ग्रहः। विरश्मितां प्रपन्नश्च स विनष्टो बुधैः स्मृतः" ॥ वा बली भौमः कुजः, जन्मशुक्रर्क्षगः=जन्मकालिकशुक्राक्रान्तराशिगतः तदा स्त्रीसुखोत्सवकृद्भवति॥५॥

भाषा—यदि नष्टचन्द्र जन्मकालिक शुक्र के राशि में हों, तो थोड़ा स्त्री प्रसङ्ग सुख कहना। यदि बली मङ्गल शुक्र के जन्म कालिक राशि में हों, तो स्त्रीसुख और उत्सव को करता है ॥ ५ ॥

जन्मास्तपेऽब्दपसितेन युगीक्षिते स्यात्स्त्रीसङ्गमो बहुविलाससुखप्रधानः ।
केन्द्रत्रिकोणगगुरौ जनिशुक्रभस्थे स्त्रीसौख्यमुक्तमितिहद्दविवाहयोश्च॥६॥

जन्मास्तपे = जन्मकालिकसप्तमेशे, अब्दपसितेन=वर्षेशशुक्रेण युगीक्षिते=युत-दृष्टे सति, बहुविलाससुखप्रधानः स्त्रीसङ्गमः स्यात्। जनिशुक्रभस्थे = जन्मकालिक-शुक्राधिष्ठितराशिगते, वर्षलग्नात्केन्द्रत्रिकोणगगुरौ सति स्त्रीसौख्यमुक्तं, इत्थं हद्दवि वाहयोः = जन्मलग्नगतहद्देशविवाहसहमेशयोरपि विचार्यम् ॥ ६ ॥

भाषा—जन्मकाल के सप्तमेश यदि वर्षेश शुक्र से युत दृष्ट हो, तो बहुत विलास सुख से युक्त स्त्री सङ्ग हो। अथवा वर्षलग्न से केन्द्र १।४।७।१० त्रिकोण ५।९ में होकर जन्मकाल में शुक्र जिस राशि में हों, उस राशि में गुरु हों, तो स्त्री सुख कहा है। ऐसे जन्मलग्न के हद्देश और विवाह सहमेश का भी विचार करना॥ ६ ॥

अधिकारिपदस्थेऽर्के स्त्रीभ्यो व्याकुलताऽनिशम् ।
इन्थिहाऽधिकृतस्थाने गुरुदृष्ट्या विवाहकृत् ॥ ७ ॥

अर्के = सूर्ये, अधिकारिपदस्थे=पञ्चाधिकार्यन्यतमस्थानस्थे सति स्त्रीभ्यः, अनिशं = सदा व्याकुलता भवेत्। वा इन्थिहा = मुथहा, अधिकृतस्थाने = पञ्चाधि-कार्यन्यतमस्थाने भवेत् तत्र गुरुदृष्ट्या सति विवाहकृत् = विवाहकारिणी भवेत् ॥७॥

भाषा—यदि सूर्य पञ्चाधिकारियों में किसी के स्थान में हों, तो स्त्री के हेतु व्यग्रता रहती है। और मुथहा यदि पञ्चाधिकारियों में किसी के स्थान में हों अर्थात् युत हो, और बृहस्पति से देखी जाय, तो विवाह योग करने वाली होती है। अर्थात् यह विवाह योग होता है ॥ ७ ॥

इन्थिहार्कारयुग् द्यूने क्रूरिते सहमे स्त्रियाः ।
स्त्रीपुत्रेभ्यो भवेत्कष्टं पापदृष्ट्या विशेषतः ॥ ८ ॥

अर्कारयुग् = रविकुजयुक्ता, इन्थिहा = मुथहा, वर्षलग्नात् द्यूने = सप्तमे स्थाने स्थिता अथवा स्त्रियाः सहमे = दारसहमे, क्रूरिते = पापयुक्ते, सति स्त्रीपुत्रेभ्यः कष्टं भवेत् । तत्रोक्तयोगे पापदृष्ट्या दृष्टे विशेषतः स्त्रीपुत्रेभ्यः कष्टं भवेत् ॥ ८ ॥

भाषा—रवि कुज से युक्त मुथहा यदि वर्षलग्न से सप्तम मे हों तो स्त्री पुत्र से कष्ट होय । या स्त्री सहम पाप से युत हो, तो स्त्री पुत्र से कष्ट हो, वहां पाप की दृष्टि यदि पड़ती हो तो विशेष रूप से स्त्री पुत्र से कष्ट हो ॥ ८ ॥

सूतौ द्यूनाधिपः शुक्रोऽब्दे द्यूने बलवान्भवेत् ।
लग्नेशेनेत्थशालश्चेत्स्त्रीलाभं कुरुते ध्रुवम् ॥ ९ ॥

सूतौ = जन्मकाले, द्यूनाधिपः = सप्तमेशः, यदि शुक्र एव स्यादर्थान्मेषवृश्चिकयोरन्तरं वर्षलग्नं भवेत्तदैव सप्तमेशः शुक्रो भवति, सचाब्दे=वर्षे वर्षलग्नात्=द्यूने=सप्तमे, स्थितः, बलवान् = दशाधिकबली भवेत् तथा लग्नेशेन = वर्षलग्नेशेन, चेदित्थशालस्तदा स्त्रीलाभं ध्रुवं कुरुते ॥ ९ ॥

भाषा—जन्मकाल में सप्तमेश शुक्र ही हो, वह वर्षकुण्डली में सप्तम स्थान में हों और बलवान् भी हो और लग्नेश से इत्थशाल होता हो, तो स्त्री लाभ को निश्चय करता है ॥ ९ ॥

भौमेऽब्दपे सितदृशा शुक्रेऽब्देशे कुजेक्षया ।
तद्दृष्टे दारसहमे स्त्रीलाभो भवति ध्रुवम् ॥ १० ॥

भौमे = कुजे, अब्दपे=वर्षेशे, सितदृशा=शुक्रदृष्ट्या, दृष्टे तदा स्त्रीलाभः । वाऽब्देशे = वर्षेशे शुक्रे, कुजेक्षया = मङ्गलदृष्ट्या दृष्टे, तदाऽपि स्त्रीलाभः । वा दारसहमे = स्त्रीसहमे तद्दृष्टे = कुजशुक्राभ्यां दृष्टे तदा ध्रुवं स्त्रीलाभो भवति ॥ १० ॥

भाषा—मङ्गल वर्षेश हो कर शुक्र से देखा जाय, तो स्त्री लाभ होता है । या शुक्र वर्षेश होकर मङ्गल से देखा जाय, तो स्त्री लाभ होता है । स्त्रीसहम मङ्गल शुक्र से देखा जाय, तो स्त्रीलाभ निश्चय कहना ॥ १० ॥

सूतौ वा दारसहमे तद्दृष्टे योषिदाप्यते ।
स्वामिदृष्टं स्त्रीसहमं शुक्रदृष्टं विवाहकृत् ॥ ११ ॥

वा सूतौ = जन्मनि, दारसहमे, तद्दृष्टे=शुक्रकुजाभ्यां दृष्टे सति, योषित्=स्त्री, आप्यते=प्राप्यते । वा स्त्रीसहमं=दारसहमं, स्वामिदृष्टं तथा शुक्रदृष्टं सद्विवाहकृत् स्यात् ॥ ११ ॥

भाषा—वा जन्म काल में दारसहम यदि शुक्र मंगलों से दृष्ट हो तो स्त्री प्राप्ति होती है। या स्त्री सहम अपने स्वामिग्रहसे दृष्ट हो और शुक्र से भी दृष्ट हो, तो विवाह होता है ॥ ११ ॥

सूतौ द्यूनाधिपे वर्षे सहमेशे स्त्रियाः सुखम्।
जन्मास्तपेन्थिहानाथवर्षेशाः खे द्युने तथा ॥ १२ ॥

सूतौ=जन्मकाले, द्यूनाधिपे=सप्तमेशे, वर्षे, सहमेशे=दारसहमेशे सति स्त्रियाः सुखम् भवति। वा जन्मास्तपः=जन्मलग्नात् सप्तमेशः, इन्थिहानाथो वर्षकालीनमुथहेशः, वर्षेशश्चेते, खे = दशमे, तथा द्युने = सप्तमे, स्थिताः, तदा स्त्रियाः सुखं भवति ॥ १२ ॥

भाषा—जन्मकालिक सप्तमेश वर्ष काल में दारसहमेश हो तो स्त्रीसुख होता है। अथवा जन्मकाल का सप्तमेश, वर्षकाल का मुथहेश, वर्षेश ये सब यदि दशम सप्तम भाव में हो, तो स्त्री सुख होता है ॥ १२ ॥

मुथहातो द्यूनसंस्थः स्वगृहोच्चगतः शशी।
विदेशगमनं कुर्यात्क्लेशः पापेक्षणाद्भवेत् ॥ १३ ॥

स्वगृहोच्चगतः=कर्कवृषान्यतरराशिस्थितः, शशी=चन्द्रः, मुथहातः=मुथहामवधिं कृत्वा ततो द्यूनसंस्थः=सप्तमस्थानस्थितो भवेत्तदा विदेशगमनं = परदेशयात्रा स्यात्। तत्र पापेक्षणात् क्लेशः कष्टं भवेत् ॥ १३ ॥

भाषा—स्वगृह ( कर्क ) उच्च ( वृष ) में स्थित चन्द्रमा मुथहा से सातवें घर में स्थित हो, अर्थात् मुथहा मकर में हो, चन्द्रमा कर्क में हो, या मुथहा वृश्चिक में हो चन्द्रमा वृषराशि में हो, तो, विदेश यात्रा होती है। यहां पाप ग्रहों की दृष्टि पड़ने से क्लेश होता है। शुभग्रह की दृष्टि से सुख पूर्वक यात्रा बीतती है। चन्द्रमा के कर्क में रहने से जलयात्रा, वृष में हो तो स्थलयात्रा कहनी चाहिये ॥ १३ ॥

अथ सप्तमभावस्थितसूर्यादिग्रहफलानि लिख्यन्ते—

कलत्रेऽर्कयुक्ते कलत्राङ्गपीडा स्वकीयाङ्गपीडा तथा तद्दशायाम्।
शिरोऽर्त्ति च मार्गाद्भयं वै विवादो गुदे पादयोः पीडनं वर्षमध्ये ॥ १ ॥
कलत्रे शशाङ्को यदा पापदृष्टो ज्वरं वातपीडां भयं दारुणं च।
कलत्राङ्गकष्टं कफोत्पत्तिबाधां स सौम्यान्वितश्चार्थलाभं करोति ॥ २ ॥
कलत्रे स्थिते क्ष्मासुते स्त्रीषु रोगन्तथा चात्मनो मार्गतोऽतीव कष्टम्।
भयं वैरिणां वै विवादो जनानां दशा नेष्टकारी भवेद्धायनेऽस्मिन् ॥ ३ ॥
शशाङ्कात्मजे सप्तमस्थेऽङ्गनानां विलासादिसौख्यं भवत्यत्र वर्षे।

प्रतिष्ठाऽधिका गोहिरण्याम्बराप्तिर्जयः सर्वदा तद्दशायां तथैव ॥ ४ ॥
कलत्रे सुरेज्ये कलत्रादिसौख्यं जयं निर्भयं शत्रुनाशं करोति ।
सुखं वाहनानां विलासादिकं च नृपाल्लब्धलक्ष्मीर्भवेद्धायनेऽस्मिन् ॥ ५ ॥
कलत्रे भृगौ जायते हायनेऽस्मिन् कलत्रादिसौख्यं विलासादिकं च ।
रिपोर्नाशनं मानवानां च सौख्यं भवेद्वस्त्रगेहादिसौख्यं नराणाम् ॥ ६ ॥

जायास्थानगतो दिवाकरसुतः स्यादङ्गनानां रुजो
मार्गाद्भीतिकरः पशोश्च मरणं राज्याद्भयं व्यग्रताम् ।
क्लेशानां च विवर्धनं प्रकुरुते मिथ्याऽपवादं तथा
देहे वायुसमुद्भवा च जठरे पीडा भवेद्धायने ॥ ७ ॥

वातप्रमेहार्त्तिमयो नराणां गुह्येन्द्रियार्त्तिं च तमो द्युनस्थः ।
विषाग्निपीडां च तथाऽङ्गनानां कष्टं करोतीह भयं नृपाणाम् ॥ ८ ॥
द्युने च केतुः सुखं नो रमण्या न मानं हि लाभो न वातोत्थरोगः ।
न मानं प्रभूणां कृपा नो विभूतां भयं वैरिवर्गाद्भवेन्मानवानाम् ॥ ९ ॥

इति सप्तमस्त्रीभावविचारः ।

## अथाष्टम(मृत्यु)भावविचारः ।

**भौमेऽब्दपे क्रूरहतेऽयसा घातो बलोज्झिते ।**
**अग्निभीरग्निभे क्रूरनराद्द्विपदभे मृतिः ॥ १ ॥**

अब्दपे = वर्षेशे भौमे, क्रूरहते बलोज्झिते=हीनबले सति अयसा=लोहेन घातः अस्त्राघातजनितं व्रणं भवतीति । अथ तादृशे कुजे अग्निभे=अग्नितत्त्वात्मके राशौ = मेषधनुःसिंहस्थिते तदा अग्निभीः = वह्निभयं स्यात् । तादृशे कुजे द्विपदभे = नरराशौ, मिथुन-कन्या-तुला-धनुः पूर्वार्धस्थिते सति क्रूरनरात् = दुर्जनान्मृतिः स्यादिति ॥ १ ॥

भाषा—मङ्गल वर्षेश होकर यदि पाप युत दृष्ट हो, निर्बल हो तो लोह की चोट से घाव हो । वैसे ही मङ्गल यदि अग्नितत्त्व वाले राशि में हो अर्थात् मेष सिंह धनु राशियों में हो, तो आग से जलने का भय होता है । वैसे ही मङ्गल द्विपद अर्थात् मिथुन कन्या तुला धनु के पूर्वार्ध में हो, तो क्रूरनर से मरण होता है ॥ १ ॥

**वियत्यवनिपामात्यरिपुतस्करजं भयम् ।**
**तुर्ये मातुः पितृव्याद्वा मातुलात्पितृतो गुरोः ॥ २ ॥**

निर्बले अब्दपे भौमे वियति = दशमस्थे सति, अवनिपामात्यरिपुतस्करजम् = भूप-मन्त्रि-शत्रु-चौरजनितं भयं भवति। अथ तादृशे भौमे तुर्ये = चतुर्थस्थानस्थे सति तदा मातुः=जनन्याः, पितृव्यात्=पितृभ्रातृतः, वा मातुलात् = जननीभ्रातृतः, पितृतः=जनकात्, वा गुरोः=उपदेष्टुः सकाशात्, भयं भवतीति ॥ २ ॥

भाषा—निर्बल मङ्गल वर्षेश होकर यदि दशम स्थान में हो, तो राजा से, मन्त्री से, शत्रु से, चौर से भय हो। अथवा वैसा ही मङ्गल यदि चौथे स्थान में हो, तो माता से, चाचा से, या मामा से, पिता से, गुरु से भय हो ॥ २ ॥

अथ महामृत्युयोगमाह—

**लग्नेन्थिहापतिसमापतयो मृतीशाश्चेदित्थशालिन इमे निधनप्रदाः स्युः।**
**चेत्पाकरिष्टसमये मृतिरेव तत्र सार्के कुजे नृपभयं दिवसेऽब्दवेशे ॥ ३ ॥**

लग्नेन्थिहापतिसमापतयः=वर्षलग्नेश-मुथहेश-वर्षेशाः यदि मृतीशा अष्टमेशाः भवन्ति, अथवा इत्थशालिनः=अष्टमेशेन ते यदि मुथशिलयोगकर्त्तारस्तदा, इमे=वर्षलग्नेश-मुथहेश-वर्षेशाः, निधनप्रदाः=मरणदायका भवन्ति। चेत्=यदि, पाकरिष्टसमये = जन्मकालिके अनिष्टग्रहदशान्तर्दशाकालेऽयं योगस्तदा मृतिरेव=मरणमेव भवति। अथ दिवसे = दिने, अब्दवेशे=वर्षप्रवेशे सति, कुजे=भौमे, सार्के=सूर्ययुते, तदा नृपभयं= राजभयं भवति ॥ ३ ॥

भाषा—यदि लग्नेश, मुथहेश, वर्षेश ये अष्टमेश हों या अष्टमेश से इत्थशाल योग करते हों, तो मरणप्रद होते हैं। यदि जन्म कालिक दुर्ग्रह मारकग्रहों की दशा, या अन्तर्दशा के समय में उक्तयोग घटित हो तो मरण ही होता है। अथवा दिन में वर्षप्रवेश हो और शनि से युक्त मङ्गल हो तो राजभय होता है ॥ ३ ॥

अथ चतुरो मृत्युयोगानाह—

**सूर्ये मूसरिफे सितेन जनने वर्षेऽधिकारी तथा**
**केन्द्रे राजगदाद्भयं च रुगसृक्स्थानेऽधिकारीन्दुजे।**
**सौम्ये क्रूरदृशा कुजस्य रुगसृग्दोषो दिनांशुस्थिते**
**दग्धे बन्धमृती विदेशत इति प्राहुर्बुधे तादृशे ॥ ४ ॥**

जनने = जन्मकाले, सूर्ये = रवौ, सितेन=शुक्रेण, मूसरिफे सति तथा वर्षे अधिकारी पञ्चाधिकारिणामन्यतमाधिकारवान् सूर्यः केन्द्रे (१।४।७।१०) भवेत्, तदा राजगदात् राज्ञो गदाद्रोगाद्वा राजरोगात्=राजयक्ष्मादिरोगाद् भयं स्यात्। अथ जन्मकाले, अधिकारीन्दुजे=पञ्चाधिकारवति बुधे, असृक्स्थाने=मङ्गलक्षेत्रे मेषवृश्चिका-

न्यतरराशौ स्थिते, तदा रुग् = रोगः स्यात् । वा तादृशे सौम्ये = बुधे कुजस्य = भौमस्य, क्रूरदृशा ( १।४।७।१० ) दृष्टे तदाऽसृग्दोषात् । रक्तविकारात् रुग्योगः स्यात् । पुनरपि तादृशे बुधे इनांशुस्थिते = सूर्यकराक्रान्ते, दग्धे=पापहते तदा विदेशतः = परदेशतः, वन्धमृती = वन्धनमरणे भवतः ॥ ४ ॥

भाषा—जन्मकाल में यदि सूर्य शुक्र से मूसरिफ योग करे, और वर्षकाल में पञ्चाधिकारों में अधिकारी हो, और केन्द्र (१।४।७।१०) में हो, तो राजा से या रोग से, वा राजरोग से भय हो । और जन्मकाल में बुध यदि मङ्गल के राशि में हो, वर्षकाल में अधिकारी हो तो रोग होता है । और वैसा बुध मङ्गल की क्रूरदृष्टि से देखा जाय, तो रक्तविकार आदि से रोग होता है । फिर भी वैसा बुध अस्तंगत हो, पाप से हत हो तो विदेश से बन्धन मरण होता है ॥ ४ ॥

**भौमस्थानेऽधिकारीन्दौ गुप्तं नृपभयं रुजः ।**
**मन्दोऽधिकारी खे लोहहतेः पीडाकरः स्मृतः ॥ ५ ॥**

जन्मनि, भौमस्य यत् स्थानं यत्र राशौ स्थितिस्तत्र राशौ वर्षे स्थित्वा पञ्चाधिकारमध्ये अधिकारयुक्ते इन्दौ=चन्द्रे सति, गुप्तं नृपभयं = राजभयं, तथा रुजो, रोगाः स्युः । अथ मन्दः=शनिः, अधिकारवान् भूत्वा यदि खे=दशमे स्थाने भवेत्, तदा लोहहतेः = लोहप्रहारात् पीडाकरः स्मृतः = कथितः ॥ ५ ॥

भाषा—जन्मकाल में जहां पर मङ्गल स्थित हो, उस राशि में चन्द्रमा वर्षकाल में रहै और अधिकारी भी हो, तो गुप्त 'छिपा हुआ' राजभय होता है और रोग भी होता है । या शनि अधिकारी होकर यदि दशम में हो, तो लोह के प्रहार से पीडा करने वाला होता है ॥ ५ ॥

**भौमेऽष्टमे भयं वह्नेः प्रहारो वा नृपाद्भयम् ।**
**आरे खस्थे चतुष्पाद्भ्यः पातो दुःखं रुजोऽसृजा ॥ ६ ॥**

भौमे=कुजे, अष्टमे = वर्षलग्नादष्टमस्थे सति, वह्नेर्भयम्=अग्निभयं, वा प्रहारः= शस्त्रादिना आघातः, वा नृपात्=राजतः, भयं भवेत् । वा आरे = कुजे, खस्थे = दशमस्थे सति चतुष्पाद्भ्यः = गोमहिषीघोटकेभ्यः, पातः = पतनं, दुःखं तथाऽसृजा = रक्तदोषेण रुजो रोगाः स्युः ॥ ६ ॥

भाषा—मङ्गल यदि वर्षलग्न से अष्टम में हो, तो आग का भय हो, शस्त्रादि से आघात हो, वा राजा से भय हो । मङ्गल यदि दशम में हो, तो चतुष्पद से गिर पड़े और रक्तविकार से रोग हो ॥ ६ ॥

**वित्ताष्टगेज्यो धनहा यद्यब्देशोऽशुभेक्षितः ।**

**मन्दे द्युने दुर्वचनापवादकलिभर्त्सनम् ॥ ७ ॥**

यदि वित्ताष्टगेज्यः=द्वितीयाष्टमस्थानस्थितगुरुः, अब्देशः=वर्षेशः, अशुभेक्षितः=पापदृष्टश्च भवति तदा धनहा = धनव्ययकरः स्यात् तथा मन्दे=शनौ, द्युने=सप्तमे सति दुर्वचनापवादकलिभर्त्सनम् = दुर्वचनं = गालिदानं, अपवादः=निन्दाख्यातिः= कलङ्कः, कलिः = कलहः, भर्त्सनं = गञ्जनं चैतानि, प्राप्नोति ॥ ७ ॥

भाषा—वर्षलग्नसे द्वितीय अष्टम स्थान स्थित बृहस्पति यदि वर्षेश हो और पापग्रह से दृष्ट हो तो धननाश करता है। और यदि शनि सप्तम में हो, तो दुर्वचन गाली आदि सुने, लोगों में कलङ्क हो, झगड़ा हो, गञ्जन भी हो ॥ ७ ॥

**पतिते ज्ञे क्रूरदृशाऽऽरेत्थशाले मृतिं वदेत्।**
**कुजहद्दास्थिते नाशः सौम्यदृष्ट्या शुभं भवेत् ॥ ८ ॥**

पतिते=पापपीडिते, ज्ञे=बुधे, क्रूरदृशा ( १।४।७।१० ), आरेत्थशाले=कुजेनेत्थशाले सति तदा मृतिं = मरणं वदेत्। अथ पतिते ज्ञे कुजहद्दास्थिते तदा नाशः=धननाशः स्यात्। तत्र योगद्वये सौम्यदृष्ट्या = शुभदृष्ट्या = शुभग्रहस्य मित्रदृष्ट्या शुभं भवेत् ॥ ८ ॥

भाषा—पापग्रह से पीड़ित बुध यदि क्रूरदृष्टि से मङ्गल से इत्थशाल करता हो, तो मरण कहना। और पतित बुध यदि मङ्गल की हद्दा में हो तो धननाश होता है। उक्त योगद्वय में शुभग्रह की मित्र दृष्टि से शुभ होता है ॥ ८ ॥

**लग्नाधिपे नष्टदग्धे योषिद्वादोऽशुभान्विते।**
**जन्मन्यष्टमगो जीवो नाधिकारी कलिः पृथुः ॥ ९ ॥**

लग्नाधिपे = वर्षलग्नेशे, नष्टदग्धे=हीनबलेऽस्तंगते, अशुभान्विते = पापयुक्ते च सति तदा योषिद्वादः = स्त्रीविवादः, भवति। जन्मनि जीवो गुरुः, अष्टमगः = जन्मलग्नादष्टमस्थानवर्ती भवेत्तथाऽधिकारी न = पञ्चाधिकारान्यतमाधिकारवांश्च, भवेत् तदा पृथुर्महान् कलिः=कलहः स्यात् ॥ ९ ॥

भाषा—वर्षलग्नेश दुर्बल तथा अस्तंगत, पापयुत हो, तो स्त्रियों से विवाद हो। या जन्म लग्न से अष्टम भाव में स्थित बृहस्पति यदि वर्षकाल में पञ्चाधिकारों में अधिकारी नहीं हो, तो भारी झगड़ा हो ॥ ९ ॥

**जयः शुक्रेक्षणादुक्तः प्रत्युत्तरवशेन तु।**
**भौमेऽन्त्यगे धने सूर्ये वादात्क्लेशं विनिर्दिशेत् ॥ १० ॥**

पूर्वयोगकर्त्तरि गुरौ शुक्रेक्षणात् शुक्रदृष्टिगतात्, प्रत्युत्तरवशेन=विवादेन जयः

उक्तः । वा भौमे=कुजे, अन्त्ये = द्वादशे, सूर्ये धने=द्वितीये, तदा वादात् क्लेशं= कष्टं विनिर्दिशेत् ॥ १० ॥

भाषा—जन्मलग्न से अष्टमस्थानस्थित बृहस्पति पर यदि शुक्र की दृष्टि हो, तो विवाद से जय होता है । या मङ्गल वर्षलग्न से द्वादशस्थान में हो, सूर्य दूसरे स्थान में हो, तो वाद से क्लेश कहना ॥ १० ॥

रिपुगोत्रकलिर्भीतिः संख्ये कुजहतेऽब्दपे ।
दग्धो जन्माङ्गपो वर्षेऽष्टमो रोगकली दिशेत् ॥ ११ ॥

अब्दपे=वर्षेशे, कुजहते=भौमपीडिते सति, रिपुगोत्रकलिः=शत्रुभिर्गोत्रजैः=स्वकुलजैः, कलिः=कलहः, संख्ये = रणे, भीतिः=भयम्, भवति । वा जन्माङ्गपः=जन्मलग्नेशः, दग्धः = पापहतः, वर्षेऽष्टमः=अष्टमस्थानवर्त्ती भवेत्तदा, रोगकली=व्याधिकलहौ, दिशेत् = कथयेत् ॥ ११ ॥

भाषा—वर्षेश यदि मङ्गल से पीड़ित हो, तो शत्रु से या अपने वंशजों से कलह हो । लड़ाई में भय हो । अथवा जन्मलग्नेश पाप से दग्ध हो, वर्षलग्न से अष्टम भाव में हो, तो रोग, कलह कहना ॥ ११ ॥

सूत्यब्दयोरधिकृतो भौमस्थाने गुरुर्हतः ।
पापैर्वादः स्फुटोऽप्येवं तादृशेन्दौ शनेः पदे ॥ १२ ॥

सूत्यब्दयोः=जन्मवर्षकालयोः, अधिकृतः=अधिकारी, गुरुर्जीवो, यदि भौमस्थाने जन्मकालिककुजाश्रितराशौ स्थितः, पापैः = पापग्रहैः, हतः=पीडितश्चेत्तदा, वादः= लोकैर्विवादः स्यात् । एवं=अमुना प्रकारेण, तादृशि=जन्मकालाधिकारवति, इन्दौ= चन्द्रे, शनेः पदे = जन्मकालिकशन्याक्रान्तराशिगते तदा स्फुटो विवादः स्यात्॥१२॥

भाषा—यदि जन्मकाल और वर्षकाल में अधिकार पाया हुआ बृहस्पति जन्मकालिक मङ्गल के स्थान ( राशि ) में हो, पापों से हत हो, तो लोगों से विवाद होता है । इसी प्रकार जन्म वर्षकाल का अधिकार पाया हुआ चन्द्रमा यदि शनि के पद में हो, तो स्पष्टरूप से विवाद होता है ॥ १२ ॥

सूत्यब्दयोरधिकृते चन्द्रे बुधपदे हते ।
क्रूरैर्विदेशगमनं वादः स्याद्विमनस्कता ॥ १३ ॥

सूत्यब्दयोः=जन्मवर्षकालयोः, अधिकृते=प्राप्तपञ्चाधिकारान्यतमाधिकारे, चन्द्रे, बुधपदे = जन्मबुधाक्रान्तराशौ स्थिते, क्रूरैः = पापैः = शनिरविकुजैः, हते = पीडिते, तदा विदेशगमनं = परदेशयात्रा, वादः = विवादः, विमनस्कता = वैमनस्यं भवति॥१३॥

भाषा—जन्म और वर्षकाल में अधिकार पाया हुआ चन्द्रमा यदि जन्मकालिक बुधाश्रितराशि में हो, और पापों से हत हो, तो परदेशगमन होता है। लोगों से विवाद और वैमनस्य होता है ॥ १३ ॥

मेषे सिंहे धनुष्यारे वृषे रन्ध्रेऽसितो भयम् ।
मृतौ मृतीशलग्नेशौ मृत्युदौ पापदृग्युतौ ॥ १४ ॥

आरे=कुजे, मेषे, वा सिंहे, धनुषि, वृषे वा राशौ स्थित्वा वर्षलग्नात् रन्ध्रे=अष्टमस्थाने सति, असितः= खड्गाद्भयं=प्रहारभयं स्यात् । पापदृग्युतौ मृतीशलग्नेशौ = अष्टमेशलग्नेशौ, मृतौ=मृत्युभावे=अष्टमे भवेत्तदा मृत्युदौ भवतः ॥ १४ ॥

भाषा—यदि मंगल मेष में या सिंह में धनु में वृष में होकर वर्षलग्न से आठवें स्थान में हो, तो तलवार से भय हो। पाप से दृष्ट और युत अष्टमेश और लग्नेश यदि अष्टमस्थान में हो, तो मृत्यु को देता है ॥ १४ ॥

यत्रर्क्षे जन्मनि कुजः सोऽब्दे लग्नोपगो यदा ।
बुधो वर्षपतिर्नष्टबलस्तत्र न शोभनम् ॥ १५ ॥

जन्मनि जन्मकाले, कुजः=मङ्गलः, यत्र=यस्मिन् ऋक्षे भवेत् तद्राशिर्यदि अब्दे लग्नोपगः = वर्षलग्नं स्यात् तत्र यदि बुधो वर्षपतिः = वर्षेशः, नष्टबलः=हीनबलः तदा तत्र वर्षे शोभनं फलं न भवति ॥ १५ ॥

भाषा—जन्मकुण्डली में मङ्गल जिस राशि में हो, वही यदि वर्षलग्न हो जाय, और बुध यदि वर्षेश हो, तो वह वर्ष अच्छा नहीं होता है ॥ १५ ॥

सार्के शनौ भौमयुते खाष्टस्थे वाहनाद्भयम् ।
सार्के भौमेऽष्टमस्थे तु पतनं वाहनाद्भवेत् ॥ १६ ॥

सार्के = रविसहिते, भौमयुते = कुजयुते, शनौ, खाष्टस्थे = दशमाष्टमस्थानस्थे सति वाहनात् = गजाश्वादेः, भयं=पतनभयं स्यात् । अथ सार्के=सूर्यसहिते भौमेऽष्टमस्थे सति वाहनात् पतनं भवेत् ॥ १६ ॥

भाषा—रवि कुज शनि यदि दशवें आठवें स्थान में हों, तो सवारी से गिरने का भय होता है। या यदि रवि मंगल ही अष्टम में हों, तो भी सवारी का भय होता है ॥ १६ ॥

सारेऽब्दपेऽष्टमे मृत्युश्चन्द्रेऽन्त्यारिमृतौ मृतिः ।
उदिते मृतिसद्मेशे निर्बले जीविते मृतिः ॥ १७ ॥

सारे=कुजयुते, अब्दपे = वर्षेशे, अष्टमे सति मृत्युः स्यात् । तथा सकुजे चन्द्रे अन्त्यारिमृतौ=द्वादशषष्ठाष्टमे सति मृतिः स्यात् । वा मृतिसद्मेशे=मृत्युसद्मेशे

उदिते = कालांशवहिर्भूते, निर्बले=बलहीने [ ०-५ ] सति जीविते मृतिः स्याज्जीवन्मरणं स्यादतीव कष्टमनुभवञ्जीवतीत्यर्थः ॥ १७ ॥

भाषा—मंगलयुत वर्षेश यदि अष्टमस्थान में हो तो मृत्यु होती है। या मंगलयुत चन्द्रमा ( १२।८।६ ) स्थानों में हो, तो मरण होता है। या मृत्युसहमेश उदित हो ( अस्तङ्गत नहीं हो ) निर्बल हो, तो जीते जिन्दगी में मरण समान कष्ट भोगे ॥ १७ ॥

पुण्यसद्मेश्वरः पुण्यसहमादष्टगो यदा ।
सूत्यष्टमेशः पुण्यस्थो मृतिदः पापदृग्युतः ॥ १८ ॥

पुण्यसद्मेश्वरः पुण्यसहमाद्यदाऽष्टमगः पापदृग्युतस्तदा मृतिदो भवति वा सूत्यष्टमेशः=जन्मलग्नादष्टमेशः, पुण्यस्थः = पुण्यसहमे स्थितः पापदृग्युतः तदा मृतिदो भवति ॥ १८ ॥

भाषा—पुण्य सहम का स्वामी यदि पुण्यसहम से आठवें स्थान में हों और पाप ग्रहों से दृष्ट युत हो, तो मरण को देता है। या जन्मलग्न से अष्टमेश ग्रह यदि पुण्य सहम में स्थित हो, पाप ग्रहों से युत दृष्ट हो, तो मरण को देता है ॥ १८ ॥

सूत्यष्टमगतो राशिः पुण्यसद्मनि नाथयुक् ।
अब्दलग्नाष्टमर्क्षे वा चेदित्थं स्यान्मृतिस्तदा ॥ १९ ॥

सूत्यष्टमगतो राशिः=जन्मलग्नादष्टमराशिर्वर्षे पुण्यसद्मनि = पुण्यसहमे स्थितः, नाथयुक् = पुण्यसहमेशयुतश्चेत्तदा मृत्युः स्यात् । वाऽब्दलग्नाष्टमर्क्षं=वर्षलग्नादष्टमस्थानं चेदित्थमर्थात् पुण्यसहमस्थं पुण्यसहमेशयुतं तदा मृतिः स्यात् ॥ १९ ॥

भाषा—जन्मलग्न से अष्टम राशि यदि वर्ष में पुण्य सहम हो, पुण्यसहमेश से युत हो, तो मृत्यु होती है। या वर्षलग्न से अष्टम राशि में पुण्यसहम, और पुण्यसहमेश भी हो, तो भी मृत्यु होती है ॥ १९ ॥

पुण्यसद्माशुभाक्रान्तं मृतीशोऽन्त्यारिरन्ध्रगः ।
मुथहेशोऽब्दपो वापि मृत्युं तत्र विनिर्दिशेत् ॥ २० ॥

पुण्यसद्म अशुभाक्रान्तं = पापयुतं, मृतीशोऽष्टमेशः, अन्त्यारिरन्ध्रगः=द्वादशषष्ठाष्टमस्थानस्थितः, तदा मृत्युं विनिर्दिशेत् । अपि वा मुथहेशः वा वर्षेशः पापाक्रान्तः, द्वादशषष्ठाष्टमस्थानगतस्तदाऽपि मृत्युं विनिर्दिशेत् ॥ २० ॥

भाषा—पुण्यसहमेश पाप से युत हो, और अष्टमेश १२।६।८ इन स्थानों में हो तो मृत्यु होती है। अथवा मुथहेश या वर्षेश पाप से युत होकर १२।६।८ इन स्थानों में हो, तो भी मृत्यु कहना ॥ २० ॥

सक्रूरे जन्मपे मृत्यौ मृतिश्चेदिन्थिहाऽऽर्कियुक्।
भौमक्षुतेक्षणे तत्र मृत्युः स्यादात्मघाततः॥ २१॥

सक्रूरे = सपापे, जन्मपे = जन्मलग्नेशे, मृत्यौ = वर्षलग्नादष्टमस्थे तदा मृतिः स्यात्। वा चेत् = यदि, इन्थिहा = मुथहा, आर्कियुक्=शनियुक्, तदाऽपि मृतिः स्यात्। वा उक्तयोगद्वये भौमक्षुतेक्षणे=कुजेन क्षुतदृष्ट्या (१।४।७।१०) दृष्टे, तदा आत्मघाततः, मृत्युर्मरणं स्यात् ॥ २१ ॥

भाषा—पापयुक्त जन्मलग्नेश यदि वर्षलग्न से अष्टमस्थान में हो, तो मृत्यु होती है। या यदि मुथहा शनि से युक्त हो, तो भी मृत्यु होती है। अथवा उक्त दोनों योग में मङ्गल की क्षुतदृष्टि पड़ती हो, तो आत्मघात से मरण होता है॥ २१॥

मन्दोऽष्टमे मृतीशेत्थशालान्मृत्युकरः स्मृतः।
शुभेत्थशालात्सर्वेऽपि योगा नाशुभदायकाः॥ २२॥

मन्दः = शनिः, अष्टमे स्थितः, तत्र मृतीशेत्थशालात् = अष्टमेशग्रहकृतेत्थशालयोगात् मृत्युकरो योगः स्मृतः कथितः। अथ सर्वत्र शुभेत्थशालात्सर्वेऽपि योगाः = अशुभयोगाः, अशुभदायका न भवेयुः॥ २२ ॥

भाषा—शनि अष्टम स्थान में हो अष्टमेश से इत्थशाल करता हो तो मृत्युकर होता है। शुभग्रह से इत्थशाल होने से सब अशुभ योग अनिष्टफल देने वाले नहीं होते हैं॥ २२॥

सूतिरन्ध्रपतिर्मन्दोऽष्टमोऽब्दे लग्नपेन चेत्।
इत्थशाली क्रूरदृशा तत्कालं मृत्युदायकः॥ २३॥

सूतिरन्ध्रपतिः = जन्माष्टमेशः, यदि शनिः स्यादर्थान्मिथुनकर्कयोरन्यतरं जन्मलग्नं स्यात्तदाऽष्टमेशः शनिरेव, स यदि वर्षे लग्नेशेन क्रूरदृशा (१।४।७।१०) दृष्ट्या इत्थशालयोगकर्ता भवेत् तदा तत्कालं = तत्क्षणमेव मृत्युदायकः स्यात्॥२३॥

भाषा—जन्मकाल के अष्टमेश शनि होकर यदि वर्षकाल में लग्नेश से क्रूरदृष्टि से इत्थशालयोग करता हो, तो तत्क्षण ही मृत्युदायक होता है॥ २३॥

पुण्यसद्मनि विधुस्तनौ तथाऽस्ते खलो मृतिरथार्थरिष्फगौ।
मृत्युदौ खलखगावथो जनुर्वर्षवेशतनुपौ मृतौ मृतिः॥ २४॥

विधुश्चन्द्रः पुण्यसद्मनि, तनौ = लग्ने च भवेदर्थात् पुण्यसहमचन्द्रौ लग्नगतौ भवतः, तथा खलः पापग्रहोऽस्ते सप्तमे भवेत्तदा मृत्युः स्यात्। अथ खलखगौ = पा-

पग्रहौ, अर्थरिष्फगौ=द्वितीयद्वादशस्थानस्थितौ, तदापि मृत्युदौ=मृत्युकरौ भवतः। अथो यदि जनुर्वर्षवेशतनुपौ=जन्मलग्नेशवर्षलग्नेशौ, मृतौ=अष्टमस्थानगतौ तदा मृतिः स्यात् ॥ २४ ॥

भाषा—यदि चन्द्रमा पुण्यसहम में लग्न में हो, सातवें स्थान में पापग्रह हो, तो मृत्यु होती है। और यदि दो पापग्रह दूसरे बारहवें में हों, तो भी मृत्यु कहना। और जन्मलग्नेश वर्षलग्नेश यदि अष्टम स्थान में गत हों, तो मरण होता है ॥ २४ ॥

अथाष्टमभावस्थसूर्यादिग्रहफलानि लिख्यन्ते—

रवौ चाष्टमे पीडनं बन्धुकष्टं सुदुःखक्षयोपद्रवौ व्याधिशोकौ।
धनार्त्तिः कलत्राङ्गपीडा सुतादेर्व्रणो वातपीडा भवेद्वर्षमध्ये ॥ १ ॥
निधनगतशशाङ्कः कष्टवन्तं करोति ज्वरवमनविकारं चोदरे गुप्तपीडाम्।
भवति कफविकारो नेत्ररोगाङ्गभङ्गो जलभयमरिवादो द्रव्यनाशोऽब्दमध्ये ॥ २ ॥
कुजे चाष्टमे शत्रुपीडाऽङ्गकष्ट व्रणस्योदयं चाङ्गनानां च रोगः।
धनानां विनाशो भवेच्छस्त्रघातस्तथा व्यग्रता गुप्तचिन्ता नरस्य ॥ ३ ॥
निशानाथपुत्रो यदा रन्ध्रसंस्थो नरं मृत्युतुल्यं कफार्त्तिं करोति।
ज्वरादिप्रकोपो भवेन्नेत्रपीडा भयं व्यग्रता हायने तद्दशायाम् ॥ ४ ॥
ज्वरवमनकफार्त्तिर्निधनस्थे सुरेज्ये बहुलकठिनरोगः कर्णयोर्नेत्रयोश्च।
भवति भयमरिभ्यो योषिदङ्गेषु पीडा ब्रह्मकृतबहुपीडा हायनेऽस्मिन्नराणाम् ॥५॥
मृत्युस्थितो मृत्युभयं मनुष्यं शुक्रः करोतीह जनापवादम्।
ज्वरादिपीडामथ भीतिकष्टं नेत्रे च रोगो रिपुभिर्विवादः ॥ ६ ॥
निधनगो निधनं कुरुते शनिर्ज्वरविमर्दकफार्त्तिजनापदः।
नृपभयं धनहानिभयं मृधे भवति तापकरः पवनोदयः ॥ ७ ॥
छिद्रस्थितो मृत्युसमं मनुष्यं राहुस्तथा भूपभयं करोति।
ज्वरातिसारं च कफार्त्तिदोषं विषूचिकां वायुभयं नराणाम् ॥ ८ ॥
सदोदारकर्मा सदोदारशर्मा सदा भाति केतुर्यदा मृत्युभावे।
सदोदारलीलः सदोदारशीलः सदोदारभूषामणिर्मानवानाम् ॥ ९ ॥

इत्यष्टमभावविचारः ॥

## अथ नवम( भाग्य )भावविचारः ।

**भौमेऽब्दपे त्रिनवगे क्रूरायुक्ते बलान्विते ।**
**गुणावहस्तदा मार्गश्चिरं कार्यं स्थिरं ततः ॥ १ ॥**

यदा भौमे = कुजे, अब्दपे = वर्षेशे, त्रिनवगे=३।९ स्थानस्थे, क्रूरायुक्ते = पापयोगवर्जिते, बलान्विते = वीर्ययुक्ते सति, तदा मार्गः=पन्थाः, गुणावहः = शुभप्रदः= जयलाभक्षेमकरः स्यात् । ततस्तस्मात् कार्यं = जीविकादिकृत्यं, चिरं = अधिकसमयपर्यन्तं स्थिरं = स्थायि भवति ॥ १ ॥

भाषा—यदि मङ्गल वर्षेश होकर ३।९ स्थान में हो, पाप ग्रहों से युक्त न हो, बली हो, तो मार्ग चलना शुभप्रद लाभजनक होता है, और कोई भी कार्य अधिक समय तक स्थिर रहता है ॥ १ ॥

**त्रिधर्मस्थोऽब्दपः सूर्यः कम्बूली मार्गसौख्यदः ।**
**अन्यप्रेषणयानं स्यात्स चेन्नाधिकृतो भवेत् ॥ २ ॥**

अब्दपः सूर्यः त्रिधर्मस्थः, ३।९ स्थानस्थितः कम्बूली = कम्बूलयोगकर्त्ता च भवेत्तदा मार्गे = पथि, सौख्यं = लाभजयकुशलादिकं भवति । सः = वर्षेशसूर्यश्चेद-नधिकृतः = पञ्चाधिकारान्यतमाधिकारशून्यः स्यात्तदा अन्यप्रेषणयानं = परपुरुषप्रेरणया गमनं भवेत् ॥ २ ॥

भाषा—वर्षेश सूर्य ३।९ स्थान में रहकर यदि कम्बूलयोग करता हो, तो मार्ग में सुख लाभ को देता है । यदि पञ्चाधिकारियों में वह अधिकारी नहीं हो, तो अन्य पुरुष के भेजने पर परदेश की यात्रा करे ॥ २ ॥

**शुक्रेऽब्दपे त्रिनवगे मार्गे सौख्यं विलोमगे ।**
**अस्ते वा कुगतिः सौम्ये देवयात्रा तथाविधे ॥ ३ ॥**

अब्दपे = वर्षेशे, शुक्रे त्रिनवगे = ३।९ स्थानस्थे, तदा मार्गे सौख्यं = जयलाभकुशलादिकं स्यात् । अथ तादृशे वर्षेशशुक्रे विलोमगे = वक्रिणि, सति, वा अस्ते = सूर्यकराक्रान्ते सति, तदा कुगतिः = क्लेशहानिपराजयप्रदं गमनं भवति । अथ तथाविधे = बलयुक्ते वर्षेशे त्रिनवगे, सौम्ये = बुधे सति देवयात्रा = देवतीर्थदर्शनसञ्जनकरी यात्रा भवति ॥ ३ ॥

भाषा—वर्षेश शुक्र यदि ३।९ स्थान में हो, तो मार्गमें सुख होता है । यदि वर्षेश शुक्र वक्री हो, या अस्तंगत हो, तो मार्गगमन ठीक नहीं होता है । यदि बुध वर्षेश तथा बलवान् भी होकर ३।९ स्थान में हो, तो देव तीर्थ सम्बन्धिनी यात्रा होती है॥३॥

क्रूरार्दिते कुयानं स्याद्गुरावेवं विचिन्तयेत् ।
इत्थशाले लग्नधर्मपत्योर्यात्राऽस्त्यचिंतिता ॥ ४ ॥

यदि तादृशे वर्षपतौ बुधे क्रूरार्दिते=पापपीड़िते सति तदा कुयानं = हानिकृद्गमनं स्यात्। एवं गुरौ वर्षेशे बलयुक्ते त्रिनवगे, पापयोगदृष्टिरहिते सति धर्मयात्रा, अन्यथा कुयात्रा भवति । यदि सर्वत्र योगे लग्नधर्मपत्योः = लग्नेशनवमेशयोरित्थशाले सति तदा अचिन्तिता=अविचारिता, आकस्मिकी यात्रा=परदेशगमनम्, अस्ति=भवति ॥४॥

भाषा—यदि वैसे बुध वर्षेश होकर पाप से पीड़ित हो, तो बुरी यात्रा होती है । इस प्रकार यदि बृहस्पति बली होकर वर्षेश भी होकर ३।९ स्थान में गत हो, पाप से युत दृष्ट नहीं हो, तो धर्मयात्रा होती है । यदि दुर्बल वर्षेश गुरु पाप से पीड़ित होकर ३।९ स्थान में हो तो कुयात्रा होती है । और सब योगों में लग्नेश नवमेश को इत्थशाल होता हो, तो आकस्मिक ( एका एक बिना पहले से विचारी हुई ) यात्रा होती है ॥ ४ ॥

लग्नेशो धर्मपं यच्छन् स्वं महश्चिन्तिताध्वदः ।
एवं लग्नाब्दपोर्योगे मुथहांगपयोरपि ॥ ५ ॥

लग्नेशो धर्मपं = नवमेशं प्रति स्वं = निजं, महस्तेजः, यच्छन् सन् अर्थात् दीप्तांशान्तर्गतो भूत्वा स्थितस्तदा चिन्तिताध्वदः = चिन्तायुक्तं मार्गगमनं स्यात् । एवममुना प्रकारेण लग्नाब्दपोः = लग्नेशवर्षेशयोर्योगे, वा मुथहाङ्गपयोः = मुथहेश-वर्षलग्नेशयोः, योगे = मुथशिले सति चिन्तितं गमनं स्यात् ॥ ५ ॥

भाषा—लग्नेश यदि नवमेश को अपना तेज देता हो, अर्थात् कालांश के अन्दर हो, तो चिन्तित मार्गगमन होता है, अर्थात् रास्ता में फिकिर झंझट हो । एवं यदि लग्नेश वर्षेश को इत्थशाल होता हो, या मुथहेश वर्षलग्नेश को इत्थशाल होता हो, तो मार्ग में चिन्ता होती है ॥ ५ ॥

गुरुस्थाने कुजे धर्मे सद्यात्रा भृत्यवित्तदा ।
ज्ञस्थाने लग्नपो भौमो दृष्टः सद्यानसौख्यदः ॥ ६ ॥

कुजे = भौमे, गुरुस्थाने=जन्मकालिकजीवाक्रान्तराशिस्थिते, तथा धर्मे=वर्षलग्नात् नवमे सति भृत्यवित्तदा=सेवकधनलाभकारिका, सद्यात्रा = शुभयात्रा भवति । वा लग्नपः=लग्नस्वामी, भौमः = कुजः, ज्ञस्थाने=जन्मकालिकबुधाक्रान्तराशिस्थः, स्यात् तथा गुरुणा दृष्टः स्यात्तदा सद्यानसौख्यदः भवतीति ॥ ६ ॥

भाषा—जन्मकालिक बृहस्पति जिस राशि में हो, उस राशि में यदि वर्ष काल में मंगल हो, और वर्षलग्न से नवम स्थान में हो, तो नौकर और धन मिलाने

वाली यात्रा होती है। यदि लग्नेश मङ्गल बुध के स्थान में अर्थात् जन्म कुण्डली में जिस राशि में बुध हो, उस राशि में होकर शुभग्रह से दृष्ट भी हो, तो अच्छे सुख को देने वाली यात्रा होती है ॥ ६ ॥

> स्वस्थानगो वा बलवान् लग्नदर्शी सुयानदः ।
> जन्माधिकारी ज्ञो मन्दस्थाने क्रूरयुतो यदा ॥ ७ ॥
> पन्था रिपोर्भकटकाद्गुरुरध्वेन्दुजीवयोः ।
> धर्मे शनिर्नाधिकारी पन्थानमशुभं वदेत् ॥ ८ ॥

वा बलवान् कुजः, जन्मवर्षकालयोरपि स्वस्थानगः = निजराशिगतः, लग्नदर्शी = वर्षलग्नं पश्यति, वर्षलग्नान्नवमस्थाने च भवेत्तदा सुयानदः = शुभकरगमनफलदः स्यात्। तथा ज्ञः = बुधः, जन्माधिकारी = जन्मलग्नेशो भूत्वा, वर्षे मन्दस्थाने = जन्मकालिकशनिग्रहाक्रान्तराशौ तिष्ठति, क्रूरयुतः = पापग्रहसंयुतश्च यदा भवति तदा रिपोः = शत्रोः, भकटकात् = विरोधविवादकलहात्, पन्था — मार्गगमनं भवेत्। तथा इन्दुजीवयोश्चन्द्रगुर्वोरेकतरो ग्रहः, जन्मकालिकशन्याक्रान्तराशौ नवमे च भवेत् तदा गुरुः = महान् दीर्घतरः, अध्वा = मार्गः स्यात्। तथा यदि नाधिकारी = पञ्चाधिकाररहितः, शनिर्यदि धर्मे = नवमे भवेत्तदा पन्थानम्, अशुभं = हानिकरं वदेत् = कथयेत् ॥ ७–८ ॥

भाषा—यदि बली मंगल जन्म तथा वर्ष काल में भी अपने राशि ( मेष वृश्चिक) में हो, लग्न को देखे, वर्षलग्न से नवमे स्थान में हो, तो अच्छी यात्रा होती है। वैसे बुध यदि जन्मकाल में अधिकारी ( लग्नेश ) होकर वर्षकाल में शनि के स्थान ( अर्थात् जन्मकाल में जहां शनि है उस राशि ) में हो, पापयुत हो, तो शत्रु के कलह से रूठकर परदेश यात्रा करे। और यदि चन्द्रमा या बृहस्पति जन्म कालिक शनि के राशि में हों, नवमें स्थान में हों, तो लम्बी यात्रा होती है। यदि अधिकार रहित शनि नवम स्थान में हो, तो अशुभ ( हानि कर ) यात्रा होती है ॥ ७–८ ॥

> इत्थं गुरौ दूरयात्रा नृपसङ्गस्ततो गुणः ।
> कुजेऽब्दपे नष्टबले स्वजनाद्दूरतो गतिः ॥ ९ ॥

इत्थं = अमुना प्रकारेण, अर्थात् अधिकारहीने नवमस्थानगते च, गुरौ = जीवे सति, दूरयात्रा = अधिकान्तरितप्रदेशगमनं भवेत्, नृपसंगः = राजमिलनं, ततः = संमेलनात्, गुणः = धनलाभादिकश्च भवति। तथा अब्दपे = वर्षेशे, कुजे = भौमे, नष्टबले

सति नवमस्थानस्थिते च सति स्वजनात्=निजपरिचितलोकात्, दूरतः=अधिकदूरे, गतिर्गमनं स्यात् ॥ ९ ॥

भाषा—इस प्रकार यदि अधिकार रहित बृहस्पति नवम स्थान में स्थित हो, तो दूर देश की यात्रा होती है। वहाँ राजा से मिलन उस से लाभ प्रतिष्ठा होती है। ऐसे ही यदि मङ्गल वर्षेश होकर हीनबली और नवमस्थान में स्थित हो, तो अपने परिजन को छोड़ कर दूर देश जाना पड़ता है ॥ ९ ॥

अथ प्रबलविदेशयात्रायोगमाह—

**द्यूनेन्थिहा धर्म इन्दौ सबलेऽध्वा विदेशगः।**
**वर्षेशो बलवान्पापायुतः केन्द्रेऽधिकारवान् ॥ १० ॥**
**अधिकारे गतिः संख्ये सेनापत्येऽपि वा वदेत्।**
**एवं बुधे कुजे जीवयुतेऽर्कान्निर्गते पुनः ॥ ११ ॥**
**परसैन्योपरि गतिर्जयः ख्यातिसुखावहः।**
**जीवान्नवमगे भौमे शुभा यात्रा नृणां भवेत् ॥ १२ ॥**

द्यूनेन्थिहा = सप्तममुथहा भवेत्तथा सबले = बलयुक्ते इन्दौ=चन्द्रे, धर्मे = नवमे तदा विदेशगः=परदेशगः, अध्वा=मार्गः स्यात्।

अथ वर्षेशः = यः कोऽपि ग्रहो वर्षेशो भूत्वा बलवान्, पापायुतः=पापयोगरहितः, केन्द्रे १।४।७।१० स्थितः, तथाऽधिकारवान् = पञ्चाधिकारान्यतमाधिकारयुक्त भवेत् तदा अधिकारे गतिर्गमनं, वा संख्ये=संग्रामे, गतिः=गमनं स्यात्, अपि वा सेनापत्ये=सेनानायकेऽपि गतिः स्यात्। एवं बुधे कुजे च बलयुक्ते, जीवयुते = गुरुसमन्विते अर्कात् = सूर्यात्, निर्गते = कालांशबहिर्गते सति अर्थादस्तंगते न सति, पुनः परसैन्योपरि गतिः=परसैन्यजयार्थं गतिर्गमनं स्यात्। ख्यातिसुखावहः जयः = शत्रुपराजयः स्यात्। अथ जीवात्=गुरुग्रहात्, भौमे=कुजे, नवमगे=नवमस्थानगते सति, नृणां=नराणां यात्रा, शुभा=लाभकारिणी भवति ॥ १०-१२ ॥

भाषा—यदि मुथहा सप्तम स्थान में हो, और सबल चन्द्रमा नवम स्थान में हो, तो परदेश जाना होता है। या वर्षेश कोई भी ग्रह बली हो, पाप से युत दृष्ट नहीं हो और केन्द्र १।४।७।१० में हो, तथा पञ्चाधिकारों में किसी भी अधिकार में हो, तो किसी काम काज के अधिकार में गमन हो। या युद्ध में या सेनाध्यक्ष के पद पर जाना पड़े। इस प्रकार बुध और मङ्गल ये बलवान् हों, गुरु से युक्त हों, सूर्य से दूर

अर्थात् अस्त नहीं हों, तो शत्रुसेना के आक्रमण के लिये जाना पड़े और यश सुख देने वाला जय हो। एवं यदि बृहस्पति से नवम स्थान में मङ्गल हो, तो मनुष्यों की यात्रा अच्छी होती है ॥ १०-१२ ॥

अथ नवमभावस्थितसूर्यादिग्रहफलानि लिख्यन्ते—

धर्मस्थितोऽर्कश्च सहोदराणां पीडाकरः क्लेशवित्तवर्धनश्च ।
धर्मप्रदो राज्ययशःप्रदश्च तद्वर्षमध्ये स्वदशां गतश्चेत् ॥ १ ॥

पुण्योदयं धर्मगतः शशाङ्को भाग्योदयं चार्थसमागमं च ।
तीर्थाटनं भूमिपतेश्च लाभं शुभेक्षितः पुत्रसुखं करोति ॥ २ ॥

धर्मं गते भूमिसुते च वर्षे पुण्योदयो वित्तसमागमश्च ।
भाग्योदयो मानविवर्धनञ्च महाप्रतिष्ठाऽम्बरलब्धिरत्र ॥ ३ ॥

धर्मस्थितः शशिसुतः सुतलाभसौख्यमर्थागमं सततमङ्गलमाशु कुर्यात् ।
भूपाज्जयो भवति कीर्तिविवर्धनं च भाग्योदयो रिपुविनाशनमत्र वर्षे ॥ ४ ॥

वाचस्पतिर्धर्मगतो नराणां करोति धर्मं बहुलं सुखञ्च ।
भाग्योदयं चार्थसमागमं च तीर्थाटनं पुण्यमतिं च कुर्यात् ॥ ५ ॥

धर्मस्थितो धर्मकरः कविः स्यान्नरेन्द्रतुल्यं च नरं करोति ।
सुखप्रदो वाहनभूषणानां गोभूहिरण्याम्बरलाभमाशु ॥ ६ ॥

भाग्योदयो भाग्यगतः शनिश्चेद्भूयोऽर्थदः शत्रुविनाशनश्च ।
कीर्तिश्रियं मानमथापि दत्ते सहोदराणां भयमार्तिदं च ॥ ७ ॥

धर्मस्थितो धर्मविवर्धनोऽगुर्जयं नृपाच्छत्रुविवर्धनं च ।
भाग्योदयं चार्थसमागमं च करोति पीडां पशुबान्धवेषु ॥ ८ ॥

गृहे केतुनाम्नि स्थिते धर्मभागी श्रियो राजराजाधिपो देवमन्त्री ।
नरः कीर्तिकीर्त्या बलिर्दानमानैः कृपाचाकरो धर्मकर्मप्रवृत्तः ॥ ९ ॥

इति नवमभाग्यभावविचारः ।

## अथ दशम(राज-व्यापार)भावविचारः ।

**सबलेऽब्दपतौ खस्थे राज्यार्थसुखकीर्तयः ।**
**स्थानान्तराप्तिरन्यस्मिन्केन्द्रे गृहसुखाप्तयः ॥ १ ॥**

सबले = दशाधिकबलयुक्ते, अब्दपतौ = वर्षेशे, खस्थे=दशमस्थानस्थे सति

राज्यार्थसुखकीर्त्तयः = आधिपत्यानन्दयशोलाभाः स्युः । वा सबले वर्षेशे अन्यस्मिन् केन्द्रे = दशमस्थानेतरकेन्द्रान्यतमस्थाने ( १।४।७ ) भवेत्, तदा स्थानान्तराप्तिः = अन्यस्थानलाभः, गृहसुखाप्तयः = गार्हस्थ्यसुखप्राप्तयः स्युः ॥ १ ॥

भाषा—बलवान् वर्षेश दशम स्थान में हो तो राज लाभ, धन लाभ, यशो लाभ होता है । या सबल वर्षेश दशम को छोड़ कर और केन्द्रस्थान ( १।४।७ ) में हो तो दूसरे स्थान का लाभ, और घर के सुखों की प्राप्ति होती है ॥ १ ॥

इत्थं बली रविर्भूस्थः पूर्वार्जितपदाप्तिकृत् ।
एकादशेऽस्मिन्सख्यं स्यान्नृपामात्यगणोत्तमैः ॥ २ ॥

इत्थममुना प्रकारेण बली वर्षेशो रविर्भूस्थः=चतुर्थस्थानगतः स्यात्तदा पूर्वार्जित-पदाप्तिकृत् = प्रागर्जितस्थानलाभकरः भवति । वा बलिनि वर्षेशेऽस्मिन्=सूर्ये, एकादशे विद्यमाने सति नृपामात्यगणोत्तमैः=भूपैः मन्त्रिजनप्रधानैश्च, सख्यं=मैत्री स्यात् ॥

भाषा—इस प्रकार बलवान् सूर्य वर्षेश होकर चौथे स्थान में हो, तो पूर्व के उपार्जित स्थान की प्राप्ति होती है। या बली वर्षेश सूर्य एकादशस्थान में हो, तो राजा से अथवा उनके मन्त्रियों से मित्रता होती है ॥ २ ॥

रविस्थानेन्थिहा लग्ने खे वा राज्याप्तिसौख्यदा ।
नीचेऽर्कः पापसंयुक्तो भूपाद्बन्धवधं दिशेत् ॥ ३ ॥

रविस्थानेन्थिहा = रव्याक्रान्तराशौ स्थिता मुथहा, जन्मवर्षयोरप्येकराशावेवार्कस्य स्थितत्वात्प्राचीनटीकायां 'जन्मकालिकसूर्याधिष्ठितराशौ' इति व्यर्थमेवेति विज्ञेयम् । वा लग्ने = वर्षलग्ने, वा खे = दशमे भवेत्तदा राज्याप्तिसौख्यदा = राज्यलाभसुखदायिनी स्यात् । अथवा अर्कः = सूर्यः पापसंयुक्तः नीचे = तुलाराशौ स्थितस्तदा भूपाद्बन्धवधं कारागारनिवासं वा प्राणनाशं दिशेत् = कथयेत् ॥ ३ ॥

भाषा—यदि मुथहा रवियुक्त हो, वर लग्न में दशम में हो, तो राज्यलाभ सुख को देती है । यदि सूर्य पापयुक्त होकर नीच ( तुला ) राशि में हो, तो भी राजा से बन्धन, प्राणदण्ड कहना । जिस का जन्म कार्तिक में है उसी के लिये यह योग हो सकता है। रवि के उच्च को फलित में मेषराशि ही में स्थिर माना है ॥ ३ ॥

सिंहे रविर्बली खस्थः स्थानलाभो नृपाश्रयः ।
स्थानान्तराधिकाराप्तिरिन्दुरारपदे बली ॥ ४ ॥

रविः=सूर्यः, सिंहे=सिंहराशौ वर्त्तमानः, बली भवन् खस्थः=वर्षलग्नाद्दशमस्थानगतः । अर्थाद्भाद्रपदमासे मध्याह्ने वर्षप्रवेशस्तत्र वृश्चिकलग्ने सति सिंहस्थः

सूर्यो दशमस्थो भवति। तदा स्थानलाभः, नृपाश्रयः = राजाश्रयश्च भवति। अथवा बली इन्दुश्चन्द्रः आरपदे = जन्मकालिककुजाश्रितराशौ भवेत् तदा स्थानान्तराधिकाराप्तिः = अन्यस्थानप्रभुत्वप्राप्तिः स्यात् ॥ ४ ॥

भाषा—सूर्य बली होकर सिंहराशि में वर्षलग्न से दशमस्थान में हो, तो स्थान का लाभ राजा का आश्रय हो। या बली चन्द्रमा, जन्मकालिक मङ्गल के आश्रित राशि में हो, तो दूसरे स्थान का लाभ होता है ॥ ४ ॥

खेशलग्नेशवर्षेशेत्थशालो राज्यदायकः।
वर्षेशे राज्यसहमेऽर्केत्थशाले महानृपः ॥ ५ ॥

खेशः = दशमेशः, लग्नेशः = वर्षलग्नेशः, वर्षेशश्चैतेषां यदीत्थशालस्तदा राज्यदायकः भवति। वा वर्षेशे राज्यसहमे स्थितेऽर्केत्थशाले=सूर्येण इत्थशालयोगे सति महानृपः = विशेषधनवान् राजा भवेत् ॥ ५ ॥

भाषा—दशमेश, लग्नेश, वर्षेश इन सब ग्रहों में यदि इत्थशाल होता हो, तो राज्य दायक योग होता है। अथवा वर्षेश राज्य सहम में हो सूर्य से इत्थशाल योग करता हो, तो महाराजा होता है ॥ ५ ॥

शनिस्थाने कुजः पश्यन्मुथहां पापकर्मतः।
नृपभीतिं वित्तनाशं दद्याद्दशमगो यदि ॥ ६ ॥

कुजः = मङ्गलः, शनिस्थाने = जन्मकालिकशनिराशिस्थः, वर्षलग्नाद् दशमस्थानगतः, मुथहां पश्यन् सन् पापकर्मतः = दुराचारतः, नृपभीतिं = राजभयं, वित्तनाशं = धननाशं दद्यात् ॥ ६ ॥

भाषा—यदि मङ्गल जन्मकालिक शनि के राशि में रहकर वर्षलग्न से दशमस्थान में हो, और मुथहा को देखे, तो पापकर्म दुराचार व्यभिचार चोरी डकैती करने से राजदण्ड और धननाश होता है ॥ ६ ॥

ईदृशे त्रिनवस्थेऽस्मिन्दग्धनष्टेऽघसंचयः।
मन्दोऽब्दपोऽधिकारी त्रिधर्मगो धर्मवृद्धिदः ॥ ७ ॥

ईदृशे = जन्मशनिराशिगते भौमे त्रिनवस्थे = ३।९ स्थानगते, दग्धनष्टे=अस्तगते पापयुतदृष्टे, हीनबले च सति, अघसञ्चयः = पापवृद्धिः स्यात्। वा मन्दः = शनिः, अधिकारी = पञ्चाधिकारान्यतमाधिकारवान् भूत्वा, अब्दपः = वर्षेशः त्रिधर्मगः = ३।९ स्थानस्थितस्तदा धर्मवृद्धिदः = पुण्यसञ्चयकरः, भवति ॥ ७ ॥

भाषा—ऐसे ही जन्मकालिक शनि के राशि में स्थित मङ्गल ३।९ स्थान में हो

अस्तंगत पापयुत दृष्ट हो, बलहीन हो, तो पाप की वृद्धि होती है। या शनि पञ्चाधिकारियों में अधिकारी होकर वर्षेश हो, ३।९ स्थान में हो, तो धर्म की वृद्धि होती है॥७॥

तस्मिन्दग्धे विनष्टे च पापकृद्धर्मनिन्दकः।
ईदृशेदृक्फलं सूर्ये गुरावित्थं नयार्थभाक् ॥ ८ ॥

तस्मिन् वर्षेशे शनौ दग्धे=अस्तंगते, विनष्टे = नष्टबले सति पापकृत् = निन्दितकर्मकरः, धर्मनिन्दकः = नास्तिकः, भवति । ईदृशि नष्टबले पापयुतदृष्टे सूर्ये वर्षेशे सति ईदृक् फलं = पूर्वोक्तफलं = ( पापकृद्धर्मनिन्दकः ) इति भवति । इत्थमनेना प्रकारेण गुरौ सति नयार्थभाक् विनयधनयुक्तः स्यात् ॥ ८ ॥

भाषा—यदि वर्षेश शनि अस्त हो, निर्बल हो, पापयुक्त हो, तो पाप करने वाला, नास्तिक होता है। यदि वैसे क्षीणबल पापयुत दृष्ट हो कर सूर्य वर्षेश हो, तो पहले के समान हो अर्थात् पाप करने वाला, धर्म निन्दक होता है । यदि बृहस्पति ऐसा हो, तो नीति से धन को पाता है ॥ ८ ॥

तत्रस्था मुथहा पुण्यागमं पापं खलाश्रयात्।
सूतौ खेशे रवौ खस्थे वर्षे मुथशिलं यदि ॥ ९ ॥
लग्नाधिपेन राज्याप्तिरुक्ता वीर्यानुसारतः।
धर्मकर्माधिपौ दग्धौ धर्मराज्यक्षयावहौ ॥ १० ॥

मुथहा यदि तत्रस्था=तृतीयनवमस्थानगता स्यात्तदा शुभाश्रयात् पुण्यागमं, खलाश्रयात्=पापाश्रयात् पापं करोति । तथा सूतौ जन्मकाले, खेशे = दशमेशे, रवौ सूर्ये वर्षकाले खस्थे=दशमस्थे सति, तथा लग्नाधिपेन यदि तस्य मुथशिलं स्यात्तदा वीर्यानुसारतः = लग्नेशदशमेशयोर्बलानुसारतः, राज्याप्तिः = राज्यलाभो भवति । अर्थात् जन्मकाले वृश्चिकलग्नं स्यात् तदा दशमसिंहराशेरधिपः सूर्यः स्यात्, वर्षे दशमस्थाने स्यात्तत्र लग्नकार्येशयोरित्थशाले सति राज्यलाभः स्यात्। अथ धर्मकर्माधिपौ = नवमेशदशमेशौ, दग्धौ = अस्तंगतौ स्यातां तदा धर्मराज्यक्षयावहौ = धर्मक्षयराज्यनाशकरौ भवतः ॥ ९-१० ॥

भाषा—यदि मुथहा ३।९ स्थानों में हो तो शुभ के आश्रय से पुण्य का आगम पाप के आश्रय से पाप का आगम होता है । जन्म काल में सूर्य दशमेश होकर अर्थात् जन्मलग्न वृश्चिक हो, वर्षकाल में वर्षलग्न से दशम में हो और लग्नेश से इत्थशाल योग करता हो तो बलके अनुसार राज्य का लाभ होता है । और यदि धर्मेश कर्मेश ये दोनों अस्तंगत हों, तो धर्मक्षय राज्यनाश होता है ॥ ९-१० ॥

अथ दशमभावस्थितसकलग्रहफलानि लिख्यन्ते—

यदा दिनेशो गगनाश्रितः स्याद्राज्यार्थदो मानविवर्धनं च ।
हिरण्यभूम्याम्बरलाभकारी चतुष्पदाङ्गेषु रुजो विवृद्धिः ॥ १ ॥

कर्मोदयं प्रकुरुते गगने शशाङ्को द्रव्यागमं नृपकुलाद्रिपुपक्षनाशम् ।
व्यापारतो बहुसुखं महतीं प्रतिष्ठां कीर्त्तिं तथा धनयुतां प्रकरोति वर्षे ॥ २ ॥

कर्मस्थितो भूतनयोऽब्दमध्ये कर्मोदयं चार्थसमागमं च ।
राज्यार्थलाभं च महाप्रतिष्ठां करोति मानं पशुघातनं च ॥ ३ ॥

गगनगः शशिजो यदि हायने भवति वाहनसौख्यकरस्तदा ।
सुतविवृद्धिधनार्थसमागमो विलसनं च तथा नृपतेर्जयम् ॥ ४ ॥

व्योम्नि स्थितश्चेत् सुरराजमन्त्री हेमाम्बराप्तिं च जयं करोति ।
भूपप्रसादात् क्षितिगोधनाप्तिं स्याद्धायने शत्रुविनाशनं च ॥ ५ ॥

गगनगे भृगुनन्दनसंज्ञके नृपसमो मनुजोऽस्य महाजयः ।
भवति गोधनधान्यसमागमो बहुसुखं कृषिवाहनयोः सदा ॥ ६ ॥

गगनगः कृषिहानिकरः शनिः पशुधनं स्वजनोदरपीडनम् ।
नृपसमं मनुजं च महाधनं प्रकुरुते क्रयविक्रयलाभकृत् ॥ ७ ॥

सिंहीसुतो दशमगः क्रयविक्रयेषु लाभं नरं नृपसमं प्रकरोति वर्षे ।
भूपाज्जयं सततमङ्गलमाशु कुर्यात्कीर्त्तिं श्रियं भवति वाहनलाभकारी ॥ ८ ॥

नभस्थो भवेद्यस्य मर्त्यस्य केतुर्नभस्थोपमेयः प्रभावो भुवि स्यात् ।
गडुं डिण्डिमाडम्बरैः शत्रवोऽपि रणप्राङ्गणे तस्य गायन्ति कीर्त्तिम् ॥ ९ ॥

इति दशमराजव्यापारभावविचारः ।

## अथैकादश( आय )भावविचारः ।

**अब्दपे ज्ञेऽर्थगे लाभो वाणिज्याच्छुभदृग्युते ।**
**सेन्थिहेऽस्मिँल्लग्नगते लाभः पठनलेखनात् ॥ १ ॥**

अब्दपे=वर्षेशे, ज्ञे=बुधे, अर्थगे=धनगे, ( वर्षलग्नाद्द्वितीयस्थानगते ) शुभदृग्युते=शुभग्रहेण दृष्टे युते, तदा वाणिज्यात्=व्यापारात्, लाभः स्यात् । वा सेन्थिहे=मुथहायुक्ते वर्षेशे बुधे लग्नगते शुभग्रहदृष्टियोगे च सति पठनलेखनात् धनलाभः स्यात् ॥ १ ॥

भाषा—वर्षेश होकर बुध दूसरे स्थान में हो, शुभग्रह से युत दृष्ट हो, तो व्यापार से लाभ हो। वा मुथहा युत बुध वर्षेश हो, और लग्न में स्थित हो तो पढ़ने लिखने से लाभ होता है ॥ १ ॥

अस्मिन्षष्ठाष्टान्त्यगते सक्रूरे नीचकर्मकृत्।
क्रूरेक्षणे न वा लाभोऽस्तंगते लिखनादितः ॥ २ ॥

अस्मिन्=वर्षेशे बुधे वर्षलग्नात् षष्ठाष्टान्त्य (६।८।१२) गते, सक्रूरे=रविकुजशनिक्षीणचन्द्रयुते तदा नीचकर्मकृत्=स्वनीचजातिकार्यकरः स्यात्। अथ तादृशे वर्षेशबुधे क्रूरेक्षणे=पापदृष्टे सति लाभः न भवति। वा तादृशे बुधे अस्तंगते सति लिखनादितः=लेखकर्मतः, लाभः न भवेदिति ॥ २ ॥

भाषा—वर्षेश बुध यदि ६।८।१२ इन स्थानों में हो पाप से युत हो, तो छोटा काम करता है। और वैसे ही वर्षेश बुध पाप ग्रह से दृष्ट हो तो लाभ नहीं होता है, और वैसे ही वर्षेश बुध यदि अस्तंगत हो तो लिखने पढ़ने से लाभ नहीं होता है ॥२॥

जीवेऽब्दपे क्रूरहते लग्ने हानिर्भयं नृपात्।
अस्मिन्नधिकृते द्यूने व्यवहाराद्धनागमः ॥ ३ ॥

जीवे=गुरौ, अब्दपे=वर्षेशे, क्रूरहते=पापपीडिते, लग्ने = वर्षलग्नस्थाने सति तदा हानिः = धनहानिः। नृपात् = राजतः भयम्। अस्मिन् = जीवे, अधिकृते = पञ्चाधिकारान्यतमाधिकारशालिनि, द्यूने = वर्षलग्नात्सप्तमस्थे तदा व्यवहारात्=क्रयविक्रयाल्लाभः स्यात् ॥ ३ ॥

भाषा—बृहस्पति वर्षेश होकर पापग्रहों से पीड़ित हो, और वर्षलग्न में हो, तो धन की हानि होती है। राजा से भय होता है। और यदि ऐसा बृहस्पति पञ्चाधिकारियों में अधिकारी हो सप्तम में हो तो खरीद बिक्री से धनलाभ होता है ॥ ३ ॥

लग्नायेशेत्थशाले स्याल्लाभः स्वजनगौरवम्।
सर्वेऽपि लाभे वित्ताप्त्यै सबला निर्बला न तु ॥ ४ ॥

लग्नायेशेत्थशाले = वर्षलग्नेशलाभेशयोरित्थशाले सति लाभः=धनलाभः स्यात् स्वजनगौरवं स्यात्। सर्वे शुभाः पापा वा सबला ग्रहा लाभे स्थितास्तदा वित्ताप्त्यै भवन्ति। निर्बला ये केचन ग्रहा लाभे स्थितास्तदा वित्ताप्त्यै न तु भवन्ति ॥ ४ ॥

भाषा—लग्नेश और लाभेश को इत्थशाल होता हो, तो धन लाभ अपने परिजनों में श्रेष्ठता होती है। लाभ (११) स्थान में बलवान् सब शुभग्रह या बलवान् सब पापग्रह हो, तो धनलाभ ही के लिये होते हैं। और दुर्बल शुभग्रह या पापग्रह लाभ (११) में हो, तो हानि ही के लिये होते हैं ॥ ४ ॥

अथ निखातद्रव्यप्राप्तियोगमाह—

**सवीर्यो ज्ञः समुथहो लग्नेऽर्थसद्मे शुभाः ।**
**तदा निखातद्रव्यस्य लाभः पापदृशा न तु ॥ ५ ॥**

ज्ञः = बुधः, सवीर्यः=सबलः, समुथहः=मुथहासहितः लग्ने = वर्षलग्ने भवेत्, शुभाः=शुभग्रहाः, अर्थसद्मे=धनसद्मे स्युस्तदा निखातद्रव्यस्य=गर्त्तनिक्षिप्तद्रव्यस्य लाभः स्यात् । पापदृशा पूर्वोक्तयोगकरे ग्रहे पापदृष्टया दृष्टे न तु लाभः स्यादिति ॥५॥

**भाषा—बली बुधग्रह मुथहा से युक्त होकर यदि लग्न में हो, और शुभग्रह सब अर्थसद्म में हों, तो गाड़ी हुई दौलत मिलती है । यदि उन योगकारक ग्रहों के ऊपर पापग्रहों की दृष्टि पड़ती हो, तो लाभ नहीं होता है ॥ ५ ॥**

अथायभावस्थितरव्यादिग्रहफलानि लिख्यन्ते—

रविर्लाभगो लाभकारी नृपात् स्याद्धनाप्तिश्च धान्याम्बरं वै हिरण्यम् ।
विलासादि सौख्यं रिपूणां विनाशं सुताङ्गेषु पीडा भवेत्तद्दशायाम् ॥ १ ॥

रिपोर्नाशनं लाभसंस्थे शशाङ्के बहुद्रव्यलाभं क्रये विक्रये च ।
नृपात् सौख्यलाभः सुतस्यागमश्च प्रतिष्ठाविवृद्धिर्भवेद्धायनेऽस्मिन् ॥ २ ॥

अवनितनयलाभे राज्यलाभोऽर्थलाभो भवति रिपुविनाशो मित्रपक्षाजयश्च ।
हयभवनहिरण्यं प्राप्यते चाम्बराणि तनयसुखविनाशो जायते हायनेऽस्मिन् ॥३॥

लाभस्थितः शशिसुतो जयसद्मदश्च धान्याम्बराणि बहुलानि करोत्यवश्यम् ।
कान्तेर्विवर्धनमथार्त्तिविनाशनञ्च स्याद्धायने पशुवित्तर्धनमत्र लाभः ॥ ४ ॥

जयो मानवानां सुरेज्ये च लाभे भवेद्वाहयानां गजानां च लाभः ।
सुतस्योदयो जायते शत्रुनाशः प्रतिष्ठाविवृद्धिर्नृपाच्चापि सौख्यम् ॥ ५ ॥

कविर्लाभगो लाभकृत् स्वर्णदः स्याज्जयं मानवानां करोतीह वर्षे ।
सुतानां विवृद्धिः सुखं राजपक्षाद्रिपूणां विनाशो तथा मित्रवृद्धिः ॥ ६ ॥

लाभस्थितो भास्करसूनुरत्र हिरण्यगोभूमिमथाश्वलाभम् ।
अर्थागमं कीर्त्तिविवर्धनं च सन्तानपीडां प्रकरोति वर्षे ॥ ७ ॥

लाभस्थितश्चेत् खलु सैंहिकेयो नरं नरेन्द्रेण समं करोति ।
हिरण्यगोभूधनसञ्चयश्च शत्रुक्षयं पुत्रभयन्तथैव ॥ ८ ॥

यदैकादशे केतुरेति प्रतिष्ठां नरः सुन्दरं मन्दिरं भूरिभोगान् ।
सदोदारशृङ्गारशास्त्रप्रवीणः सुधुर्यो धनुर्धारिणां मानकीर्त्या ॥ ९ ॥

इति एकादशाऽऽयभावविचारः ।

## अथ द्वादश(व्यय)भावविचारः ।

लग्नाब्दपौ हतबलौ व्ययषण्मृतिस्थौ यद्राशिगौ तदनुसारि फलं विचिन्त्यम्।
षष्ठेऽब्दपे भृगुसुतेऽथ विनष्टवीर्ये दृष्टे खलैः क्षुतदृशा द्विपदर्क्षसंस्थे ॥१॥
भृत्यक्षतिस्तुरगहा चतुरंघ्रिभस्थेऽन्यस्मिन्नपीदमुदितं फलमब्दनाथे ।
खस्थे कुजे शनियुते तुरगादिनाशः स्याद्व्याकुलत्वमशुभोपहते व्यये वा॥२॥

लग्नाब्दपौ = वर्षलग्नेशवर्षेशौ, हतबलौ=नष्टबलौ, व्ययषण्मृतिस्थौ=द्वादशषष्ठाष्टमगतौ यद्राशिगौ=यादृशराशिगतौ तदनुसारि फलं विचिन्त्यम् । यथा लग्नेशवर्षेशौ षष्ठगतौ चतुष्पदराशिगतौ तदा चतुष्पदस्य नाशः। यदि जलचरराशिगतौ तदा जलचरजीवनाशः । यदि नरराशिगतौ तदाऽऽश्रितसेवकजनादेर्नाशः । एवं फलमूह्यम् । अथ विनष्टवीर्येऽब्दपे=वर्षेशे भृगुसुते = शुक्रे, षष्ठे = वर्षलग्नात्षष्ठस्थानस्थे, खलैः = पापैः, क्षुतदृशा=१।४।७।१० दृष्टे, तत्र द्विपदर्क्षसंस्थे=अर्थात् लग्नात् षष्ठो राशिर्नरराशिः स्यात्तत्र हीनबलो वर्षेशः शुक्रः पापदृष्टश्च यदि वर्त्तते,तदा भृत्यक्षतिः = सेवकजननाशः । अथ तादृशे वर्षेशे चतुरङ्घ्रिभस्थे = चतुष्पदराशिगते षष्ठगते च सति तुरगहा = घोटकनाशः स्यात् । अन्यस्मिन्नपि स्थाने अब्दनाथे सति इदमीदृशं फलमुदितम् । शनियुते=वर्षेशे, कुजे=मङ्गले खस्थे सति तुरगादिनाशः = अश्वादीनां विनाशः स्यात् । अथ सशनौ कुजे वर्षेशे अशुभोपहते=पापहते, व्यये=द्वादशे सति व्याकुलत्वं=घोटकादीनां विशेषखिन्नत्वं स्यात् ॥ १-२ ॥

भाषा—लग्नेश और वर्षेश हीन बली होकर १२।६।८ स्थानों में हों, तो जैसे राशि में गत हों, उसी के अनुसार फल समझना चाहिये। जैसे उक्त स्थान में चतुष्पदराशि पड़े, तो चौपाइयों का नाश, ऐसे द्विपदराशि में हो, तो आश्रित मनुष्य का नाश, जलचर राशि उक्त स्थान में हो, तो जलचर जीव का नाश होता है। इस प्रकार फल समझना । यदि नष्टबल वर्षेश शुक्र षष्ठस्थान चतुष्पद राशि में हो और पापग्रहों से क्षुत (१।४।७।१०) दृष्टि से देखा जाय, तो घोड़ा का नाश हो । ऐसे उक्त योग में छठे स्थान में और राशियों का भी फल सोचना चाहिये । शनियुत मंगल यदि दशम स्थान में हो, तो घोड़ों का नाश होता है। वहाँ यदि पापग्रहों से हत ( युत दृष्ट ) शनिकुज द्वादश स्थान में हों, तो घोड़ा आदियों की खिन्नता व्याकुलता होती है ॥ १-२ ॥

षष्ठे रवौ खलहते चतुरंघ्रिभस्थे भृत्यैः समं कलिरथाष्टमरिःफगेऽपि ।
चन्द्रेऽब्दपे बलयुते रिपुरिःफसंस्थे भूवासनद्रुमजलाशयनिर्मितिश्च ॥३॥

षष्ठे = षष्ठस्थानस्थिते, खलहते = पापपीडिते, चतुरंघ्रिभस्थे = चतुष्पदराशिगते रवौ वर्षेशे सति तथाऽष्टमरिःफगे सति, भृत्यैः = सेवकैः समं = सह, कलिः = कलहः स्यात् । वा बलयुते = सबले, अब्दपे = वर्षेशे चन्द्रे रिपुरिःफसंस्थे सति भूवासनद्रुमजलाशयनिर्मितिः = भूवासनं=नवीनभूदेशे निवसनं, द्रुमाणां रोपणं जलाशयस्य च निर्मितिः = निर्माणकरणं च भवति ॥ ३ ॥

भाषा—यदि सूर्य वर्षेश होकर वर्षलग्न से छठे स्थान में हों और पापों से युत दृष्ट हों चतुष्पद ( मेष, वृष, सिंह धनु के उत्तरार्ध, मकर के पूर्वार्ध ) राशियों में हो, अथवा ८।१२ स्थान में हों, तो नौकरों से झगड़ा हो। या चन्द्रमा बलयुक्त होकर वर्षेश हो, छठे बारहवें स्थान में हो, तो नयी जमीन में बसे, पेड़ लगावे, पोखर इनारा बनवावे ॥ ३ ॥

स्वर्क्षोच्चगे कर्मणि सूर्यपुत्रे नैरुज्यमर्थाधिगमश्च जीवे ।
सूर्ये नृपाद्बाहुबलात्कुजेऽर्थो बुधे भिषग्ज्यौतिषकाव्यशिल्पैः ॥४॥

सूर्यपुत्रे = शनौ, स्वर्क्षोच्चगे = स्वराशौ ( मकरे कुम्भे वा ) स्वोच्चे ( तुलाराशि ) गते, तथा कर्मणि = वर्षलग्नाद्दशमस्थे सति, नैरुज्यम्—आरोग्यं, अर्थाधिगमः = धनलाभश्च भवति । एवं जीवे = गुरौ फलं विज्ञेयम् । अथ वर्षेशे सूर्ये सिंहे दशमस्थे सति तदा नृपाद्राज्ञः सकाशात् धनागमः स्यात्, एवं वर्षेशे कुजे मेषवृश्चिकान्यतमराशिगते दशमस्थे सति बाहुबलादर्थागमः स्यात् । एवं बुधे वर्षेशे कन्यामिथुनयोरेकतरस्थे दशमस्थे च सति भिषग्ज्यौतिषकाव्यशिल्पैः=वैद्यक—ज्यौतिषकवित्वशिल्पकलादिभिः, धनागमः स्यात् ॥ ४ ॥

भाषा—शनि वर्षेश होकर अपने राशि मकर कुम्भ में या उच्च ( तुला ) में हों और वर्षलग्न से दशम में हों, तो आरोग्य और धनागम होता है। ऐसे ही बृहस्पति वर्षेश होकर अपने राशि ( धनु मीन ) उच्च ( कर्क ) में हों, तो नैरुज्य अर्थागम यही फल होता है। सूर्य यदि वर्षेश होकर सिंह में मेष में हों, तो और वर्षलग्न से दशम में हों, तो राजा से धनागम होता है। और मङ्गल वर्षेश होकर मेष या वृश्चिक राशि में हों और दशम स्थान में हों, तो अपने बाहुबल से धनागम हो और यदि बुध वर्षेश होकर मिथुन कन्या में हों, और वर्षलग्न से दशम स्थान में पड़े तो वैद्यक ज्योतिष, कविता और शिल्प से धनागम हो ॥ ४ ॥

मन्देऽब्दपे गतबले नैराश्यं दौस्थ्यमादिशेत् ।
सूर्येऽब्दपे शशिस्थाने मन्देऽब्दजनुषोर्हते ॥ ५ ॥

सर्वकर्मसु वैकल्यं वक्रेऽस्ते च तथा पुनः।
कर्मकर्मेशसहमनाथाः शनियुतेक्षिताः ॥ ६ ॥

मन्दे=शनौ, गतबले=निर्बले, दशमस्थे सति नैराश्यं=आशाहीनत्वं, दौस्थ्यं=स्थितिशून्यत्वं, चादिशेत्=कथयेत्। एवं सूर्ये गतबले वर्षेशे च सति, शशिस्थाने=जन्मकालिकचन्द्राश्रितराशिस्थे, मन्दे=शनौ, अब्दजनुषोः=वर्षजन्मकालयोर्मध्येऽपि, हते=पापपीडिते सति, सर्वकर्मसु=कार्यमात्रेषु, वैकल्यं=बुद्धिदौर्बल्यं कथयेत्। तथा तादृशे शनौ वक्रेऽस्ते च सति तथैव फलं वाच्यम्। अथवा कर्मकर्मेशसहमनाथाः=दशमभाव-दशमेश-कर्मसहमेश्वराः यत्र कुत्रचित् स्थिताः शनियुतेक्षितास्तदा सर्वकर्मसु वैकल्यं=अपटुत्वं, वाच्यमिति ॥ ५-६ ॥

भाषा—हीन बली शनि वर्षेश होकर दशमस्थान में हो, तो बुरी हालत में पड़े। यदि हीनबली सूर्य वर्षेश होकर जन्मकुण्डली के चन्द्रराशि में हो और शनि जन्म काल और वर्षकाल में भी पापग्रहों से पीड़ित हो, तो सब कामों में अपटुता होती है। अथवा शनिग्रह वक्री हो, या अस्त हो तो भी वैसा ही फल कहना। यदि दशम भाव दशमभावेश तथा कर्मसहम ये सब शनि से युत दृष्ट हो तो वैसा ही फल कहना ५-६

षडष्टव्ययगेऽब्देशे कर्मेशे च बलोज्झिते।
सूतावब्दे च न शुभं तत्राऽब्दे मृतिपे तथा ॥ ७ ॥

अब्देशे=वर्षेशे, षडष्टव्ययगे=६।८।१२ एतत्स्थानस्थे, कर्मेशे=दशमेशे च बलोज्झिते=बलहीने तथा सूतौ=जन्मनि, अब्दे=वर्षकाले च एवं योगे सति शुभं=उत्तमं फलं न भवति। तत्र अब्दे=वर्षप्रवेशसमये, मृतिपे=अष्टमेशे निर्बले षडष्टव्ययगे च सति तथा फलं (अशुभं) भवति ॥ ७ ॥

भाषा—वर्षेश वर्षलग्नसे ६।८।१२ इन स्थानों में हो, जन्मकाल और वर्षकाल में भी (दशमेश) बलहीन हो, तो शुभ नहीं होता है। अथवा वर्ष काल में अष्टमेश निर्बल हो, और ६।८।१२ इन स्थानों में हो, तो शुभ नहीं होता है ॥ ७ ॥

यत्र भावे शुभफलो दुष्टो वा जन्मनि ग्रहः।
वर्षे तद्भावगस्तादृक् तत्फलं यच्छति ध्रुवम् ॥ ८ ॥

जन्मनि=जन्मकाले शुभफलः=शुभफलदाता, वा दुष्टः=अनिष्टफलदाता ग्रहः यत्र=यस्मिन् भावे भवेत्, वर्षे=वर्षकाले यदि स ग्रहस्तद्भावगस्तदा ध्रुवमवश्यं तदिष्टमनिष्टं वा यच्छति=ददाति ॥ ८ ॥

भाषा—जन्मकाल में अच्छा या बुरा फल को देने वाला ग्रह जिस स्थान में हो उसी स्थान में यदि वर्षकाल में हो तो निश्चय वह अच्छा या बुरा फल देता ही है ॥८॥

**ये जन्मनि स्युः सबला विवीर्या वर्षे शुभं प्राक्चरमे त्वनिष्टम् ।**
**दद्युर्विलोमं विपरीततायां तुल्यं फलं स्यादुभयत्र साम्ये ॥ ९ ॥**

ये ग्रहाः जन्मनि सबलाः स्युर्वर्षे = वर्षकाले त एव यदि विवीर्याः = बलहीनाः भवेयुस्तदा प्राक् = पूर्वं, शुभं = शुभफलम् , चरमे = अन्ते, अनिष्टं = अशुभं फलं दद्युः । अथ विपरीततायां=उक्तविलोमत्वे, अर्थात् जन्मनि विबलाः वर्षे सबलास्तदा प्राक् अशुभम्, परतः शुभं वाच्यम् । उभयत्र=जन्मनि, वर्षकाले च साम्ये=समत्वे सति, अर्थात् जन्मनि वर्षे च सबला ग्रहा उभयत्र शुभमेव । तथा जन्मनि वर्षे च दुर्बला ये ते उभयत्र अनिष्टफलमेव दद्युरिति ॥ ९ ॥

भाषा—जो ग्रह जन्म काल में सबल हों, किन्तु वर्षकाल में दुर्बल हों, तो पहले शुभफल, पीछे अशुभफल को देते हैं। जो जन्मकाल में दुर्बल हों वेही वर्षकाल में यदि सबल हों, तो पहले अशुभफल पीछे शुभ फल देते हैं। यदि जन्मकाल और वर्ष काल में भी सबल ही हों, तो शुभ फल ही दोनों समय में देते हैं। यदि दोनों समयमें निर्बल ही हों, तो दोनों समय में भी अशुभ ही देते हैं ॥ ९ ॥

अथ व्ययभावस्थसूर्यादिग्रहफलम् ।

व्ययस्थितश्चेत् खलु भास्करोऽब्दे जनविग्रहोद्वेगकरोऽङ्घ्रिरोगकृत् ।
व्ययं च शीर्षोदरनेत्रपीडां करोति चिन्तां रिपुभिर्विनाशम् ॥ १ ॥
शशाङ्को व्ययस्थोऽरितः पीडनं स्यात्तथा सद्व्ययं नेत्ररोगं करोति ।
विवादं जनानां महाकष्टसाध्यं कफार्त्तिं च गुल्मोदयं तत्र वर्षे ॥ २ ॥
व्ययश्चागदो भूमिपुत्रे व्ययस्थे भवेन्नेत्रपीडाऽथ कर्णे विकारः ।
शिरोऽर्तिर्जनानां विरोधस्तथा स्यात् कलत्राङ्गपीडा भवेदत्र वर्षे ॥ ३ ॥
बुधे द्वादशस्थे रिपूणां विवादो व्ययो गुप्तचिन्ता च कर्णे विकारः ।
दशा नेष्टकारी भवेन्नेत्रपीडा कफार्तिश्च कष्टं तथा हायनेऽस्मिन् ॥ ४ ॥
रिःफस्थितः सुरगुरुर्बहुलव्ययकृच्छत्रुप्रवादनृपभीतिकरो हि वर्षे ।
नेत्राङ्गपीडनकफार्त्तिजनप्रवादं हानिर्भयं भवति शोकविकारकारी ॥ ५ ॥
व्ययगतभृगुजे स्यात् सद्व्यये वातपीडा रिपुजनपरिवादो नेत्रयोश्चापि रोगः ।
भवति रिपुभयं वै शोकमोहादिकष्टं ज्वरवमनविकारं मृत्युतुल्यं भयं च ॥ ६ ॥
व्ययस्थानगे हायने सूर्यपुत्रे व्ययो विक्रये क्लेशचिन्ता च कष्टम् ।

रिपूणां विकाराद्भवेदर्थनाशं शिरोऽत्यक्षिपीडा तथा हायनेऽस्मिन् ॥ ७ ॥

स्थानभ्रंशो भवति नियमान्मानवानां व्ययस्थः
सिंहीपुत्रो रिपुभयमथो भृत्यमृत्युं विधत्ते ।
शीर्षे कर्णे व्यथनमुदरे नेत्ररोगं नराणां
लक्ष्मीहानिः स्वजनकलहः कामिनीनां प्रपीडा ॥ ८ ॥

यदा याति केतुर्व्यये मानवोऽसत्प्रयोगाद्विधत्ते व्ययं द्रव्यराशेः ।
नृपाणां वरः सङ्गरे कातरः स्याच्छुभाचारहीनोऽतिदीनो न दाता ॥ ९ ॥

इति द्वादशभावविचारः ।

**श्रीगर्गान्वयभूषणं गणितविच्चिन्तामणिस्तत्सुतो-**
**ऽनन्तोऽनन्तमतिर्व्यधात्खलमतध्वस्त्यै जनुःपद्धतिम् ।**
**तत्सूनुः खलु नीलकण्ठविबुधो विद्वच्छिवानुज्ञया**
**सत्तुष्ट्यै व्यदधाद्विवेचनमिदं भावेषु सत्ताजिकात् ॥ १० ॥**

श्रीगर्गान्वयभूषणं = श्रीयुक्तगर्गमुनिकुलालङ्कारः, गणितवित् = ज्यौतिषसिद्धान्तविज्ञः, चिन्तामणिरेतन्नामकः, अभूत्, तत्सुतः = तत्पुत्रः अनन्तमतिः असीमबुद्धिः अनन्तः अभूत्, यः खलमतध्वस्त्यै = अज्ञरचितमतनाशाय, जनुःपद्धतिं = जन्मफलबोधकग्रन्थं, व्यधात्=अकरोत् तस्य अनन्तस्य सूनुः = तनयः, नीलकण्ठविबुधः= नीलकण्ठनामा विद्वान्, विद्वच्छिवानुज्ञया=पण्डितगुरुशिवदैवज्ञाज्ञया, सत्तुष्ट्यै = सज्जनसन्तोषाय, भावेषु = द्वादशभावेषु सत्ताजिकात् = ताजिकोत्तमग्रन्थात्, इदं= उक्तं, विवेचनं=विचारणम् व्यदधात् = कारयामास, इति ॥ १० ॥

भाषा—श्रीयुक्त गर्ग मुनि के वंश में अलङ्कार स्वरूप, गणित को जानने वाले चिन्तामणि दैवज्ञ हुए, उन के पुत्र परम बुद्धिमान् अनन्तदैवज्ञ हुए । जो कि दुष्ट मत के नाश के लिये जन्म पद्धति बनाये । उन का पुत्र नीलकण्ठ नाम का पण्डित, अपने गुरु पण्डित शिवदैवज्ञ की आज्ञा से सज्जन विद्वज्जनों के सन्तोष के लिये अच्छे २ ताजिक ग्रन्थों से बारहभावों के इस विचार को किया ॥ १० ॥

इति द्वादशव्ययभावविचारः ।

## अथ दशाफलाध्यायः ।

### तत्र दशाक्रमविचारः

**स्पष्टान्सलग्नान्खचरान्विधाय राशीन्विनाऽत्यल्पलवं तु पूर्वम् ।**
**निवेश्य तस्मादधिकाधिकांशक्रमादयं स्यात्तु दशाक्रमोऽब्दे ॥ १ ॥**

**ऊनं विशोध्याधिकतः क्रमेण शोध्यं विशुद्धांशकशेषकैक्यम्।**
**सर्वाधिकांशोन्मितमेव तत्स्यादनेन वर्षस्य मितिस्तु भाज्या॥ २॥**
**शुद्धांशकांस्तान्गुणयेदनेन लब्धध्रुवाङ्केन भवेद्दशायाः।**
**मानं दिनाद्यं खलु तद्ग्रहस्य फलान्यथासां निगदेत्तु शास्त्रात्॥ ३॥**
**शुद्धांशसाम्ये बलिनो दशाद्या बलस्य साम्येऽल्पगतेस्तु पूर्वा।**
**साम्ये विलग्नस्य खगेन चिन्त्या बलादिका लग्नपतेर्विचिन्त्या॥ ४॥**

यद्यपि एते श्लोकाः संज्ञातन्त्रान्ते व्याख्याता एव तथापि अत्रापि झटिति एतदर्थबोधाय संक्षेपतोऽन्वयमार्गेण व्याख्यायन्ते—

आदौ सलग्नान् स्पष्टान् सर्वान् खचरान् = ग्रहान् विधाय, ततस्तान् राशीन् विना, अर्थात् केवलानंशादिकानेव कृत्वा ततस्तेषु अत्यल्पलवं=सर्वाल्पांशं पूर्वं = प्रथमं निवेश्य, तदधस्तदधिकांशं, तदधस्तदधिकांशं एवमधिकाधिकांशक्रमान्निवेश्य=संरचय्य अग्रे क्रिया कर्तव्या, एवमब्दे=वर्षे, अयं दशाक्रमः स्यात्। एवं करणेन हीनांशा जाताः॥ १॥

ततः अधिकतः = द्वितीयपंक्तिस्थलवादित ऊनं=ऊर्ध्वपंक्तिस्थलवादिकं विशोध्य, क्रमेण, तृतीयपंक्तिस्थांशादितो द्वितीयपंक्तिस्थलवादिकं, ततः चतुर्थपंक्तिस्थलवादितस्तृतीयपंक्तिस्थलवादिकं विशोध्य, एवं क्रमेण शोध्यं, तत्र विशुद्धांशकशेषकैक्यं=सकलशुद्धांशादियोगः सर्वाधिकांशोन्मितमेव भवति। एवं करणेन पात्यांशा जाताः। अत्र प्रथमपात्यांशाः प्रथमहीनांशा एव ज्ञेयाः। अथ वर्षमितिः = एकसौरवर्षीयदिनसंख्या ३६० वा एकसावनवर्षीयसावनदिनसंख्या, अनेन=सकलहीनांशयोगेन भाज्या, तदा ध्रुवाङ्का जाताः। अथ तान् शुद्धांशकान्, अनेन = लब्धध्रुवाङ्केन गुणयेत् तदा गुणनफलं दशाया दिनाद्यं मानं स्यात्, तत्तद्ग्रहस्य तत्तत्पात्यांशवशेन तत्तद्दशामानं विज्ञेयम्। आसां दशानां फलानि शास्त्रात् ग्रन्थान्निगदेत्। शुद्धांशसाम्ये = हीनांशसाम्ये, यदा ग्रहा राशीन् विना कृतास्तदा ये लवादिका एवावशिष्टास्तत्र यदि द्वयोस्त्रयाणां वा लवादिहीनांशाः समानास्तदा बलिनो ग्रहस्य आद्या= प्रथमा दशा भवेत्। बलस्यापि साम्येऽल्पगतेः स्वल्पगतेर्मन्दगतेः पूर्वा दशा भवति।

तत्र विलग्नस्य खगेन साम्ये, लग्नस्य गत्यभावात् किं कार्यं तदाह—लग्नपतेर्बलादिका प्रथमा दशा विचिन्त्येति॥ १-४॥

भाषा—पहले पहल लग्न और सूर्यादि सात ग्रहों को स्पष्ट बनाकर उनमें राशि को मिटाकर केवल अंशादिक रखना। अब उनमें जो सबसे छोटा अंश वाला होगा उसको

पहली पंक्तिमें लिखिये, अब उससे भी जो आसन्नवर्त्ती अधिक अंश वाला है ! उसको दूसरी पंक्ति में लिखिये, ऐसे ही इस से जो अधिक अंश वाला हो उसको लिखने पर ये हीनांशा कहाती है ॥

इसके बाद-पहली पात्यंशा पहली, तब दूसरी हीनांशा में पहली को घटाना, तीसरी में दूसरी को घटाना, चौथी हीनांशा में तीसरी हीनांशा को घटाना, इसी क्रमसे पात्यंशा सब ग्रहों की बन जायगी। यहां सब पात्यंशाओं का योग, सब से अधिक हीनांशा अर्थात् सबसे नीचे वाली आठवीं हीनांशा के समान ही होती है।

तब एक वर्ष के जो दिनात्मक मान उसको उस सर्वाधिक हीनांशा (आठवीं) से भाग देना जो लब्धि आवेगी, वह ध्रुवाङ्क कहलाता है। अब हरेक पात्यंशा को इस ध्रुवांक से गुण देने पर गुणन फल उस उस ग्रह के दिनादिक दशामान होंगे। इन दशाओं के फल शास्त्र से कहे।

यदि दैवात् दो या तीन ग्रहों की पात्यंशा बराबर ही हों, तो उन ग्रहों में जो सबसे अधिक बली ग्रह होगा, उसकी दशा पहली होगी, उसके बाद उससे न्यून बल ग्रहों की। यदि दो ग्रहों की पात्यंशा और बल भी बराबर हों, तो उन में जो थोड़ी गति वाला ग्रह होगा, उसकी पहली दशा होगी।

यदि लग्न और कोई ग्रह समान पात्यंशा वाले हो जांय, तो लग्नेश की गति और बल के न्यूनाधिकतारतम्य से पहले पीछे दशा होना समझना ॥ १-४ ॥

अथ लग्नदशाफलम्—

हेममुक्ताफलद्रव्यलाभमारोग्यमुत्तमम् ।
कुरुते स्वामिसन्मानं दशा लग्नस्य शोभना ॥ ५ ॥
लाभं दृष्टेन वित्तस्य मानहीनस्य सेवनम् ।
मनसो विकृतिं कुर्याद्दशा लग्नस्य मध्यमा ॥ ६ ॥
विदेशगमनं क्लेशो बुद्धिनाशं कदव्ययम् ।
मानहानिं करोत्येव कष्टा लग्नदशा फलम् ॥ ७ ॥
क्रूरलग्नदशा मध्या सौख्यं स्वल्पं धनव्ययम् ।
अङ्गपीडां त्वपुष्टिं च कुरुते मृत्युविग्रहम् ॥ ८ ॥

लग्नस्य शोभना दशा हेममुक्ताफलद्रव्यलाभं, उत्तममारोग्यं, स्वामिसन्मानं कुरुते ॥५॥ लग्नस्य मध्यमा दशा वित्तस्य=धनस्य दृष्टेन लाभं, मानहीनस्य जनस्य सेवनं, मनसः=चित्तस्य, विकृतिं=विकारं, मतिभ्रमादिकं कुर्यात् ॥६॥ कष्टा=अधमा लग्नदशा, विदेशगमनं, क्लेशः बुद्धिनाशं, कदव्ययं=अपव्ययं, मानहानिं

एव = निश्चयेन करोति ॥ ७ ॥

क्रूरलग्नदशा = क्रूराक्रान्तस्य क्रूरराशेर्लग्नस्य दशा, मध्या = मध्यबला चेत्तदा स्वल्पं सौख्यं, धनव्ययं = धनक्षयं, अङ्गपीडां = देहव्यथां, अपुष्टिं = दौर्बल्यं, मृत्युविग्रहं = मरणं, विरोधं च कुर्यात् ॥ ८ ॥

भाषा—लग्न की अच्छी दशा सोना, मोती, धनद्रव्यों का लाभ, और अच्छा आरोग्य ( तन्दुरुस्ती ), अपने मालिक से सन्मान ( आदर ) को करती है ॥ ५ ॥

लग्न की मध्यम दशा धन का देखने पर लाभ मानहीन लोगों की सेवा मन के विकार को करती है ॥ ६ ॥

लग्न की अधमदशा परदेश यात्रा, क्लेश, बुद्धिनाश, अपव्यय, अपमान को करती है ॥ ७ ॥ क्रूरलग्न की दशा यदि मध्यबला हो तो थोड़ा सुख धन का खर्चा शरीरपीड़ा, देह दौर्बल्य, मरण और विरोध को करती है ॥ ८ ॥

अथ सूर्यदशाफलं, तत्र तावत् पूर्णबलस्य दशाफलम्—

**दशा रवेः पूर्णबलस्य लाभं गजाश्वहेमाम्बररत्नपूर्णम्।**
**मानोदयं भूमिपतेर्ददाति यशश्च देवद्विजपूजनादेः ॥ ९ ॥**

पूर्णबलस्य रवेर्दशा गजाश्वहेमाम्बररत्नपूर्णं लाभं, भूमिपतेः सकाशात् मानोदयं, देवद्विजपूजनादेर्यशश्च ददाति ॥ ९ ॥

भाषा—पूर्णबली सूर्य की दशा हाथी, घोड़ा, सोना, वस्त्र, रत्नों के पूर्ण लाभ और राजा से सम्मान और देवता ब्राह्मणों की पूजा से यश को देती है ॥ ९ ॥

अथ मध्यबलसूर्यदशाफलम्—

**दशा रवेर्मध्यबलस्य पूर्वमिदं फलं मध्यममेव दत्ते।**
**ग्रामाधिकारव्यवसायधैर्यैः कुलानुमानाच्च सुखादिलाभः ॥ १० ॥**

मध्यबलस्य रवेर्दशा पूर्वं पूर्वोक्तं फलम् ( गजाश्वहेमाम्बररत्नलाभं भूमिपतेर्मानोदयं देवद्विजपूजनादेर्यशश्च ) इदं मध्यमं साधारणम् एव दत्ते। तथा ग्रामाधिकारव्यवसायधैर्यैः = ग्रामकार्याधिकारः, व्यवसायः=उद्योगो व्यापारश्च, धैर्यैः=चित्तस्थैर्यैः, कुलानुमानात्=कुलानुसारात् सुखादिलाभः भवति ॥ १० ॥

भाषा—मध्यबली रवि की दशा पूर्वोक्त पूर्णबली सूर्य का जो दशाफल उस को साधारण रूप में देती है। और ग्राम के शासन, पञ्चायती आदि कार्यों के अधिकार, व्यापार, धैर्य से कुल के अनुसार सुख, धन जनों का लाभ होता है ॥ १० ॥

अथ स्वल्पबलसूर्यस्य दशाफलम्—

**दशा रवेरल्पबलस्य पुंसां ददाति दुःखं स्वजनैर्विवादात्।**
**मतिभ्रमं पित्तरुजं स्वतेजोविनाशनं धर्षणमध्यरिभ्यः ॥ ११ ॥**

स्वल्पबलस्य रवेर्दशा पुंसां स्वजनैः विवादात् दुःखं ददाति। मतिभ्रमं=बुद्धि-विभ्रान्ति, पित्तरुजं = पित्तप्रकोपरोगं स्वतेजोविनाशनं, अरिभ्यो धर्षणं = शत्रुपराभवं च ददाति ॥ ११ ॥

भाषा—स्वल्पबली सूर्य की दशा पुरुषों को अपने लोगों से दुःख देती है। मतिभ्रम, पित्त का रोग, अपने पराक्रम का नाश, शत्रुओं से संघर्ष को कराती हैं॥११॥

अथ नष्टबलसूर्यस्य दशाफलम्—

**दशा रवेर्नष्टबलस्य पुंसां नृपाद्रिपोर्वा भयमर्थनाशम्।**
**स्त्रीपुत्रमित्रादिजनैर्विवादं करोति बुद्धिभ्रममामयं च ॥ १२ ॥**

नष्टबलस्य रवेर्दशा पुंसां, नृपात् = भूपात्, वा रिपोः=शत्रोः, भयं, अर्थनाशं= धनक्षयं, स्त्रीपुत्रमित्रादिजनैः विवादं, बुद्धिभ्रमं, आमयं = रोगं च करोति ॥ १२ ॥

भाषा—नष्टबल सूर्य की दशा लोगों को राजा से या शत्रु से भय, धनकी हानि, स्त्री-पुत्र-मित्र आदि से विरोध, बुद्धि वैषम्य और रोग करती है ॥ १२ ॥

अथ तत्र विशेषमाह—

**लग्नाद्रविः षट्त्रिदशायसस्थो निन्द्योऽपि दत्ते शुभमर्थमेव।**
**मध्यत्वमूनः शुभतां च मध्यो यानीत्थमत्यन्तशुभः शुभः स्यात्॥१३॥**

लग्नात् = वर्षलग्नात्, रविः षट्त्रिदशायसंस्थः=उपचयस्थितः, तदा निन्द्यः= नष्टबलोऽपि अर्थं शुभमेव फलं ददाति। षट्त्रिदशायसंस्थः ऊनबलो रविः फलस्य मध्यत्वं, एवं तथास्थितः मध्यबली सूर्यः शुभतां याति, इत्थममुना प्रकारेण शुभो रविरुपचयसंस्थस्तदा अत्यन्तशुभः स्यात् ॥ १३ ॥

भाषा—वर्षलग्न से यदि ६।३।१०।११ इन स्थानों में हों तो निन्द्य भी सूर्य शुभ ही फल को देते हैं। हीनबली मध्यफल, मध्यबली उत्तमफल, को देते हैं। यदि शुभ रवि हों अर्थात्पूर्ण बली हों, तो वह अत्यन्त शुभ फल को देते हैं ॥ १३ ॥

अथ चन्द्रदशाफलम्, तत्रादौ पूर्णबलचन्द्रस्य फलम्—

**इन्दोर्दशा पूर्णबलस्य दत्ते शुक्लाम्बरस्रङ्मणिमौक्तिकाद्यम्।**
**स्त्रीसङ्गमं राज्यसुखं च भूमिलाभं यशः कान्तिबलाभिवृद्धिम् ॥१४॥**

पूर्णबलस्य, इन्दोः = चन्द्रस्य दशा शुक्लाम्बरस्रङ्मणिमौक्तिकाद्यं, स्त्रीसङ्गमं राज्यसुखं, भूमिलाभं, यशः, कान्तिबलाभिवृद्धिं च दत्ते ॥ १४ ॥

भाषा—पूर्णबली चन्द्रमा की दशा में स्वच्छ वस्त्र, स्वच्छ माला मणि मोती आदि, स्त्रीसुख, राज्यसुख, भूमिलाभ, यश और कान्ति की वृद्धि होती है ॥ १४ ॥

अथ मध्यबलचन्द्रस्य दशाफलम्—

**इन्दोर्दशा मध्यबलस्य सर्वमिदं फलं मध्यममेव दत्ते**
**वाणिज्यमित्राम्बरगेहसौख्यं धर्मे मतिं कर्षणतोऽन्नलाभम् ॥ १५ ॥**

मध्यबलस्य इन्दोश्चन्द्रस्य दशा इदं पूर्वोक्तं ( शुक्लाम्बरसद्मणिमौक्तिकाद्यं स्त्रीसङ्गमं, राज्यसुखं, यशः, कान्तिबलाभिवृद्धिं ) फलं मध्यममेव=साधारणमेव दत्ते=ददाति । वाणिज्यमित्राम्बरगेहसौख्यं, धर्मे मतिं, कर्षणतः अन्नलाभं च दत्ते ॥१५॥

भाषा—मध्यबली चन्द्रमा की दशा पूर्णबली चन्द्रदशा के फल को मध्यमरूप से देती है। और क्रयविक्रय, मित्र, वस्त्र, घर इन सबों का सुख, धर्म में बुद्धि, खेती से अन्नलाभ ये सब फल होते हैं ॥ १५ ॥

अथ स्वल्पबलचन्द्रदशाफलम्—

**इन्दोर्दशा स्वल्पबलस्य दत्ते कफामयं कान्तिविनाशमाहुः ।**
**मित्रादिवैरं जननं कुमार्या धर्मार्थनाशं सुखमल्पमत्र ॥ १६ ॥**

स्वल्पबलस्य इन्दोर्दशा कफामयं=कफरोगं, कान्तिविनाशं, मित्रादिभिर्वैरं कुमार्याः=कन्याया जननमुत्पत्तिः, धर्मार्थनाशं, अल्पं सुखं दत्ते ॥ १६ ॥

भाषा—अल्पबली चन्द्रमा की दशा, कफरोग, कान्तिनाश, मित्रादि इष्ट जनों से भी विरोध, कन्या का जन्म, धर्म धनों का नाश, थोड़े सुख को भी करती है ॥१६॥

अथ नष्टबलस्य चन्द्रस्य दशाफलम्—

**इन्दोर्दशा नष्टबलस्य लोकापवादभीतिं धनधर्मनाशम् ।**
**शीतामयं स्त्रीसुतमित्रवैरं दौःस्थ्यं च दत्ते विरसान्नभुक्तिम् ॥१७॥**

नष्टबलस्य इन्दोर्दशा लोकापवादभीतिं, धनधर्मनाशं, शीतामयं=शैत्यजनितरोगं स्त्रीसुतमित्रवैरं, दौस्थ्यं=दुःस्थितिं, विरसान्नभुक्तिम्=नीरसान्नभोजनं च फलं दत्ते ॥१७॥

भाषा—नष्टबल चन्द्रमा की दशा लोगों के अपवाद से भय, धननाश धर्मनाश, ज्वर, कफ, खांसी आदि रोग, स्त्री, पुत्र, मित्र से विरोध, बुरी हालत, कदन्न का भोजन इन सब फलों को देती है ॥ १७ ॥

**षष्ठाष्टमान्त्येतरराशिसंस्थो निन्द्योऽपि दत्तेऽर्थसुखं दशायाम् ।**
**मध्यत्वमूनः शुभतां च मध्यो यातीत्थमिन्दुः सुशुभः शुभः स्यात् ॥१८॥**

निन्द्यः=दुर्बलः अपि चन्द्रः षष्ठाष्टमान्त्येतरराशिसंस्थः=त्रिकभिन्नराशिगतस्तदा दशायां अर्थसुखं दत्ते । ऊनः=क्षीणबलश्चन्द्रः मध्यत्वं, मध्यः, शुभतां=शुभत्वं याति । तथा शुभश्चन्द्रः सुशुभः=पूर्णशुभः स्यात् ॥ १८ ॥

भाषा—यदि निन्दित हीन बली भी चन्द्रमा ६।८।१२ इन स्थानों से भिन्न स्थानों में हो, तो अपनी दशा में धन सुख को देते हैं। यदि उन स्थानों से भिन्न स्थानों में चन्द्रमा हों, तो हीनबली भी मध्यम, मध्यम भी शुभ, शुभ भी विशेष शुभ होते हैं ॥ १८ ॥

अथ कुजदशाफलम् , तत्र तावत्पूर्णबलकुजस्य दशाफलम्—

**दशापतिः पूर्णबलो महीजः सेनापतित्वं तनुते नराणाम् ।**
**जयं रणे विद्रुमहेमरत्नवस्त्रादिलाभं प्रियसाहसत्वम् ॥ १९ ॥**

पूर्णबलः महीजः = कुजः, दशापतिश्चेत्तदा, नराणां, सेनापतित्वं = सेनाधीशत्वं, तनुते, रणे=युद्धे, जयं=शत्रुपराजयं, विद्रुमहेमरत्नवस्त्रादिलाभं = प्रवालसुवर्णरत्नवस्त्रादेः प्राप्तिं, प्रियसाहसत्वं=इष्टोद्योगत्वं तनुते ॥ १९ ॥

भाषा—यदि पूर्णबली मङ्गल दशापति हो, तो मनुष्यों को सेनापति बनाते हैं। और लड़ाई में जय, मूंगा सोना रत्न वस्त्र आदि के लाभ और प्रिय कार्य के लिये साहस होता है ॥ १९ ॥

अथ मध्यबलकुजदशाफलम्—

**दशापतिर्मध्यबलो महीजः कुलानुमानेन धनं ददाति ।**
**राजाधिकारोऽप्यथ तत्परत्वं तेजस्विताकान्तिबलाभिवृद्धिम् ॥२०॥**

मध्यबलः महीजः=कुजः, दशापतिस्तदा कुलानुमानेन धनं ददाति । राजाधिकारः अपि भवति । अथ तत्परत्वं, तेजस्विता, कान्तिबलाभिवृद्धिं च ददाति ॥२०॥

भाषा—यदि मध्यबली मङ्गल दशापति हों, तो कुल के अनुसार धन को देते हैं। राजा के यहां अधिकार हो और राजा से अभेद हृदय हो, उत्कर्ष प्रभाव हो, कान्ति और बल की वृद्धि होती है।

अथ हीनबलकुजस्य दशाफलमाह—

**दशापतिः स्वल्पबलो महीजो ददाति पित्तोष्णरुजं शरीरे ।**
**रिपोर्भयं बन्धनमास्यतोऽसृक्स्रवं च वैरं स्वजनैश्च शश्वत् ॥ २१ ॥**

स्वल्पबलः महीजः = कुजः, दशापतिः, तदा शरीरे पित्तोष्णरुजं ददाति । रिपोः = शत्रुतः भयम् बन्धनं, आस्यतः = मुखात् असृक्स्रवं = शोणितपतनं, स्वजनैश्च शश्वत् = सदा, वैरं = विरोधं ददाति ॥ २१ ॥

भाषा—स्वल्पबली मङ्गल दशापति हो, तो शरीर में पित्तरोग, गर्मी के रोग भी देता है। शत्रु से भय और बन्धन ( जेल ) होता है। मुख से रक्तपात, अपने परिजनों से विरोध भी होता है ॥ २१ ॥

अथ नष्टबलकुजस्य दशाफलमाह—

**दशापतिर्नष्टबलो महोजो विवादमुग्रं जनयेद्रणं वा ।**
**चाराद्भयं रक्तरुजं ज्वरं च विपत्तिमन्यस्वहृतिं च खर्जूम् ॥ २२ ॥**

नष्टबलः महोजः यदि दशापतिस्तदा उग्रं = कठिनं, विवाद = वाक्पारुष्यप्रयोगं वा रणं = संग्रामं जनयेत् । चौरात् = तस्करात्, भयं, रक्तरुजं=शोणितविकाररोगं व्रणादिकं ज्वरं च, विपत्तिं = आपत्तिं, अन्यस्वहृतिं = परधनहरणं, खर्जूं = कण्डूं च करोति ॥ २२ ॥

भाषा—नष्टबली मङ्गल यदि दशापति हो, तो कठिन विवाद, लड़ाई झगड़ा, चोर से भय, खून के विकार से रोग, ज्वर, विपत्ति, पराये के धन हरण करना, और खाज खुजली हो ॥ २२ ॥

अथ विशेषफलमाह—

**त्रिषडायगतो भौमो नष्टवीर्यः शुभार्धदः ।**
**मध्यो हीनः शुभो मध्यः शुभोऽत्यन्तं शुभावहः ॥ २३ ॥**

नष्टवीर्यः अपि भौमः त्रिषडायगतः=३।६।११ एषु स्थितस्तदा शुभार्धदः=अर्धशुभफलप्रदः । यदि तादृशः कुजः हीनस्तदा मध्यः = मध्यफलः स्यात् । यदि मध्यस्तदा शुभः, यदा शुभस्तदा अत्यन्तं शुभावहः भवति ॥ २३ ॥

भाषा—यदि नष्टबल मङ्गल ३।६।११ स्थानों में हों, तो आधा शुभफल को देते हैं, यदि हीन बली हों तो मध्यफल, यदि मध्यबली हों तो शुभ, शुभ हो तो अत्यन्त शुभ होते हैं ॥ २३ ॥

अथ बुधदशाफलम्, तत्रादौ पूर्णबलस्य बुधस्य दशाफलम्—

**दशापतिः पूर्णबलो बुधश्चेद्यशोऽभिवृद्धिं गणितात्सुशिल्पात् ।**
**तनोति सेवां सफलां नृपादेर्दौत्यं च वैदूष्यगणोदयं च ॥ २४ ॥**

चेत् = यदि, पूर्णबलः बुधः दशापतिस्तदा गणितात् सुशिल्पात् यशोऽभिवृद्धिं, नृपादेः=भूपादिधनिनः, सफलां सेवां तनोति, च=पुनर्नृपादेर्दौत्यमाज्ञाकरत्वं, वैदूष्यगणोदयं च तनोति ॥ २४ ॥

भाषा—यदि पूर्णबली बुध दशापति हो, तो गणित तथा उत्तम शिल्प विद्या से यश की वृद्धि हो । राजा आदि की सेवा में सफल हो और राजदूत हो और पाण्डित्यों की वृद्धि हो ॥ २४ ॥

अथ मध्यबलस्य बुधस्य दशाफलमाह—

दशापतिर्मध्यबलो बुधश्चेद् गुरोः सुहृद्भ्यो लिपिकाव्यशिल्पैः ।
धनाप्तिदायी सुतमित्रबन्धुसमागमान्मध्यममेव सौख्यम् ॥ २५ ॥

चेत्=यदि, मध्यबलः बुधः दशापतिस्तदा गुरोः=मान्यमहज्जनात् तथा सुहृद्भ्यः=मित्रेभ्यः, लिपिकाव्यशिल्पैः धनाप्तिदायी = धनलाभदाता, सुतमित्रबन्धुसमागमात् मध्यमं = साधारणमेव सुखं हर्षं ददाति ॥ २५ ॥

भाषा—यदि मध्यबली बुध दशापति हो, तो गुरुसे, मित्रोंसे, लेखकविता, कारीगरी से धन लाभ होता है और पुत्र, मित्र, बान्धवों के समागम से सामान्य सुख को देता है ॥ २५ ॥

अथ स्वल्पबलस्य बुधस्य दशाफलम्—

दशापतौ स्वल्पबले बुधे स्यान्मानस्य नाशः स्वजनापवादः ।
अकार्यकोपस्खलनाद्यनिष्टं धनव्ययं रोगभयं च विन्द्यात् ॥ २६ ॥

स्वल्पबले बुधे दशापतौ सति, मानस्य = गौरवस्य, नाशः, स्वजनापवादः = निजपरिजनकलंकः, अकार्यकोपः = अकार्ये विना प्रयोजनं कोपः क्रोधः, स्खलनादि = पतनादि, अनिष्टं अशुभम् , धनव्ययं, रोगभयं च विन्द्यात् = जानीयात् ॥ २६ ॥

भाषा—यदि अल्पबलवान् बुध दशापति हो, तो अपमान, अपने लोगों में कलह, विना कार्य ही में निरर्थक क्रोध हो, गिरने आदि का अनिष्ट हो और धनहानि, रोगभय भी जानना ॥ २६ ॥

अथ हीनबलस्य बुधस्य दशाफलमाह—

दशापतौ हीनबले बुधे स्यात् स्वबुद्धिदोषो वधबन्धभीतिः ।
दूरे गतिर्वातकफामयार्त्तिर्निखातवित्तस्य च नापि लाभः ॥ २७ ॥

हीनबले बुधे दशापतौ सति स्वबुद्धिदोषः स्यात् । वधबन्धभीतिः, दूरे = देशान्तरे, गतिः, वातकफामयार्त्तिः=वातरोगकफरोगपीडा च स्यात् , निखातवित्तस्य= गर्त्तरक्षितवित्तस्य लाभः नैव भवति ॥ २७ ॥

भाषा—यदि हीनबली बुध दशापति हों, तो अपने बुद्धिका दोष हो, प्राणभय और बन्धन का भी भय हो, देशान्तर जाना पड़े । वातरोग, कफरोग हो । गाड़ी हुई धन का लाभ नहीं हो ॥ २७ ॥

षडष्टान्त्येतरखंस्थो नष्टो ग्रहोऽप्यशुभप्रदः ।
मध्यो हीनः शुभो मध्यः शुभोऽत्यन्तं शुभावहः ॥ २८ ॥

नष्टः = नष्टबलः अपि, ज्ञः=बुधः, षडष्टान्त्येतरर्क्षस्थः=षष्ठाष्टमद्वादशभिन्नस्थानस्थितः, तदा अर्धशुभप्रदः स्यात्। हीनः=हीनबलस्तादृशः सन्, मध्यः=मध्यमफलदः, मध्यः शुभः, शुभः अत्यन्तं शुभावहः स्यात् ॥ २८ ॥

भाषा—नष्टबली बुध छठें आठवें बारहवें स्थानों में नहीं स्थित हो, तो आधा शुभफल को देता है। और हीन बली हो तो मध्यम फल देता है। यदि मध्यबली हो तो शुभ फल देता है। शुभ हो तो अत्यन्त शुभफल देता है ॥ २८ ॥

अथ गुरुदशाफलम्, तत्रादौ पूर्णबलस्य गुरोर्दशाफलम्—

**गुरोर्दशा पूर्णबलस्य दत्ते मानोदयं राजसुहृद्गुरुभ्यः।**
**कीर्त्यर्थलाभोपचयं सुखानि राज्यं सुताप्ति रिपुरोगनाशम् ॥ २९ ॥**

पूर्णबलस्य गुरोः दशा राजसुहृत्गुरुभ्यः मानोदयं कीर्त्यर्थलाभोपचयं, सुखानि, राज्यं, सुताप्तिं, रिपुरोगनाशं च दत्ते = ददाति ॥ २९ ॥

भाषा—पूर्णबली बृहस्पति की दशा राजा मित्र गुरुओं से गौरवलाभ और यश, धन, लाभ की बृद्धि, सुख, राज्य, पुत्र लाभ, शत्रुनाश, रोगनाश को देती है ॥ २९ ॥

अथ मध्यबलस्य गुरोर्दशाफलम्—

**गुरोर्दशा मध्यबलस्य धर्मे मतिं सखित्वं नृपमन्त्रिवर्गैः।**
**तनोति मानार्थसुखाभिलाषं सिद्धिं सदुत्साहबलातिरेकाम् ॥३०॥**

मध्यबलस्य गुरोर्दशा, धर्मे मतिं, नृपमन्त्रिवर्गैः सखित्वं, मानार्थसुखाभिलाषं सदुत्साहबलातिरेकां सिद्धिं च तनोति ॥ ३० ॥

भाषा—मध्यबली (१०-१५) बृहस्पति की दशा धर्म में बुद्धि, राजा या मन्त्रियों से मित्रता, संमान, धन, सुख की अभिलाषा और अच्छे उत्साह और बलसे कार्यसिद्धि को करती है ॥ ३० ॥

अथ स्वल्पबलस्य गुरोर्दशाफलम्—

**दशा गुरोरल्पबलस्य दत्ते रोगं दरिद्रत्वमथारिभीतिम्।**
**कर्णामयं धर्मधनप्रणाशं वैराग्यमर्थं च गुणं न किंचित् ॥ ३१ ॥**

अल्पबलस्य गुरोः दशा रोगं, दरिद्रत्वं, अथ शत्रुभीतिं, कर्णामयं=कर्णरोगं, धर्मधनप्रणाशं, वैराग्यं=चित्तौदास्यं न किंचित् अर्थं न किञ्चिद्गुणं च दत्ते ॥३१॥

भाषा—अल्पबली बृहस्पति की दशा रोग, दरिद्रता, शत्रुभय, कर्णरोग, धर्मनाश, धननाश, वैराग्य तथा न तो कुछ धन, न तो कुछ गुण ही को देती है ॥३१॥

अथ हीनबलस्य गुरोर्दशाफलम्—

**गुरोर्दशा नष्टबलस्य पुंसां ददाति दुःखानि रुजं कफार्तिम् ।**
**कलत्रपुत्रस्वजनारिभीतिं धर्मार्थनाशं तनुपीडनं च ॥ ३२ ॥**

नष्टबलस्य गुरोर्दशा पुंसां दुःखानि ददाति, रुजं कफार्तिं च ददाति, कलत्रपुत्रस्वजनारिभीतिं = स्त्रीसुतपरिजनवैरिभयं, धर्मार्थनाशं, तनुपीडनं च ददाति ॥ ३२ ॥

भाषा—नष्टबल ( १-५ ) बृहस्पति की दशा में मनुष्य को हरेक प्रकार का दुःख होता है, रोग, कफ का प्रकोप, स्त्री पुत्र मित्र बन्धु शत्रुओं से भय, धर्मनाश, धननाश देह को पीड़ा ये फल होते हैं ॥ ३२ ॥

अथ विशेषमाह—

**षडष्टरिःफेतरगो गुरुर्निन्द्योऽर्धसत्फलः ।**
**मध्यो हीनः शुभो मध्यः शुभोऽत्यन्तं शुभावहः ॥ ३३ ॥**

षडष्टरिःफेतरगः = षष्ठाष्टमद्वादशभिन्नस्थानस्थितः, गुरुर्निन्द्यः = नष्टबलोऽपि अर्धसत्फलः = अर्धशुभफलदाता भवति । हीनः = हीनबलो बृहस्पतिस्तादृशस्थानगतः सन् मध्यः = मध्यमशुभफलदः । मध्यः शुभः, शुभः अत्यन्तं शुभावहः स्यात् ॥ ३३ ॥

भाषा—नष्टबल भी बृहस्पति यदि ६।८।१२ इन स्थानों से भिन्न स्थानों में हों, तो आधा शुभफल ही देते हैं। यदि हीन बली भी हों तो मध्यम फल को देते हैं। यदि मध्यमबली हों तो शुभ फल देते हैं। यदि शुभ रहते हैं तो अत्यन्त शुभ फल को देते हैं ॥ ३३ ॥

अथ शुक्रदशाफलम्, तत्रादौ पूर्णबलस्य शुक्रस्य दशाफलम्—

**दशा भृगोः पूर्णबलस्य सौख्यं स्रग्गन्धहेमाम्बरकामिनीभ्यः ।**
**हयादिलाभः सुतकीर्तितोषान्नैरुज्यगान्धर्वरतिः पदाप्तिः ॥ ३४ ॥**

पूर्णबलस्य भृगोर्दशा सुगन्धिहेमाम्बरकामिनीभ्यः सौख्यं, हयादिलाभं = घोटकादिवाहनप्राप्तिम्, सुतकीर्तितोषान् = पुत्रयशःसन्तोषान्, नैरुज्यगान्धर्वरतिम् = आरोग्यं, गान्धर्वे = गानवाद्ये अभिरुचिम्, पदाप्तिम् = नवीनस्थानजीविकालाभं च करोति ॥ ३४ ॥

भाषा—पूर्णबली शुक्र की दशा में माला, सुवर्ण, वस्त्र, स्त्री इन सबों से सुख और घोड़े आदि सवारियों का लाभ, पुत्र, कीर्त्ति, सन्तोष के लाभ, आरोग्य, गानविद्या में प्रेम, स्थान की प्राप्ति, ये फल होते हैं ॥ ३४ ॥

अथ मध्यबलस्य भृगोर्दशाफलम्—

**दशा भृगोर्मध्यबलस्य दत्ते वाणिज्यतोऽर्थागमनं कृषेश्च।**
**मिष्टान्नपानाम्बरभोगलाभं मित्रांश्च योषित्सुतसौख्यलाभम् ॥३५॥**

मध्यबलस्य भृगोर्दशा वक्ष्यमाणं फलं दत्ते। किं तत्फलं तदाह—वाणिज्यतः= व्यापारतः, अर्थागमनं = धनागमनं, कृषेश्च धनागमं, मिष्टान्नपानाम्बरभोगलाभं = मधुरान्नाशनवस्त्रभोगसौख्यलाभं, दत्ते, मित्रांश्च = मित्राणि, सम्मेलयति, योषित्सुत-सौख्यलाभं दत्ते ॥ ३५ ॥

भाषा—मध्यबली शुक्र की दशा व्यापार और खेतीसे भी धन लाभ कराती है। और मीठे अन्न पदार्थों के भोग सुख और अच्छे वस्त्रों के भोग सुख को देती है। मित्रों से मिलाती है। स्त्री पुत्र सुखों को भी कराती है ॥ ३५ ॥

अथाल्पबलस्य शुक्रस्य दशाफलम्—

**दशा भृगोरल्पबलस्य दत्ते मतिभ्रमं ज्ञानयशोऽर्थनाशम्।**
**कदन्नभोज्यं व्यसनामयार्तिं स्त्रीपक्षवैरं कलिरप्यरिभ्यः ॥ ३६ ॥**

अल्पबलस्य भृगोर्दशा मतिभ्रमं, ज्ञानयशोऽर्थनाशं, कदन्नभोज्यं, व्यसनाम-यार्त्ति, स्त्रीपक्षवैरं, अरिभ्यः अपि कलिं दत्ते ॥ ३६ ॥

भाषा—अल्प ( ५–१० ) बली शुक्र की दशा, बुद्धि के भ्रम, ज्ञान यश और धनों के नाश को करती है, कुत्सित अन्न का भोजन, झंझट, रोगों से पीड़ा को देती है, स्त्री पक्ष से विरोध, शत्रु से झगड़ा को कराती है ॥ ३६ ॥

अथ हीनबलस्य शुक्रस्य दशाफलम्—

**दशा भृगोर्नष्टबलस्य दत्ते विदेशयानं स्वजनैर्विरोधम्।**
**पुत्रार्थभार्याविपदो रुजश्च मतिभ्रमोऽपि व्यसनं महच्च ॥ ३७ ॥**

नष्टबलस्य भृगोर्दशा विदेशयानं = परदेशगमनं, स्वजनैर्विरोधं=विग्रहं, पुत्रार्थ-भार्याविपदः = पुत्रधनस्त्रीणां दुःखानि, रुजः = रोगान्, तथा मतिभ्रमं=बुद्धिमोहं महद् व्यसनं च दत्ते ॥ ३७ ॥

भाषा—नष्टबली ( ०–५ ) शुक्र की दशा परदेश यात्रा, अपने बन्धु बान्धवों से विरोध, पुत्र धन स्त्री विपत्ति, रोग, तथा बुद्धि के भ्रम को करती है ॥ ३७ ॥

अथ विशेषमाह—

**षडष्टरिःफेतरगो भृगुर्निन्द्योऽर्धसत्फलः।**
**मध्यो हीनः शुभो मध्यः शुभोऽत्यन्तं शुभावहः ॥ ३८ ॥**

षष्ठाष्टमद्वादशभिन्नस्थानस्थः भृगुः = शुक्रः, निन्द्योऽपि अर्धशुभफलदः भवति,

तथा तादृशस्थानगतः शुक्रः हीनः अपि मध्यः। मध्यः अपि शुभः, शुभः अपि अत्यन्तं शुभावहः भवति ॥ ३८ ॥

भाषा—६।८।१२ इन से अतिरिक्त स्थान में यदि शुक्र निन्दित भी हों तो आधा शुभ फल को देते हैं। यदि उक्त से भिन्न स्थान में हीन भी हों तो मध्य, मध्यम हों तो शुभ, शुभ हों, तो अत्यन्त शुभ होते हैं ॥ ३८ ॥

अथ शनिदशाफलानि लिख्यन्ते, तत्रादौ पूर्णबलस्य शनेर्दशाफलम्—

**दशा शनेः पूर्णबलस्य दत्ते नवीनवेश्माम्बरभूमिसौख्यम्।**
**आरामतोयाश्रयनिर्मितिश्च म्लेच्छातिसङ्गान्नृपतेर्धनाप्तिः ॥ ३९ ॥**

पूर्णबलस्य शनेर्दशा नवीनवेश्माम्बरभूमिसौख्यं दत्ते, आरामतोयाश्रयनिर्मितिः= पुष्पवाटिकाजलाशयनिर्माणं कारयति। म्लेच्छातिसङ्गान्नृपतेर्धनाप्तिं दत्ते ॥ ३९ ॥

भाषा—पूर्णबली शनि की दशा नवीन मकान नवीन वस्त्र, नई जमीन के सुख को देती है। और फुलवाड़ी बगीचा कूआं पोखर तालाब का निर्माण कराती है। और म्लेच्छ-जनों की अधिक संगति से तथा राजा से धन लाभ कराती है ॥ ३९ ॥

अथ मध्यबलशनेर्दशाफलम्—

**दशा शनेर्मध्यबलस्य दत्ते खरोष्ट्रपाखण्डजतो धनाप्तिम्।**
**वृद्धाङ्गनासङ्गमदुर्गरक्षाऽधिकारचिन्ताविरसान्नभोगः ॥ ४० ॥**

मध्यबलस्य शनेर्दशा खरोष्ट्रपाखण्डजतः = गर्दभोष्ट्रनास्तिकलोकेभ्यः, धनाप्तिं= धनलाभं दत्ते। वृद्धाङ्गनासङ्गमदुर्गरक्षाऽधिकारचिन्ताविरसान्नभोगः = वृद्धाङ्गना-सङ्गमः, दुर्गरक्षाऽधिकारचिन्ता, कदन्नस्वादुहीनान्नभोजनं च भवति ॥ ४० ॥

भाषा—मध्यबली शनि की दशा में गधा, ऊंट, पाखण्डी लोगों से धनलाभ होता है। बूढ़ी स्त्री का सङ्ग, किला की रक्षा की चिन्ता, रसहीन कदन्न भोजन भी होते हैं ॥ ४० ॥

अथ हीनबलशनिदशाफलम्—

**दशा शनेः स्वल्पबलस्य पुंसां तनोति दुःखं रिपुतस्करेभ्यः।**
**दारिद्र्यमात्मीयजनापवादं रोगं च शीतानिलकोपमुग्रम् ॥ ४१ ॥**

स्वल्पबलस्य शनेः दशा पुंसां रिपुतस्करेभ्यः दुःखं तनोति। दारिद्र्यं, आत्मीयजनापवादं, रोगं, उग्रं शीतानिलकोपं च तनोति ॥ ४१ ॥

भाषा—मध्यबली शनि की दशा में पुरुष को शत्रु, चोरों से दुःख होता है। दरिद्रता आती है। अपने लोगों से कलङ्क होता है, रोग और सरदी, वायु के उग्र प्रकोप भी होते हैं ॥ ४१ ॥

अथ नष्टबलस्य शनेर्दशाफलम्—

**दशा शनेर्नष्टबलस्य पुंसामनेकधातुव्यसनानि दत्ते ।**
**स्त्रीपुत्रमित्रस्वजनैर्विरोधं रोगाभिवृद्धिं मरणेन तुल्यम् ॥ ४२ ॥**

नष्टबलस्य शनेर्दशा पुंसां, अनेकधा = बहुधा, व्यसनानि दुःखानि दत्ते । वा अनेकधातुव्यसनानि = त्रिदोष ( वातपित्तकफप्रकोप ) जनितदुःखानि दत्ते । स्त्रीपुत्रमित्रस्वजनैः विरोधं=विग्रहं, रोगाभिवृद्धिं, मरणेन तुल्यं कष्टं च दत्ते ॥ ४२ ॥

भाषा—नष्टबल शनि की दशा लोगों को अनेक प्रकार के दुःख को देती, या त्रिदोष के प्रकोप से क्लेश देती है । स्त्री पुत्र मित्र परिजनों से विरोध, रोग की वृद्धि, और मरण के तुल्य कष्ट को देती है ॥ ४२ ॥

अथ विशेषफलमाह—

**त्रिषष्ठलाभोपगतो मन्दो निन्द्योऽर्धसत्फलः ।**
**मध्यो हीनः शुभो मध्यः शुभोऽत्यन्तं शुभावहः ॥ ४३ ॥**

त्रिषष्ठलाभोपगतः = ३।६।११ एतदन्यतमस्थानस्थितः, मन्दः = शनिः, निन्द्यः अपि अर्धसत्फलः = अर्धशुभफलदः । हीनोऽपि मध्यः = मध्यफलदः । मध्यः अपि शुभः । शुभः अपि अत्यन्तशुभफलदः भवतीति ॥ ४३ ॥

भाषा—३।६।११ इन स्थानों में स्थित शनि यदि निन्द्य अर्थात् हीन बली भी हों, तो शुभफल देते हैं । यदि हीन वीर्य भी हों, तो मध्य, मध्य भी हों, तो शुभ, शुभ भी हों तो अत्यन्त शुभफल होता है ॥ ४३ ॥

अथ लग्नदशाफलमाह—

**दशा तनोः स्वामिबलेन तुल्यं फलं ददातीत्यपरो विशेषः ।**
**चरे शुभा मध्यफलाऽधमा च द्विमूर्तिभेऽस्माद्विपरीतमूह्यम् ॥ ४४ ॥**

तनोः = लग्नस्य, दशा स्वामिबलेन तुल्यं फलं ददाति, यदि लग्नेशः पूर्णबली तदा शुभं फलं पूर्णम् । यदि लग्नेशो मध्यबली तदा शुभं फलं मध्यमं, यदि हीनबली तदा शुभं फलं स्वल्पमेवं स्वामिबलानुसारं लग्नदशाफलं वेद्यम् । तत्र अपरोऽपि=अन्योऽपि विशेषोऽस्ति । चरे=चरराशौ, मेषकर्कतुलामकरेषु प्रथम-द्वितीय-तृतीय-द्रेष्काणभेदेन शुभा, मध्यफला, अधमा च लग्नदशा भवति । यथा चरराशौ प्रथमद्रेष्काणान्तर्गते लग्ने लग्नदशा शुभा भवति । चरराशौ द्वितीयद्रेष्काणान्तर्गते लग्ने तद्दशा मध्यफला स्यात्तथा तत्रैव तृतीयद्रेष्काणलग्ने लग्नदशा अधमा=अशुभफला भवति । एवं द्विमूर्तिभे=द्विस्वभावराशौ प्रथम-द्वितीय-द्रेष्काणभेदवशेन

लग्नदशाफलं, अस्माच्चरलग्नदशाफलात् विपरीतं = विलोमम् ऊह्यम् । यथा द्वितनौ प्रथमद्रेष्काणेऽधमा, द्वितीये मध्यमा, तृतीये शुभा भवतीति ॥ ४४ ॥

भाषा—लग्न की दशा अपने स्वामी के बलानुसार फल को देती है, और यहाँ कुछ और विशेष है-चर लग्न में द्रेष्काण भेद से शुभ मध्य अनिष्ट फल होता है। द्विःस्वभाव राशि के द्रेष्काण भेद से इस से विपरीत अर्थात् अशुभ, मध्य, शुभ फल होते हैं। विशेष स्पष्टता के लिये चक्र लिखता हूं। यहाँ यह भी युक्ति है कि-

| राशिः | चर | स्थिर | द्विःस्वभाव |
|---|---|---|---|
| प्रथमद्रेष्काण | शुभा | अनिष्टा | अधमा |
| द्वितीयद्रेष्काण | मध्या | शुभा | मध्यमा |
| तृतीयद्रेष्काण | अशुभा | समा | शुभा |

"वर्गोत्तमा नवांशाश्चरादिषु प्रथममध्यान्त्याः।" इस लघुजातक के वचन से चरराशि का प्रथमनवांश, स्थिर का मध्यनवांश, द्विःस्वभाव का अन्त्यनवांश ये वर्गोत्तम हैं। ऐसे ही चरमें प्रथम, स्थिरमें द्वितीय, द्विःस्वभाव में अन्तिम नवांश ये वर्गोत्तम द्रेष्काण हैं। इस लिये इन द्रेष्काणों की लग्नदशा अच्छी होती है ॥ ४४ ॥

**अनिष्टमिष्टं च समं स्थिरर्क्षे क्रमाद्दृक्काणैः फलमुक्तमाद्यैः ।**
**सत्स्वामियोगेक्षणतः शुभं स्यात्पापेक्षणात्कष्टफलं च वाच्यम् ॥ ४५ ॥**

स्थिरर्क्षे = स्थिरराशौ, द्रेष्काणभेदेन अनिष्टं, इष्टं = शुभं, समं च फलं भवति, एवं क्रमाद्दृक्काणैः = प्रथम-द्वितीय-तृतीयैः फलं=शुभाशुभं, आद्यैः=पूर्वाचार्यैरुक्तम् , तत्र सत्स्वामियोगेक्षणतः = शुभस्वामिसंयोगदृष्टितः शुभं लग्नदशाफलं भवति, पापेक्षणात्=पापग्रहदृष्टियोगात् कष्टफलं वाच्यम् ॥ ४५ ॥

भाषा—स्थिरराशि में द्रेष्काण भेद से अशुभ शुभ समान फल होता है, इस प्रकार द्रेष्काणों के भेद से शुभाशुभ फल प्राचीनाचार्य कहे हैं।

वहां शुभग्रह और स्वामी के योग दृष्टि से शुभ और पापग्रहों की दृष्टि और योग से अशुभ लग्नदशाफल समझना चाहिये ॥ ४५ ॥

अथान्तर्दशासाधनं तच्छुभाशुभफलं चाह—

दशामानं समामानं प्रकल्प्योक्तेन वर्त्मना।
अन्तर्दशाः साधनीयाः पाक्पात्यांशवशेन तु ॥ ४६ ॥
आदावन्तर्दशा पाकपतेस्तत्क्रमतोऽपराः।
शुभेक्षणान्वयान्मैत्र्यात्तत्फलं परिचिन्तयेत् ॥ ४७ ॥
चन्द्रारजीवाः सौम्येज्यशुक्रा रविविधू तथा।
मन्देज्यशुक्राः सूर्येन्दुभौमाः सौम्येज्यसूर्यजाः ॥ ४८ ॥
जीवज्ञशुक्राः सूर्यादेः शुभा अन्तर्दशा इमाः।
अन्येषामशुभा ज्ञेया इति वामनभाषितम् ॥ ४९ ॥

इति ग्रहदशाफलानि।

दशामानं = पात्यायिनीदशामानं यस्य ग्रहस्य यदागतं तत् समामानं=दशावर्षमानं प्रकल्प्य, उक्तेन = कथितेन, वर्त्मना=मार्गेण, अन्तर्दशासाधनरीत्या प्राक्पात्यांशवशेन अन्तर्दशाः = दिनादिकाः साधनीयाः। यथा सकलपात्यायनीदशादिनादियोगेन यदि पृथक् पृथक् तत्तद्ग्रहस्य दिनादिदशा लभ्यते तदा इष्टग्रहदशायां केत्यनुपातेनान्तर्दशा सिद्ध्यति। तत्र आदौ पूर्वं पाकपतेर्महादशाधीशस्य अन्तर्दशा भवति। ततो यत्क्रमेण दशाधीशाः सन्ति तत्क्रमेणैव अपराः अन्तर्दशाः बोध्याः। तत्र शुभेक्षणान्वयात्=शुभग्रहदृष्टिसंयोगात्, मैत्र्यात् = मित्रग्रहयोगदृष्टितः तत्फलं=तदन्तर्दशाफलं, परिचिन्तयेत्=विचार्य लिखेत्। तत्र सूर्यादेः सूर्यमारभ्य ततः सूर्यादीनां दशासु क्रमेण चन्द्रारजीवाः, सौम्येज्यशुक्राः, तथा रविविधू, मन्देज्यशुक्राः, सूर्येन्दुभौमाः, सौम्येज्यसूर्यजाः, जीवज्ञशुक्राः इमा अन्तर्दशाः, शुभाः=शुभफला उक्ताः। अर्थात् सूर्यदशायां चन्द्रकुजगुरूणामन्तर्दशाः शुभाः। चन्द्रदशायां बुधगुरुशुक्राणामन्तर्दशाः शुभाः। कुजदशायां रविचन्द्रयोरन्तर्दशे शुभे। एवं सर्वत्र बोध्यम्। अन्येषामुक्तभिन्नानां दशाः अशुभा ज्ञेयाः। इति वामनभाषितम् = वामननामाचार्यस्य कथनमस्तीति ॥ ४६–४९ ॥

भाषा—जिस ग्रह का जो दशामान आया है उस को महादशा मान कर विंशोत्तरी अष्टोत्तरी में जैसे अन्तर्दशा साधन करते हैं, वैसे यहां भी अन्तर्दशा साधन

करना। जैसे-सब ग्रहों के दशामान योग में यदि पृथक् २ सब ग्रहों के दशामान पाते हैं, तो एक किसी ग्रह के (जिस दशा में अन्तर्दशा साधन इष्ट है) दशामान में क्या? इस प्रकार 'दशा दशाहता कार्या' इसी तरह पहले पात्यांशाओं के वश से अन्तर्दश साधन करना। उसमें पहली अन्तर्दशा दशेश की होगी। उसके बाद जिस क्रम से ग्रहों की दशा है, उसी क्रम से अन्तर्दशा का भी क्रम समझना चाहिये। वहां शुभ ग्रहों के योग दृष्टि से शुभ, पाप ग्रहों के योग दृष्टि से अशुभ कहना। अब किसकी दशा में साधारणतः किसकी अन्तर्दशा अच्छी है सो कहते हैं। रविकी दशा में चन्द्र कुज और गुरु इनकी अन्तर्दशा अच्छी है। चन्द्रमा की दशा में बुध गुरु और शुक्र की अन्तर्दशा, मङ्गल की दशा में रवि और चन्द्रमा की अन्तर्दशा, बुध की दशा में शनि गुरु और शुक्र की अन्तर्दशा, गुरु की दशा में सूर्य चन्द्र कुज ग्रहों की अन्तर्दशा, शुक्रदशा में बुध गुरु शनि की अन्तर्दशा, शनि की दशा में बृहस्पति बुध शुक्र की अन्तर्दशा अच्छी होती है। औरों की अन्तर्दशा अच्छी नहीं होती है। यह वामनाचार्य ने कहा है। यह साधारण रूप से कहा है, यथार्थतः हरेक ग्रह किस राशि में किस से देखा जाता है। वर्ष में किसका कैसा बल है, किस भाव का स्वामी, किस भाव में बैठा है किस से देखा जाता है। किस से संयुक्त है। किससे इत्थशाल आदि योग करता है,ये सब विचार कर शुभ या अशुभ कहना। न कि केवल साधारण रूप से रवि की दशामें चन्द्रमा की अन्तर्दशा अच्छी होगी। यदि चन्द्रमा नीच का और ६।८।१२ स्थानों में हो, ईसराफ आदि योग होता हो, तो कभी नहीं शुभ फल होगा। ऐसेही सब को विचारना॥ ४६-४९॥

॥ इति ग्रहाणां दशाफलानि॥

---

अथ लग्नस्थग्रहाणां फलानि—

**सूर्यारमन्दास्तनुगा ज्वरार्तिं धनक्षयं पापयुगिन्दुरित्थम्।**
**शुभान्वितः पुष्टतनुश्च सौख्यं जीवश्च शुक्रा धनधान्यलाभम्॥ ५०॥**

सूर्यारमन्दाः=रविकुजशनयः, तनुगाः=लग्नस्थाः, एषु प्रत्येको ग्रहो वा द्वौ ग्रहौ, वा सकला ग्रहा इति बोध्यम्। तदा ज्वरार्त्तिं=ज्वरपीडां, धनक्षयं च कुर्वन्ति। इत्थं लग्नस्थः पापयुक् इन्दुश्चन्द्रः ज्वरार्त्तिं धनक्षयं च करोति। तत्रायं तर्कः करणीयः-यदि लग्नगः सूर्यस्तदा पित्तज्वरः। चन्द्रः सपापो लग्नस्थस्तदा कफज्वरः। भौमो लग्नस्थस्तदा शीतलाज्वररोगः। यदि त्रयो लग्नस्थास्तदा त्रिदोषज्वर इति। अथ शुभान्वितः=शुभयुतः, पुष्टतनुः= पूर्णबिम्बः, चकाराच्छुभदृष्टश्च भूत्वा लग्नस्थस्तदा सौख्यं ददाति, जीवश्च शुक्रा लग्नस्थास्तदा धनधान्यलाभं कुर्वन्ति॥ ५०॥

भाषा—सूर्य मंगल शनि ये तीनों या हर एक ग्रह लग्न में हों तो ज्वर की पीड़ा हो, और धनक्षय हो। यहाँ सूर्य लग्न में रहने से पित्तज्वर, मङ्गल लग्न में रहने से रक्तपित्त शीतला ज्वर हो। यदि शनि लग्न में हो तो वायुमूलक ज्वर हो, तीनों हों तो त्रिदोषमूलक ज्वर हो। यदि पापयुत दृष्ट क्षीण चन्द्रमा लग्न में हों, तो ज्वर कफ हो, धनक्षय हो। यदि शुभयुत शुभदृष्ट पूर्णबिम्ब चन्द्रमा लग्न में हों तो सुख देते हैं। और बृहस्पति बुध, शुक्र ये तीनों या हर एक लग्न में हों, तो धन लाभ धान्य लाभ को करते हैं॥ ५० ॥

अथ धनभावस्थितसकलग्रहफलम्—

**चन्द्रज्ञजीवास्फुजितो धनस्था धनागमं राज्यसुखं च दद्युः ।**
**पापा धनस्था धनहानिदाः स्युर्नृपाद्भयं कार्यविघातमार्किः ॥ ५१ ॥**

चन्द्रज्ञजीवास्फुजितः = चन्द्रबुधगुरुशुक्राः, धनस्थाः = द्वितीयभावस्थाः, धनागमं, राज्यसुखं च दद्युः । पापाः=रविकुजशनयः राहुकेतू च धनस्थाः सन्तः, धनहानिदाः स्युः । धनस्थः आर्किः = शनिः, नृपाद्भयं = राजतो भयं, कार्यविघातं च करोति ॥ ५१ ॥

भाषा—चन्द्रमा बुध शुक्र ये द्वितीयभाव में हों तो धनलाभ, राज्यसुख करते हैं। और सूर्य कुज शनि, राहुकेतु ये सब द्वितीयभाव में हों, तो धनहानि करने वाले होते हैं। शनि यदि दूसरे भाव में हों तो राजा से भय और कार्यहानि को करते हैं ५१

अथ तृतीयभावस्थितसकलग्रहफलम्—

**दुश्चिक्यगाः खलखगा धनधर्मराज्य-**
**लाभप्रदा बलयुताः क्षितिलाभदाः स्युः ।**
**सौम्याः सुखार्थसुतमानयशोविलास-**
**लाभाय हर्षमतुलं किल तत्र चन्द्रः ॥ ५२ ॥**

खलखगाः = पापग्रहाः, रविकुजशनयः, दुश्चिक्यगाः = तृतीयभावगतास्तदा धनधर्मराज्यलाभप्रदा भवन्ति । यदि ते बलयुतास्तदा क्षितिलाभदाः = भूमिक्षेत्र-प्राप्तिकरा भवन्तीति। यदि सौम्याः = शुभाः बुधगुरुशुक्राः तृतीयस्थानगतास्तदा सुखार्थसुतमानयशोविलासलाभाय भवन्ति । यदि चन्द्रः तत्र = तृतीये स्थितस्तदा अतुलं = पूर्णं, हर्षं = विनोदं ददाति ॥ ५२ ॥

भाषा—यदि रवि शनि और मङ्गल तीसरे भाव में हों, तो धनलाभ, धर्मलाभ, राज्यलाभ होते हैं। यदि वे पापग्रह बलयुक्त हों, तो भूमिलाभ होता है। यदि शुभ ग्रह ( बुध, गुरु, शुक्र ) ये सब तीसरे भाव में हों तो सुख धन पुत्र संमान यश और

विनोद लाभ के लिये होते हैं। और यदि चन्द्रमा तीसरे स्थान में हों तो पूर्ण हर्ष को देते हैं॥ ५२॥

अथ चतुर्थभावस्थसकलग्रहफलम्—

**चन्द्रः सुखे खलयुतो व्यसनं रुजं च पुष्टः शुभेन सहितः सुखमातनोति।**
**सौम्याः सुखं विविधमत्र खलाः सुखार्थनाशं रुजं व्यसनमप्यतुलं भयं च ५३**

खलयुतः = पापयुतदृष्टश्चन्द्रः सुखे = चतुर्थभावे स्थितस्तदा व्यसनं, रुजं = रोगं च दत्ते। यदि पुष्टः, शुभेन युतदृष्टश्चन्द्रश्चतुर्थे स्थितस्तदा सुखम् आतनोति=सर्वतोभावेन ददाति। सौम्याः = शुभाः चतुर्थस्थानस्थिताः, तदा विविधं सुखं दद्युः। खलाः = रविकुजशनयः अत्र = चतुर्थे स्थितास्तदा सुखार्थनाशं, रुजं = रोगं, अतुलम् = असीमं, व्यसनं = क्लेशं, अतुलं भयं च दद्युः॥ ५३॥

भाषा—पाप युत दृष्ट दुर्बल चन्द्रमा यदि चौथे भाव में हो तो क्लेश, रोग को देता है। यदि पुष्टशरीर शुभ-युत-दृष्ट चन्द्रमा चतुर्थभाव में हो तो सुख को देता है। यदि शुभग्रह ( बुध, गुरु, शुक्र ) चौथे स्थान में हों, तो नाना प्रकार के सुख को देते हैं। यदि पापग्रह ( रवि शनि कुज ) चतुर्थस्थान में हों, तो सुखनाश, धननाश, रोग, झंझट, अधिक भय को करते हैं॥ ५३॥

अथ पञ्चमभावस्थसकलग्रहफलम्—

**पुत्रवित्तसुखसञ्चयं शुभाः पुत्रगा भृगुसुतोऽतिहर्षदः।**
**पुत्रवित्तधनबुद्धिहारकास्तस्करामयकलिप्रदाः खलाः॥ ५४॥**

शुभाः = बुधगुरुशुक्राः पूर्णबलश्चन्द्रश्चैते पुत्रगाः = पञ्चमभावगतास्तदा पुत्रवित्तसुखसंचयं=पुत्रसुखं, वित्तसञ्चयं=धनसंग्रहं च दिशन्ति। भृगुसुतः पञ्चमगतस्तदाऽतिहर्षदः भवति। यदि खलाः = पापाः रविकुजशनयः क्षीणचन्द्रश्चैते पञ्चमभावगतास्तदा पुत्रवित्तधनबुद्धिहारकाः = पुत्रहारकाः, धनहारकाः, धनधान्यहारकाः, बुद्धिहारकाश्च भवन्ति। तस्करामयकलिप्रदाः=चौरोपद्रवरोगागमकलहकराश्च भवन्ति।

भाषा—यदि शुभग्रह ( बु० गु० शु० पूर्णबलीचन्द्र ) पञ्चम भाव में स्थित हों, तो पुत्र सुख, धनलाभ करते हैं, और आनन्द को भी देते हैं। यदि पापग्रह ( र० श० मं० क्षीणबली चन्द्र ) पञ्चमभाव में हों, तो पुत्रनाश, धनधान्य नाश, बुद्धिनाश और चौर का उपद्रव रोगका प्रचार लोगों से विरोध को करते हैं॥ ५४॥

अथ षष्ठभावस्थसकलग्रहफलम्—

**षष्ठे पापा वित्तलाभं सुखाप्तिं भौमोऽत्यन्तं हर्षदः शत्रुनाशम्।**
**सौम्या भीतिं वित्तनाशं कलिं च चन्द्रो रोगं पापयुक्तः करोति॥५५॥**

षष्ठे = षष्ठभावे स्थिताः पापाः ( र० मं० श० क्षी० चं० ) वित्तलाभं=धनप्राप्ति सुखाप्तिं=सुखलाभं कुर्वन्ति । षष्ठस्थः भौमः अत्यन्तं हर्षदः, शत्रुनाशं च करोति । षष्ठस्थिताः सौम्याः = शुभग्रहाः भीतिं=भयं, वित्तनाशं = धनक्षतिं, कलिं = कलहं च कुर्वन्ति । पापयुक्तः क्षीणश्चन्द्रः रोगं = कफज्वरादि करोति ॥ ५५ ॥

भाषा—यदि पापग्रह षष्ठस्थान में हों, तो धनलाभ, सुखलाभ करते हैं उस में मङ्गल षष्ठस्थान में हों, तो अत्यन्त हर्ष को और शत्रुनाश को करता है। शुभग्रह षष्ठस्थान में होने से भय, धननाश, कलह को करते हैं। उसमे क्षीणचन्द्र यदि छठे स्थान में हो तो कफ, ज्वर खांसी को करता है ॥ ५५ ॥

अथ सप्तमभावस्थसकलग्रहफलम्—

**सपापः शशी सप्तमो व्याधिभीतिं खलाः स्त्रीविनाशं कलिं भृत्यभीतिम्।**
**शुभाः कुर्वते वित्तलाभं सुखाप्तिं यशो राजमानोदयं बन्धुसौख्यम् ॥५६॥**

सपापः = पापयुतदृष्टः शशी = चन्द्रः सप्तमस्थस्तदा व्याधिभीतिं=रोगभयं करोति । खलाः = पापाः सप्तमे स्थितास्तदा स्त्रीविनाशं, कलिं, भृत्यभीतिं = सेवकभयं च कुर्वन्ति। सप्तमगताः शुभाः वित्तलाभं, सुखाप्तिं यशः राजमानोदयं, बन्धुसौख्यं कुर्वन्ति।

भाषा—यदि पाप-युक्त-दृष्ट चन्द्रमा सप्तम में हों, तो रोग भय करता है। यदि पापग्रह ( र-मं-श ) सप्तम में हों, तो स्त्रीनाश ( स्त्रीकष्ट ) कलह, नोकर से भय करते हैं। शुभग्रह यदि सप्तम में हों, तो धनलाभ, सुखलाभ, यश, राजसंमान परिवार सुख करते हैं ॥ ५६ ॥

अथाष्टमभावस्थसकलग्रहफलम्—

**चन्द्रोऽष्टमे निधनदः खलखेटयुक्तः पपाश्च तत्र मृतितुल्यफलं च विद्यात्।**
**सौम्याः स्वधातुवशतो रुजमर्थहानिं मानक्षयं मुथशिले शुभजे शुभश्च ॥५७॥**

खलखेटयुक्तः = पापयुतः चन्द्रः अष्टमे स्थितस्तदा निधनदः=मरणकरः, पापाः अष्टमगतास्तदा मृतितुल्यफलं विद्यात् = जानीयात् । अष्टमस्थाः सौम्याः=शुभग्रहाः स्वधातुवशतः रुजं=रोगं, अर्थहानिं=धनक्षयं मानहानिं च कुर्वन्ति । तत्र शुभजे मुथशिले सति शुभं = शुभफलं भवति ॥ ५७ ॥

भाषा—पापयुत चन्द्रमा अष्टम में हों तो मरण करता है। पापग्रह अष्टम में हो तो मरण समान कष्ट होता है और शुभग्रह अष्टम में हो, तो अपने धातुवश जिस ग्रह के जो धातु हैं, उस मूलक रोग होता है, धननाश, संमान का नाश होता है। वहां यदि शुभग्रह से इत्थशाल हो, तो शुभ होता है ॥ ५७ ॥

अथ नवमभावगतसकलग्रहफलम्—

**तपसि सोदरभीः पशुपीडनं खलखगेऽतिमुदा रविरत्र चेत्।**
**शुभखगा धनधर्मविवृद्धिदाः खलखगेऽपि शुभेत्यपरे जगुः ॥ ५८ ॥**

खलखगे = पापग्रहे, तपसि = नवमस्थानगते सति सोदरभीः=सहोदरभयं पशुपीडनं = पालिताश्वगोमहिष्यादिनाशं भवति । यदि अत्र=नवमे, रविस्तदाऽतिमुदः=अधिकहर्षाणि, भवन्ति । शुभग्रहाः नवमे स्थिताः धनधर्मविवृद्धिदाः भवन्ति । अपरे आचार्याः खलखगे नवमस्थे सति दशा शुभा इति जगुः ॥ ५८ ॥

भाषा—पापग्रह नवम स्थान में रहने से सहोदर को भय, पशुओं की पीड़ा, होती है । यदि वहां रवि नवम में हों, तो अत्यन्त हर्ष को देते हैं। यदि शुभग्रह नवम स्थान में हों, तो धन धर्म को बढ़ाते हैं । और आचार्य कहते हैं कि नवम में पाप रहने से शुभ ही होता है ॥ ५८ ॥

अथ दशमस्थानस्थितसकलग्रहफलम्—

**गगनगो रविजः पशुवित्तहा रविकुजौ व्यवसायपराक्रमौ ।**
**धनसुखानि परे च धनात्मजावनिपसङ्गसुखानि वितन्वते ॥ ५९ ॥**

गगनगः = दशमस्थानस्थितः, रविजः = शनिः, पशुवित्तहा=पशुधनक्षतिकरो भवति । गगनगौ रविकुजौ, व्यवसायपराक्रमौ कुरुतः । परे = शुभाः, धनसुखानि, धनात्मजावनिपसङ्गसुखानि=धनपुत्रराजसङ्गसुखानि च वितन्वते=दिशन्ति ॥ ५९ ॥

भाषा—दसवें स्थान में शनि हो, तो पशु धन नाशक होता है । और रवि मङ्गल दशम स्थान में हों, तो व्यापार उद्योग को करते हैं । और शुभ ग्रह यदि दशम में हों तो धनसुख, पुत्रसुख, राजसमागम सुख करते हैं ॥ ५९ ॥

अथ लाभभावस्थसकलग्रहफलम्—

**लाभे धनोपचयसौख्ययशोऽभिवृद्धिं सन्मित्रसङ्गबलपुष्टिकराश्च सर्वे ।**
**क्रूरा बलेन रहिताः सुतवित्तबुद्धिनाशं शुभास्तु तनुतां स्वफलस्य कुर्युः॥६०॥**

सर्वे = पापाः शुभाश्च सबला भूत्वा लाभे = एकादशस्थाने स्थितास्तदा धनोपचयसौख्ययशोऽभिवृद्धिं, सन्मित्रसङ्गबलपुष्टिकराश्च भवन्ति । बलेन रहिताः क्रूराः = पापाः सुतवित्तबुद्धिनाशं कुर्वन्ति । बलेन रहिताः शुभाः स्वफलस्य शुभस्य तनुतां= अल्पतां कुर्युः ॥ ६० ॥

भाषा—सकल पापग्रह या शुभग्रह लाभ ( एकादश ) स्थान में हों, तो धनवृद्धि, यशोवृद्धि, अच्छे मित्रों के सङ्ग, बलपुष्टि को करते हैं । बल हीन पापग्रह यदि लाभ

स्थान में हों, तो पुत्रनाश, धननाश, बुद्धिनाश को करते हैं। और बलहीन शुभग्रह अपने शुभफल को कुछ कमती करते हैं ॥ ६० ॥

अथ व्ययभावस्थसकलग्रहफलम्—

पापा व्यये नेत्ररुजं विवादं हानिं धनानां नृपतस्करादेः।
सौम्या व्ययं सद्व्यवहारमार्गे कुर्युः शनिर्हर्षविवृद्धिमत्र ॥ ६१ ॥

पापाः=पापग्रहाः यदि व्यये=द्वादशभावे स्थितास्तदा नेत्ररुजं=नयनरोगं, विवादं=शुष्ककलहं, धनानां नृपतस्करादेः सकाशाद्धानिं कुर्वन्ति। व्ययभावगताः शुभाश्च सद्व्यवहारमार्गे व्ययं कुर्युः, व्ययगः शनिस्तु हर्षविवृद्धिं करोतीति शनिफलमन्यग्रन्थाद्विरुद्धं वर्त्तते ॥ ६१ ॥

भाषा—यदि व्ययभाव में पापग्रह हों तो नेत्ररोग, विवाद, राजा से चोर से धनों की हानि करते हैं। और व्ययभाव में यदि शुभग्रह हों, तो अच्छे कार्यों में खर्चा हो। शनि व्ययभाव में रहने से हर्षवृद्धि करते हैं ॥ ६१ ॥

श्रीगर्गान्वयभूषणं गणितविच्चिन्तामणिस्तत्सुतो-
ऽनन्तोऽनन्तमतिर्व्यधात्खलमतिध्वस्त्यै जनुःपद्धतिम्।
तत्सूनुः खलु नीलकण्ठविबुधो विद्वच्छिवानुज्ञया
भावस्थग्रहपाकदौःस्थ्यसुखतायुक्तं फलं सोऽभ्यधात् ॥ ६२ ॥

चरणत्रयं व्याख्यातमेव केवलं चतुर्थचरणो व्याख्यायते। स नीलकण्ठदैवज्ञः भावस्थग्रहपाकदौःस्थ्यसुखतायुक्तं=द्वादशभावगतग्रहजनितक्लेशशुभत्वसहितं फलं अभ्यधात् उक्तवानिति ॥ ६२ ॥

भाषा—इस श्लोकका अर्थ पहले लिख चुका हूं। यहां ४ थे चरण का अर्थ यह है-नीलकण्ठ दैवज्ञ बारहों भावमें ग्रहोंके शुभाशुभ फलों को कहे ॥ ६२ ॥

इति दशाफलाध्यायः।

---

## अथ मासदिनफलाध्यायः।

तत्रादौ मासप्रवेशवेलासाधनमाह—

मासार्कस्य तदासन्नपङ्क्तिस्थेन सहान्तरम्।
कलीकृत्यार्कगत्याऽऽप्तदिनाद्येन युतोनितम् ॥ १ ॥
तत्पङ्क्तिस्थं वारपूर्वं मासार्केऽधिकहीनके।
तद्वाराद्ये मासवेशो द्युवेशोऽप्येवमेव हि ॥ २ ॥

मासार्कस्य=एकद्वित्रिराशियुक्तस्य सूर्यस्य, तदासन्नपंक्तिस्थेन सूर्येण सह अन्तरं कार्यम्। तत्र प्रथममासप्रवेशे वर्षप्रवेशकालसिद्धा एव सर्वे विषया बोध्याः। द्वितीयमासे तु वर्षकालिकसूर्यराश्यादावेकराशिं संयोज्य मासार्कः। तृतीयमासे राशिद्वयाधिको वर्षकालिकसूर्यो मासार्कः। अथवा एकराशियुक्तो द्वितीयमासप्रवेशकालिकसूर्यो मासार्को भवति। अतएव संज्ञातन्त्रे—"एकैकराशिवृद्ध्या चेत्तुल्योंऽशाद्यैर्यदा रविः। तदा मासप्रवेशः" इत्युक्तम्। तस्य मासार्कस्य, तदासन्नपङ्क्तिस्थेन=तत्समीपतर-मिश्रमानकालिकसूर्येण यदन्तरं, तत्कलीकृत्य=कलात्मकं कृत्वा, अर्कगत्याऽऽप्तदिनाद्येन अधिकहीनके मासार्के सति वारपूर्वं तत्पङ्क्तिस्थं युतोनितं कार्यम्। यदि मासार्कादधिकः पङ्क्तिस्थः सूर्यस्तदा ऋणं, तथा मासार्कादूनः पङ्क्तिस्थसूर्यस्तदा धनमिति बोध्यम्। तत्र मासकालपङ्क्तिकालयोरन्तरज्ञानार्थमनुपातः यदि रविगत्या एकं दिनं तदा मासार्कपङ्क्तिस्थार्कान्तरकलाभिः किमिति दिनादिकं फलं जातं तद्धनचालने पङ्क्तिकाले दिनादिके धनमृणचालने ऋणं कार्यम् तदा मासप्रवेशकालः स्यात्। एवमेव द्युप्रवेशकालः साध्यः। यथा मासार्के एकांशयोजनेन द्वितीयदिनप्रवेशार्कः, अंशद्वययोजनेन तृतीयदिनप्रवेशार्क एवं, यद्दिने दिनप्रवेशकालः साध्यते, तद्दिवसीयदिनप्रवेशार्कस्य तथा तद्दिवसीयसूर्यांशानां च यदन्तरं तत्कलात्मकं विधाय रविगतिकलया एकं दिनं षष्टिघटिकात्मकं लभ्यते तदा तदन्तरकलाभिः किमिति यल्लब्धं समयमानं तेन मिश्रमानकालस्याधिकत्वे शोध्यं, न्यूनत्वे योज्यं तदा दिनप्रवेशकालः सिद्ध्यति ॥ १-२ ॥

**भाषा**—वर्षप्रवेश कालिक सूर्य में एक राशि जोड़ने से दूसरे मास प्रवेश का सूर्य, दो राशि जोड़ने से तीसरे मास के सूर्य, इस प्रकार जिस मास का मासप्रवेश साधन करना हो, उस मास का जो मासार्क हो और उसके पूर्व पर जो पंक्ति नजदीक हो, उस पंक्ति का जो सूर्य उन दोनों सूर्यों का अन्तर करके कलात्मक बनावे, उसमें रविगतिकला से भाग देने पर जो लब्धि हो, वह यदि पंक्तिस्थार्क से मासार्क अधिक हो, तो पंक्ति के वारादि काल में जोड़ना, यदि पंक्तिस्थार्क से मासार्क न्यून हो, तो पंक्ति के वारादि में घटाना तो मासप्रवेशकाल होगा। इसी प्रकार दिनप्रवेश भी साधन करना। जैसे प्रथमदिनप्रवेश वर्षप्रवेश काल ही में हुआ। दूसरा दिनप्रवेश जानने के लिये वर्षप्रवेशकालिकसूर्य में १ अंश जोड़ा, तो दूसरे दिनप्रवेश का सूर्य हुआ, इसका और उसी दिन के मिश्रमान कालिक सूर्य का अन्तर करना, उसकी कला बनाना, उसमें रविगतिकला से भाग देकर पहले घटी बाद में शेष को साठ से गुणाकर फिर गतिकला से भाग देने पर पल आवेंगे यह

घटी पल मिश्रमान काल में जोड़ना घटाना, अर्थात् दिनार्क से मिश्रमानकालार्क अधिक है तो घटाना यदि न्यून है, तो जोडना तब दिनप्रवेशकाल हो जायगा ॥ १–२ ॥

उदाहरण—

किसीका मासप्रवेशार्क—३।१२।२०।२२ है। उसके समीपकी पंक्ति श्रा० शु० २ शनि ४७।२९ के समय का सूर्य = ३।१।११।३६ है। इन दोनों के अन्तर = ०।२।२१।१६ की कला = १७१'।१६'' में सूर्यकी गतिकला = २७'।१'' से भागदेने पर २।११।२७ दिनादि हुये। यहां पंक्तिस्थ सूर्यसे मासार्क अधिक है इसलिये पंक्तिके वारादि ६।४२।२९ में २।११।१७ के जोड़ने से २।४७।२६ याने श्रा० शु० ५ मं० को ४७।२६ इष्टकालमें मासप्रवेश होगा। इसीतरह दिनप्रवेश भी समझना चाहिये ॥

अथ मासप्रवेशे मासेशसाधनमाह—

मासप्रवेशकाले ज्ञो ग्रहान्भावांश्च साधयेत् ।
तत्र मासतनोर्नाथो मुथहा जन्मपस्तथा ॥ ३ ॥
त्रिराशिपो दिननिशो रवीन्दुभपतिस्तथा ।
अब्दप्रवेशलग्नेश एषां वीर्याधिकस्तनुम् ॥ ४ ॥
पश्यन्मासपतिर्ज्ञेयस्ततो वाच्यं शुभाशुभम् ।
अपरे मासलग्नेशं मासाधिपतिमूचिरे ॥ ५ ॥
दिनेशं दिनलग्नेशं तथा प्रोचुर्विचक्षणाः ।
मासघस्रेशयोर्वाच्यं फलं वर्षेशवद्बुधैः ॥ ६ ॥

मासप्रवेशकाले, ज्ञः = दैवज्ञः, ग्रहान् भावाँश्च साधयेत्। तत्र मासतनोः=मासप्रवेशकालीनलग्नस्य नाथः=स्वामी तथा मासप्रवेशकालीनमुथहेशो ग्रहः, जन्मलग्नपतिः, तथा त्रिराशीशः = मासप्रवेशकालिकलग्नत्रिराशीशः, दिननिशोर्मासप्रवेशे क्रमेण रवीन्दुभपतिः = रविचन्द्रराश्यधिपो ग्रहः। दिने सूर्यराशीशः। रात्रौ चन्द्रराशीशः। तथा अब्दप्रवेशलग्नेशः = वर्षलग्नपतिश्च एषां षड्ग्रहाणां मध्ये वीर्याधिकः=बलाधिकः, तनुं = मासप्रवेशलग्नं पश्यन् सन् मासपतिर्ज्ञेयः। ततो बलवशेन वर्षं शुभाशुभं वाच्यम्। अपरे=अन्ये विचक्षणाः पण्डिताः, मासलग्नेशं मासाधिपतिं=मासेश्वरम् ऊचिरे = उक्तवन्तः। तथा दिनप्रवेशलग्नेशमेव दिनेशं कथयामासुः। तत्र बुधैः मासघस्रेशयोः फलं वर्षेशवद्वाच्यम् ॥ ३–६ ॥

भाषा—मासप्रवेश काल में भी ज्यौतिषी सूर्यादिग्रह, तन्वादि द्वादश भाव को बनावें। अब मासप्रवेश काल में जो लग्नपति तथा मासप्रवेशकालिक मुथहेश, ( यहां एकवर्ष तक जब एक ही राशि चलती है, तो वर्षकालिक मुथेश ही मासप्रवेशकालिक

मुथहेश होगा, तब क्यों मास प्रवेश काल में फिर भिन्न मुथहेश कहा ? ठीक है—क्योंकि, यदि पूर्वमासप्रवेश कालिक मुथहा राश्यादि २।२८।२०।४० इतने हैं—इसमें मुथहेश बुध है, लेकिन एक मास में "सार्धमंशद्वयं मासे" इससे २।३०' इतने २।२८।२०।४० इसमें जोड़ने से ३।००।५०।४० हुए। अब मुथहा कर्कराशि में चली गयी-अतः मुथहेश चन्द्रमा हुआ; इसलिये किसी किसी अवस्था में यह भिन्न होता है सो स्वयं समझना। और जन्मलग्नेश त्रिराशीश, दिन में मासप्रवेश होने से रविराशीश रात में चन्द्रराशीश, और वर्षलग्नेश इन छै ग्रहों में जो सबसे बलवान् होकर मास प्रवेश कालिक लग्न को देखे, वही मासेश होगा। यदि बली भी होकर लग्न को नहीं देखे तो वह मासेश नहीं होगा इत्यादि विषय वर्ष प्रवेशवत् ही समझना। केवल इतना ही भेद है कि वहां पांच अधिकारी, यहां छै ग्रह अधिकारी हैं। कोई २ आचार्य मासप्रवेश कालिक लग्न ही के स्वामी को मासेश तथा दिनप्रवेश लग्न के स्वामी ही को दिनेश कहते हैं। मासेश दिनेशों के फल बलाबलविचारपूर्वक वर्षेशफलवत् ही कहना ॥ ३-६ ॥

अथ मासफलमाह—

लग्नांशाधिपतिर्विलग्नपनवांशेशेन मैत्रीदृशा
दृष्टो वा सहितः शशी च यदि तौ मैत्रीदृशाऽऽलोकते।
तस्मिन्मासि तनौ सुखं बहुविधं नैरुज्यमित्थं फलं
तावद्यावदिमे स्युरित्थमथ तान्सञ्चार्य वाच्यं फलम् ॥ ७ ॥

लग्नांशाधिपतिः = मासप्रवेशलग्ननवांशेशः, विलग्नपनवांशेशेन = मासप्रवेश-लग्नेशनवांशाधिपेन अर्थान्मासप्रवेशकाले लग्ननवांशपतिर्लग्नपतिनवांशाधिपेन, मैत्रीदृशा = ( ३।५।९।११ ) दृष्ट्या दृष्टः = विलोकितः, वा सहितः = युतः स्यात्तत्र शशी = चन्द्रः, यदि तौ = लग्ननवांशेशलग्नपतिनवांशनाथौ मैत्रीदृशा ( ३।५।९।११ ) आलोकते = वीक्षते, तदा, तस्मिन् मासि, तनौ=शरीरे, बहुविधं सुखं, नैरुज्यम्=आरोग्यं च भवति। इत्थममुना प्रकारेण फलं = मासफलं, तावदेव वाच्यं, यावत् इमे ग्रहा इत्थम्=ईदृशाः स्युः। अर्थात् तेषां ग्रहाणां प्रतिदिनचलन-वशेन नवांशभेदात् तत्पतिग्रहभेदाद् दृष्टिभेदात्फलपरिवर्त्तनं जायते। अतः तान् ग्रहान् सञ्चार्य=सञ्चाल्य फलं वाच्यम् ॥ ७ ॥

भाषा—मासप्रवेश काल में यदि लग्ननवांशेश, और लग्नेश के नवांशेश से ३।५।९।११ दृष्टि से देखा जाय, या एक साथ हो, तथा उन दोनों को चन्द्रमा मित्रदृष्टि (३।५।९।११) से देखे, तो उस महीने में शरीर में नाना प्रकार के सुख हों, आरोग्य

रहै इस प्रकार फल तब तक ही कहना जब ये तीनो ( लग्ननवांशेश, लग्नपतिनवांशेश, चन्द्र ) ऐसे रहैं, बाद में उनका संचार देख कर भिन्न अवस्था में भी वैसे विचार करना । उसके अनुसार फल कहना ॥ ७ ॥

अथानिष्टफलम्—

तौ तेच्छत्रुदृशा मिथश्च शशिना दृष्टौ मनोदुःखदौ
रोगाधिक्यकरौ च कश्चिदनयोर्नीचोऽस्तगो वा यदि ।
कष्टात्सौख्यमिह द्वयं यदि पुनर्नीचास्तगं स्यान्मृतिः
सूत्यब्दोद्भवरिष्टतो मृतिसमं स्यादन्यथेत्यूचिरे ॥ ८ ॥

तौ लग्ननवांशेश-लग्नपतिनवांशेशौ मिथः = परस्परं, शशिना = चन्द्रेण च दृष्टौ = वीक्षितौ, तदा मनोदुःखदौ, रोगाधिक्यकरौ च भवतः । अथ यदि वा अनयोर्लग्नलवेश-लग्नपतिलवेशयोर्ग्रहयोर्मध्ये एको नीचगतोऽन्योऽस्तगो भवेत्तदा कष्टात्=प्रयासात् सौख्यं स्यात् । इह वा यदि द्वयं = तदुक्तग्रहद्वयमपि पुनर्नीचास्तगं= नीचगतं, वाऽस्तगतमेव स्यात् तदा मृतिः स्यात् । अथान्यथा सूत्यब्दोद्भवरिष्टतः = जन्मवर्षकालघटितानिष्टयोगतः, मृतिसमं = मरणतुल्यं कष्ट स्यात् । इति फलम् आचार्या ऊचिरे = कथितवन्तः ॥ ८ ॥

भाषा—यदि लग्ननवांशेश, लग्नपतिनवांशेश, ये दोनों परस्पर एक दूसरे को देखें, या चन्द्रमा से देखे जांय, तो मनोदुःखको और अधिकरोग को देते हैं । यदि उन दोनों में एक नीच में दूसरा अस्त हो तो कष्ट से कुछ सुख हो । यदि दोनों नीच ही में, या दोनों अस्त ही हों, तो मरण होता है । अथवा जन्मकाल, वर्षकाल में भी कष्ट सिद्ध होने से मरणसमान फल होता है । ऐसा आचार्य लोग कहे हैं ॥ ८ ॥

भावांशाधिपतिः स्वभावपनवांशेशेन मैत्रीदृशा
दृष्टो वा सहितः शशी च यदि तौ मैत्रीदृशाऽऽलोकते ।
तद्भावोत्थसुखं विलोक्यमथतद्व्यत्यासतः कीर्तितं
नीचास्तादि फलं च लग्नवदिदं विद्वद्भिरूह्यं धिया ॥ ९ ॥

भावांशाधिपतिः = कस्यापि भावस्य नवांशपतिः, स्वभावपनवांशेशेन = निजभावेशलवेशेन मैत्रीदृशा दृष्टः, वा सहितः, वा शशी चन्द्रश्च तौ भावनवांशेश—भावेशनवांशेशौ ग्रहौ मैत्रीदृशाऽऽलोकते तदा तद्भावोत्थसुखं वाच्यम् । तद्व्यत्यासतः = तदुक्तविलोमात् शत्रुदृष्ट्या विलोमं फलं कीर्तितं = कथितम् । नीचास्तादिफलं च लग्नवत् = यथा इतः पूर्वश्लोके ( द्वयं यदि पुनर्नीचास्तगम् ) उक्तं तथैव विद्वद्भिः = पण्डितैः, धिया = स्वबुद्ध्या ऊह्यं = ज्ञातव्यम् ॥ ९ ॥

भाषा—किसी भाव का नवांशेश, उस भाव के स्वामी के नवांशेश की मित्रदृष्टि से देखा जाय, या चन्द्रमा उन दोनों को मित्रदृष्टि से देखे, तो उस भाव से उत्पन्न सुख कहना। यदि नहीं देखे, तो नहीं कहना। एवं लग्ननवांशेश, और लग्नेशनवांशेश के बीच में अस्त में रहने से जैसा पहले श्लोक में फल कहा है, वैसा ही यहां भावनवांशेश भावेशनवांशेश के वश से भी फल कहना ॥ ९ ॥

लग्नेशमासेशसमेश्वरांशनाथा यदंशाधिपमित्रदृष्ट्या।
दृष्टा युता वा शशिना च तत्तद्भावोत्थसौख्याय न चेदनिष्टम् ॥१०॥

लग्नेशः = वर्षलग्नेशः, मासेशः = मासस्वामी, समेश्वरः=वर्षेशः, अंशस्वामी= मासप्रवेशलग्नेशः, एते ग्रहा यदंशाधिपमित्रदृष्ट्या = यद्भावनवांशेशस्य मित्रदृष्ट्या दृष्टाः, वा युताः वा शशिना युतदृष्टास्तदा तद्भावोत्थसौख्याय भवन्ति। इत्थं न चेत्तदाऽनिष्टं वाच्यम् ॥ १० ॥

भाषा—वर्षलग्नेश, मासेश, वर्षेश, मासप्रवेश-लग्नेश ये चारो ग्रह जिस भावके नवांशेश की मित्रदृष्टि से दृष्ट युत हो, या चन्द्रमासे युतदृष्ट हो, तो उस भाव से जिन चीजों के विचार होते हैं, उन विषयों के सुख होते हैं। अन्यथा अशुभ जानना ॥१०॥

निर्बला व्ययषष्ठाष्टांशपा सत्फलदायकाः।
अन्ये सवीर्याः शुभदा व्यत्यये व्यत्ययः स्मृतः ॥ ११ ॥

व्ययषष्ठाष्टांशपाः = व्ययषष्ठाष्टमभावनवांशस्वामिनः, निर्बलाः = बलहीनास्तदा सत्फलदायकाः भवन्ति। एते तु अनिष्टफलदा एव, तेन यदि ते सबलास्तदाऽनिष्टफलपोषकाः, दुर्बलास्तदाऽल्पानिष्टफलदा अत एव शुभफलदायकाः। अन्ये = तनुधनसहजसुखसुतजायाधर्मकर्मायभावेशाः सवीर्याः = बलयुक्तास्तदा शुभदा भवन्ति। व्यत्ययेऽर्थात् १२।६।८ एतद्भावेशाः सबलास्तदाऽशुभदाः, १।२।३।४।५।७।९।१०।११ एतद्भावेशास्तल्लवेशाः दुर्बलास्तदाऽनिष्टफलदाः। एतेनानिष्टभावा दुर्बलाः शुभदाः शुभभावाः सबलास्तदा शुभदा इति सिद्धम् ॥ ११ ॥

भाषा—१२।६।८ इन भावोंके नवांशेश निर्बल हों, तो शुभफल को देते हैं। और यदि शेष ( १।२।३।४।५।७।९।१०।११ ) भावों के नवांशेश सबल हों, तो शुभ फल देते हैं। यदि १२।६।८ इन भावों के नवांशेश सबल हों, तो अशुभफल देते हैं। यदि १।२।३।४।५।७।९।१०।११ भावों के नवांशेश दुर्बल हों, तो अशुभ फल होते हैं ॥ ११ ॥

लग्नेशमासेशसमेशमुंथाधीशाः षडष्टोपगताः सपापाः।
दृष्टाः खलैः शत्रुदशाऽत्र मासे व्याध्यादिविड्डिम्भयदुःखदाः स्युः ॥१२॥

लग्नेश-मासेश-समेश-मुन्थाधीशाः, षष्ठोपगताः=षष्ठाष्टमस्थानगताः, अत्र छन्दोभङ्गानुरोधेन व्ययोपादानं न कृतं, तेन ६।८।१२ समानफलदातृत्वात्समत्वाद्द्वयोर्ग्रहयोः तृतीयस्यापि ग्रहणं, तथा ते सपापाः=पापग्रहसंयुताः, खलैः=पापैः शत्रुदृशा ( १ ४।७।१० ) दृष्टास्तदा अत्र मासे ते ग्रहाः व्याध्यादिविद्विड्भयदुःखदाः = व्याधिरोगभय-शत्रुभय-दुःखदा भवन्ति ॥ १२ ॥

भाषा—वर्षलग्नेश, मासेश, वर्षेश, मुथहेश ये ग्रह यदि ६।८।१२ इन स्थानों में हों, और पापग्रह से संयुत हो, या पापों की शत्रु ( १।४।७।१० ) दृष्टि से दृष्ट हो, तो उस मास में वे ग्रह सब व्याधिभय, रोगभय, शत्रुभय और दुःखों को देते हैं ॥ १२ ॥

केन्द्रत्रिकोणायगतास्तु लग्नमासाब्दपा वीर्ययुता नराणाम् ।
नैरुज्यशत्रुक्षयराज्यलाभमानोदयात्यद्भुतकीर्तिदाः स्युः ॥ १३ ॥

वीर्ययुताः=बलयुक्ताः, लग्नमासाब्दपाः=लग्नेश-मासेश-वर्षेशाः, केन्द्रत्रिकोणायगताः=१ ४।७।१०।९ ५।११ एतत्स्थानगतास्तदा नराणां=मनुष्याणां नैरुज्यं—शत्रुक्षय-राज्यलाभ-मानोदयात्यद्भुतकीर्त्तिदाः स्युः ॥ १३ ॥

भाषा—बलयुक्त वर्षलग्नेश, मासेश, वर्षेश यदि १।४।७।१०।५।९।११ इन स्थानों में हों, तो आरोग्य, शत्रुनाश, राज्यलाभ संमान, विशेष यश प्रतिष्ठा को देते हैं ॥१३॥

इन्थिहालग्नपो राशियों बली तत्र हद्दपाः ।
दशेशाः स्वांशतुल्याहैरित्युक्तं कैश्चिदागमात् ॥ १४ ॥

इन्थिहालग्नपोः=मुथहेश-मासलग्नेशयोः, ग्रहयोः यो राशिर्बली तत्र राशौ हद्दपाः=हद्देशा ये ग्रहास्ते ग्रहाः स्वांशतुल्यांशैः दशेशा भवन्तीति आगमात् कैश्चिदुक्तम् ॥ १४ ॥

भाषा—मुथहेश, मासलग्नेश इन दोनो में जिसकी राशि बली हो, उसकी हद्दा का ज ।स्वामीग्रह, सो अपने अंशों से दशेश होता है ॥ १४ ॥

रवीन्द्वोरसमावेशान्नैतद्युक्तं परे जगुः ।
दशान्तरदशाच्छेदे फलमाब्दं तु युज्यते ॥ १५ ॥

पूर्वोक्तयोगे रवीन्द्वोः=सूर्यचन्द्रयोः असमावेशादेतद्युक्तं नेति परे आचार्या जगुः । दशान्तरदशाच्छेदे=पात्यायिनीदशायां योऽन्तरदशाच्छेदः = अन्तर्दशाखण्डम् , तस्मिन् , आब्दं=वर्षोक्तं फलं वक्तुं युज्यते ॥ १५ ॥

भाषा—पहले के योग में रवि और चन्द्र के सम्बन्ध न होने से यह ठीक नहीं यह एक दूसरे आचार्य कह गये हैं । वर्षकाल में पात्यायिनी दशा की अन्तर्दशा बनाने से उस ( अन्तर्दशा ) में वर्षसम्बन्धि फल कहना युक्त होता है ॥ १५ ॥

अथ दिनेशफलमाह—

**दिनप्रवेशकालेऽपि खेटान्भावांश्च साधयेत् ।**
**चन्द्रलग्नांशकाभ्यां तु फलं तत्र वदेद्बुधः ॥ १६ ॥**

दिनप्रवेशकाले अपि खेटान्=सूर्यादिकान् ग्रहान्, भावान् लग्नादिकांश्च साधयेत् तत्र = दिनप्रवेशे, चन्द्रलग्नांशकाभ्यां = चन्द्रलग्नयोर्नवांशाभ्यां तु फलं बुधः वदेत् ॥ १६ ॥

भाषा—दिनप्रवेश काल में रव्यादि नव ग्रह, तन्वादि द्वादश भावों का साधन करे, और चन्द्रमा लग्न इन दोनों के नवांश से वहां फल कहना चाहिये ॥ १६ ॥

अथ दिनस्वामिनिर्णयमाह—

**चतुष्कमिंथिहेशादि दिनमासाब्दलग्नपाः ।**
**एषां बली तनुं पश्यन्दिनेशः परिकीर्तितः ॥ १७ ॥**

इन्थिहेशादिचतुष्कं=मुथहेशादिग्रहचतुष्कं = मुथहेश–जन्मलग्नेश–त्रिराशीश-दिनरात्रिचन्द्रराशीशेति ग्रहचतुष्टयं, दिनमासाब्दलग्नपाः=दिनलग्नेश–मासलग्नेश–वर्षलग्नेशा एवं सप्ताधिकारिणः । एषां मध्ये बली = सर्वाधिकबलवान् ग्रहः यदि तनुं = दिनप्रवेशतनुं पश्यन्, सन्, दिनेशः परिकीर्त्तितः । वर्षे पञ्चाधिकारिणः । मासे षडधिकारिणः । दिने सप्ताधिकारिणः । एकसहिता बोध्याः ॥ १७ ॥

भाषा—मुथहेश, जन्मलग्नेश, त्रिराशीश, दिन में सूर्यराशीश, रात में चन्द्रराशीश, दिनप्रवेशलग्नपति, मासप्रवेशलग्नपति और वर्षलग्नपति इन सात अधिकारियों में जो सबसे बली और लग्न को देखे, वही दिनेश होगा ॥ १७ ॥

अथ फलमाह—

**त्रिकोणकेन्द्रायगताः शुभाश्चेच्चन्द्रात्तनोर्वा बलिनः खलास्तु ।**
**षट्त्र्यायगास्तत्र दिने सुखानि विलासमानार्थयशोयुतानि ॥ १८ ॥**

दिने = दिनप्रवेशे चन्द्रात् = चन्द्राश्रितराशितः, वा तनोः = लग्नाश्रितराशितः, शुभाः=शुभग्रहाः त्रिकोणकेन्द्रायगताः=५।९।१।४।७।१०।११ एतेषु स्थितास्तथा च बलिनस्तदा विलासमानार्थयशोयुतानि सुखानि, एवं तत्र खलाः = पापाः, षट्त्र्यायगाः = ६।३।११ एतेषु गतास्तदापि पूर्वोक्तमेव शुभफलानि दद्युः ॥ १८ ॥

भाषा—शुभग्रह बलयुक्त होकर यदि लग्न से या चन्द्रमासे ५।९।१।४।७।१०।११ इन स्थानों में हों, तथा पापग्रह ३।६।११ इन स्थानों में हों, तो मनोविनोद, संमान, धन लाभ, यश प्रतिष्ठा से युत सुख होता है ॥ १८ ॥

**षडष्टरिःफोपगता दिनाब्दमासेन्थिहेशाः खलखेटयुक्ताः।**
**गदप्रदा मानयशोहराश्च केन्द्रत्रिकोणायगताः सुखाप्त्यै ॥ १९ ॥**

चेत् = यदि दिनाब्दमासेन्थिहेशाः षडष्टरिःफोपगताः = ६।८।१२ एषु स्थिताः, खलखेटयुक्ताः = पापग्रहयुक्ताः, तदा गदप्रदाः = रोगकराः, मानयशोहराः=अपमान-दुर्यशकरा भवन्ति। यदि केन्द्रत्रिकोणायगतास्तदा सुखाप्त्यै भवन्ति ॥ १९ ॥

भाषा—यदि दिनेश, वर्षेश, मासेश, मुथहेश ये चारों ग्रह ६।८।१२ इन स्थानों में हों, पापग्रहसे युत दृष्ट हों तो रोगप्रद, माननाश और यश हानि को करते हैं। यदि केन्द्र १।४।७।१० त्रिकोण ५।९। में गत हों, तो सुखलाभ के लिये होते हैं ॥ १९ ॥

**लग्नांशकः सौम्यखगैः समेतो दृष्टोऽपि वा मित्रदृशेन्दुनाऽपि।**
**नैरुज्यराज्यादिशरीरपुष्टिर्मासोक्तिवद्दुःखमतोऽन्यथात्वे ॥ २० ॥**

लग्नांशकः=दिनलग्ननवांशेशः, सौम्यखगैः = शुभग्रहैः, समेतः = युतः, वा मित्रदृशा दृष्टः, वा इन्दुना मित्रदृशा दृष्टः, तदा नैरुज्यराज्यादिशरीरपुष्टिः भवति। अत उक्तादन्यथात्वे = भिन्नत्वेऽर्थात् पापैः युतो दृष्टः तदा मासोक्तिवत् = यथा मास-प्रवेशे सुखदुःखविचारः कृतस्तद्वद्दुःखं बोध्यम् ॥ २० ॥

भाषा—दिनप्रवेश कालिक लग्ननवांशेश यदि शुभग्रहों से युत दृष्ट हो, या चन्द्रमा से मित्र दृष्टया दृष्ट हो, तो आरोग्य, राज्यादि सुख, शरीर पुष्टि होती है। इससे अन्यथा मासप्रवेशोक्तवत् अशुभफल जानना ॥ २० ॥

**यदंशपः सौम्ययुतेक्षितो वा स्निग्धेक्षणाद्भावजसौख्यकृत्स्नः।**
**दुःखप्रदः प्रोक्तवदन्यथात्वे सर्वेषु भावेष्वियमेव रीतिः ॥ २१ ॥**

यदंशपः=यद्भावनवांशराशिपतिः स्निग्धेक्षणात् = मित्रदृष्ट्या सौम्ययुतेक्षितः= शुभग्रहयुतदृष्टः, तदा सः तद्भावजसौख्यकृत् स्यात्। अन्यथात्वे = उक्तभिन्नत्वे, प्रोक्तवद्दुःखप्रदः स्यात्। सर्वेषु भावेषु इयमेव रीतिः बोध्येति ॥ २१ ॥

भाषा—जिस भाव का नवांशेश शुभग्रहोंसे युत हो, मित्रदृष्टि से दृष्ट हो, तो उस भाव से उत्पन्न सुख को करता है। इसके विपरीत में अर्थात् जिस भाव के नवांशेश पापग्रहों से युत हो, या क्रूरदृष्टि से पाप से दृष्ट हो, तो दुःख देता है। ऐसे सब भावों में समझना चाहिये ॥ २१ ॥

**षष्ठांशकः सौम्ययुतो रोगदः पापयुक् पुनः।**
**व्ययांशे शुभयुग्दृष्टे सद्व्ययः पापतस्त्वसत् ॥ २२ ॥**

षष्ठांशकः = रिपुभावनवांशराशिः, सौम्ययुतः = शुभग्रहयुतः, पुनः पापयुक्तस्तदा

रोगदो भवति । वा व्ययांशे = व्ययभावनवांशे, शुभयुतदृष्टे, तदा सद्व्ययः=सन्मार्गे व्ययः । पापतः=पापयुतदृष्टितः, असत् = असद्व्ययः भवति ॥ २२ ॥

भाषा—छठे भाव का नवांशपति, शुभग्रह से युत हो, फिर पापग्रह से युत हो, तो रोग को देता है । या व्ययभाव के नवांशराशि में शुभग्रह से युत दृष्ट हो, तो सन्मार्ग में व्यय हो, पापग्रह से युत दृष्ट हो, तो असद्व्यय होता है ॥ २२ ॥

**जायांशः सौम्ययुग्दृष्टः स्वस्त्रीसौख्यविलासकृत् ।**
**पापैर्गृहकलिर्दुःखं पापांतःस्थे मृतिं वदेत् ॥ २३ ॥**

जायांशः = सप्तमभावनवांशराशिः, सौम्ययुग्दृष्टः, तदा स्वस्त्रीसौख्यविलासकृत् स्यात् । वा जायांशः पापैः, युतदृष्टः, तदा गृहकलिः=गृहिणीकलहादि, दुःखं=मनोदुःखं च स्यात् । जायांशे पापान्तःस्थे सति मृतिं वदेत् ॥ २३ ॥

भाषा—सप्तमभाव नवांशराशि यदि शुभग्रह से युत दृष्ट हो, तो अपनी स्त्री का सुख विलास को करता है । यदि पापग्रहों से युत दृष्ट हो, तो घर में स्त्रीकलह, मनोदुःख हो । और यदि दो पापग्रहोंके बीचमें सप्तमभावनवांश राशि पड़े, तो मरण कहना२३

**शुभमध्यस्थिते स्त्र्यंशे बहुलं कामिनीसुखम् ।**
**स्वस्यां रतिर्गुरावन्यखगेऽन्यासु रतिं वदेत् ॥ २४ ॥**

स्त्र्यंशे = जायांशे=सप्तमभावनवांशराशौ, शुभमध्यस्थिते=शुभग्रहयोर्मध्यस्थिते, सति कामिनीसुखं = स्त्रीसुखं, बहुलं = अधिकं, भवति । तत्र गुरौ=जीवे, स्त्र्यंशे सति स्वस्यां = स्वकीयस्त्रियां, रतिः = आसक्तिः, अन्यखगे=गुरुभिन्नग्रहे जायांशे सति, अन्यासु = परस्त्रीषु रतिं = प्रेम वदेत् = कथयेत् ॥ २४ ॥

भाषा—सप्तम भाव का नवांश राशि यदि दो शुभ ग्रहोंके बीच में हो, तो स्त्रीसुख पूर्ण हो । वहां सप्तमभाव के नवांश में यदि बृहस्पति हो, तो अपनी स्त्री से प्रेम हो वा सङ्ग हो । गुरु से भिन्न ग्रहों से सप्तमभाव नवांश युत हो तो परकीया स्त्री में आसक्त हो ॥ २४ ॥

अथाष्टमभावफलमाह—

**मृत्यंशे मृत्युगैः सौम्यैर्युग्दृष्टे मरणं रणे ।**
**मिश्रैर्मिश्रं खलैः सौख्यं वर्षलग्नानुसारतः ॥ २५ ॥**

मृत्यंशे=अष्टमभावनवांशराशौ, मृत्युगैः=अष्टमभावगतैः शुभग्रहैर्युग्दृष्टे, तदा रणे=संग्रामे मरणं भवति । मिश्रैः=पापशुभैर्युतदृष्टेऽष्टमभावनवांशराशौ सति मिश्रं= पापं शुभं च फलं वाच्यम् । खलैः = पापैर्युतदृष्टे सौख्यं स्यात् । शेषं वर्षलग्नानुसारतो ज्ञेयम् ॥ २५ ॥

भाषा—यदि अष्टमभाव का नवांशेश, अष्टमभावस्थ ग्रहों से युत दृष्ट हो, तो लड़ाई में मरण हो। यदि पाप शुभ दोनों से युत दृष्ट हो, तो शुभ अशुभ दोनों प्रकार फल कहना। यदि पापग्रहों से युत दृष्ट हो तो सुख होता है। शेष वर्षलग्न के अनुसार समझना ॥ २५ ॥

अथ कर्त्तरीयोगमाह—

**द्विर्द्वादशे खला हानिं व्यये सौम्याः शुभव्ययम् ।**
**कर्त्तरी पापजा रोगं करोति शुभजा शुभम् ॥ २६ ॥**

खलाः=पापग्रहाः, द्विर्द्वादशे=द्वितीये द्वादशे च स्थिताः, तदा हानिं = सकलविषक्षतिं कुर्वन्ति । सौम्याः=शुभग्रहाः व्यये स्थितास्तदा शुभव्ययं कुर्वन्ति । पापजा कर्त्तरी रोगं करोति । शुभजा कर्त्तरी शुभं करोति । अत्र स्पष्टार्थं बालावबोधाय युक्तिर्विलिख्यते-कर्त्तरी भाषायां 'कैंची' उच्यते, तत्र यथा लोहपत्रद्वयं भवति, तत्र कस्यापि वस्त्रादेः कर्त्तनाय यदा कर्त्तरी उपयुज्यते तदा पूर्वलोहपत्रमग्रतो याति अपरलोहपत्रं पृष्ठतो याति, एवं तयोस्तीक्ष्णधारयोर्योगेन तन्मध्यगतं वस्त्रादि कर्त्तितं भवति, एवमेव व्ययस्थमार्गी पापो लग्नाभिमुखं याति धनस्थवक्री पापः पृष्ठतो याति अतः लग्नस्य = शरीररूपपत्रस्य ताभ्यां पापाभ्यां कर्त्तनं जायते ॥ २६ ॥

भाषा—दूसरे और बारहवें में पापग्रह हों, तो हानि होती है। शुभग्रह यदि दूसरे बारहवें में हों, तो शुभमार्ग में खर्चा होता है। पापग्रह से कर्त्तरी योग हो, तो रोग को करती है। शुभग्रह से कर्त्तरी होती हो, तो शुभ करती है ॥ २६ ॥

अथ चन्द्रकृतानिष्टमाह—

**लग्नेऽष्टमे वा क्षीणेन्दुर्मृत्युदः पापदृग्युतः ।**
**रोगी वा ग्रहणं चापि रिपुतः शत्रुभीरपि ॥ २७ ॥**

पापदृग्युतः=पापग्रहदृष्टयुतः, क्षीणेन्दुः=क्षीणचन्द्रः, लग्ने, वाऽष्टमे स्थाने स्थितस्तदा मृत्युदः भवति । वा जन्मपत्रे आयुःपूर्णत्वे रोगः, वा रिपुतः=शत्रुतः, ग्रहणं=वशगतत्वं भवति । शत्रुभीः = शत्रुभयमपि भवति ॥ २७ ॥

भाषा—पापग्रह से युत दृष्ट क्षीणबली चन्द्रमा यदि लग्न में या अष्टम भाव में हों, तो मरण को देता है। यदि अन्य योग उत्तम हों और जन्म कुण्डली में आयुर्दाय पूरा हो, तो रोग होता है, वा शत्रु से पकड़े जाने का सम्भव होता है। वा शत्रु भय होता है ॥ २७ ॥

अथान्यदरिष्टयोगमाह—

**चन्द्रे सभौमे निधनारिसंस्थे नृणां भयं शस्त्रकृतं रिपोर्वा ।**

पापैर्मुखस्थैः पतनं गजाश्वयानात्तनौ स्याद्बहुला च पीडा ॥ २८ ॥

सभौमे = कुजयुक्ते, चन्द्रे, निधनारिसंस्थे = अष्टमषष्ठस्थानस्थिते सति नृणां= मनुष्याणां शस्त्रकृतं भयं वा रिपोः = शत्रोः, भयं वाच्यम् । पापैः=पापग्रहैः=रविकुज- शनिक्षीणचन्द्रैः, मुखस्थैः गजाश्वयानात् = हस्तिघोटकवाहनात् पतनम्=अधःपातः, तनौ=शरीरे, बहुला=अधिका, पीड़ा भवति ॥ २८ ॥

भाषा—मङ्गल चन्द्रमा ये दोनों आठवें छठे स्थान में हों, तो मनुष्यों को शस्त्रभय वा शत्रुभय कहना। यदि पापग्रह मुख में स्थित हो तो हाथी घोड़ा आदि सवारी परसे पतन और देह में जादे पीड़ा हो ॥ २८ ॥

अथ शुभफलमाह—

शुभा द्यूने विजयदा द्यूतादर्थे सुखावहाः ।
नवमे धर्मभाग्यार्थराजगौरवकीर्तिताः ॥ २९ ॥

शुभाः = शुभग्रहा द्यूने = सप्तमस्थाने स्थिताः तदा द्यूतात् = अक्षादिक्रीडनतः, विजयदाः स्युः । तथा शुभा अर्थे = द्वितीये स्थाने स्थितास्तदा सुखावहाः = हर्ष- प्रदाः स्युः । शुभा नवमे स्थितास्तदा धर्मभाग्यार्थराजगौरवकीर्तिताः=धर्मलाभः, भाग्योदयः, अर्थलाभः, राजगौरवं = भूपसत्कारः, कीर्तिता = यशःप्रतिष्ठालाभत्वं च भवति ॥ २९ ॥

भाषा—शुभग्रह सातवें स्थान में हों, तो जूआ से जय को देते हैं। यदि शुभग्रह द्वितीय स्थान में हों, तो सुख को देते हैं। यदि शुभग्रह नवम स्थान में हों, तो धर्म, भाग्य, धन, राजसम्मान, यश को देते हैं ॥ २९ ॥

अथ दिनप्रवेशे चन्द्रावस्थावशेन फलमाह—

दिनप्रवेशेऽस्ति विधुरवस्थायां तु यादृशि ।
तदवस्थातुल्यमसौ फलं दत्ते न संशयः ॥ ३० ॥

दिनप्रवेशे विधुः=चन्द्रः, यादृशि अवस्थायां = दशायां, अस्ति, असौ चन्द्रः त- दवस्थातुल्यमेव फलं = शुभाशुभं, दत्ते, अत्र संशयः न अस्ति ॥ ३० ॥

भाषा—दिनप्रवेश काल में चन्द्रमा जैसी अवस्था में रहता है, उस अवस्था समान ही फल को देता है। इसमें सन्देह नहीं है ॥ ३० ॥

अथ चन्द्रावस्थासाधनमाह—

विहाय राशिं चन्द्रस्य भागा द्विघ्नाः शरोद्धृताः ।
लब्धं गता अवस्थाः स्युर्भोग्यायाः फलमादिशेत् ॥ ३१ ॥

चन्द्रस्य = चन्द्रस्पष्टराश्यादेः, राशिं=राशिस्थानाङ्कं, विहाय=त्यक्त्वा, येऽवशि-

घ्नः भागाः = अंशाः, ते द्विघ्नाः=द्विगुणाः, शरोद्धृताः=पञ्चभक्ताः, तदा लब्धं गताः= व्यतीताः, अवस्थाः, स्युः, तत्र भोग्यायाः = गताग्रिमावस्थायाः फलं=शुभाशुभं, आदिशेत् = कथयेत् ॥ ३१ ॥

भाषा—राश्यादिक चन्द्रमा में राशिस्थान को छोड़ कर अंशादिक जो अवयव हो उसको दो से गुणा करे, पांच से भाग दे, तो लब्धि तुल्य गत अवस्था होगी। उसके अग्रिम अवस्था का फल कहना। अवस्था के नाम—प्रवास, नाश, मरण, जय, हास्य, रति, क्रीडित, सुप्त, भुक्त, ज्वर, कम्प, और स्थिरता ॥ ३१ ॥

उदाहरण—जैसे चन्द्रमा २।४।२८।४० यहां २ राशिको छोड़ कर बांकी अंशादि ४।२८।४० इसको दो से गुणा किया ८।५७।२० इसमें पांच से भाग दिया, तो लब्धि १ हुई, तो पहली अवस्था प्रवास, सो तो गत हो गयी, उसके आगे वाली नष्टा (नाश) नामकी अवस्था हुई।

हर एक राशि में चन्द्रमा की बारह अवस्थायें होती हैं। इस लिये राशिस्थान का प्रयोजन नहीं है। बांकी जो अंशादि उस पर से वर्तमान अवस्था का विचार करना चाहिये, जैसे ३० अंश में १२ अवस्था, तो इष्ट अंश में क्या $\frac{१२ \times इअं}{३०} = \frac{२}{५} \times$ इष्ट अंश यहां जो लब्धी हुई उतनी तो गत अवस्था हुई उसके आगे वाली जो अवस्था सो वर्त्तमान अवस्था होगी ॥ ३१ ॥

अथावस्थाफलमाह—

**प्रवासः प्रवासोपगे रात्रिनाथेऽर्थनाशस्तु नष्टोपगे मृत्युभीतिः।**
**मृतावस्थिते स्याज्जयायां जयस्तु विलासस्तु हास्योपगं कामिनीभिः॥३२॥**
**रतौ स्याद्रतिः, क्रीडिता सौख्यदात्री, प्रसुप्ताऽपि निद्रां कलिं देहपीडाम्।**
**भयं तापहानी सुखं स्याच्च भुक्ताज्वराकम्पितासुस्थितासु क्रमेण ॥३३॥**

प्रवासोपगे=प्रवाससञ्ज्ञकप्रथमावस्थां गते, रात्रिनाथे = चन्द्रे, प्रवासः = परदेशवासः भवति। नष्टोपगे = नष्टसञ्ज्ञकद्वितीयावस्थांगते चन्द्रे सति अर्थनाशः = धननाशः। मृतावस्थिते = मृत्युसञ्ज्ञतृतीयावस्थां गते चन्द्रे सति, मृत्युभीतिः = मरणभयम् भवति। जयायां = जयावस्थायां चतुर्थ्यां जयः। हास्योपगे = हास्यावस्थां गते चन्द्रे विलासः = चित्तोल्लासव्यापारः। रतौ = सुरतावस्थायां, कामिनीभिः=स्त्रीभिर्विलासवतीभिः रतिः = मैथुनं स्यात्, क्रीडितावस्था तु सौख्यदात्री, प्रसुप्ताऽवस्था तु निद्रां = शयनं, कलिं = कलहं, ददाति। अथ भुक्ताज्वराकम्पितासुस्थितासु क्रमेण देहपीडा, भयं, तापहानी, सुखं स्यात्। अर्थात् भुक्तावस्थायां देहपीडा। ज्वरावस्थायां

भयम् । कम्पितावस्थायां तापहानी भवतः । सुस्थितावस्थायां सुखं स्यात् ॥३२-३३॥

भाषा—चन्द्रमा प्रवास अवस्था में हों, तो परदेश रहना होता है । नाश नाम की अवस्था में धननाश, मरण अवस्था में मरणभय, जय अवस्था में जय, हास्यावस्था में विलास, रति अवस्था में स्त्रियों से संग, क्रीडित अवस्था में सुख, प्रसुप्ता में निद्रा, कलह, भुक्ता में देहपीड़ा, ज्वरावस्था में भय, कम्पित अवस्था में ताप हानि, सुस्थित अवस्था में सुख होता है ॥ ३२-३३ ॥

अच्छी तरह समझने के लिये चक्र लिखते हैं ।

| अवस्थानाम | १ प्रवास | २ नाश | ३ मरण | ४ जय | ५ हास्य | ६ रति |
|---|---|---|---|---|---|---|
| अवस्थाफल | प्रवास | धननाश | मरणभय | जय | विलास | स्त्रीसङ्ग |
| अवस्थानाम | ७ क्रीडित | ८ सुप्त | ९ भुक्त | १० ज्वर | ११ कम्पिता | १२ स्थिरता |
| अवस्था फल | सुखलाभ | निद्रा कलह | देहपीड़ा | भय | ताप धनहानि | सुख |

इति मासप्रवेशदिनप्रवेशादिफलविचारः ।

अथ मृगयाविचारमाह—

**सवीर्यौ कुजज्ञौ नृपाखेटसिद्ध्यै न सिद्धिर्यदा वीर्यहीनाविमौ स्तः ।**
**जलाखेटमाहुः सवीर्यैर्ग्रहर्क्षैर्जलाख्यैर्नगाख्यैर्नगाखेटमाहुः ॥ ३४ ॥**

सवीर्यौ =सबलौ, बलयुक्तौ कुजज्ञौ=भौमबुधौ तु नृपाखेटसिद्ध्यै=नरेशमृगयासफलाय भवतः । अर्थान्ममाद्य मृगया सफला भविष्यति नवेति प्रश्ने यदि तात्कालिकौ मङ्गलबुधौ बलयुक्तौ भवतस्तदाऽवश्यं मृगया सफला वाच्या । यदा इमौ = कुजबुधौ विबलौ स्तस्तदा मृगयासिद्धिर्न वाच्या । तत्र सवीर्यैः = बलयुक्तैः, ग्रहर्क्षैः = योगकर्तृग्रहराशिभिः, जलाख्यैः = जलचरसञ्ज्ञकैः=कर्कवृश्चिकमीनसञ्ज्ञैः, जलाखेटं= जलचरमीनगोधाकच्छपादिजीवानामाखेटम् आहुः । नगाख्यैः = वनचरसञ्ज्ञकैः= मेषसिंहधनुःसञ्ज्ञकैः, नगाखेटं = पर्वतवनचरजीवहननक्रीडनम् , आहुः ॥ ३४ ॥

भाषा—यदि मृगयाप्रश्नकाल में मंगल, बुध पूर्णबली हों तो राजा या शिकारियों की शिकार सफल होने के लिये होते हैं। यदि वे दोनों दुर्बल होते हैं, तो शिकार करना बेकार होता है। यदि उन दोनों के राशि जलचर हो, बलवान् भी हो, तो जलचरजीवों का शिकार कहना। यदि उन दोनों के राशि पर्वतचारी वनचारी हों, तो वनचर पर्वतचर जीवों के शिकार होते हैं। दोनों में एक जलचर दूसरा वनचर हो तो दोनों होते हैं ॥ ३४ ॥

अथान्यदाह—

लग्नास्तनाथौ केन्द्रस्थौ निर्बलौ क्लेशदायिनी ।
मृगयोक्ता शुभफला वीर्याढ्यौ यदि तौ पुनः ॥ ३५ ॥

लग्नास्तनाथौ = मृगयाप्रश्नकालिकलग्नसप्तमस्थानस्वामिनौ ग्रहौ केन्द्रस्थौ (१।४।७।१०) एतत्स्थानगतौ, निर्बलौ=पञ्चाल्पबलौ तदा मृगया=आखेटः, क्लेशदायिनी उक्ता। यदि पुनस्तौ लग्नेशसप्तमेशौ बलाढ्यौ भवतस्तदा शुभफला विनाऽऽयासेन झटिति सफला मृगया वाच्येति ॥ ३५ ॥

भाषा—यदि शिकार के प्रश्नकाल में लग्नेश, सप्तमेश ये दोनों केन्द्र (१।४।७।१०) में हों, बलहीन हों, तो मृगया क्लेशदायिनी होती है। यदि वे दोनों ग्रह सबल हों, तो मृगया शुभ फल देने वाली होती है।

अथ भोजनचिन्ताविचारमाह—

लग्नाधिपो भोज्यदाता, सुखेशो भोज्यमीरितम् ।
बुभुक्षा मदपः, कर्मपतिर्भोक्तेति चिन्तयेत् ॥ ३६ ॥

अद्य मया किञ्च भुक्तं, वा किं किमहं भोक्ष्यामीति प्रश्ने—तत्कालप्रश्नलग्नाधिपः= लग्नेशो ग्रहः, भोज्यदाता = भोजयिता, सुखेशः = चतुर्थेशः, भोज्यं = भोजनवस्तु भवेत्। मदपः=सप्तमेशः, बुभुक्षा=भोक्तुमिच्छा क्षुधा भवति। कर्मपतिः = दशमेशः भोक्ता = भोजनकर्त्ता, इति चिन्तयेत् ॥ ३६ ॥

भाषा—मैं आज क्या खाया, अथवा क्या क्या खाऊंगा? इस प्रश्नकाल का जो लग्नेश, वह खिलाने वाला, अर्थात् वह यदि दुर्बल हो, तो खिलाने वाला गरीब हो। वह यदि सबल हो, तो खिलाने वाला धनी सुखी हो। वह यदि दिनस्वामी हो तो राजा के घर में निमन्त्रण होता है। यदि पुरुष ग्रह हो तो पुरुषप्रधान घरमें, स्त्री हो तो स्त्री प्रधान घर में, यह ग्रह जिस रस का स्वामी, हो उस रस का प्राधान्य भोजन में कहना इत्यादि तर्क करना। और चतुर्थेश भोजन होता है, चतुर्थ स्थान की जैसी प्रकृति गुण तदनुसार भोजनीय चीजों में रस, गुण सब कुछ कहना। और सप्तमेश भूख होती

है। यह बलिष्ठ हो, तो अधिक भूख, दुर्बल हो, तो थोड़ी भूख, बदि अस्तंगत हो, तो मन्दाग्नि हो। यह सप्तमेश यदि सूर्य कुज हो यदि अग्नितत्त्वराशि में हो, तो जठराग्नि अत्यन्त तीव्र हो। जो खाय सब स्वाहा हो जाय। यदि चन्द्रमा हो, तो खीर वा दही दूध प्रधान भोजन हो। यदि रवि कुज हो, तो सूखा-पूरीकचौड़ी वा तली हुई तरकारी वगैरह कहना। यदि शनि हो, तो तीत नीम, करैला आदि चीज हो। ऐसे सप्तमेश ग्रह भूख होती है। दशमेश खाने वाला होता है। इस पर से ग्रहों के बल प्रकृति, स्वरूप आश्रित राशि के नवांश आदि के वश से फल विचारना ॥ ३६ ॥

अथ भोजनविवरणमेवाह—

लग्ने लाभे च सत्खेटयुतदृष्टे सुभोजनम्।
जीवे लग्ने सिते वापि सुभोज्यं दुःस्थितावपि ॥ ३७ ॥
मन्दे तमसि वा लग्ने सूर्येणालोकिते युते।
लभ्यते भोजनं नात्र शस्त्रभीतिस्तदा क्वचित् ॥ ३८ ॥
रविदृष्टं युतं वापि लग्नं न यदि तत्र हि।
उपवासस्तदा वाच्यो नक्तं वा विरसाशनम् ॥ ३९ ॥
चन्द्रे कर्मगते भोज्यमुष्णं शीतं सुखे कुजे।
तुर्ये खेटस्य वसतो भोज्यान्ने रसमादिशेत् ॥ ४० ॥
स्निग्धमन्नं सिते तुर्ये तैलसंस्कृतमर्कजे।
नीचोपगे कदशनं विरसं न च संस्कृतम् ॥ ४१ ॥

लग्ने, लाभे = एकादशे च स्थाने, सत्खेटयुक्ते=शुभग्रहयुक्ते तदा सुभोजनम् = सरसोत्तमवस्तु भोजनीयं वाच्यम्। जीवे = गुरौ, वा सिते = शुक्रे, लग्ने सति, तदा दुःस्थितौ = सद्वस्तुभोजनासम्भवेऽपि सुभोजनं ईरितम् = उक्तम्।

अथ मन्दे = शनौ, वा तमसि = राहौ, लग्ने सति, तथा सूर्येण = रविणा आलोकिते = दृष्टे, युते वा सति भोजनं नैव लभ्यते, प्रत्युत तदा क्वचित् शस्त्रभीतिः भवेत्। यदि तत्र = उक्तयोगे अर्थात् शनिराहुयुतलग्नं रविदृष्टं न वा युतं न तदा उपवासः वाच्यः। वा दिने उपवासः, नक्तं = रात्रौ विरसाशनं = नीरस-वासि-कदन्नभोजनं वाच्यम्। चन्द्रे कर्मगते=दशमस्थे भोज्यं वस्तु उष्णं=तप्तमेव वाच्यं, कुजे सुखे=चतुर्थे सति शीतं = पर्युषितं, चिरकालरन्धितं, वा दधि-चिपिटान्नं वाच्यम्। तुर्ये = चतुर्थे, वसतः = वर्त्तमानस्य, खेटस्य = ग्रहस्य, वशतः, भोज्यान्ने रसमादिशेत्। तत्र सिते=शुक्रे, तुर्ये=चतुर्थे सति स्निग्धं = चिक्कणं, दधिदुग्धपायसादि भोजनं वाच्यम्।

सुखे अर्कजे=शनौ सति, तैलसंस्कृतम्=तैलतलितं व्यञ्जनादि वाच्यम्। सुखेशे, वा सुखस्थे ग्रहे नीचे=नीचराशौ सति, कदशनं=कुत्सिताश्नभोजनं, विरसं=रसहीनं, संस्कृतं न च, भर्जिततण्डुलचणकयवादि भोजनं वाच्यम्॥ ३७–४१॥

भाषा—लग्न, एकादश स्थान यदि शुभग्रह से युत दृष्ट हो, तो अच्छा भोजन हो। बृहस्पति या शुक्र लग्न में हों, तो दुःस्थिति (उत्तम भोजन के असम्भव समय) में भी अच्छा भोजन कहना। शनि या राहु यदि लग्न में हों, और रवि से दृष्ट युत हों, तो भोजन नहीं मिलता, बल्कि कहीं शस्त्रों का भी डर हो। यदि लग्न, शनि, राहु को सूर्य नहीं देखे तो उपवास (बिना भोजन के रह जाना) होता है। या दिन भर कुछ नहीं, रात में कुछ नीरस भोजन मिल जाता है। चन्द्र दशम में हों, तो गर्म खाना मिले। मङ्गल हो तो ठण्डा अन्न खाने को मिले। चतुर्थस्थान में स्थित ग्रह के अनुसार भोज्य अन्न में रस स्वाद कहना। जैसे शुक्र यदि चौथे में हो, तो चिकना कोमल अन्न, शनि चौथे में रहने से तेल का बनाया हुआ अन्न कहना, चतुर्थेश, या चतुर्थ स्थान स्थित ग्रह यदि नीच में हों तो कुत्सित अन्न (भूंजा, होरहा, भाजा आदि) भोजन कहना, सिद्ध अन्न नहीं कहना॥ ३७–४१॥

सूर्यादिभिर्लग्नगतैः सवीर्यै राजादिगेहे भुजिमामनन्ति।
सुखे सुखेशे सबले सुभोज्यं चरादिकं स्यादसकृत्सकृद्द्वि॥ ४२॥

सवीर्यैः=सबलैःसूर्यादिभिर्ग्रहैः लग्नगतैः सद्भिः राजादिगेहे भुजिं आमनन्ति=कथयन्ति। सूर्ये चन्द्रे च बलवति राजगृहे, कुजे बलयुक्ते नेतृगृहे बुधे बलिनि राजकुमारगृहे एवं ज्ञेयम्। सुखे=चतुर्थस्थाने, सुखेशे सबले तदा सुभोज्यं वाच्यं, दुर्बले कुभोज्यं वाच्यम्। सुखे चरादिकं तदा असकृत् सकृत् भोजनं वाच्यम्। चरे सुखेऽनेकवारं, स्थिरे सुखे एकवारं, द्विःस्वभावे द्विवारं भोजनं वाच्यम्॥४२॥

भाषा—सूर्यादिक ग्रह बलवान् होकर लग्न में हों तो राजा आदि के घर भोजन कहना। चौथे स्थान या चतुर्थेश सबल हो, तो सुन्दर भोजन, चौथे में चर हो तो अनेक बार, स्थिर हो, तो एक बार, द्विःस्वभाव हो, तो दो बार भोजन कहना॥४२॥

मूलत्रिकोणगे खेटे लग्ने पितृगृहेऽशनम्।
मित्रालये मित्रभस्थे शत्रुगेहेऽरिगेहगे॥ ४३॥

मूलत्रिकोणगे खेटे=ग्रहे लग्ने सति, पितृगृहे=पैतृकस्थानेऽशनं=भोजनं भवति। मूलत्रिकोणं तु 'सिंहवृषाजप्रमदाकार्मुकभृत्तौलिककुम्भधराः' इति लघुजातकोक्तं चिन्त्यम्। अथ लग्नस्थे खेटे मित्रभस्थे=स्वमित्रराशौ, गतवति मित्रालये भोजनं वाच्यम्। अथ लग्नस्थे ग्रहे शत्रुभस्थे=शत्रुराशौ, सति शत्रुगेहे भोजनंवाच्यम्॥४३॥

भाषा—लग्नस्थ ग्रह यदि मूलत्रिकोण में हों, तो पिता के घरमें, यदि मित्र के राशि में हो, तो मित्र के घर में, यदि शत्रु के राशि में हो, तो शत्रु के घर में भोजन कहना ॥ ४३ ॥

शुभेक्षितयुते लग्ने बलाढ्ये स्वगृहे भुजिः ।
गृहराशिस्वभावेन यत्नादन्यत्र चिन्तयेत् ॥ ४४ ॥

शुभेक्षितयुते लग्ने बलाढये सति स्वगृहे भुजिर्भोजनं भवति । अन्यत्र राशौ गृहराशिस्वभावेन, तत्तद्राशिरस-पदार्थ-काल-स्थान-प्रकृतितारतम्यवशेन भोजन-विचारः कर्त्तव्यः ॥ ४४ ॥

भाषा—शुभग्रह से दृष्ट युत लग्न हो, तो अपने घर में भोजन कहना । और राशियों में राशि के स्वभाव के अनुसार भोजन विषय यत्न से विचारना ॥ ४४ ॥

अथ ग्रहभेदेन भोजनपदार्थभेदमाह—

तिलान्नमर्के हिमगौ सुतण्डुलान्भौमे मसूरांश्चणकांश्च भोज्यम् ।
बुधे समुद्गः खलु राजमाषा गुरौ सगोधूमभुजिः सवीर्ये ॥ ४५ ॥
शुक्रे यवा बाजरिका युगन्धराः शनौ कुलित्थादि समाषमन्नम् ।
भोज्यं तृणान्नं शिखिराहुवीर्याच्छुभेक्षणालोकनतः सहर्षम् ॥ ४६ ॥
सूर्ये मूलं पुष्पमिन्दौ कुजे स्यात्पत्रं शाखा चापि शाकं सवीर्ये ।
शुक्रेज्यज्ञैर्व्यञ्जनं भूरिभेदं मन्देनेत्थं सामिषं राहुकेत्वोः ॥ ४७ ॥

अर्के=सूर्ये बलयुक्ते तिलान्नं=तिलयुक्तान्नं, हिमगौ=चन्द्रे बलयुते सुतण्डुलान्, भौमे=कुजे बलयुते मसूरान्, चणकान्=गोज्यान्नम् । बुधे=बलिनि समुद्गः=मुद्गयुदलसहितः राजमाषा=बोड़ा, गुरौ=जीवे बलयुते सगोधूमभुजिः=गोधूमचूर्ण-निर्मितभोज्यम् । शुक्रे सवीर्ये सति यवाः=शिशिरर्तुजातशूकधान्यविशेषाः, बाज-रिकाः=बाजरेति विख्याताः । युगन्धराः=देशभेदेन जोनहरी, मकई, जनेरा, इत्यादि नामकाः । शनौ सवीर्ये सति कुलित्थादि समाषं [कुरथी उरीद] अन्नम् । शिखिराहुवीर्या-त्=केतुराह्वोर्बलाधिक्यात्, तृणान्नं=स्रोभिया, रामदाना, ओड़री आदि, भोज्यं वाच्यम् । सर्वत्र शुभेक्षणालोकनतः=शुभग्रहदर्शनयोगतः, सहर्षं=विनोदयुक्तं भोजनं ज्ञेयम् । पापयोगेक्षणात् कलहयुक्तं भोजनं वाच्यमिति शेषः । अथ व्यञ्जनभेदमाह । सूर्ये बलाधिके मूलं=आलू, कन्दा, शालगम, मूली, सम्हार आदि, व्यञ्जनं ज्ञेयम् । इन्दौ=चन्द्रे बलाधिके, पुष्पं=गोमी प्रभृति, शाकं वाच्यम्, कुजे=भौमे, सवीर्ये पत्रं, बथुआ, गेन्हारी, चौराई, कच्चु, पालक आदि शाकं व्यञ्जनं ज्ञेयम् । अपि वा शा-

खा = शाकवृक्षशाखा, नालिकाशाकशाखादि वाच्यम्। शुक्रेज्यज्ञैः = शुक्रगुरुबुधैः बलयुक्तैः, भूरिभेदं = बहुविधं, ( व्यञ्जनं तरकारीतिलौकिके प्रसिद्धं ) ज्ञेयम्। इत्थं मन्देन = शनिना बलवता, राहुकेत्वोः अपि बलवतोः सतोः सामिषं=आमिषेण= मत्स्यमांसमाषादिकेन युक्तं व्यञ्जनं वाच्यम् ॥ ४५-४७ ॥

भाषा—रवि बली हो, तो तिल युत अन्न, चन्द्रमा बली हो, तो अच्छा आरब चावल, मङ्गल बली हो, तो मसूर या चना, बुध बली हो, तो मूग, उरद, बृहस्पति बली हो, तो गेहूं के बने हुए पदार्थ, शुक्र बली हों, तो यव, बाजरा, जोनहरी, शनि-बलवान् हो, तो कुलथी, उरद, राहु केतु बलवान् हो, तो तृण के अन्न खोभिया के दाना वगैरह भोजनीय अन्न कहना। सब जगह शुभग्रहों के योग तथा दृष्टि से विनोद के साथ भोजन कहना। अब तरकारी कहते हैं-रवि बलवान् हो, तो कन्दमूल आलू खम्हारू आदि व्यञ्जन कहना, चन्द्रमा बली हो, तो फूल, जैसे गोभी आदि, मङ्गलबली हो, तो पत्रशाक जैसे चौलाई, पालक आदि शाक या शाकवृक्षों की डार, शुक्र बुध बृहस्पति बलवान् हों, तो अनेक प्रकार का जैसे भांटा कद्दू, कटहल, केला हरेक तरह की तरकारी कहना। इस प्रकार शनि तथा राहुकेतु के बलिष्ठ होने से आमिष जैसे मांस मछली, बड़ी बड़ा आदि व्यञ्जन कहना ॥ ४५-४७ ॥

अथ स्वप्नचिन्ता—

**लग्नांशगेऽर्के तनुगेपि वाऽस्मिन् दुःस्वप्नमीक्षेत यथाऽर्कबिम्बम्।**
**रक्ताम्बरं वह्निमथापि चन्द्रे शुभ्राश्वरत्नांबरपुष्पवज्रम् ॥ ४८ ॥**
**स्त्रियः सुरूपाश्च कुजे सुवर्णरक्ताम्बरस्त्रङ्मणिविद्रुमाणि।**
**बुधे हयस्वर्गतिधर्मवार्ता गुरौ रतिर्धर्मकथा सुरेज्या ॥ ४९ ॥**
**सद्बन्धुसङ्गश्च सिते जलानां पारे गतिर्देवरतिविलासः।**
**शनावरण्याद्रिगतिश्च नीचैः सङ्गश्च राहौ शिखिनीत्थमेव ॥ ५० ॥**
**सहजधीमदनायरिपुस्थितो यदि शशी गुरुभानुसितेक्षितः।**
**नवमकेन्द्रगते च शुभग्रहे स्वबलया मनुजो रमते तदा ॥ ५१ ॥**

अर्के=सूर्ये, लग्नांशगे=लग्ननवांशराशिगते सति, अपि वा लग्नगते=लग्न-स्थे, तदा अस्मिन्नुक्तयोगद्वये दुःस्वप्नं= अनिष्टस्वप्नं, ईक्षेत=पश्येत्, तथा अर्कबि-म्बं = सूर्यबिम्बम्, रक्ताम्बरं = रक्तवस्त्रम्, वा रक्तवस्त्रयुक्तं पुरुषं, वह्निं = अग्निं च पश्यति। अथ चन्द्रे लग्नांशगे वा लग्नगते, शुभ्राश्वरत्नाम्बरपुष्पवज्रम्=श्वेतानि, घोटक-मुक्ता-वस्त्र-पुष्प-हीरकाणि, तथा सुरूपाः=मनोहराः स्त्रियश्च स्वप्ने पश्यति।

कुजे=भौमे लग्नगे लग्ननवांशगे वा सुवर्णरक्ताम्बरस्रङ्मणिविद्रुमाणि=हेम-रक्तवस्त्र-रक्तमाल्य-रक्तमणि-प्रवालादीनि पश्यति। बुधे तादृशे हयस्वर्गतिधर्मवार्त्ता = घोटक-व्योमगमन-पुराणतीर्थविषयकचर्चा, स्वप्ने भवति। गुरौ तादृशे सति, रतिः=स्त्रीसङ्गः, धर्मकथा, देवतीर्थादिदर्शनगमनरूपा, सुरेक्षा = देवदर्शनं, सद्बन्धुसङ्गः = मित्रबान्धवमिलनम्, सिते=शुक्रे तादृशे सति जलानां=नद्यादीनां, पारे=परपारे, गतिः=गमनं, देवरतिः=देवसेवाप्रेम, विलासः =क्रीडनं चेति वाच्यम्। शनौ तादृशे अरण्याद्रिगतिः=वनपर्वतप्रदेशभ्रमणम्, नीचैः=क्षुद्रजनैः, सङ्गः, राहौ शिखिनि=केतौ च लग्नगते, लग्ननवांशगते वा सति इत्थं=शनिवद् अरण्याद्रिगतिः, इति स्वप्ने पश्यति। यदि शशी=चन्द्रः, सहजधीमदनायरिपुस्थितः=३।५।७।११।६ एतदन्यतमस्थितः, गुरुभानुसितेक्षितः=बृहस्पति-सूर्य-शुक्रदृष्टः, वा शुभग्रहे बुधगुरुशुक्रे नवमकेन्द्रगते च सति तदा मनुजः=स्वप्नद्रष्टा मनुष्यः, स्वप्ने स्वबलया=प्रकृष्टस्त्रिया रूपवत्या युवत्या रमते=आलिङ्गनं करोति ॥ ४८-५१ ॥

भाषा—यदि रवि लग्न के नवांश में या लग्न में हो, तो अनिष्ट स्वप्न देखता है। जैसे सूर्य का बिम्ब, लालवस्त्र, आग, ये सब पित्त विकार से देखता है। क्योंकि रवि पित्तधातु का स्वामी है। ऐसे चन्द्रमा यदि लग्न में या लग्न के नवांश में हों, तो सफेद घोड़ा, सफेद रत्न मोती वगैरह, स्वच्छ वस्त्र, श्वेत फूल, हीरा आदि और सुन्दरी स्त्री को देखता है।

मङ्गल वैसे रहने से सोना, लालवस्त्र, लालमाला, मणि, मूंगा, देखता है। बुध के वैसे रहने से घोड़ा या उस पर चढ़ना, आकाश में उड़ना और धर्म की वार्त्ता को देखता सुनता है। बृहस्पति के वैसे रहने पर, स्त्रीसङ्ग, और धर्म की कथा, देवदर्शन स्वप्न में होते हैं और अच्छे बन्धु बान्धव का मिलन भी होता है। शुक्र यदि वैसे हों तो नदी के दूसरे पार जाना, देवता में प्रेम, खेल कूद आनन्द, देखता है। शनि के वैसे रहने से वन पर्वत में भ्रमण करना, नीचों के साथ सङ्ग, राहु केतु में शनिवत् फल समझना। यदि चन्द्रमा ३।५।७।११।६। इन स्थानों में हो, और बृहस्पति सूर्य शुक्र से देखा जाय या शुभग्रह ९।१।४।७।१० इन स्थानों में हों तो मनुष्य अच्छी स्त्रियों से स्वप्न में भोग करता है ॥ ४८-५१ ॥ इति स्वप्नचिन्ता।

**आसीदसीमगुणमंडितपंडिताग्र्यो व्याख्यद्भुजङ्गपगवीः श्रुतिविस्सुवृत्तः।**
**साहित्यरीतिनिपुणो गणितागमज्ञश्चिन्तामणिर्विबुधगर्गकुलावतंसः ॥५२॥**

तदात्मजोऽनन्तगुणोऽस्त्यनन्तो योऽधोक सदुक्तिं किल कामधेनुम् ।
सत्तुष्टये जातकपद्धतिं च न्यरूपयद् दुष्टमतं निरस्य ॥ ५३ ॥
पद्माम्बयाऽसावि ततो विपश्चिच्छ्रीनीलकण्ठः श्रुतिशास्त्रनिष्ठः ।
विद्वच्छिवप्रीतिकरं व्यधासीत्समाविवेकं मृगयावतंसम् ॥ ५४ ॥
शाके नन्दाभ्रबाणेन्दु १५०९ मित आश्विनमासके ।
शुक्लेऽष्टम्यां समातन्त्रं नीलकण्ठबुधोऽकरोत् ॥ ५५ ॥
इति श्रीगर्गवंशोद्भव-श्रीदैवज्ञानन्तसुतश्रीनीलकण्ठ-
दैवज्ञविरचितं वर्षतन्त्रं समाप्तम् ॥ २ ॥

एते श्लोकाः स्पष्टार्थाः पूर्वं व्याख्याता अपि ॥ ५२-५५ ॥

इति वर्षतन्त्रं समाप्तम् ।

---

## अथ प्रश्नतन्त्रं निरूप्यते ।

तत्र प्रश्नविचारस्य प्रयोजनमाह वराहः—

दैवज्ञस्य हि दैवेन सदसत्फलवाञ्छया ।
अवश्यं गोचरे मर्त्यः सर्वः समुपनीयते ॥ १ ॥
अश्रौषीच्च पुरा विष्णोर्ज्ञानार्थं समुपस्थितः ।
वच लोकनाथोऽपि ब्रह्मा प्रश्नादिनिर्णयम् ॥ २ ॥

दैवज्ञस्य=ज्योतिःशास्त्रविज्ञस्य, मते, दैवेन = पूर्वार्जितसदसत्कर्मरूपेण, गोचरे= जन्मराश्यवधिकक्रियमाणफलविचारे, सर्वः=सकलः, मर्त्यः=लोकः, सदसत्फलवाञ्छया = शुभाशुभफलज्ञानाकांक्षया, अवश्यं=ध्रुवं, समुपनीयते=प्राप्यते । शुभाशुभप्रारब्धकर्मप्रेरणया शुभाशुभसमये जनो गणकं पृच्छति । अर्थात् प्रश्नगोचरकालाधीनं भावि शुभाशुभफलं भवतीति ॥ १ ॥

भाषा—ज्यौतिषियों के मत से, दैव ( भावी प्रारब्ध कर्म ) से प्रेरित सब लोग जरूर से जरूर गोचर में शुभ अशुभ फल की इच्छा से प्राप्त होते हैं । अर्थात् लोगों को गोचर और प्रश्नों से भी भावी शुभ अशुभ फल होते हैं ॥ १ ॥

ऐसा सुना जाता है कि प्राचीन काल में लोकस्वामी ब्रह्माजी भी प्रश्न निर्णय ज्ञान के हेतु श्रीभगवान् विष्णु के पास गये थे ॥ २ ॥

अथ प्रश्नविधानमाह—

**तस्मान्नृपः कुसुमरत्नफलाग्रहस्तः प्रातः प्रणम्य वरयेदपि प्राङ्मुखस्थः ।**
**होराङ्गशास्त्रकुशलान् हितकारिणश्च संहृत्य दैवगणकान् सकृदेव पृच्छेत् ॥**

तस्मात्=कारणात्, कुसुमरत्नफलाग्रहस्तः = पुष्पद्रव्यफलपूर्णहस्तः, प्राङ्मुखस्थः=पूर्वाभिमुखः, नृपः=राजा, इत्युपलक्षणम्, सर्वोऽपि जनः, प्रातः=प्रभातसमये, प्रणम्य=दैवज्ञं नमस्कृत्य, वरयेत्=अशुभफलनिराकरणपूर्वकं शुभेच्छितफलं वरयेत् । तथा होराङ्गशास्त्रकुशलान् = फलितस्कन्धनिपुणान्, हितकारिणः = प्रियान्, दैवगणकान् = ज्योतिर्विदः, भाग्यगणनानिरतान् जनान्, संहृत्य = अन्यद्वार्त्तां त्यक्त्वा, सकृत्=एकवारमेव, पृच्छेत्=प्रश्नं कुर्यात् । यतः प्रश्नाद्यक्षरवशेनैव प्रश्नशुभाशुभविचारो गणकेन क्रियते । तत्रानेककथानामेककाले पृष्टानां न भिन्नं भिन्नं समुचितमुत्तरं सम्भवेदतः सर्वान् संहृत्य एकविषयमेव पृच्छेत् ॥ ३ ॥

भाषा—इसलिये-राजा या अन्य जन, हाथ में फूल या द्रव्य या फल लेकर पूर्वमुख होकर प्रातः काल में शुभफल का वरण ( मनौती ) करें, बाद फलितज्यौतिष में निपुण, प्रिय ज्यौतिषियों के पास एकान्त में एकबार ही अपना प्रष्टव्य पूछे ॥ २ ॥

अथोत्तमफलितज्ज्योतिर्ज्ञलक्षणमाह—( उत्पलः )—

**दशभेदं ग्रहगणितं जातकमवलोक्य निरवशेषमपि ।**
**यः कथयति शुभमशुभं तस्य न मिथ्या भवेद्वाणी ॥ ४ ॥**

दशभेदं=दशप्रकारकम्, ग्रहगणितं=ग्रहसाधनगणितं, निरवशेषं=सकलं, जातकं=बृहज्जातकादिग्रन्थं, विलोक्य=दृष्ट्वा, चिरं विचिन्त्य यः शुभम्, अशुभंच ग्रहस्थितिवशेन कथयति, तस्य=दैवज्ञस्य, वाणी=वचनं, मिथ्या=असत्या न भवति ॥४॥

भाषा—जो ज्यौतिषी दश प्रकार के भेद वाले ग्रहगणित को और सब जातक ग्रन्थ को देखकर शुभ अशुभ फल को कहता है उसकी बात झूठी नहीं होती ॥ ४ ॥

एतच्छास्त्रं विनीतेभ्यो दीयमानं सत्सफलं भवति तदाह—

**समरसारे—विनयावनताय दीयमाना ।**
**प्रभवेत्कल्पलतेव सत्फलाय ॥ ५ ॥ इति ।**

इयं विद्या विनययावनताय=अनुद्धताय जनाय दीयमाना सती कल्पलता इव

सत्फलाय प्रभवेत्, न तूद्धतायेति तथोक्तं ज्ञातकार्णवे—

'क्षुद्रपाखण्डधूर्त्तेषु श्रद्धाहीनोपहासके ।
ज्ञानं न तथ्यतामेति यदि शम्भुः स्वयं वदेत् । इति ॥ ५ ॥

भाषा—यह विद्या विनय नम्रता वाले को ही दी जाने पर सफल होती है ॥ ५ ॥

स्मृतिरप्याह—

**विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिस्तेऽहमस्मि ।**
**असूयकायानृजवे शठाय न मां ब्रूया वीर्यवती तथा स्यामिति ॥ ६ ॥**

ह=हर्षेण, वै=निश्चयेन, विद्या=शास्त्रज्ञानं, ब्राह्मणम् ( प्रति ) आजगाम, तथा कथितवती च, अहं ते=तव, शेवधिः=निधिः, अस्मि, अत एव मां गोपाय = रक्ष, सादरमनुक्षणं स्मर, स्वमनसि सदैव मां संरक्ष । असूयकाय = निन्दकाय, अनृजवे = कुटिलाय, शठाय = कृतघ्नाय, उद्धताय च मां=विद्यां, न, ब्रूयाः=कथय, तथा तेन प्रकारेण नियमे = पालिते, अहं वीर्यवती = विशेषयोग्यतावती सफला च स्यां = भविष्यामीति ॥ ६ ॥

भाषा—विद्या सहर्ष ब्राह्मण के पास जाकर बोली कि मेरी रक्षा करो, या सदैव भूलो मत, मैं तेरी सम्पत्ति (खजाना) हूं । इसलिये मुझे अपने पास सुरक्षित रखो, और पराये गुण में दोष देने वाले, या पर के उत्कर्ष ( उन्नति ) को नहीं सहने वाले को, तथा खल (टेढ़ी प्रकृति वाले) को, तथा उद्धत को नहीं दो, इस तरह मैं बलवती होऊंगी, बढूंगी ॥ ६ ॥

अथ प्रष्टुः परिचयमाह—

**ऋजुरयमनृजुर्वाऽयं प्रष्टा पूर्वं परीक्ष्य लग्नबलात् ।**
**गणकेन फलं वाच्यं दैवं तच्चित्तगं स्फुरति ॥ १ ॥**
**लग्नस्थे शशिनि शनौ केन्द्रस्थे ज्ञे दिनेशरश्मिगते ।**
**भौमज्ञयोः समदृशा लग्नगचन्द्रेऽनृजुः प्रष्टा ॥ २ ॥**
**लग्ने शुभग्रहयुते सरलः क्रूरान्विते भवेत्कुटिलः ।**
**लग्नेऽस्ते सौम्यदृशा विधुगुरुदृष्ट्या च सरलोऽयम् ॥ ३ ॥**
**यदि गुरुबुधयोरेकः पश्यत्यस्ताधिपश्च रिपुदृष्ट्या ।**
**तत्कुटिलः प्रष्टा खल्वनयोरेकस्तयोः साधुः ॥ ४ ॥**

अयं=अग्रे वर्त्तमानः, प्रष्टा=प्रश्नकर्त्ता, जनः, ऋजुः=सरलः, वा अयं अनृजुः=कुटिलः, अस्तीति लग्नबलात्=लग्नविचारवशात्, पूर्वं = प्रथमं, परीक्ष्य, ततः गण-

केन = फलादेशिना ज्योतिर्विदा, फलं=शुभाशुभं वाच्यम्, दैवं = भाग्यं, भाविफलं, तच्चित्तगं = गणकमनोगतं सत्, स्फुरति = प्रकटितं भवति। अथ तद्योगमाह —

शशिनि = चन्द्रे, लग्नस्थे, शनौ=मन्दे, केन्द्र-( १।४।७।१० ) स्थे सति ज्ञे= बुधे, दिनेशरश्मिगते = अस्तङ्गते, रवितश्चतुर्दशांशान्तर्गते सति अथवा भौमज्ञयोः = कुजबुधयोः, समदृशा = तुल्यदृष्ट्या, लग्नगचन्द्रे दृष्टे सति प्रष्टा = प्रच्छको जनः, अ-नृजुः=कुटिलः, भवति। अथवा लग्ने शुभग्रहयुते सति प्रष्टा सरलो भवति। लग्ने क्रूरान्विते = पापयुतदृष्टे सति कुटिलः प्रष्टा भवति।

अथवा लग्ने, अस्ते=सप्तमस्थाने च सौम्यदृशा=बुधदृष्ट्या, विधुगुरुदृष्ट्या=पूर्ण-चन्द्रगुरुदृष्ट्या दृष्टे सति अयं सरलः स्यात्। वा यदि गुरुबुधयोः, एकः = एकतरः कश्चिद्ग्रहः, रिपुदृष्ट्या ( १।४।७।१० ) एतत्स्थानान्यतमदृष्ट्या, अस्ताधिपं = सप्त-मेशं पश्यति तदा प्रष्टा कुटिलः स्यात्। वा गुरुबुधयोरेको ग्रहः मित्रदृष्ट्या लग्नं पश्यति तदा साधुः = सरलः प्रष्टा वाच्यः॥ १-४॥

भाषा—यह पूछने वाला, सीधा या टेढ़ा है, इस विषय को लग्न के वश पहले परीक्षा करके तब शुभ अशुभ फल को ज्यौतिषी बतावे। क्यों कि उस ज्यौतिषी के दिल ही में उक्त विषय की स्फूर्त्ति होती है।

यदि चन्द्रमा लग्न में, शनि केन्द्र ( १।४।७।१० ) में हो, बुध अस्त हो, और मंगल या बुध की समान दृष्टि से लग्नस्थित चन्द्रमा देखा जाय, तो पूछने वाला कुटिल समझना।

अथवा लग्न शुभग्रह से युत हो, तो प्रष्टा सीधा कहना। यदि लग्न पाप से युत हो, तो कुटिल कहना। या लग्न तथा सप्तमस्थान बुध, चन्द्रमा बृहस्पतिसे देखा जाय तो सरल कहना। या यदि बुध और बृहस्पति में एक कोई ग्रह शत्रु दृष्टि से सप्तमेश को देखे, तो कुटिल प्रष्टा कहना। यदि उन दोनों में कोई एक मित्रदृष्टि से सप्तमेश को देखे, तो सज्जन प्रष्टा कहना॥ १-४॥

अथ यत्र बहवः प्रश्ना युगपत् सम्भवन्ति तत्र निरूपणप्रकारश्चण्डेश्वरप्रश्न-विद्यायाम्—

**आदिमं लग्नतो ज्ञानं चन्द्रस्थानाद्द्वितीयकम्।**
**सूर्यस्थानात्तृतीयं स्यात्तुर्यं जीवगृहाद्भवेत्॥**
**बुधभृग्वोर्बली यः स्यात्तद्गृहात्पञ्चमं पुनः॥ ५॥**

बहुषु प्रश्नेषु, आदिमं = प्रथमं, लग्नतः = प्रश्नलग्नात् ज्ञेयम्। द्वितीयकं तु चन्द्रस्थानात् ज्ञेयम्। तृतीयं प्रश्नवस्तु सूर्यस्थानात् विचार्यम्। तुर्यं = चतुर्थं तु

जीवगृहात् = गुरुराशितो विचिन्त्यम्। अथ बुधभृग्वोः=बुधशुक्रयोः यो बली ग्रहः, तद्गृहात् पञ्चमं प्रश्नविषयकं विचार्यम् ॥ ५ ॥

भाषा—बहुत से प्रश्न अगर एक ही काल में पूछे तो लग्न से पहला, चन्द्रमा से दूसरा, सूर्य के स्थान से तीसरा, बृहस्पति के स्थान से चौथा, बुधशुक्रों में जो विशेष बलवान् हो उसके राशि से पांचवें प्रश्न को विचारे ॥ ५ ॥

वस्तुतो वराहवचनादेककाले एकमेव प्रश्नं पृच्छेन्नानेकानित्युक्तं ज्ञानमुक्तावल्याम्—

सम्यग्विचार्य लग्नं ब्रूयात्प्रश्नं सकृद्यथाशास्त्रम्।
यस्त्वेकं ब्रूतेऽसौ तस्य न मिथ्या भवेद्वाणी ॥ ६ ॥

यः जनः, यथाशास्त्रं=शास्त्रादेशानुसारं सम्यक् = समीचीनतया, लग्नं विचार्य सकृत् एकमेव प्रश्नं ब्रूयात् = वदेत्, तस्य ज्योतिर्विदो वाणी = उक्तिः, मिथ्या = असत्या, न भवेत् ॥ ६ ॥

भाषा—जो ज्यौतिषी शास्त्र के मुताबिक अच्छी तरह लग्न को विचार करके एक काल में एक प्रश्न को बताता है, उसकी बात झूठी नहीं होती है ॥ ६ ॥

अत एवोक्तं प्रश्नचिन्तामणौ—

राशिचक्रं समभ्यर्च्य फलैः पुष्पैः सरत्नकैः।
प्रष्टा सुभूमौ दैवज्ञानेकं पृच्छेत्प्रयोजनम् ॥ १ ॥

प्रष्टा=प्रश्नकर्त्ता सुभूमौ फलैः सरत्नकैः=सद्रव्यैः पुष्पैः राशिचक्रं=प्रश्नकुण्डलीचक्रं समभ्यर्च्य=सम्पूज्य दैवज्ञान्=प्रश्नगणननिरतान्, अत्रादरार्थे बहुवचनम्। एकमेव प्रयोजनं = प्रष्टव्यं पृच्छेत् ॥ १ ॥

भाषा—प्रश्न करने वाले को चाहिये कि पहले प्रश्नकुण्डली की अच्छी जगह में फल, द्रव्य, फूलों से पूजा करके एक काल में एक ही प्रयोजन को पूछे ॥ १ ॥

दशभेदं ग्रहाणां च गणितं भावजं तथा।
विमृश्यैकञ्च कथयेन्नानेकं प्राह पद्मभूः ॥ २ ॥ इति।

ग्रहाणां दशभेदं=दशविधं, गणितं, तथा भावजं गणितं च विमृश्य = विचार्य एकमेव प्रश्नं कथयेत्। अनेकं न कथयेत्। इति पद्मभूः = ब्रह्मा प्राह ॥ २ ॥

भाषा—ग्रहों के दश प्रकार के गणित, और द्वादशभाव के गणित को विचार करके एक समय में एक ही प्रश्न को कहे। अनेक प्रश्न को एक काल में नहीं कहे, यह ब्रह्मा कहे हैं ॥ २ ॥

दीप्ताद्यं दशभेदं च ग्रहाणां भांशजं फलम्।

विचार्य प्रवदेद्यस्तु तस्योक्तं नान्यथा भवेत् ॥ ३ ॥

ग्रहाणां दीप्ताद्यं दशभेदं भांशजं फलं विचार्य यः फलं प्रवदेत्तस्य उक्तं=वचनं अन्यथा नहि भवेत् ॥ ३ ॥

भाषा—ग्रहों के दीप्त आदि दश प्रकार की जो राशि अंश से सिद्ध दशा हो उसके वश से विचार करके जो फल कहे, उसकी बात झूठी नहीं होती है ॥ ३ ॥

अथ ग्रहाणामवस्था आह—

दीप्तो दीनोऽथ मुदितः स्वस्थः सुप्तो निपीडितः।
मुषितः परिहीनश्च सुवीर्यश्चाधिवीर्यकः ॥ ४ ॥
स्वोच्चे दीप्तः समाख्यातो नीचे दीनः प्रकीर्तितः।
मुदितो मित्रगेहस्थः स्वस्थश्च स्वगृहे स्थितः ॥ ५ ॥
शत्रुगेहस्थितः सुप्तो जितोऽन्येन निपीडितः।
नीचाभिमुखगो हीनो मुषितोऽस्तङ्गतो ग्रहः ॥ ६ ॥
सुवीर्यः कथितः प्राज्ञैः स्वोच्चाभिमुखसंस्थितः।
अधिवीर्यो निगदितः सुरश्मिः शुभवर्गजः ॥ ७ ॥

दीप्तः १, दीनः २, मुदितः ३, स्वस्थः ४, सुप्तः ५, निपीडितः ६, मुषितः ७, परिहीनः ८, सुवीर्यः ९, अधिवीर्यकः १०, एते ग्रहाणां दशभेदा अवस्थाः भवन्ति। तत्र स्वोच्चे स्थितो दीप्तः, समाख्यातः=कथितः। नीचे ग्रहो दीनः। मित्रगेहस्थो मुदितः। स्वगृहे स्थितः स्वस्थः। शत्रुगेहस्थितो ग्रहः सुप्तः। अन्येन ग्रहेण जितो ग्रहो निपीडितः। नीचाभिमुखः नीचासन्नगामी ग्रहः हीनः कथ्यते। अस्तङ्गतः ग्रहो मुषितः चोरितः कथ्यते। स्वोच्चभिमुखसंस्थितो ग्रहः प्राज्ञैः सुवीर्यः कथितः। सुरश्मिः = उदितः, शुभवर्गजः ग्रहः अधिवीर्यः कथ्यते ॥ ४–७ ॥

भाषा—दीप्त १, दीन २, मुदित, ३, स्वस्थ ४, सुप्त ५, निपीडित ६, मुषित ७, परिहीन ८, सुवीर्य, ९ अधिवीर्य १० ये दश प्रकार के ग्रह होते हैं। उसमें अपने उच्च में रहने से 'दीप्त' नीच में रहने से 'दीन' मित्रगृही 'मुदित' अपने गृह में 'स्वस्थ शत्रु राशि में रहने से 'सुप्त' दूसरे ग्रह से पराजित होने पर 'जित' नीचाभिमुख जाने से 'हीन' अस्तङ्गत ग्रह 'मुषित' और उच्चाभिमुख रहने से 'सुवीर्य' और उदित, शुभवर्गस्थित ग्रह 'अधिवीर्य' कहाते हैं ॥ ४–७ ॥

अथ तद्वशेन फलान्याह—

दीप्ते सिद्धिश्च कार्याणां दीने दुःखसमागमः।

स्वस्थे कीर्तिस्तथा लक्ष्मीरानन्दो मुदिते महान् ॥ ८ ॥
सुप्ते रिपुभयं दुःखं धनहानिर्निपीडिते ।
सुपीते परिहीने च कार्यनाशोऽर्थसङ्क्षयः ॥ ९ ॥
गजाश्वकनकावाप्तिः सुवीर्ये रत्नसम्पदः ।
अधिवीर्ये राज्यलब्धिर्ग्रहैर्मित्रार्थसङ्गमः ॥ १० ॥

दीप्ते ग्रहे योगकरे, कार्याणां सिद्धिर्भवति । दीने योगकरे ग्रहे सति दुःखसमागमः, स्वस्थे ग्रहे कीर्तिः, मुदिते ग्रहे लक्ष्मीः, महान् आनन्दश्च भवेत् । सुप्ते ग्रहे रिपुभयं=शत्रुभयम्, दुःखं, निपीडिते ग्रहे धनहानिः, सुपीते = मुषिते, परिहीने च ग्रहे कार्यनाशः, अर्थसङ्क्षयः=धननाशः च भवति । सुवीर्ये ग्रहे गजाश्वकनकावाप्तिः= हस्तिघोटकसुवर्णप्राप्तिः, रत्नसम्पदश्च भवन्ति । अधिवीर्ये ग्रहे तु राज्यलब्धिः मित्रार्थसङ्ग्रहश्च भवति ॥ ८-१० ॥

भाषा—दीप्त ग्रह रहने से कार्यों की सिद्धि होती है । दीन ग्रह रहने से दुःख की प्राप्ति, स्वस्थ ग्रह रहने से कीर्त्ति यश, मुदितग्रह रहने से लक्ष्मी और महान् आनन्द होता है । सुप्तग्रह में शत्रुभय, दुःख, निपीड़ितग्रह में धनहानि, मुषितग्रह में तथा परिहीनग्रह में कार्यनाश, धननाश होता है । सुवीर्य ग्रह में हाथी घोड़ा सोना की प्राप्ति, और रत्न सम्पत्ति भी होती है । अधिवीर्य ग्रह योगकारक होने से राज्यप्राप्ति, मित्र सङ्गम और धनसंग्रह होता है ॥ ८-१० ॥

अथ रविग्रहस्वरूपमाह—

पूर्वः सत्वं नृपस्तातः क्षत्रं ग्रीष्मोऽरुणश्चलः ।
मधुदृक् पैत्तिको धातुः शूरः सूक्ष्मकचो रविः ॥ ११ ॥

रविः=रविग्रहः, पूर्वः=पूर्वदिक्पतिः, सत्वं=सत्वगुणप्रधानः, नृपः=राजा तातः = पितृग्रहः । दिवाऽर्कशुक्रौ पितृमातृसंज्ञकाविति बृहज्जातकोक्तत्वात् । क्षत्रं= क्षत्रियजातिस्वामी, ग्रीष्मः=उष्णप्रकृतिः, अरुणः=रक्तवर्णः, चलः=कुजगुरुशनिग्रहापेक्षया शीघ्रगतिः, वा चपलः, मधुदृक्=मधुवर्णनेत्रः, पैत्तिकः = पित्तात्मकः, धातुः=गैरिकादिधातुस्वामी, शूरः=पराक्षेपासहिष्णुः, वा पराक्रमी, सूक्ष्मकचः=अतिलघुकेशः, ईदृशो भवति ॥ ११ ॥

भाषा—रवि पूर्वदिशा के स्वामी, सत्वगुणप्रधान, राजा, पितृग्रह, क्षत्रियजाति, गर्मस्वभाववाला, लाल वर्ण, चञ्चल, मधुसमान आँख वाला, पित्तदोषप्रधान, पराक्रमी, महीनकेश वाला होता है ॥ ११ ॥

अथ चन्द्रस्वरूपमाह—

**कफी वर्षा मृदुर्माता पयो गौरश्च सात्त्विकः।**
**जीवो वश्यश्चरो वृत्तो मारुतांशो विधुः सुदृक् ॥ १२ ॥**

विधुः=चन्द्रः, कफी=कफात्मकः, वर्षा=वर्षर्त्तुपतिः। मृदुः=कोमलः, माता=मातृग्रहः, पयः=क्षीरप्रियः, गौरः=धवलवर्णः, सात्त्विकः=सत्त्वगुणप्रधानः, जीवः=जीवजन्तुस्वामी, वैश्यः=वैश्यवर्णस्वामी, चरः=शीघ्रगतिग्रहः, वृत्तः=वर्त्तुलः, मारुतांशः=वातांशः, सुदृक्=सुनयनः, ईदृशो भवति ॥ १२ ॥

भाषा—चन्द्रमा कफात्मक, वर्षा ऋतु के स्वामी, कोमल, और मातृ ग्रह, दूध का प्रिय, गौर वर्ण, सत्त्वगुणी, जीवों के स्वामी, वैश्यजाति का स्वामी, शीघ्रगति ग्रह, गोलाकार, वायु अंशवाला, सुन्दर आँख वाला भी है, चन्द्रमा की कक्षा सबसे नीचे है, इससे इनकी गति सबसे अधिक है, अतः यह सदैव शीघ्रगति कहाता है, और शनि की कक्षा सबसे ऊपर होने से शनि सदैव मन्दगति ग्रह है। और ग्रह आपेक्षित शीघ्र मन्द भी हो सकता है ॥ १२ ॥

अथ कुजस्वरूपमाह—

**ग्रीष्मः क्षत्रतमो रक्तो याम्यः सेनाग्रणीश्चरः।**
**युवा धातुश्च पिङ्गाक्षः क्रूरः पित्तं शिखी कुजः ॥ १३ ॥**

कुजः=भौमः, ग्रीष्मः=ज्येष्ठाषाढयोरधिपतिः, क्षत्रतमः=क्षत्रियजातिस्वामी, रक्तः=अरुणवर्णः, याम्यः=दक्षिणदिक्पतिः, सेनाग्रणीः=सेनाग्रगण्यः, चरः=चपलस्वभावः, युवा=तरुणः, धातुः=गैरिकादिधातुपतिः, पिङ्गाक्षः=पीतनयनः, क्रूरः=पापग्रहः, पित्तं=पित्तात्मकः, शिखी=शिखावान् ईदृशो भवति ॥ १३ ॥

भाषा—मङ्गल ग्रह ग्रीष्मऋतु का स्वामी, क्षत्रिय जाति का स्वामी, लालवर्ण, दक्षिणदिशा का स्वामी, सेनानायक, चञ्चल स्वभाव, समर्थ, गैरिकादि धातु का, स्वामी, पीली आँखें, क्रूरग्रह, पित्त प्रधान, शिखावान् होता है ॥ १३ ॥

अथ बुधस्वरूपमाह—

**शरदीशो हरिर्दीर्घः षण्ढो मूलं कुमारकः।**
**लिपिज्ञ उत्तरेशश्च शूद्रः सौम्यस्त्रिधातुकः ॥ १४ ॥**

सौम्यः=बुधः, शरदीशः=शरदृतुपतिः, हरिः=श्यामवर्णः, दीर्घः=उन्नतदेहः, षण्ढः=नपुंसकः, मूलं=मूलस्वामी, कुमारः=राजकुमारः, 'राजा रविः शशधरश्च बुधः कुमारः सेनापतिः क्षितिसुत' इत्याद्युक्तत्वात्। लिपिज्ञः=लेखकर्मनिपुणः, उत्तरेशः=उत्तरदिक्पतिः, शूद्रः=शूद्रजातिपतिः, त्रिधातुकः=वातपित्तकफात्मकश्च भवति ॥ १४ ॥

भाषा—बुधग्रह, शरदृऋतु ( आश्विन कार्त्तिक ) का स्वामी, श्यामवर्ण, लम्बे कद का, नपुंसक, मूल कन्द का स्वामी, राजकुमार, लेख में पटु, उत्तर दिशा का स्वामी, शूद्र जाति का स्वामी, वात-पित्त-कफ के प्रकोप वाला है ॥ १४ ॥

अथ गुरुस्वरूपमाह—

**सत्त्वं वित्तो हिमः श्लेष्मा दीर्घो मन्त्री द्विजो नरः ।**
**मध्यैशानी कफी जीवो मधुपिंगलदृक् तथा ॥ १५ ॥**

जीवः=गुरुः, सत्त्वं = सत्त्वप्रधानः, वित्तः = धनी, हिमः = शीतलस्वभावः, श्लेष्मा = कफात्मकः, दीर्घः = उन्नतदेहः, मन्त्री=इन्द्रराज्यसञ्चालकप्रधानः, द्विजः= ब्राह्मणः, नरः=पुरुषग्रहः, मध्यं=दिनमध्यबली, ईशानविदिक्पतिः, कफी=कफात्मकः, मधुपिङ्गलदृक् = मधुसमपीतवर्णनयनः, भवति ॥ १५ ॥

भाषा—बृहस्पति–सत्त्वगुणी, धनवान्, शीतल स्वभाव वाला, कफात्मक, लम्बे कद का, इन्द्र का मन्त्री, ब्राह्मणवर्ण, पुरुषग्रह, दिनमध्य में बली, ईशान कोण का स्वामी, कफी, और मधुसमान दृष्टि वाला है ॥ १५ ॥

अथ शुक्रस्वरूपमाह—

**शुक्रः शान्तो द्विजो नारो वश्यो मन्त्री चरः सितः ।**
**आग्नेयीदिक्कफश्चाम्लः कुटिलासितमूर्धजः ॥ १६ ॥**

शुक्रः = शुक्रग्रहः, शान्तः = अनुद्धतः, द्विजः = ब्राह्मणजातिः, नारी = स्त्रीग्रहः, वश्यः = वशंगतः, मन्त्री = असुरराज्यसञ्चालकः, चरः = चपलः, सितः = गौरवर्णः, आग्नेयीदिक् = अग्निकोणस्वामी, कफः = कफी, अम्लः = अम्लरसप्रियः, कुटिलासितमूर्धजः = वक्रकृष्णशिरःकेशः, भवति ॥ १६ ॥

भाषा—शुक्र–शान्तस्वभाव, ब्राह्मण, स्त्रीग्रह, वश्य, राक्षसों के मन्त्री, चञ्चल, गौरवर्ण, अग्निकोण का स्वामी, कफात्मक, खट्टे रस का प्रिय, और टेढ़ा काला शिर के बाल वाला है ॥ १६ ॥

अथ शनिस्वरूपमाह—

**कृष्णस्तमः कृशो वृद्धः षण्ढो मूलान्त्यजाऽलसः ।**
**शिशिरः पवनः क्रूरः पश्चिमो वातुलः शनिः ॥ १७ ॥**

शनिः कृष्णः = कृष्णवर्णः, तमः = पापग्रहः, कृशः=दुर्बलः, वृद्धः=वृद्धवयस्कः, षण्ढः = नपुंसकः, मूलम्=मूलस्य स्वामी, अन्त्यजः=अन्त्यजवर्णस्वामी च, अलसः= आलस्ययुक्तः, शिशिरः = माघफाल्गुनयोरधिपतिः, पवनः = वातात्मकः, क्रूरः = खलप्रकृतिकः, पश्चिमः = पश्चिमदिक्पतिः, वातुलः=वायुतत्वात्मकः भवति ॥ १७ ॥

भाषा—शनि-काला, पापग्रह, दुर्बल, बूढा, नपुंसक, मूलों के स्वामी, म्लेच्छों के स्वामी, आलसी, शिशिर ऋतु का स्वामी, वायुतत्त्व, क्रूरप्रकृति वाला, पश्चिम दिशा का स्वामी और वातात्मक है ॥ १७ ॥

अथ राहुग्रहस्वरूपमाह—

**राहुर्धातुः शिखी मूलं शेषमन्यच्च मन्दवत् ।**
**चिन्तनीयं विलग्ने ज्ञात् केन्द्रगाद्वा बलाधिकात् ॥ १८ ॥**

राहुः = राहुग्रहः, धातुः = गैरिकादिधातुस्वामी, शिखी = शिखावान्, मूलं = मूलस्वामी, अन्यत् शेषं वर्णादिकं मन्दवत् = शनिवत्, ज्ञेयम् । राहुस्वरूपं शनिव · निषादजातिरित्युक्तत्वात् । अथास्य प्रयोजनमुच्यते-विलग्ने = विलग्ननवांशतः, वा ज्ञात् = बुधात् , केन्द्रगात् = केन्द्रस्थग्रहात्, वा बलाधिकात् = सर्वाधिकबलयुक्तग्रहात् रूपं चिन्तनीयम् । तथोक्तं बृहज्जातके—"लग्ननवांशपतुल्यतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वा ।" इति ॥ १८ ॥

भाषा—राहु-गैरिकादिधातु का स्वामी है, शिखावान् , मूलकन्दों के स्वामी है, और बांकी रङ्ग रूप सब शनि के ऐसे समझना । लग्न से, बुध से या केन्द्रगत ग्रह से, या सब से विशेष बल वाले ग्रह से वर्ण कहना चाहिये ॥ १८ ॥

अथ कस्माद्भावात्कि किं विचारणीयं? तदाह तत्रापि तावल्लग्नात्किं किं विचिन्त्यं? तदाह—

**सौख्यमायुर्वयो जातिरारोग्यं लक्षणं गुणम् ।**
**क्लेशाकृती रूपवर्णास्तनोश्चिन्त्या विचक्षणैः ॥ १९ ॥**

तनोः = लग्नभावात्, सौख्यं, आयुः, वयः, जातिः आरोग्यं, लक्षणं, गुणम्, क्लेशाकृती, रूपवर्णा एते विचक्षणैः चिन्त्याः ॥ १९ ॥

भाषा—लग्न ( प्रथमभाव ) से सुख, आयुर्दाय, उमर, जाति, आरोग्य, लक्षण, गुण, क्लेश, आकृति, रूप, वर्ण इतने का विचार पण्डित करें ॥ १९ ॥

अथ द्वितीयभावाद्विचारणीयमाह—

**मुक्ताफलञ्च माणिक्यं रत्नधातुधनाम्बरम् ।**
**हयकार्याध्वविज्ञानं वित्तस्थानाद्विलोकयेत् ॥ २० ॥**

वित्तस्थानात् = द्वितीयभावात् , मुक्ताफलं, माणिक्यं, रत्नधातुधनाम्बरं, हयकार्याध्वविज्ञानं विलोकयेत् ॥ २० ॥

भाषा—दूसरे ( धन ) भाव से मुक्ताफल (मोती), माणिक्य, रत्न, धातु (द्रव्य), धन ( रुपये पैसे ), वस्त्र, घोड़े का काम, रास्ता का विचार करना चाहिये ॥२०॥

अथ तृतीयभावे विचारणीयमाह—

**भगिनीभ्रातृभृत्यानां दासकर्मकृतामपि**
**कुर्वीत वीक्षणं विद्वान् सम्यग्दुश्चिक्यवेश्मतः ॥ २१ ॥**

दुश्चिक्यवेश्मतः=सहज (तृतीय) भावात्, भगिनीभ्रातृभृत्यानां, दासकर्मकृताम्, अपि वीक्षणं विद्वान् कुर्वीत ॥ २१ ॥

भाषा—तीसरे भाव से, बहन, भाई, नोकर, तथा नौकरी करने वालों के भी विचार पण्डित करें ॥ २१ ॥

अथ चतुर्थभावे विचारणीयमाह—

**वाटिकाखलकक्षेत्रमहौषधिनिधीनपि।**
**विवरादिप्रवेशं च पश्येत्पातालतो बुधः ॥ २२ ॥**

बुधः=पण्डितः पातालतः=चतुर्थस्थानात्, वाटिका = पुष्पवाटी, खलं=शस्यमर्दनस्थानं, क्षेत्रं = शस्योत्पत्तिस्थानं, महौषधिः = विशेषभेषजम्, निधिः=गुप्तगर्त्तरक्षितद्रव्यम्, एतान्, तथा विवरादिप्रवेशं=भूगर्त्तविलनिवेशं च पश्येत् ॥ २२ ॥

भाषा—पण्डित, चौथे भाव से फुलवाड़ी, खलिहान, खेत, विशेष दवाई, गड़ा हुआ धन और बिल आदि में घुसना, इतने का विचार करें ॥ २२ ॥

अथ पञ्चमभावात् किं किं विचारणीयं? तदाह—

**गर्भापत्यविनेयानां मन्त्रसन्धानयोरपि।**
**विद्याबुद्धिप्रबन्धानां सुतस्थाने विनिर्णयः ॥ २३ ॥**

सुतस्थाने = पुत्रभावात्, अत्र पञ्चम्यर्थे सप्तमी। अर्थात् पञ्चमभावात्, गर्भस्य, अपत्यस्य = सन्तानस्य, विनेयस्य = इतस्ततः कस्यापि सञ्चालनस्य, मन्त्रः = विचारः वा मन्त्रग्रहणम्, सन्धानं = मैत्रीकरणम्, तयोः। विद्याबुद्धिप्रबन्धानां विनिर्णयः = विनिश्चयः, कार्य इति ॥ २३ ॥

भाषा—पञ्चमभाव से, गर्भ, सन्तान, इधर उधर ले जाने का और मन्त्र, तथा मैत्री करना, तथा विद्या बुद्धि, प्रबन्धों का विचार करना चाहिये ॥ २३ ॥

अथ षष्ठभावाद्विचारणीयमाह—

**चौरभी रिपुसंग्रामखरोष्ट्रक्रूरकर्मणाम्।**
**मातुलातंकभृत्यानां रिपुस्थानाद्विनिर्णयः ॥ २४ ॥**

रिपुस्थानात् = षष्ठस्थानात्, चौरभीः = चौरभयम्, रिपुः = शत्रुः, सङ्ग्रामः= युद्धम्, खरः = गर्दभः, उष्ट्रः, क्रूरकर्म = परहानिक्रिया, मारणादिकर्म, तेषां, तथा

मातुलः=मातृभ्राता, आतङ्कः=भयम् , भृत्यः=सेवकः एतेषां च विनिर्णयः कार्यः॥२४॥

भाषा—छठे भाव से चौरभय, शत्रु, लड़ाई, गदहा, ऊंट, क्रूरकर्म इन सबों के विचार और मामा, भय, नोकर इन सबों का विचार भी करना चाहिये ॥ २४ ॥

अथ सप्तमभावाद्विचारणीयमाह—

**वाणिज्यं व्यवहारं च विवादं च समं परैः ।**
**गमागमकलत्राणि पश्येत्प्राज्ञः कलत्रतः ॥ २५ ॥**

कलत्रतः = सप्तमस्थानात् , वाणिज्यम् = व्यापारं क्रयविक्रयरूपं, व्यवहारं = धनदानग्रहणं, परैः = अन्यैः, समं विवादं = वाक्कलहं च, गमागमौ = गतागतौ, कलत्रं = स्त्री, एतानि प्राज्ञः = पण्डितः, पश्येत् = विलोकयेत् ॥ २५ ॥

भाषा—सप्तम भाव से, खरीद बिक्री, लेन देन, दूसरों से विवाद, जाना आना और स्त्री का विचार पण्डित करें ॥ २५ ॥

अथाष्टमभावाद्विचारणीयमाह—

**नद्युत्तारेऽध्ववैषम्ये दुर्गे शात्रवसंकटे ।**
**नष्टे दुष्टे रणे व्याधौ छिद्रे छिद्रं निरीक्षयेत् ॥ २६ ॥**

नद्युत्तारे = नदीतरणे, अध्ववैषम्ये = मार्गसङ्कटे, दुर्गे = वनपर्वतगमने, वायुयानजलयानादिकारोहणे वा शात्रवसङ्कटे = वैरिभये, नष्टे = नष्टधने, दुष्टे = अनिष्टकार्ये, रणे = युद्धे, छिद्रे = विवरे, गोप्यप्रकाशने च छिद्रं = अष्टमभावं निरीक्षयेत् = पश्येत्, एतेषां विचारोऽष्टमभावात् प्रकर्त्तव्य इति भावः ॥ २६ ॥

भाषा—अष्टम भाव से नदी के पार जाने में, रास्ता के संकट में, दुर्गस्थल में, शत्रुभय में, नष्टधन में, लड़ाई में, बिल या गुप्त कार्य में विचार करें ॥ २६ ॥

नवमभावात् विचारणीयमाह—

**वपीकूपतडागादिप्रपादेवगृहाणि च ।**
**दीक्षां यात्रां मठं धर्मं धर्मान्निश्चिन्त्य कीर्तयेत् ॥ २७ ॥**

वापी = परितो बद्धसोपाना लघुपुष्करिणी, कूपः प्रसिद्धः, तडागः=महापुष्करिणी, प्रपा = पानीयशाला, देवगृहम् = देवमठमन्दिरम् , तानि, तथा दीक्षां = मन्त्रग्रहणं, यात्रां = स्थानान्तरगतिम् , मठं = शिवालयम् , धर्मम् = पाठपुरश्चरणादिकम् , एतत्सर्वं धर्मान्नवमस्थानान्निश्चिन्त्य = विविच्य, कीर्तयेत् = कथयेत् ॥ २७ ॥

भाषा—बाउली, इनारा (कूंवा) पोखर (तालाब) आदि जलाशयों का, पनिशाला, देवमन्दिर (ठाकुरबाड़ी, देवी मन्दिर) का और धर्मविषयक कार्यों का विचार करें ॥ २७ ॥

अथ दशमभावाद्विचारणीयमाह—

**राज्यं मुद्रां परं पुण्यं स्थानं तातं प्रयोजनम्।**
**वृष्ट्यादिव्योमवृत्तान्तं व्योमस्थानान्निरीक्षयेत् ॥ २८ ॥**

व्योमस्थानात् = कर्म ( दशम ) भावात्, राज्यं = प्रजापालनं, मुद्रां = रूप्यकं, परं = परमं, पुण्यं = चान्द्रायणव्रतादिधर्माचरणम्, स्थानं = स्थानलाभस्थैर्यादिकं, तातं = पितरं, प्रयोजनम् = आवश्यकीयविषयम्, वृष्ट्यादि = जलवर्षणादि, व्योमवृत्तान्तं = आकाशसम्बन्धिवृत्तं च निरीक्षयेत् = विचारयेत् ॥ २८ ॥

भाषा—दशमभाव से राज्य, रुपया, विशेष पुण्य, स्थान, पिता, प्रयोजन, पानी का विचार, आदि आकाश सम्बन्धी समाचार, परिवेष, मण्डल, धूमकेतु, ग्रहण आदि विषयों के विचार को करें ॥ २८ ॥

अथैकादशभावाद्विचारणीयमाह—

**गजाश्वयानवस्त्राणि सस्यकाञ्चनकन्यकाः।**
**विद्वान् विद्यार्थयोर्लाभं लक्षयेल्लाभलग्नतः ॥ २९ ॥**

लाभलग्नतः = एकादशभावात्-गजः = हस्ती, अश्वः = घोटकः, अनयोर्यानमारोहणं, वस्त्रं = अंशुकं, एतानि, सस्यकाञ्चनकन्यकाः = सस्यं = क्षेत्रगतधान्यजातं, काञ्चनं = सुवर्णम्, कन्यकाः = पुत्र्यः, एताः तथा विद्यार्थयोः = शास्त्रधनयोः लाभं = प्राप्तिं च लक्षयेत् = चिन्तयेत् ॥ २९ ॥

भाषा—एकादश ( आय ) भाव से हाथी घोड़ों की सवारी, कपड़ा, सस्य जायदात, सोना, लड़की और विद्या, धनों के लाभ इन सबों का विचार करें ॥२९॥

अथ व्ययभावाद्विचारणीयमाह—

**त्यागभोगविवादेषु दानेष्टकृषिकर्मसु।**
**व्यवस्थानेषु सर्वेषु विद्धि विद्वद् ! व्ययं व्ययात् ॥ ३० ॥**

हे विद्वन् ! व्ययात् = व्ययभावात्, त्यागभोगविवादेषु, दानेष्टकृषिकर्मसु, सर्वेषु व्ययस्थानेषु व्ययं = धनव्ययं विद्धि = जानीहि ॥ ३० ॥

भाषा—हे पण्डित ! बारहवें भाव से, किसी काम को छोड़ने में, किसी पदार्थ के भोग में, किसी के साथ विवाद में, दान में और अभीष्ट कार्य में, खेती में, सब संस्थाओं में धन का खर्च विचार करो ॥ ३० ॥

इति संक्षेपतो द्वादशभावविचारणीयवस्तुकथनम्।

# अथ भावप्रश्नाध्यायः ।

अथ साधारणतया सकलभावविषयकवृद्धिहानी आह( षट्पञ्चाशिकायाम् )—

**यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिः ।**
**पापैरेवं तस्य भावस्य हानिर्निर्देष्टव्या पृच्छतो जन्मतो वा ॥ १ ॥**

पृच्छतः = प्रश्नलग्नात् वा जन्मतः = जन्मलग्नात्, यः यः (कः अपि) भावः स्वामिदृष्टः वा स्वामियुतः, वा सौम्यैः = शुभग्रहैः,युतदृष्टः स्यात्, तस्य तस्य भावस्य वृद्धिः अस्ति । एवं यः यः भावः पापैः = पापग्रहैः, युतदृष्टः स्यात् तस्य भावस्य हानिः = फलहीनता निर्देष्टव्या = कथनीया ॥ १ ॥

भाषा—प्रश्नलग्न से या जन्मलग्न से जो जो भाव अपने स्वामी, या शुभ ग्रहों से युत दृष्ट हों, उन २ भावों की वृद्धि होती है । और जिन २ भावों पर पाप ग्रह हों, या उनकी दृष्टि पड़ती हो, उन २ भावों की हानि होती है । इस प्रकार सब भावों का विचार करना चाहिये ॥ १ ॥

**सौम्ये विलग्ने यदि वा स्ववर्गे शीर्षोदये सिद्धिमुपैति कार्यम् ।**
**अतो विपर्यस्तमसिद्धिहेतुः कृच्छ्रेण संसिद्धिकरं विमिश्रम् ॥ २ ॥**

विलग्ने = प्रश्नलग्ने, सौम्ये = शुभग्रहे सति, यदि वा विलग्ने स्ववर्गे = स्वामिवर्गे, वा सौम्ये स्ववर्गे सति, वा विलग्ने शीर्षोदये = मिथुनसिंहकन्यातुलावृश्चिककुम्भान्यतमराशौ सति कार्यं सिद्धिम् उपैति = प्राप्नोति । अतः, विपर्यस्तं = विपरीतं, चेदर्थात् पापे विलग्ने, यदि वाऽन्यवर्गे, पृष्ठोदये कार्यस्य असिद्धिहेतुः भवति । विमिश्रं = शुभपापयुतदृष्टलग्नं चेत्तदा कृच्छ्रेण = क्लेशेन संसिद्धिकरं भवति ॥२॥

भाषा—लग्न में शुभग्रह हो, या लग्न में शुभग्रह का वर्ग हो, या लग्न में शीर्षोदय राशि ( मिथुन, सिंह, कन्या, तुला, वृश्चिक, कुम्भ, ) हो तो कार्य सिद्धि होती है । इससे विपरीत रहने से कार्यहानि होती है । यदि पाप शुभ दोनों से लग्न युत दृष्ट हो तो क्लेश से कार्यसिद्धि होती है ॥ २ ॥

अथ कार्यसिद्धियोगानाह [ भुवनप्रदीपे ]—

**लग्नपतिर्यदि लग्नं कार्याधिपतिश्च वीक्षते कार्यम् ।**
**लग्नाधीशः कार्यं कार्येशः पश्यति विलग्नम् ॥ ३ ॥**
**लग्नेशः कार्येशं विलोकयेल्लग्नपं तु कार्येशः ।**
**शीतगुदृष्टौ सत्यां परिपूर्णा कार्यसंसिद्धिः ॥ ४ ॥**

लग्नपतिः = प्रश्नलग्नेशः, यदि लग्नं = प्रश्नलग्नं पश्यति, कार्याधिपतिः = कार्येशः, कार्यविषयभेदात्कार्येशो भिन्नो भिन्नो भवति। यथा धनलाभप्रश्ने धनेशः कार्येशः। सहजलाभप्रश्ने सहजेशः। गृहसुखादिलाभप्रश्ने चतुर्थेशः। पुत्रलाभ-प्रश्ने पञ्चमेशः। स्त्रीलाभप्रश्ने सप्तमेशः। राज्यलाभप्रश्ने दशमेशः कार्येशः। स यदि कार्यं = कार्याश्रयभावं, वीक्षते = पश्यति, वा लग्नाधीशः = लग्नेशः, कार्यं, कार्येशः विलग्नं पश्यति, वा लग्नेशः कार्येशः लग्नपं=लग्नेशं विलोकयेत्, तथा तत्र शीतगुदृष्टौ सत्यां=तौ चन्द्रेण विलोकितौ च तदा कार्यसंसिद्धिः परिपूर्णा भवति ॥३-४॥

भाषा—यदि लग्नेश लग्न को देखे, कार्येश कार्यभाव को देखे। या लग्नेश कार्य को, कार्येश लग्न को देखे, अथवा लग्नेश कार्येश को, कार्येश लग्नेश को देखे। वहाँ उन ( लग्नेश कार्येश ) को चन्द्रमा देखे तो पूरी कार्यसिद्धि होती है ॥३-४॥

अथ कार्यसिद्धियोगस्य न्यूनाधिकत्वमाह—

**कथयन्ति पादयोगं पश्यति सौम्यो न लग्नपो लग्नम्।**
**लग्नाधिपं च पश्यति शुभग्रहश्चार्धयोगोऽत्र ॥ ५ ॥**
**एकः शुभो ग्रहो यदि पश्यति लग्नाधिपं विलग्नं वा।**
**पादोनयोगमाहुस्तदा बुधाः कार्यसंसिद्धौ ॥ ६ ॥**
**लग्नपतौ दशमे सति शुभग्रहौ द्वौ त्रयोऽथवा लग्नम्।**
**पश्यन्ति यदि तदानीमाहुर्योगं त्रिभागोनम् ॥ ७ ॥**
**लग्नेशदर्शने सति पश्यन्तः पूर्णयोगकराः ॥ ७½ ॥**

सौम्यः = शुभग्रहः, लग्नपः = लग्नेशः, यदि लग्नं न पश्यति तदा कार्यसिद्धेः पादयोगं=योगचतुर्थांशं कथयन्ति। अत्र यदि शुभग्रहः लग्नाधिपं=लग्नेशं, पश्यति, तदा कार्यसिद्धेः अर्धयोगः भवति। यदि एकः शुभग्रहः लग्नाधिपं, वा विलग्नं पश्यति, तदा बुधाः कार्यसंसिद्धौ पादोनयोगं = त्रिचरणयोगम्, आहुः कथयन्ति।

लग्नपतौ = लग्नेशे, दशमे सति, वा द्वौ शुभग्रहौ, अथवा त्रयः शुभग्रहा दशमे स्थिताः। अथवा यदि त्रयः शुभाः लग्नं पश्यन्ति, तदानीं त्रिभागोनं = तृतीयांशोनं योगं आहुः। लग्ने लग्नेशदर्शने सति वा लग्नलग्नेशौ पश्यन्तः शुभग्रहा भवेयुस्तदा पूर्णयोगकरा भवन्ति ॥ ५-७½ ॥

भाषा—यदि शुभग्रह या लग्नेश लग्न को नहीं देखे, तो कार्यसिद्धि का एक चतुर्थांश योग होता है। यदि शुभग्रह लग्नेश को देखे, तो कार्यसिद्धि का दो चतुर्थांश

योग होता है। यदि एक शुभग्रह लग्नेश को वा लग्न को देखे, तो तीन चरण योग होता है। यदि लग्नेश दो शुभग्रहों से देखे जांय, या तीन शुभग्रह लग्न को देखें, तो तृतीयांशोन ( दो तिहाई ) योग होता है। यदि लग्न को लग्नेश देखे, या तीन शुभग्रह लग्न को वा लग्नेश को देखे तो, कार्यसिद्धियोग पूर्ण होता है ॥ ५-७½ ॥

क्रूरावेक्षणवर्ज्यश्चन्द्रः सौम्याश्च खेचरा लग्नम् ॥ ८ ॥

चन्द्रः क्रूरावेक्षणवर्ज्यः = पापदृष्टिरहितः, सौम्याः खेचराः = शुभग्रहाः, लग्नं पश्यन्ति तदाऽपि कार्यसिद्धेः पूर्णयोगः इति ॥ ८ ॥

भाषा—चन्द्रमा पापग्रह की दृष्टि से बचा हो, शुभग्रह लग्न को देखें, तो कार्य सिद्धियोग पूर्ण होता है ॥ ८ ॥

अथानिष्टयोगमाह—

क्रूराक्रान्तः क्रूरयुतः क्रूरदृष्टश्च यो ग्रहः।
विरश्मितां प्रपन्नश्च सोऽनिष्टफलदायकः ॥ ९ ॥

यः कश्चिद्ग्रहः क्रूराक्रान्तः = पापग्रहविजितः, क्रूरयुतः = पापयुतः, विरश्मितां= अस्ततां, प्रपन्नः = प्राप्तः च भवेत् सः अनिष्टफलदायकः भवति ॥ ९ ॥

भाषा—जो कोई ग्रह-पाप से पराजित, पापग्रह से युत, या दृष्ट हो, अस्तंगत हो ( सूर्य से अपने १२ कलांश के अन्तर्गत हो ) वह ग्रह अनिष्टफल देते हैं ॥ ९ ॥

अथ कार्यसिद्धिप्रश्नविचारमाह—

अमुकं गदेति कार्यं कदा भविष्यत्यमुत्र पृच्छायाम्।
लग्नाधिपतिः कार्यं लग्नं कार्याधिपः पश्येत् ॥ १० ॥
लग्नस्थः कार्येशः पश्यति चेल्लग्नपं तदैव भवेत्।
तत्कार्यं यद्यन्यस्थितं तश्च सत्वरं न स्यात् ॥ ११ ॥
पश्यति तदा च लग्नं द्रक्ष्यति चन्द्रं विलग्नपं च यदा।
लग्ने कार्ये च यदा द्वयोश्च योगे तदा सिद्धिः ॥ १२ ॥

अमुकं कार्यं कदा भविष्यति इति गद = वद ? अमुत्र = अस्यां पृच्छायां, यदि लग्नाधिपतिः = प्रश्नलग्नेशः कार्यं = तत्कार्यविषयाश्रितभावं पश्येत्, कार्येशः लग्नं पश्येत्, अथवा चेत् कार्येशः लग्नस्थः सन् लग्नस्वामिनं पश्यति तदैव तत् कार्यं भवेत्। यदि कार्येशः अन्यस्थितः = लग्नभिन्नस्थानगतः सन् लग्नेशं पश्यति तदाऽपि कार्यं भवेत्परन्तु सत्वरं नार्थाद्विलम्बेन कार्यसिद्धिः स्यात्।

यदा कार्येशः लग्नं पश्यति, चन्द्रं, विलग्नपं = लग्नेशं च द्रक्ष्यति, तदा कार्यसिद्धिः। वा यदि लग्ने वा कार्यभावे द्वयोर्लग्नेशकार्येशयोर्योगे सति, तदा सिद्धिः = कार्यसिद्धिः स्यात् ॥ १०-१२ ॥

भाषा—अमुक कार्य हमारा कब होगा, यह कहो? इस प्रश्न में यदि लग्नेश कार्यभाव को देखे, कार्येश लग्न को देखे तो कार्यसिद्धि होती है। अथवा कार्येश लग्न में होकर लग्नेश को देखे तो उसी क्षण में कार्यसिद्धि होती है। या कार्येश लग्न से भिन्न स्थान में रहकर लग्नेश को देखे तो विलम्ब से कार्यसिद्धि होती है। यदि कार्येश लग्न को, चन्द्रमा को और लग्नेश को भी देखे तो कार्यसिद्धि होती है। यदि लग्न में या कार्यभाव में लग्नेश का संयोग होता हो अर्थात् लग्न ही में लग्नेश कार्येश दोनों हों, या कार्यभाव ही में लग्नेश कार्येश दोनों हों, तो कार्यसिद्धि होती है ॥ १०-१२ ॥

अथ कार्यहानियोगमाह—

**यदि लग्नपं न पश्यति कार्याधीशो विलग्नमथ तस्य।**
**कार्यस्य हानिरुक्ता लग्नमृते किमपि नो वाच्यम् ॥ १३ ॥**

यदि कार्याधीशः लग्नपं = लग्नेशं, विलग्नं च न पश्यति, तदा तस्य कार्यस्य हानिः = क्षतिः, उक्ता। अत्र कार्यसिद्धिप्रश्ने लग्नं, ऋते = विना, किमपि = किञ्चिदपि नो वाच्यम् ॥ १३ ॥

भाषा—यदि कार्येश लग्नेश को वा लग्न को नहीं देखे, तो कार्यकी सिद्धि नहीं होती है। यहां कार्यसिद्धिप्रश्न में लग्न के बिना कुछ भी नहीं कहना चाहिये ॥१३॥

अथ प्रत्येकभावप्रश्ननिरूपणं ताजिकशास्त्रोक्ततन्त्रे—

तत्रादौ लग्नप्रश्ननिरूपणम्—

**भूतं भवद्भविष्यन्मम किं कथयेति जातपृच्छायाम्।**
**लग्नपतेः शशिनो वा बलमन्वेष्यं बलाभावे ॥ १ ॥**
**दृष्ट्वा नवांशकबलं शुभदृग्योगं च सर्वकालेषु।**
**प्रष्टुः शुभमादेश्यं विपरीतं व्यत्ययादेषा ॥ २ ॥**
**लग्नेशो मूसरिफो यस्मादतीतमाख्येयम्।**
**येन युतस्तस्माद्भवदेष्यं यो योदयते तस्मात् ॥ ३ ॥**
**यदि लग्ने लग्नपतिः सौम्ययुतो वा विलोकितः सौम्यैः।**
**तत्प्रष्टुर्व्याकुलता शरीरदोषा विनश्यन्ति ॥ ४ ॥**

पापो यदि लग्नपतिस्तदा कलिव्याधिधननाशः ।
सौम्ये निर्वृतिबुद्धिर्द्रव्याप्तिः सौख्यमतुलं च ॥ ५ ॥

मम भूतं = गतं, भवत् = वर्तमानं, भविष्यत्=भावि, शुभाशुभं फलं किं ? इति कथय = वद, इत्येव जातपृच्छायां = उत्पन्नप्रश्ने प्रथमं लग्नपतेः = लग्नराशीशस्य शशिनः = चन्द्रस्य च बलं = वीर्यं, अन्वेष्यम् = साधनीयम्, तत्र तयोर्बलाभावे सति कार्यनाश इति योज्यम् । अथ सर्वकालेषु नवांशकबलं, शुभदृग्योगं च दृष्ट्वा प्रष्टुः = प्रश्नकर्तुः, शुभं = अनुकूलं फलम्, आदेश्यम् । व्यत्ययात् = पापदृग्योगात्, विपरीतं फलमशुभं वाच्यम् ।

लग्नेशः यस्माद्ग्रहात् मूसरिफः कृतः, तस्मादतीतं = गतं फलमादेश्यम् ।

लग्नेशो ग्रहः येन युतस्तस्माद्ग्रहाद्भवद्वर्त्तमानं फलं वाच्यम् । तथा लग्नेशो येन योद्यते=योज्यते=युक्तो भवति, तस्माद्ग्रहात्, एष्यं=भविष्यत् फलं विचार्यम् ।

यदि लग्ने लग्नपतिः सौम्ययुतः सौम्यैर्विलोकितश्च भवति तदा तत्प्रष्टुर्व्याकुलता नश्यति, शरीरदोषाश्च नश्यन्ति । यदि पापः लग्नपतिः पापयुतेक्षितश्च भवति तदा कलिव्याधिधननाशा भवन्ति । यदि सौम्यः = शुभग्रहः, लग्नपतिस्तदा निर्वृति-बुद्धिः = स्थिरमतिः, द्रव्याप्तिः = धनलाभः, अतुलं सौख्यं च भवति ॥ १-५ ॥

भाषा—मुझे भुत या वर्तमान, या भावी शुभ अशुभ फल क्या है, यह कहो ?, इस प्रश्न में लग्नेश और चन्द्रमा का बल साधन करना चाहिये। उन दोनों के निर्बल रहने से कार्यनाश कहना ।

सब काल में नवांश का बल और शुभग्रह की दृष्टि, शुभग्रह का योग प्रश्नकर्त्ता का शुभ करता है । पापग्रह के योग से, दृष्टि से विपरीत फल कहना ।

जिस ग्रह से लग्नेश मूसरिफ ( इत्थशाल ) करता हो, उससे भूत फल कहना । जिस ग्रह से लग्नेश युत हो, उससे वर्त्तमान फल कहना । जिस ग्रह से लग्नेश इत्थ-शाल करेगा उससे भावी फल कहना । यदि लग्नेश लग्न में हो, शुभग्रह से युत हो, तो प्रश्नकर्त्ता की चिन्ता हटती है । शरीर के सब दोष हटते हैं ।

यदि लग्नेश पापग्रह हो तो कलह, रोग, धननाश होते हैं । यदि शुभग्रह लग्नेश हो तो स्थिर बुद्धि हो, धनलाभ हो, विशेष सुख भी मिले ॥ १-५ ॥

अथ द्वितीयस्थानपृच्छा तत्रैव—

धनलाभस्य प्रश्ने लग्नेशेनेन्दुनाऽथ धननाथः ।
कुरुते यदीत्थशालं शुभयुतिदृष्ट्यां भवेल्लाभः ॥ ६ ॥

क्रूरग्रहैर्धनस्थैर्दूरे लाभोऽन्यदप्यशुभम्।
क्रूरमुथशिले धनेशे प्रष्टा म्रियतेऽथवा विलग्नेशे ॥ ७ ॥
धनधनपतीत्थशाले मंदगतिर्यत्र भावानाम्।
तनुधनसहजादीनां प्रष्टस्तद्द्वारतो लाभः ॥ ८ ॥

धनलाभस्य प्रश्ने धननाथः = द्वितीयेशः, लग्नेशेन, वा इन्दुना चन्द्रेण यदि इत्थशालं कुरुते, शुभयुतिदृष्टयां च सत्यां लाभः = धनलाभः भवेत्।

क्रूरग्रहैः = पापग्रहैः, धनस्थैः = द्वितीयस्थानगतैः सद्भिः, दूरे = दूरदेशे लाभः। अन्यदपि अशुभं फलं वाच्यम्। वा धनेशे=द्वितीयेशे क्रूरमुथशिले, सति प्रष्टा जनः म्रियते। अथवा विलग्नेशे धनधनपतीत्थशाले=द्वितीयभावद्वितीयेशाभ्यामित्थशाल-योगे, एवं तनुधनसहजादीनां भावानां मध्ये यत्र मन्दगतिर्ग्रहस्तिष्ठेत् तद्द्वारतः प्रष्टुर्लाभः भवेत्॥ ६–८॥

**भाषा—धनलाभ के प्रश्न में धनभावेश यदि लग्नेश से या चन्द्रमा से इत्थशाल योग करे, शुभग्रह का योग, या दृष्टि हो तो धनलाभ होता है। यदि पापग्रह धन भाव में हो, तो दूरदेश जाने पर लाभ हो, और भी अनिष्टफल हो। यदि धनेश को पापग्रह से इत्थशाल होता हो, तो प्रश्नकर्त्ता का मरण होता है। या लग्नेश, धन भाव से या धनभावेश से इत्थशाल करता हो तो लग्नादि जिस भाव में मन्दगति ग्रह हो उस भाव के द्वारा लाभ हो ॥ ६–८॥**

प्रश्नदीपके द्वितीयभावपृच्छामाह—

लग्नस्थं चन्द्रजं चन्द्रः क्रूरो वा यदि पश्यति।
धनलाभो भवत्याशु किन्त्वनर्थोऽपि पृच्छतः ॥ ९ ॥
चन्द्रलग्नधनाधीशा दृष्टा युक्ताः परस्परम्।
धनकेन्द्रत्रिकोणस्थाः सद्यो लाभकराः स्मृताः ॥ १० ॥
शुभदस्वामिषड्वर्गे लग्ने सौम्ययुतेक्षिते।
प्रष्टुस्तात्कालिको लब्धिरलब्धिस्तु विपर्यये ॥ ११ ॥
चतुर्थे सप्तमे चन्द्रे खे रवौ लग्नगे शुभे।
प्रष्टुः सद्योऽर्थलाभः स्याल्लग्ने वा सुरमन्त्रिणि ॥ १२ ॥

चन्द्रः लग्नस्थं चन्द्रजं = बुधं पश्यति, यदि वा क्रूरः पापग्रहः लग्नगतं बुधं पश्यति तदा पृच्छतः जनस्य आशु = शीघ्रमेव, धनलाभः भवति, किन्तु अनर्थः = क्षतिः अपि भवति।

चन्द्रलग्नधनाधीशाः=चन्द्र-लग्नेश-धनेशाः परस्परं दृष्टा युक्ताः धनकेन्द्रत्रिकोणस्थाः २।१।४।७।१०।५।९ एषु स्थिताः, तदा सद्यः=शीघ्रं, लाभकराः स्मृताः=कथिताः।

लग्ने शुभदस्वामिषड्वर्गे सति, सौम्ययुतेक्षिते, तदा प्रष्टुः तात्कालिकी लब्धिः=धनलाभः स्यात्। एतस्य विपर्यये अर्थाद् पापशत्रुवर्गे गते लग्ने पापयुतेक्षिते तदा अलब्धिः=द्रव्यक्षतिः स्यात्।

चन्द्रे चतुर्थे सप्तमे सति, रवौ खे=दशमे, शुभे लग्नगे सति, प्रष्टुः सद्यः=झटिति अर्थलाभः स्यात्। वा सुरमन्त्रिणि=गुरौ, लग्ने सति धनलाभः स्यात्॥ ९-१२॥

(१) भाषा—चन्द्रमा लग्नस्थित बुध को देखे, या पापग्रह लग्न स्थित बुध को देखे, तो प्रश्नकर्त्ता को धनलाभ शीघ्र ही होता है। लेकिन साथ ही अनर्थ भी होता है।

(२) चन्द्रमा, लग्नेश, धनेश ये परस्पर दृष्ट हों, या युत हों, और २।१।४।७।१०।५।९ इन स्थानों में से किसी स्थान में हों, तो शीघ्र ही धनलाभ होता है।

(३) वा लग्न में यदि शुभग्रह, अथवा अपने स्वामी (लग्नेश) का षड्वर्ग हो, शुभग्रह से युत दृष्ट हो तो प्रश्नकर्त्ता को तुरत ही धनलाभ होता है। इसके विपरीत में अर्थात् पापग्रह का षड्वर्ग लग्न में हो, पापग्रह से युत दृष्ट हो तो धनहानि होती है।

(४) चन्द्रमा चौथे, सातवें में हों, रवि दशम स्थान में हों, शुभग्रह लग्न में हों तो शीघ्र धनलाभ होता है। या बृहस्पति लग्न में हों तो भी धनलाभ होता है॥ ९-१२॥

अथ तृतीयभावपृच्छामाह ताजिकोक्तप्रश्नतन्त्रे—

सहजपतिर्यदि सहजं पश्यति चेत्तद्द्वयं शुभैर्दृष्टम्।
तद्भ्रातरो गतरुजः स्वस्थाः क्रूरेक्षणे वामम्॥ १३॥
यदि सहजपतिः षष्ठे तत्पतिना मुथशिलेऽथ तन्मांद्यम्।
षष्ठेशे सहजस्थे सहजपतौ क्रूरिते वाऽपि॥ १४॥
सूर्यस्य रश्मिसंस्थे भयावहं प्रष्टुरादेश्यम्।
षष्ठाष्टमभावेशौ यद्भावेशेत्थशालिनौ स्याताम्॥ १५॥
पीडां तस्य प्रवदेत्षष्ठाष्टमसंस्थिते वाऽपि।
एवं सर्वे भावाः पित्रोस्तुर्ये सुते सुतानां च॥ १६॥
भृत्यचतुष्पदवर्गस्यास्ते स्त्रियाः सुहृदो ये॥ १६½॥

(१) यदि सहजपतिः=तृतीयेशः, सहजं=तृतीयभाव पश्यति, चेत् तद्द्वयं=सहजपतिः सहजभावश्च इति द्वयं शुभैः=शुभग्रहैः, दृष्टं, तदा तद्भ्रातरः, गतरुजः=नीरोगाः, स्वस्थाः = प्रकृतिस्था भवन्ति। क्रूरेक्षणे=पापदृष्टे अर्थात् सहजभावे सहजेशे च पापदृष्टे वामं=विपरीतं फलं वाच्यम्, अर्थात्तदा भ्रातरो रोगपीडिताः स्युः।

(२) यदि सहजपतिः षष्ठे, तत्पतिना = षष्ठेशेन, मुथशिले = इत्थशाले सति, तदा तन्मान्द्यं=तत्तस्य भ्रातुर्मान्द्यं=मन्दता रोगः स्यात्।

(३) अपि वा षष्ठेशे सहजस्थे, सहजपतौ क्रूरिते=पापाक्रान्ते, सूर्यस्य रश्मिसंस्थे=अस्तङ्गते सति प्रष्टुर्भ्रातुर्भयावहम्, आदेश्यम्।

(४) अपि वा षष्ठाष्टमभावेशौ यद्भावेशेन इत्थशालिनौ स्यातां, तस्य=तद्भावविचार्यमाणवस्तुनः पीडां प्रवदेत्। वा यद्भावेशे षष्ठाष्टमसंस्थिते सति तद्भावविषयस्य नाशः स्यात्। एवं सर्वे भावा विचारणीयाः। यथा तुर्ये=चतुर्थे, पित्रोः=मातापित्रोर्विचारः। सुतानां=पुत्रकन्यानां, सुते=पञ्चमभावे विचारः। भृत्यचतुष्पदवर्गस्य=सेवकपशुवर्गस्य, स्त्रियाः, तथा सुहृदः=मित्राणि, तेषां विचारः अस्ते=सप्तमभावे कार्यः॥ १३-१६½॥

(१) भाषा—तृतीय भावेश यदि तृतीयभाव को देखे, या यदि तृतीयेश को तृतीयभाव को शुभग्रह सब देखें तो प्रश्नकर्त्ता के भाई नीरोग रहें, सुखी रहें। यदि पापग्रह देखें तो भाई रोगी हों ऐसा कहना।

(२) तृतीयेश षष्ठस्थान में हो, षष्ठेश से इत्थशाल योग करता हो तो भाई को रोग कहना।

(३) षष्ठेश तीसरे स्थान में हो, तृतीयेश पापयुतदृष्ट हो तो भाई को रोग कहना।

(४) या सहजेश अस्तंगत हो अर्थात् सूर्य से अपने कालांश के अन्तर्गत हो तो भाई को भयावह रोग कहना।

(५) षष्ठेश और अष्टमेश जिस भावेश से इत्थशाल करते हों, उस भाव से विचारणीय पदार्थ की पीड़ा कहनी चाहिये। या जिस भाव का स्वामी छठे आठवें में हों, उस भाव की हानि होती है। इस प्रकार सब भाव को विचारे, जैसे चौथे भाव में माता पिता का, पुत्र कन्याओं का विचार पञ्चम भाव से, नोकर सेवक, पशुओं के विचार, तथा स्त्री का विचार सप्तम भाव से करना चाहिये॥ १३-१६½॥

अथ चतुर्थस्थानपृच्छा—

**लग्नपतीन्दुचतुर्थे यदि मुथशिलमथवा ग्रहे गमनम्॥ १७॥**

प्रष्टुः पृथ्वीलाभदमसौम्यदृग्योगतो नैव ।
यदि पृच्छति कृषिको मे क्षेत्राल्लाभो भवेन्नो वा ॥१८॥
लग्नं कृषिकस्तुर्यं भूमिर्द्यूनं च कृषिस्तरुर्दशमम् ।
लग्ने क्रूरोपगते स्याच्चौरोपद्रवस्तु कृषिकर्तुः ॥ १९ ॥
वक्रातिचारवर्ज्ये क्रूरे चौरस्य कृषिलाभः ।
लग्नस्थे शुभखेटे साफल्यं कर्षकस्य कृषितः स्यात् ॥२०॥
तुर्ये च क्रूरगते त्यक्त्वा भूमिं प्रयात्येषः ।
द्यूने च शुभोपगते शुभं कृषेस्त्वन्यथा तु विपरीतम् ॥२१॥
दशमे दशमपतौ वा शुभयुतदृष्टे शुभा वृक्षाः ॥ २१½ ॥

लग्नपतिः=लग्नेशः, इन्दुः=चन्द्र अनयोर्य चतुर्थस्थाने, तयोर्यदि मुथशिलं स्यादथवा-तयोश्चतुर्थस्थाने ग्रहे सति प्रष्टुर्गमनं (यात्रा) पृथ्वीलाभदं वाच्यम् । असौम्यः=पापग्रहस्तस्य दृग्योगतः=दृष्टिसंयोगाभ्यां पृथ्वीलाभसंभवः नैव वाच्यः ।

यदि कृषिकर्मकर्ता जनः, पृच्छति, यत् मे=मम, क्षेत्राल्लाभः भवेद्वा नो भवेत् ? तदा तत्कालिकलग्नं कृषिकः, ततस्तुर्यं=चतुर्थं भं भूमिः, द्यूनं=सप्तमं भं कृषिः, दशमं भं तरुः ज्ञेयः । अत्र क्रूरोपगते लग्ने सति कृषिकर्तुः चौरोपद्रवः भवति । तत्रापि लग्नगतक्रूरग्रहे वक्रातिचारवर्ज्ये सति चौरस्य कृषिलाभः स्यात् । लग्नस्थे शुभखेटे तदा कर्षकस्य कृषितः साफल्यं स्यात् । तुर्ये=चतुर्थे, क्रूरगते = पापयुते तदा एषः कृषिकः भूमिं त्यक्त्वा प्रयाति, शस्यसञ्चयप्रतीक्षां न करोति । द्यूने = सप्तमे, शुभोपगते सति कृषेः शुभं=साफल्यं भवति । अन्यथा द्यूने पापोपगते कृषेः फलं विपरीतं भवति । वा दशमपतौ = कर्मेशे, दशमे, शुभयुतदृष्टे तदा वृक्षाः = क्षेत्रशस्यसमूहाः शुभाः = नीरोगाः फलशालिनश्च स्युः ॥ १७-२१½ ॥

भाषा—लग्नेश और चन्द्रमा इन दोनों से जो चतुर्थस्थान, उसमें उन दोनों में मुथशिल हो, या वहाँ कोई अच्छे ग्रह हों, तो प्रश्नकर्त्ता को कहीं यात्रा करने में भूमिलाभ होता है ।

यदि किसान पूछे जो मुझे खेत से लाभ होगा, या नहीं ?, तो उस समय का जो लग्न उसको किसान समझना, लग्न से चतुर्थ राशि को खेत समझना, लग्नसे सप्तम राशि को कृषि समझना, लग्न से दशम को पौधा पेड़ समझना ।

अब विचारना है कि—यदि लग्न में पापग्रह हो, तो किसान को चोरी का उपद्रव होता है । उसमें भी पापग्रह यदि मार्गी हो, तथा अतिचारी नहीं हो तो चोरी

हुई चीजों का लाभ कहना। यदि लग्न में शुभग्रह हो, तो किसान को खेती में सफलता होती है। यदि चौथे स्थान में पापग्रह हो, तो किसान खेती को छोड़ कर चला जाय। सातवें स्थान में शुभग्रह हो, तो खेती की फसल अच्छी कहना। यदि पापग्रह सप्तम में हों, तो फसल अच्छी नहीं कहना। दशमेश दशमभाव में हो, शुभग्रह से दृष्ट युत हो तो खेत की जादात अच्छी होय ॥ १७-२१½ ॥

भूभाटकपृच्छायां लग्नं प्रष्टा च भाटकं द्यूने ॥ २२ ॥
तस्योत्पत्तिर्दशमे तथाऽवसानं चतुर्थे स्यात् ।
लग्नस्य लग्नपस्य च शुभयोगे शुभमशोभनं वामे ॥ २३ ॥
द्यूने क्रूरोपगते यस्मादपि भाटकस्ततोऽनर्थः ।
दशमे क्रूरोपगते नोत्पत्तिर्बहुतरा भवेत्प्रष्टुः ॥ २४ ॥
क्रूरार्दिते तु तुर्ये स्यादवसाने शुभं नास्य ॥ २४½ ॥

भूभाटकपृच्छायां, भुवः=पृथिव्याः, भाटकः=करः, भवनभाटकश्च तयोः पृच्छायां लग्नं=प्रष्टा भवति, द्यूने = सप्तमे, भाटकं भवति, दशमे तस्य = भाटकस्य, उत्पत्तिः भवति। तथा चतुर्थे तस्य अवसानं = पूर्णत्वप्रतिदानम्, भवति। इति तावत्संज्ञाकरणम्।

अथ लग्नस्य लग्नपस्य च शुभयोगे=शुभग्रहदृष्टिसंयोगे सति शुभं=भाटकद्रव्यं स्यात्। वामे = विलोमे, अर्थात् लग्नस्य, लग्नपस्य च पापदृग्योगे अशुभं वाच्यम्। द्यूने=सप्तमे, क्रूरोपगते=पापयुते, सति, यस्माज्जनाद्भाटकः = भाटकद्रव्यलाभस्ततोऽपि अनर्थः भवति। दशमे क्रूरोपगते प्रष्टुर्बहुतरा उत्पत्तिर्न भवेत्। तुर्ये = चतुर्थे क्रूरार्दिते = पापपीडिते सति, अवसाने = परिणामे अस्य कृषकस्य शुभं न स्यात् ॥ २२-२४½ ॥

भाषा—जमीन का भाड़ा, या मकान का भाड़ा के प्रश्न पूछने पर लग्न को पूछने वाला समझना, सप्तम में भाड़ा का विचार, दशवें में भाड़ा की नफा (उपज) समझना, और चौथे में उसका अन्तिम (आखिरी) चुकना समझना।

अब लग्न या लग्नेश को शुभग्रह से संयोग होने से भाड़ा मिलता है। पापग्रह के संयोग से भाड़ा नहीं मिलता है। सप्तम में पापग्रह हो, तो जिससे भाड़ा मिलता है, उस की भी हानि होती है। दशवें में पापग्रह हो, तो पूछने वालों की उपज नहीं होती। चौथे में पापग्रह हो, तो अवसान (आखिरी) में किसान का शुभ नहीं होता है ॥ २२-२४½ ॥

अथ पञ्चमस्थानपृच्छा—

यदि पृच्छत्येतस्याः स्त्रियो भवेन्मे प्रजा न वा ? कश्चित् ॥ २५ ॥
लग्नेन्द्वोः सुतपतिना मुथशिलभावे प्रसूतिः स्यात् ।
सुतभावपतिर्लग्ने लग्नपचन्द्रौ सुतेऽथवा स्याताम् ॥ २६ ॥
सत्वरितमेव वाच्या सविलम्बे नक्तयोगेन ।
द्विशरीरे च विलग्ने शुभयुतपुत्रे द्व्यपत्ययोगोऽस्ति ॥ २७ ॥
यदि लग्नपुत्रपतिः पुंराशौ चेत्स्यात्तदा सुतो गर्भे ॥ २७½ ॥

एतस्याः स्त्रियः सकाशात् मे प्रजा=सन्ततिः, भवेत् वा न भवेत् ? इति यदि कश्चित् जनः पृच्छति, तदा लग्नेन्द्वोः = लग्नचन्द्रयोः, सुतपतिना = पञ्चमेशेन, मुथशिलभावे सति प्रसूतिः स्यात् । वा सुतभावपतिः = पञ्चमेशः, लग्ने स्थितः, लग्नपचन्द्रौ=लग्नेशचन्द्रौ, सुते = पञ्चमे, स्थितौ स्यातां, तदाऽपि प्रसूतिः सत्वरितमेव=शीघ्रमेव वाच्या । नक्तयोगेन सविलम्बं प्रसूतिर्वाच्या । वा द्विशरीरे = द्विस्वभावराशौ, विलग्ने सति शुभयुतदृष्टे च सति तदा द्व्यपत्ययोगः=एकदा सन्तानद्वयोत्पत्तियोगः स्यात् । यदि लग्न-पुत्रपतिः =लग्नपञ्चमेशः पुंराशौ=पुरुषराशौ भवेत् , तदा गर्भे सुतः = पुत्रः वाच्यः । एवं यदि लग्नपुत्रपतिः स्त्रीराशौ भवेत् , तदा गर्भे कन्या वाच्येति ॥ २५–२७½ ॥

भाषा—इस स्त्री से मुझे सन्तान होगी ? या नहीं ? यह यदि कोई पूछे, तो वहाँ लग्न और चन्द्रमा को पञ्चमेश से इत्थशाल योग होने से सन्तान सम्भव कहना ।

तथा पञ्चमेश लग्न में हो, या लग्नेश, चन्द्रमा पञ्चम भाव में हों, तो शीघ्र सन्तान कहना । नक्त योग होता हो, तो विलम्ब से सन्तान कहना । यदि द्विःस्वभावराशि लग्न हो, शुभग्रह से युत दृष्ट हो, तो एक ही बार दो सन्तान का योग होता है । यदि लग्न से पञ्चमेश, या लग्नेश पञ्चमेश पुरुष ( विषमराशि ) में हो, तो गर्भ में लड़का होता है ॥ २५–२७½ ॥

अथ पञ्चमभावपृच्छायां चन्द्रवशेन विचारः—

पुंराशौ पुंग्रहकृतमुथशिलयुक्तस्तदाऽपि सुतगर्भः ॥ २८ ॥
अथवा विधुरपराह्ने सूर्यात्पृष्ठे तदा स्त्री स्यात् ।
होरास्वामी पुरुषः पुंराशौ चेत्तथाऽपि सुतगर्भः ॥ २९ ॥
चन्द्रयुक्तेक्षिते गर्भे सौम्ययुक्तेक्षितेऽपि वा ।
उच्चस्थेऽभ्युदिते तत्र पुण्यापत्यं प्रजायते ॥ ३० ॥

विधुः=चन्द्रः, पुंराशौ=विषमराशौ, पुंग्रहकृतमुथशिलयुक्तः=रविकुजगुरुग्रहकृतेत्थशालः वर्त्तते, तदाऽपि सुतगर्भः =पुत्रस्य गर्भः । गर्भे पुत्र इत्यर्थः । अथवा

विधुश्चन्द्रः अपराह्णे=मध्यन्दिनानन्तरकाले, सूर्यात् पृष्ठे=पृष्ठभागे, राश्यादिना न्यूने भवेत्तदा स्त्री=कन्या गर्भे वाच्या। अर्थात् कृष्णपक्षस्य सार्धसप्तम्या उपरि भागे एवं स्यात्। वा प्रश्नलग्ने या होरा, तस्याः स्वामी पुरुषग्रहः, अर्थात्सूर्यः चेत् पुंराशौ भवेत्तदाऽपि सुतगर्भः, वाच्यः। वा गर्भे=पञ्चमभावे, वा पञ्चमेशे, चन्द्रयुक्तेक्षिते=चन्द्रयुतदृष्टे, अपि वा सौम्ययुक्तेक्षिते, पञ्चमेशे उच्चस्थे=स्वोच्चराशिस्थे, अभ्युदिते=दीप्तांशबहिर्गते सति प्रष्टुः पुण्यापत्यं=धर्मयुक्तसन्तानः, प्रजायते=उत्पद्यते ॥२८-३०॥

भाषा—चन्द्रमा यदि विषम (१।३।५।७।९।११) राशियों में हो और पुरुषग्रह (र० मं० बृ०) में से किसी से इत्थशाल करता हो तो गर्भ में लड़का कहना। या चन्द्रमा दिन में बारह बजे के बाद सूर्य के पीछे हो तो कन्या होती है। यह योग कृष्णपक्ष में सार्द्ध सप्तमीतिथि से अमावस तक सम्भव है।

या प्रश्नलग्न की होरा के स्वामी सूर्य होकर यदि विषमराशि में हो, तो गर्भ में लड़का ही होगा। या पञ्चमभाव, वा पञ्चमेश चन्द्रमा से युत दृष्ट हो, वा शुभग्रह से युत दृष्ट हो, तो धर्मात्मा सन्तान होती है, अथवा पञ्चमेश अपने उच्च में हों, उदित हों तो भी धर्मात्मा सन्तान होती है॥ २८-३०॥

अथ पञ्चमभावपृच्छायामेव गर्भसम्भवप्रश्नमाह—

**एषा गर्भवती किल न वा प्रमाणं प्रयाति गर्भोऽयम्?।**
**प्रश्ने लग्नपशशिनोः सुतस्थयोर्गर्भवत्येव॥ ३१॥**
**यद्येतयोर्मुथशिलं केन्द्रे सुतपेन गर्भिणी तदपि।**
**आपोक्लिमेत्थशालादनीक्षणाल्लग्नपुत्रयोर्नैवम्॥ ३२॥**

एषा स्त्री गर्भवती किल विद्यते न वा? अथवा अयं गर्भः प्रमाणं निश्चयं न प्रयाति=न गच्छति? इत्थं जाते प्रश्ने लग्नपशशिनोः=लग्नेशचन्द्रयोः, सुतस्थयोः=पञ्चमभावगतयोः सतोः, इयं स्त्री गर्भवती एवास्ति। वा यदि अनयोः=लग्नेशचन्द्रयोः केन्द्रे १।४।७।१० स्थितयोः सुतपेन=पञ्चमभावेशेन मुथशिलम्=इत्थशालं जायते, तदापि गर्भिणी भवति। वा आपोक्लिमे ३।६।९।१२ स्थितयोर्लग्नेशचन्द्रयोः इत्थशालात् लग्नपुत्रयोर्भावयोः सुतपेन अनीक्षणात्=अदर्शनात्, एवं=गर्भसम्भवः, न वाच्यः॥ ३१-३२॥

भाषा—यह स्त्री गर्भिणी है या नहीं? यह निश्चय नहीं होता? इस प्रश्न में यदि प्रश्नलग्नेश और चन्द्रमा ये दोनों पञ्चमभाव में हों, तो अवश्य गर्भवती होती है। या लग्नेश, चन्द्रमा ये दोनों केन्द्र में हों, पुत्रभावेश से इत्थशाल होता हो, तो भी

गर्भिणी कहना। यदि लग्नेश और चन्द्रमा ये दोनों ३।६।८।१२ इन स्थानों में हों, और पञ्चमेश लग्न, पञ्चम को नहीं देखे तो गर्भसम्भव नहीं कहना ॥३१-३२॥

अथ गर्भनाशयोगमाह—

**चरलग्ने क्रूरेन्द्वोर्मुथशिलभावे विनश्यति हि गर्भः।**
**लग्नपशशिनोस्तत्पतिस्थवक्रिमुथशिलेऽपि तथा ॥ ३३ ॥**

चरलग्ने =( मे० कर्क, तु० म० ) राशौ स्थितयोः, क्रूरेन्द्वोः = पापचन्द्रयोः, मुथशिलभावे=इत्थशाले सति गर्भः=सन्तानसम्भवः, विनश्यति=पतति एवं चरलग्ने गतयोर्लग्नपशशिनोः = लग्नेशचन्द्रयोः, तद्राशिपतिग्रहवक्रीग्रहाभ्यां मुथशिले जातेऽपि तथा = गर्भो नश्यतीति ज्ञेयम् ॥ ३३ ॥

भाषा—यदि चरराशि प्रश्नलग्न हो, उसी में स्थित पापग्रह और चन्द्रमा में इत्थशाल योग होता हो, तो गर्भ नष्ट होता है और चरलग्न ही में गत लग्नेश तथा चन्द्रमा को उस चरलग्नेश ग्रह तथा वक्री ग्रहों से इत्थशाल होने से वैसे ही अर्थात् गर्भनाश कहना ॥ ३३ ॥

अथ पञ्चमभावपृच्छायामेव-सन्तानजीवितमरणयोः प्रश्नमाह—

**जीवितमरणप्रश्ने बालानामन्त्यपे शुभैर्दृष्टे।**
**केन्द्रस्थे सितपक्षे शुभयुक्तेऽन्त्ये विधौ जीवेत् ॥ ३४ ॥**
**क्रूरश्चेदन्त्यपतिर्दग्धश्चापोक्लिमेऽयुक्तः।**
**क्रूरैस्तु जातमात्रो म्रियते बालोऽथवा गर्भे ॥ ३५ ॥**

बालानां = शिशूनां जीवितमरणप्रश्ने, अयमुत्पन्नो बालो जीविष्यति नवेति-प्रश्ने, अन्त्यपे=व्ययेशे वा अष्टमेशे केन्द्रस्थे, शुभैः शुभग्रहैः दृष्टे तदा बालो जीवेत्। अथवा सितपक्षे = शुक्लपक्षे प्रश्नः स्यात् तत्र शुभयुक्ते विधौ = चन्द्रे, अन्त्ये=द्वादशे स्थिते सति बालः जीवेदिति। अथानिष्टयोगमाह—चेत् = यदि, अन्त्यपतिः= व्ययेशः, क्रूरः = पापः, स्यात्, दग्धः = पापाक्रान्तोऽस्तंगतश्च भूत्वाऽऽपोक्लिमे स्थितः स्यात्, अयुक्तः = शुभैरयुक्तश्च भवेत्, क्रूरैस्तु युतो भवेत् तदा जातमात्रो बालो म्रियते, अथवा गर्भे एव बालो म्रियते ॥ ३४-३५ ॥

भाषा—बालकों के जीवन या मरण के प्रश्नमें यदि व्ययेश केन्द्रमें हो, शुभग्रहोंसे युत दृष्ट हो तो बालक जीता है। या शुक्लपक्षमें प्रश्न हो, शुभग्रह से युक्त चन्द्रमा बारहवें घर में हो तो भी बालक जीता है। अब अशुभ योग कहते हैं। यदि व्ययेश पाप ग्रह हो, अस्तंगत हो, आपोक्लिम में हो, शुभ ग्रहों से युत नहीं हो, पापग्रह से

युत हो तो बालक उत्पन्न होते ही मरता है। या गर्भ ही में मरता है ॥ ३४-३५ ॥

अथ पञ्चमभावप्रश्ने तावत्प्रसवकालज्ञानप्रश्नमाह—

**प्रसवज्ञानप्रश्ने भुक्ताँल्लग्नांशकान् परित्यज्य ।**
**भोग्याद्विचिन्त्य शेषाननुमित्यैवं वदेद्दिवसान् ॥ ३६ ॥**

प्रसवज्ञानप्रश्ने कियद्भिर्दिवसैर्मम प्रसवो भविष्यतीति प्रश्ने—भुक्तान्=गतान्, लग्ननवांशकान् परित्यज्य, भोग्यान्, नवांशकान् अनुमित्या = अनुमानेन, शेषान्= अवशिष्टान्, दिवसान् वदेत् । अर्थात् प्रश्नलग्ने यावन्तो नवांशा गतास्तावन्तो गर्भमासा गता वाच्याः । यावन्तो नवांशाश्च भोग्यास्तावद्भिर्मासैः प्रसवसम्भवो वाच्यः। तत्र वर्त्तमाननवांशसम्बन्धिकालज्ञानार्थं त्रैराशिकम्-यदि (३।२०) एतत्तुल्यनवांशमानेनैको मासस्त्रिंशद्दिनानि वा तदा वर्त्तमाननवांशभोग्यभागैः किं ? एवं वर्त्तमान-नवांशभोग्यावयवसम्बन्धिसमयो दिनादिक आयातीति स्पष्टम् ॥ ३६ ॥

भाषा—कितने दिनों में मुझे प्रसव होगा ? ऐसे प्रश्न में लग्न में जितने नवांशा गत हों; उतने महीने गर्भ के गत समझें, जितने भोग्यनवांश हों, उतने पूरे महीने और आने से अर्थात् व्यतीत होने से प्रसव होगा यह कहना।

यहाँ वर्त्तमान नवांशा से समय ले आना उचित है—तदर्थ त्रैराशिक यों करना चाहिये—जैसे एक राशि में ९ नवांशा, गर्भ में भी स्वल्पान्तर से ९ महीने होते हैं। इस लिये हरेक नवांशा में हरेक मास पड़ा। अब त्रैराशिक करता हूँ, कि-यदि ३।२० इतने में अर्थात् २०० कला में ३० दिन, तो वर्त्तमान नवांशा के अवशिष्ट अंशकला में क्या ? इससे दिन आवेंगे।

उदाहरण—प्रश्नलग्न ४।१६।२९।४०। यहां पाँच नवांश गत हैं, इस लिये पाँच मास गर्भ का गत हुआ। छठा नवांशा वर्त्तमान है। भोग्यनवांशा तीन हैं, इसलिये पूरा २ तीन मास बाकी है और वर्त्तमान छठे नवांश का भोग्य अंश = ००।३४'।२०'', यह हुआ, इसकी कला = ३४, तब- $\frac{३० \times ३४}{२००} = \frac{३ \times १७}{१०} = \frac{५१}{१०}$ = ५ दि०, ६ दं० यहां विकला लेने से और सूक्ष्म समय होगा ॥ ३६ ॥

अथवा गर्भमासज्ञानमाह—( भुवन प्रदीपे )

**मासज्ञानस्य पृच्छायां गर्भिण्या भृगुनन्दनः ॥ ३७ ॥**
**लग्नात्स्याद्यावति स्थाने मासानाख्याति तावतः ।**
**सुतात्संख्या तदा वाच्या यदा धर्मात्परं गतः ॥ ३८ ॥**

गर्भिण्याः = गर्भवत्याः, मासज्ञानस्य पृच्छायां = प्रश्ने, भृगुनन्दनः = शुक्रः,

लग्नात् = प्रश्नलग्नात् यावति = यत्संख्यके, स्थाने भवेत्, तावतः = तत्सङ्ख्यकान् मासान् आख्याति = कथयति । यदि शुक्रः कर्मादिभावे स्थितः स्यात्तदा गर्भप्रसवसम्भवमासा नवाधिका आयान्ति । तत्र निर्वाहमाह—यदि धर्मात् = नवमभावात्, परं गतः = अग्रभावे गतः शुक्रः स्यात्, तदा सुतात् = पञ्चमभावात्, शुक्राधिष्ठितभावसङ्ख्यके मासे प्रसवसम्भवो वाच्यः ॥ ३७–३८ ॥

भाषा—कितने महीने में प्रसव होगा ? इस प्रश्न में लग्नसे शुक्र जितने स्थान में हो, उतने महीने में प्रसव कहना । लेकिन यदि लग्न से १०।११।१२ वें स्थानमें हो, तो वहां पञ्चमभाव से शुक्र राशि गिन कर महीना कहना चाहिये । क्योंकि साधारणतः नव महीने पूर्ति होने से प्रसव होता है, वहां १०।११।१२ महीने उत्तर आवेंगे, यह ठीक नहीं है । इस लिये विशेष व्यवस्था की । लेकिन कितनी जगह १०।११ महीनों में भी प्रसव होता देखा जाता है ॥ ३७–३८ ॥

अथ दिनरात्र्योः कदा प्रसवसम्भवस्तदाह—

**लग्नान्तर्दिनराशिर्दिवा ग्रहो लग्नपश्च दिनराशौ ।**
**तद्दिवसे जन्म वाच्यं विपरीते व्यत्ययश्चैषाम् ॥ ३९ ॥**
**अथ रात्रिलग्नमह्ना तदधिपतिश्चेत्तु तस्य राशिपतेः ।**
**बलमूह्यं दिनहोरापुंराशिस्त्रीगृहेऽप्येवम् ॥ ४० ॥**

लग्नान्तः = लग्नमध्ये, यदि दिनराशिः = दिनबली राशिः स्यात्, वा दिवा = दिवसे, प्रश्नः स्यात्, तथा लग्नपः = प्रश्नलग्नेशः, दिनराशौ = दिनबलीराशौ, वा दिनान्तर्गतराशिस्थितो भवेत्, तदा दिवसे = दिने जन्म वाच्यम् । एषां लक्षणानां व्यत्यये = विपरीते रात्रिबलीराशिवशात्, व्यत्ययः=रात्रौ जन्म वाच्यम् ।

अथ वा रात्रिलग्नं = रात्रिबली राशिः प्रश्नलग्नं स्यात्, तथाऽह्ना = दिनेन, प्रश्नः तदधिपतिः = प्रश्नलग्नेशः, यः स्यात्, तस्य राशिपतेः = राशिस्वामिनः, बलम् ऊह्यं=चिन्त्यं, दिनहोरापुंराशिस्त्रीगृहेऽपि एवं तर्क्यम् ॥ ३९–४० ॥

भाषा—लग्न में दिनबली राशि हो, वा दिन में प्रश्न हो, या लग्नेश दिन बली राशि में हो, तो दिन में जन्म कहना । इन लक्षणों से विलोम लक्षण होने से रात्रि में जन्म कहना । यदि रात्रि बली राशि लग्न हो, दिन में प्रश्न हो, लग्नेश जिस राशि में हो, उस का स्वामी जो ग्रह, उसका बल विचार कर कहना । इस प्रकार, दिन, होरा, पुरुषराशि, स्त्री राशि में भी तर्क करना ॥ ३९–४० ॥

अथापत्यप्राप्तिप्रश्नमाह—

अस्मिन्वर्षेऽपत्यं भविता विलग्नपंचमाधीशौ ।
भजतो यदीत्थशालं तत्रैवाब्दे भवति नूनम् ॥ ४१ ॥
यदि वा मिथो ग्रहगतौ स्यातामेतौ च संततिस्तदपि ।
वाच्या तस्मिन्वर्षे शुभयोगादन्यथा न पुनः ॥ ४२ ॥
सूताप्रसूतयुवतिज्ञाने सुतपोऽथ षष्ठपः सूर्यात् ।
निर्गत्योदयमायात्ततः प्रसूते च नारीयम् ॥ ४३ ॥
अथ जीवसौम्यशुक्रा आकाशे उदयिनस्तथाप्येवम् ॥४३½॥

अस्मिन्=वर्त्तमानवर्षे मम अपत्यं भविता ?, इति प्रश्ने तत्काले विलग्नपञ्चमाधीशौ=लग्नेशपञ्चमेशौ, यदि इत्थशालं भजतः = कुरुतः, तदा तत्र वर्षे नूनं = निश्चितं, अपत्यं भवति । यदि वा एतौ लग्नेशपञ्चमेशौ मिथो गृहगतौ स्यातां, लग्नेशः पञ्चमे, पञ्चमेशो लग्ने स्थित एवं तदाऽपि सन्ततिः = सन्तानं भवति । तस्मिन् वर्षे शुभग्रहयोगात् सन्ततिर्वाच्या । पुनः अन्यथा पापग्रहयुतदृष्टया न सन्ततिरिति ।

सूताप्रसूतयुवतिज्ञाने = प्रसूतायाः प्रश्ने, सुतपः = पञ्चमेशः, अथवा षष्ठपः = षष्ठेशः सूर्यात् निर्गत्य उदयम् आयात् = उदितः स्यात्, ततः इयं नारी प्रसूते । अथवा जीवसौम्यशुक्राः आकाशे उदयिनः = उदितास्तदाऽपि एवं ( इयं नारी सूते ) ॥ ४१-४३½ ॥

भाषा—इस वर्ष में मुझे सन्तान होगी या नहीं ? इस प्रश्न में लग्नेश पञ्चमेश यदि इत्थशाल करते हों, तो निश्चय उस वर्ष में सन्तान होना कहना । या यदि लग्नेश पञ्चम में पञ्चमेश लग्न में हों, तो भी सन्तान कहना । शुभग्रह के संयोग दृष्टि से उस वर्ष में कहना, अन्यथा पापग्रह के संयोग दृष्टि से नहीं कहना ।

प्रसूति के प्रश्न में यदि पञ्चमेश या षष्ठेश सूर्य से निकल कर उदित हों, अर्थात् अस्तंगत नहीं, हों तो स्त्री प्रसूति होती है । या गुरु, बुध, शुक्र ये आकाश में उदित हों, तो भी प्रसूति होती है ॥ ४१-४३½ ॥

इति पञ्चमभावपृच्छाविषयः ।

अथ षष्ठस्थानपृच्छा—

रोगादयमुत्थास्यति नवेति लग्नं भिषक् द्यूनम् ॥ ४४ ॥

व्याधिर्दशमं रोगी हिबुकं भेषजमिहाहुराचार्याः ।
क्रूरार्दिते विलग्ने वैद्यान्न गुणस्तदौषधाद्रोगः ॥ ४५ ॥
वृद्धिमुपयाति दशमे क्रूरैर्निजवुद्धितोऽप्यगुणः ।
अस्ते च क्रूरयुक्ते मांद्यान्मांद्यं तथौषधाद्बन्धौ ॥ ४६ ॥
सौम्योपगतैरेतैररोगता रोगिणो भवति ।
लग्नेशेन्द्वोः सौम्येत्थशालतो रोगनाशनं वाच्यम् ॥ ४७ ॥
वक्रे तु तत्र खेटे भूयोऽपि गदः समुपयाति ॥ ४७½ ॥

अयं = निर्दिष्टः जनः, रोगात् = रोगशय्यातः, उत्थास्यति न वा ? इति प्रश्ने लग्नं = भिषक् = वैद्यः, द्यूनं = सप्तमस्थानं, व्याधिः = रोगः, दशमं स्थानं रोगी, हिबुकं = चतुर्थस्थानं भेषजम् = औषधम्, आचार्या आहुः । इति तावत् सञ्ज्ञाकरणम् । अथ विचारः—तत्र विलग्ने, क्रूरार्दिते=पापनिपीडिते सति, वैद्यात् = वैद्योपचारात्, गुणः=रोगह्रासः, न वाच्यः । अपि तु, तदौषधात्=वैद्यौषधात्, रोगः वृद्धिं = उपचयं, उपयाति=गच्छति । वा क्रूरैः = पापैः, दशमे स्थितैः सद्भिः निजदोषतः=स्वकृतकुपथ्यभोजनतः, अपि अगुणः=भेषजगुणप्रभावः न भवति । अस्ते=सप्तमे च क्रूरयुक्ते=पापयुक्ते, तदा औषधात्=भेषजसेवनात्, मान्द्यात्= एकस्मात् रोगात् मान्द्यम्=अन्यरोगः, भवेत् । एवं बन्धौ=चतुर्थस्थानेऽपि पापयुक्ते सति एकरोगमुक्त्यनन्तरमन्यरोगप्रारम्भः स्यात् । एतैरुक्तयोगैः सौम्योपगतैः = शुभग्रहयुतदृष्टैः सद्भिः, रोगिणः=रोगार्त्तस्य, अरोगता=आरोग्यं भवति । तथा लग्नेशेन्द्वोः=लग्नेशचन्द्रयोः, सौम्येत्थशालतः=शुभग्रहेत्थशालयोगात्, रोगनाशनं वाच्यम् । तत्र खेटे=दशमेशे, चतुर्थेशे सप्तमेशे च विशेषतः, वक्रे सति भूयः=पुनः, गदः = रोगः समुपयाति ॥ ४४–४७½ ॥

भाषा—यह मनुष्य रोग से छुटकारा पावेगा या नहीं ? इस प्रश्न में, लग्न राशि वैद्य या डाक्टर समझना, सप्तमस्थान को व्याधि समझना, और दशमस्थान को रोगी समझना, अर्थात् दशमस्थान से रोगी का स्वभाव लक्षण समझना । चौथा स्थान औषध समझना । ये आचार्य लोग कह गये हैं ।

अब विचारते हैं कि लग्न में पाप हो, या पापयुत दृष्ट लग्न हो तो वैद्य की दवाई से गुण नहीं मालूम पड़े । बल्कि उसकी दवाई से बिमारी और बढ़ ही जाय । वा पापग्रह सब दशम स्थान में हों तो अपने कुपथ्य आदि दोष से दवाई का गुण नहीं हो । वा सप्तम में पापग्रह हो तो एक रोग से दूसरा रोग हो जाय । इस

प्रकार चतुर्थ स्थान में भी पापग्रह हो तो भी वैसे ही फल कहना।

इन योगों में शुभग्रह के योग से दृष्टि से रोगी का रोग छूटता है। तथा लग्नेश और चन्द्रमा को शुभग्रह से इत्थशाल होने से रोगनाश कहना। वहां यदि ग्रह (दशमेश, या चतुर्थेश, तथा सप्तमेश ग्रह) वक्री हो तो फिर भी रोग आ जाता है। यह कहना॥ ४४-४७½॥

अथ रोगिणः प्रश्नान्मरणयोगमाह—

भूमिस्थे लग्नस्थे द्यूनस्थे शशिमुथशिले भवेन्मृत्युः॥ ४८॥
लग्नस्थे रन्ध्रपतौ लग्नपशशिनोर्विनाशे वा।
लग्नाधिपे च सूर्ये चन्द्रः सप्तेशमुथशिलविधायी॥ ४९॥
सप्तेशे षष्ठस्थे तन्मरणं रोगिणो वाच्यम्।
रंध्रेशेन विनष्टेनास्तमितेनापि केन्द्रस्थे॥ ५०॥
लग्नेशे च मुथशिले मृत्युः स्याद्रोगपृच्छायाम।
अथ वा तयोश्च केन्द्रे मुथशिलतः क्रूरपीडिते मरणम्॥ ५१॥

वक्रे ग्रहे भूमिस्थे = चतुर्थस्थे, लग्नस्थे=प्रथमस्थानस्थे, द्यूनस्थे = सप्तमस्थानस्थे सति तत्र शशिमुथशिले = चन्द्रकृतेत्थशालयोगे सति, मृत्युर्मरणं भवेत्। वा रन्ध्रपतौ=अष्टमेशे, लग्नस्थे, वा अष्टमेशे लग्नपशशिनोः=लग्नेशचन्द्रयोः सकाशात्, विनाशे = अष्टमस्थाने भवेत्तदाऽपि रोगिणो मृत्युः स्यात्। वा लग्नाधिपे सूर्ये सति अर्थात् सिंहराशिः प्रश्नलग्नं स्यात्, तत्र चन्द्रः सप्तमेशमुथशिलविधायी=शनिना सहेत्थशाली भवेत्, वा सप्तेशे कस्मिंश्चिल्लग्ने षष्ठस्थे सति तदा रोगिणो मरणं वाच्यम्। वा रन्ध्रेशेन = अष्टमेशेन, विनष्टेन=नीचस्थेन, अस्तमितेन=अस्तंगतेन ग्रहेण केन्द्रस्थे लग्नेशेऽष्टमेशे च मुथशिले कृते सति रोगपृच्छायां मृत्युः स्यात्। अथवा क्रूरपीडिते = पापाक्रान्ते केन्द्रे स्थितयोः तयोर्लग्नेशाष्टमेशयोर्मुथशिलतः रोगिणो मृत्युः स्यादिति॥ ४८-५१॥

भाषा—वक्री ग्रह चौथे, लग्न में सातवें में हों, वहां चन्द्रमा से इत्थशाल योग करता हो तो मरण कहना। या अष्टमेश लग्न में हो, वा अष्टमेश, लग्नेश वा चन्द्रमा से अष्टमस्थान में हो, तो भी रोगी की मृत्यु होती है। या लग्नेश सूर्य हो वहां चन्द्रमा सप्तमेश से इत्थशाल करता हो, या सप्तमेश छठे स्थान में हो, तो भी रोगी का मरण कहना। अथवा अष्टमेश से, नीचस्थित ग्रह से अस्तंगत ग्रह से केन्द्रस्थित लग्नेश या अष्टमेश इत्थशाल करता हो तो रोगी के प्रश्न में रोगी की मृत्यु कहना। अथवा

पापाक्रान्त केन्द्रस्थान में लग्नेश और अष्टमेश ये दोनों हों, उन दोनों में इत्थशाल होता हो तो भी रोगी की मृत्यु होती है ॥ ४८–५१ ॥

अथ रोगिरोगविषयप्रश्नमाह—

सूर्यद्वादशभागं प्रविष्टे* लग्नेश्वरेऽप्येवम् ।
लग्ने चरे च रोगो क्षणे स्यादरुक् सरुक्चापि ॥ ५२ ॥
द्विशरीरे पररोगः स्थिरे गदस्यैव रोगत्वम् ।
शशिनो वक्रमुथशिले स्थिररोगो मंदमुथशिले पूर्वम् ॥५३॥
मूत्रनिरोधाद्रोगोत्पत्तिर्ज्ञेया कृतप्रश्ने ।
अथ पृच्छायाः पूर्वं सप्ताहानि च विलोक्य चत्वारि ॥ ५४ ॥
यदि तेषु शशिकवी शुभयुतदृष्टौ तदा शस्तम् ।
मंदोऽयमथ नवेति प्रश्ने लग्नेश्वरोऽथ चन्द्रो वा ॥ ५५ ॥
षष्ठेशमुथशिलो स्याद्स्तमितो वा तदा मन्दः ॥ ५५½ ॥

लग्नेश्वरे = लग्नेशे, सूर्यद्वादशभागं = रविद्वादशांशं प्रविष्टे सति एवं फलम् । अर्थात् रोगिणो मरणमेव वाच्यम् । लग्ने चरे=चरराशौ=मेषकर्कतुलामकरराश्यन्यतमे राशौ सति रोगी क्षणे अरुक्=रोगमुक्तः, क्षणे सरुक् चापि भवति । अथ लग्ने द्विशरीरे = द्विःस्वभावे, पररोगः = अन्यरोगः स्यात् । स्थिरे लग्ने तु गदस्य=पूर्वरोगस्यैव रोगत्वम् । शशिनः=चन्द्रस्य, वक्रमुथशिले=वक्रग्रहेत्थशाले सति, स्थिररोगः स्यात् । मन्दमुथशिले चन्द्रस्य मन्दगतिग्रहेणेत्थशाले सति पूर्वं मूत्रनिरोधात् = मूत्रकृच्छ्रात् रोगोत्पत्तिः ज्ञेया । अथ पृच्छायाः पूर्वं चत्वारि सप्ताहानि विलोक्य तेषु समयेषु यदि शशाङ्करवी शुभयुतदृष्टौ भवतस्तदा शस्तं = आरोग्यं वाच्यम् । अयं जनः मन्दः = रोगवान् न वा ? इति प्रश्ने लग्नेश्वरः, वा चन्द्रः षष्ठेशमुथशिली, वाऽस्तमितः = अस्तंगतः स्यात्तदा मन्दः = रोगः वाच्यः ॥ ५२–५५½ ॥

भाषा—लग्नेश यदि सूर्य की द्वादशांश में हो तो भी मरण कहना। यदि लग्न में चरराशि हो तो रोगी तुरत नीरोग, तुरत सरोग होता है। यदि द्विस्वभाव ( मि० कन्या० ध० मी० ) राशि लग्न में हो तो दूसरा रोग होता है। यदि लग्न में स्थिरराशि (वृष, सिंह, वृश्चिक, कुम्भ) हो तो पूर्व ही के रोग बराबर रहे। चन्द्रमा

* 'प्रविष्टे' इत्यत्र 'विशति च' अयं पाठः साधुः । अन्यथा पूर्वपाठे छन्दोभङ्गदोषः ।

को वक्रीग्रह से इत्थशाल होता हो तो स्थिर रोग कहना। यदि मन्दगति ग्रह से इत्थशाल होता हो तो पहले मूत्रनिरोध से रोग की उत्पत्ति होती है। यहाँ प्रश्न-काल से पहले चार सप्ताह तक रवि चन्द्रमा को देखते रहना यदि ये शुभ ग्रह से युत हों, या दृष्ट हों तो अच्छा कहना। यह मनुष्य रोगी है या नहीं? ऐसे प्रश्न में लग्नेश या चन्द्रमा यदि षष्ठेश से इत्थशाल योग करता हो या अस्त हो तो रोग बराबर ही कहना॥ ४२-५५½॥

अथ स्वामिभृत्यचतुष्पादप्रकरणम्—

**ईशोऽन्यो मम भविता न वेति लग्नेश्वरस्य यदि केन्द्रे ॥५६॥**
**नो भवति मुथशिलं षष्ठांत्यपतिभ्यां तदा नान्यः।**
**वक्री वाऽन्येन समं लग्नपतिः सहजनवमसंस्थेन ॥ ५७ ॥**
**कुरुते यदीत्थशालं तदाऽन्यनाथो भवेत्प्रष्टुः।**
**लग्नपतौ केन्द्रस्थे रिपुदृष्ट्या क्रूरवीक्षिते पुण्ये ॥ ५८ ॥**
**रविरश्मिगतेऽथ भवेद्यावज्जीवं च नान्यपतिः ॥ ५८½ ॥**

मम ईशः=पालकः= नाथः=जीविकाश्रयजनः (मालिक), अन्यः कोऽपि भविता न वा? इति प्रश्ने यदि केन्द्रे = १।४।७।१० एतदन्यतमस्थाने स्थितस्य लग्नेश्वरस्य षष्ठान्त्यपतिभ्यां=षष्ठेशव्ययेशाभ्यां, मुथशिलं नो भवति, तदाऽन्यः = पूर्वस्माद्भिन्नः जनः, ईशो न भवितेति वाच्यम्। वा यदि लग्नपतिः = लग्नेशः, वक्री भवन्, सहजनवमसंस्थेन अन्येन सममित्थशालं कुरुते तदा प्रष्टः = प्रच्छकस्य, अन्यनाथः भवेत्। अथ यदि लग्नपतौ = लग्नेशे, केन्द्रस्थे, रिपुदृष्ट्या=शत्रुदृष्ट्या, क्रूरवीक्षिते = पापदृष्टे, पुण्ये = पुण्यसहमे, रविरश्मिगते=अस्तंगते च सति, यावज्जीवं = आजीवम्, अन्यपतिः = अपरनाथः, न भवेत्॥ ५६-५८½॥

भाषा—मेरा मालिक दूसरा कोई होगा या नहीं?, इस प्रश्न में यदि लग्नेश १।४।७।१० इन स्थानों में से किसी स्थान में हों, और षष्ठेश व्ययेश से इत्थशाल नहीं होता हो तो दूसरा मालिक नहीं होगा।

या यदि लग्नेश वक्री होकर तृतीय, नवम स्थान में स्थित किसी ग्रह से यदि इत्थशाल योग करता हो, तो पूछने वाले का दूसरा मालिक होता है। और यदि लग्नेश केन्द्र में हो, शत्रुदृष्टि से पापग्रह उनको देखे, और पुण्यसहम अस्तंगत हो तो जीवन भर तक दूसरा मालिक नहीं होगा, यह कहना॥ ५६-५८½॥

अथ वर्त्तमानप्रभुप्रकृतिज्ञानार्थं प्रश्नः—

**अयमीशो भद्रो मे पृच्छायां लग्नपस्य कंबूले ॥ ५९ ॥**

स्वामी स एव भव्यो द्यूनेशस्य च शुभोऽन्येशः ।
ग्रहभूमिस्थानानां लग्नप्रश्ने पुरोक्त एव विधिः ॥ ६० ॥
सम्यग्विचार्य वाच्यं शुभमशुभं पृच्छतः स्वधिया ॥ ६०½ ॥

अयं मम निर्दिष्टः जनः, भद्रः = शुभंकरः, ईशः भविता न वा? इति पृच्छायां । लग्नपस्य=लग्नेशस्य, चन्द्रेण कम्बूले सति स एव स्वामी भव्यः=शुभप्रदः, वाच्यः यदि द्यूनेशस्य = सप्तमेशस्य चन्द्रकृतकम्बूले सति, अन्येशः = पूर्वभिन्नप्रभुः, शुभः= उपकारकरः भावीति । गृहभूमिस्थानानां गृहं = भवनं, भूमिः = क्षेत्रम् , स्थानं=पदं जीविका तेषां प्रश्ने पुरोक्तः = पूर्वोक्त एव विधिः ज्ञेयः । स्वधिया= निजमत्या सम्यक् विचार्य पृच्छतः = प्रश्नकर्त्तुः, शुभम् , अशुभं च फलं वाच्यम् ॥ ५९-६०½ ॥

भाषा—मेरा मालिक मेरे लिये अच्छा होगा या नहीं? इस प्रश्न में लग्नेश को चन्द्रमा से कंबूलयोग यदि होता हो तो वही मालिक अच्छा होगा। यदि सप्तमेश को चन्द्रमा से कम्बूलयोग होता हो तो दूसरा मालिक शुभप्रद होगा। इस प्रकार घर, खेतीवाड़ी, जीविका के प्रश्न में पूर्वोक्त ही व्यवस्था से शुभ या अशुभफल पूछनेवाले को बतावें ॥ ५९-६०½ ॥

अथ भृत्यचतुष्पदलाभप्रश्नविचारमाह—

भृत्यचतुष्पदलाभप्रश्ने लग्नेशशीतगू षष्ठे ॥ ६१ ॥
षष्ठेशमुथशिलौ वा लग्ने षष्ठेश्वरोऽथ तल्लाभः ।
भृत्यस्य वाहनस्य च यद्वा प्रश्ने च लग्नलग्नपती ॥ ६२ ॥
अर्थी दाता सप्तमसप्तमपौ तद्बलात्प्राप्तिः ॥ ६२½ ॥

भृत्यः = सेवकः, चतुष्पदः = गोमहिषीघोटकादि, तयोर्लाभप्रश्ने लग्नेशशीतगू= लग्नेशचन्द्रौ यदि षष्ठे = षष्ठस्थाने स्थितौ, षष्ठेशमुथशिलौ = षष्ठेशग्रहेण इत्थशालकारिणौ च भवतः । अथवा षष्ठेश्वरः = षष्ठभावेशः, लग्ने स्यादिति पृथग्योगद्वये तल्लाभः = भृत्यस्य चतुष्पदस्य च लाभो भवतीति वाच्यम् । यद्वा भृत्यस्य वाहनस्य विषये प्रश्ने लग्न-लग्नपती ग्रहौ, अर्थी=याचकरूपौ, सप्तमसप्तमपौ ग्रहौ दाता-दातारौ ज्ञेयौ, तद्बलात् = सप्तमसप्तमेशबलात् प्राप्तिः वाच्या ॥ ६१-६२½ ॥

भाषा—नौकर, या पशुओं के लाभ के प्रश्न में यदि लग्नेश तथा चन्द्रमा छठे स्थान में हों, और षष्ठेश ग्रह से इत्थशाल करते हों तो भृत्य की चतुष्पदों की प्राप्ति होती है। अथवा षष्ठेश लग्न में हो तो भी उसका लाभ होता है। या भृत्य के बारे में अथवा पशुओं के बारे में प्रश्न हो, उसमें लग्न, तथा लग्नेश को याचक, मि-

कारी समझना, सप्तम, सप्तमेश को दाता समझना, वहां सप्तमेश के बल से लाभ कहना ॥ ६१-६२½ ॥

इति षष्ठस्थानपृच्छा समाप्ता।

अथ सप्तमस्थानपृच्छामाह—

स्त्रीलाभस्य प्रश्ने स्मराधिपे लग्नपेन शशिना वा ॥ ६३ ॥
कृतमुथशिले युवत्या अयाचिताया भवेल्लाभः।
यदि लग्नपो विधुर्वा द्यूने तद्याचितां स्त्रियं लभते ॥ ६४ ॥
लग्नेशान्मूसरिफे चन्द्रेऽस्तपमुथशिले स्वयं लाभः।
येन समं तु मुथशिलस्तत्र विनष्टे च पापयुतदृष्टे ॥ ६५ ॥
निकटीभूय तदा किल विनश्यति स्त्रीगतं कार्यम्।
पापेऽत्र रन्ध्रनाथे स्त्रीजातेरेव विघटते कार्यम् ॥ ६६ ॥
सहजपतौ भ्रातृभ्यस्तुर्येशे पितृत एव नान्येभ्यः।
सौम्यकृतयुतिदृग्भ्यां पूर्वोक्तस्थानतः शुभं वाच्यम् ॥ ६७ ॥

स्त्रीलाभस्य प्रश्ने = मम स्त्रीलाभो भविष्यति न वा? इति प्रश्ने, स्मराधिपे = सप्तमेशे लग्नपेन = लग्नेशेन, वा शशिना=चन्द्रेण, कृतमुथशिले सति, तदा अयाचिताया युवत्याः=स्त्रियाः, लाभः=प्राप्तिः, स्यात्। यदि लग्नपः=लग्नेशः, वा विधुः= चन्द्रः, द्यूने=सप्तमस्थाने भवेत्, तदा याचितां=अर्थितां, मनोऽनुकूलां स्त्रियं लभते।

वा लग्नेशात् चन्द्रे मूसरिफे, वाऽस्तपमुथशिले = सप्तमेशकृतेत्थशाले सति स्त्रियाः स्वयम् = आत्मना एव लाभः वाच्यः। अथ येन ग्रहेण समं मुथशिलस्तत्र ग्रहे विनष्टे अस्तङ्गते, पापयुतदृष्टे सति तदा स्त्रीगतं = स्त्रीविषयकं कार्यं, निकटीभूय किल=निश्चयेन विनश्यति। अत्र पापे=पापग्रहे, रन्ध्रनाथे=अष्टमेशे सति, स्त्रीजातेः सकाशादेव कार्यं = कृत्यं, विघटते = नश्यति। तथा सहजपतौ = तृतीयेशे, पापग्रहे सति भ्रातृभ्यः कार्यं विनश्यति। तुर्येशे=चतुर्थेशे, पापे सति पितृत एव कार्यनाशः। अन्येभ्यो जनेभ्यो नहि 'सर्वत्र कार्यनाशसम्भवयोगे, शुभग्रहकृतयुतदृग्भ्यां = शुभयुतदृष्ट्या पूर्वोक्तस्थानतः शुभं फलं वाच्यम् ॥ ६३-६७ ॥

भाषा—मुझे स्त्री मिलेगी या नहीं?, इस प्रश्न में सप्तमेश यदि लग्नेश से या चन्द्रमा से इत्थशाल करता हो तो विना मांगी हुई स्त्री का लाभ होता है।

यदि लग्नेश या चन्द्रमा सप्तम में हो तो मांगी हुई स्त्री का लाभ होता है। यदि लग्नेश से चन्द्रमा मूसरिफ योग करता हो, या सप्तमेश से इत्थशाल करता हो तो

स्त्री का लाभ खुद होता है। जिस ग्रह से इत्थशालयोग होता हो, वह ग्रह यदि अस्त हो, पापग्रह से युत दृष्ट हो तो स्त्रीविषयक कार्य करीब २ होकर नष्ट हो।

यदि अष्टमेश पापग्रह हो तो स्त्रीजाति से कार्य का नाश हो। यदि तृतीयेश पापग्रह हो तो भाई बन्धु से कार्य नष्ट हो। यदि चतुर्थेश पापग्रह हो तो पिता से कार्य का नाश हो औरों से नहीं। यह सब कार्यनाशयोगों में यदि शुभग्रहों के संयोग या दृष्टि हो तो पूर्वकथित स्थानों से शुभ फल अर्थात् जिन २ लोगों से कार्य नाश कहा है, उन २ लोगों से ही कार्यसिद्धि होती है॥ ६३-६७॥

अथ स्त्रीस्नेहप्रश्नः—

प्रीतिस्थानप्रश्ने स्मरपतिलग्नेशमुथशिले स्नेहः।
झकटकदृशा झकटकः शशिकंबूले तु साऽपि शुभा॥ ६८॥
यदि मन्दो लग्नेशः केन्द्रे च स्यात्तदा बली प्रष्टा।
अस्तेश्वरे च मन्दे केन्द्रे प्रतिवादिनोऽस्ति बलम्॥ ६९॥
उभयोरेकस्थितयोर्ज्ञातव्या झकटकं तयोः प्रीतिः।
सूर्ये न शुभं विबले नरस्य शुक्रे स्त्रियो द्वयोर्द्वितयौ॥ ७०॥

प्रीतिस्थानप्रश्ने, स्मरपतिलग्नेशमुथशिले = सप्तमेशलग्नेशयोरित्थशाले सति स्त्रिया सह स्नेहः वाच्यः। अत्र लग्नेशः स्वामी, सप्तमेशः स्त्रीग्रहो ज्ञेयः। यदि तयोर्लग्नेशसप्तमेशयोः झकटकदृशा=रिपुदृष्ट्या=१।४।७।१० दृष्ट्या मिथो दृष्टिः स्यात्तदा दम्पत्योः झकटकः=कलहः स्यात्। तत्र यदि शशिकंबूलयोगे सति, तदा सा=स्त्री शुभा = सच्छीला भवति।

यदि लग्नेशः मन्दः = मन्दगतिग्रहः वा शनिः सन् केन्द्रे १।४।७।१० स्थाने स्यात्तदा प्रष्टा = प्रच्छकः पुरुषो बली=जयनशीलः स्यात्। यदि च अस्तेश्वरे=सप्तमेशे, मन्दे = मन्दगतिग्रहे, वा शनौ केन्द्रे सति तदा प्रतिवादिनः बलमस्ति। यदि उभयोर्लग्नेशसप्तमेशयोः एकस्थितयोः तदा झकटकं कलहं प्रति तयोः = वादिप्रतिवादिनोः, प्रीतिः = मेलनं स्यात्। सूर्ये विबले सति नरस्य = पुरुषस्य, शुभं न भवति। शुक्रे विबले स्त्रियाः शुभं न भवति। द्वयोः=सूर्यशुक्रयोः, विबलयोः सतोर्द्वितयौ = स्त्रीपुरुषौ न शुभौ, अर्थाद्दम्पत्योरपि शुभं न वाच्यम्॥ ६८—७०॥

भाषा—मुझे स्त्री प्रेम करेगी, या मुझसे स्त्री को प्रेम होगा, या मुझे स्त्री से प्रेम होगा या नहीं? इस प्रश्न में यदि लग्नेश और सप्तमेश में इत्थशाल होता हो तो स्त्री से प्रेम कहना।

यहां लग्नेश पुरुष, सप्तमेश स्त्री समझकर विचार करें। यदि लग्नेश सप्तमेशों में शत्रुदृष्टि रहे तो स्त्री पुरुषों में झगड़ा कहना। यदि वहां चन्द्रमा से कंबूलयोग होता हो तो स्त्री अच्छी होती है। यदि लग्नेश शनि हो, या कोई मन्दगतिग्रह होकर केन्द्र में वर्त्तमान हो तो पूछने वाला जीतता है। अर्थात् स्त्री पुरुष के कलह में पुरुष की जय होती है। यदि सप्तमेश शनि या मन्दगति ग्रह होकर केन्द्र में हो तो प्रतिवादी (स्त्री) की जय होती है। यदि वे दोनों (लग्नेश सप्तमेश) एक ही राशि में हों तो झगड़ा होने के बाद मेल भी हो जाय। यदि सूर्य बलहीन हो तो पुरुषका अच्छा नहीं होता है। यदि शुक्र बलहीन हो, तो स्त्री का भला नहीं होता। दोनों विबल हों तो दोनों की भलाई नहीं होती है। यहां रवि पुरुषग्रह का उपलक्षक, और शुक्र स्त्रीग्रह का उपलक्षक है॥ ६८–७०॥

अथ रुष्टाऽऽगमनप्रश्नविचारः—

मम गृहिणी रुष्टा पुनरेष्यति नो वाऽथ भूम्यधःस्थरवौ।
भूपरिगते च शुक्रे नैति पुनर्वक्रितेऽभ्येति॥ ७१॥
सूर्यान्निर्गतशुक्रे वक्रेऽपि समेति चान्यथा रुष्टा।
क्षीणेन्दौ बहुदिवसैः पूर्णविधौ च द्रुतमुपैति॥ ७२॥

रुष्टा = विरुद्धा, प्रतिकूला, क्रोधिता वा मम गृहिणी=भार्या पुनर्मम गृहे एष्यति न वा? इति प्रश्ने भूम्यधःस्थरवौ = भूमेश्चतुर्थस्थानादधस्तृतीयद्वितीयप्रथमस्थानगते रवौ, शुक्रे च भूपरि=चतुर्थादुपरि=पञ्चमषष्ठसप्तमे सति रुष्टा स्त्री न एति=न आयाति। अर्थादत्र रविः पुरुषग्रहस्तस्य हर्षस्थानं चतुर्थादुपरि, लग्नतश्चतुर्थपर्यन्तं, तथा शुक्रः स्त्रीग्रहस्तस्य हर्षस्थानं = लग्नाच्चतुर्थपर्यन्तं, न चतुर्थादुपरि, अतः स्त्रीपुंग्रहयोः = रविशुक्रयोः हर्षस्थानपतनाभावान्नागमनं = न मिलनं तस्या इत्याशयः। अथ भूपरिगतेऽपि शुक्रे वक्रे सति पुनः सा रुष्टा अभ्येति। सूर्यान्निर्गतशुक्रे = अनस्तंगते, शुक्रे वा वक्रिणि च सति सा समेति=समायाति। अन्यथा= शुक्रेऽस्तंगते मार्गे च सति सा रुष्टैव तिष्ठति नायातीति। तत्र क्षीणेन्दौ सति बहुदिवसैरायाति। पूर्णविधौ = पूर्णचन्द्रे च द्रुतं=सत्वरमुपैति=आयाति॥७१-७२॥

भाषा—मेरी रुष्टा स्त्री फिर लौट कर आयेगी या नहीं? इस प्रश्न में रवि यदि १।२।३ स्थानों में हों, शुक्र ५।६।७ में हों तो रुष्टा स्त्री नहीं आती है। और शुक्र यदि ५।६।७ में रह कर भी वक्री हो, तो फिर वह आती है। अथवा शुक्र उदित हो या वक्री हो, तो वह आती है। इससे अन्यथा अर्थात् शुक्र अस्त हो, मार्गी हो तो वह रुष्टा ही रहती है, नहीं आती है। वहां चन्द्रमा यदि क्षीणबली हो, तो ज्यादे दिनों में

आती है। यदि चन्द्रमा पूर्णबली हो तो जल्दी आती है ॥ ७१-७२ ॥

अथ कन्याचरित्रज्ञानाय प्रश्नः—

एषा कुमारिका किल निर्दोषा किन्न वेति पृच्छायाम्।
लग्ने स्थिरे स्थिरर्क्षे लग्नपशशिनोश्च निर्दोषा ॥ ७३ ॥
चरराशिगतैरेतैरियं कुमार्यपि च जातदोषा स्यात्।
द्विशरीरस्थे चन्द्रे चरलग्ने स्वल्पदोषा स्यात् ॥ ७४ ॥
शशिभौमाविकर्क्षे स्थिरवर्जे तत्परेण गुप्तमियम्।
रमिता शनिचन्द्रमसोर्लग्नगयोः प्रकटमुपभुक्ता ॥ ७५ ॥
यदि भौमशनी केन्द्रे विधुदृष्टो वृश्चिकेऽथ शुक्रः स्यात्।
तद्द्रेष्काणेऽथ तदा निर्भ्रान्तं जातदोषैषा ॥ ७६ ॥

एषा = मनोगता, कुमारिका = कन्या, निर्दोषा = शुद्धचरित्रा, अस्ति किं न वा ? इति पृच्छायां = प्रश्ने, लग्ने स्थिरे = वृषसिंहवृश्चिककुम्भान्यतमराशौ स्थिते, लग्नपशशिनोः = लग्नेशचन्द्रयोः, स्थिरर्क्षे = स्थिरराशौ, स्थितयोः सतोः, कन्या निर्दोषा = परसंसर्गरहितैव वाच्या।

अथ एतैः = लग्न-लग्नेश-चन्द्रैः, चरराशिगतैः सद्भिः, इयं कुमारी=अविवाहिताऽपि जातदोषा = परपुरुषसंसर्गिणी स्यात्। अथ चन्द्रे द्विशरीरे = द्विःस्वभावराशौ, चरलग्ने च सति स्वल्पदोषा = कदाचिदन्यसङ्गवती वाच्या। तत्र शशिभौमौ = चन्द्रकुजौ, स्थिरवर्जे = चरद्विःस्वभावराशौ यदि भवतस्तदा परेण = अन्येन, इयं कुमारी गुप्तम् = अप्रकाशं, प्रच्छन्नं, रमिता वाच्या। अथ शनिचन्द्रमसोः=शनिचन्द्रयोः, लग्नगतयोः सतोः, सा प्रकटम् = व्यक्तमेव, परेण उपभुक्ता=विहितसुरता वाच्या अर्थात् तस्या व्यभिचारः सर्वैर्ज्ञायते एव। यदि भौमशनी केन्द्रे भवेतां तथा विधुदृष्टः = चन्द्रदृष्टः, शुक्रः तद्द्रेष्काणे = चन्द्रद्रेष्काणे स्यात्, तदा निर्भ्रान्तं=निःसन्देहम्, एषा = कुमारिका जातदोषा भवतीति ॥ ७३-७६ ॥

भाषा—यह कुमारी लड़की पवित्र चरित्र की है, या नहीं ? इस प्रश्न में लग्न में स्थिर राशि हो, और लग्नेश चन्द्रमा भी स्थिर राशि में हों तो लड़की शुद्ध चरित्र वाली समझना। यदि लग्न, लग्नेश, चन्द्रमा ये तीनों चरराशि में हों, तो विना विवाहो भी बदचलन होती है। यदि चन्द्रमा द्विःस्वभावराशि में हो, लग्न में चरराशि हो तो थोड़ा दोष वाली होती है। यदि चन्द्रमा मङ्गल चर और द्विस्वभाव में हों तो गुप्त रूप सेदूसरे से भोग करती है। यदि शनि और चन्द्रमा लग्न में हो तो

प्रकट रूप से दूसरे से व्यभिचार करती है। यदि मङ्गल और शनि केन्द्र में हों और शुक्र पर चन्द्रमा की दृष्टि पड़ती हो, और शुक्र चन्द्रमा के द्रेष्काण में हों तो निश्चय सबके जान पहचान में दुश्चरित्रा हो ॥ ७३–७६ ॥

अथ स्वपरप्रसूतिपरीक्षाप्रश्नः—

एषा किल प्रसूता सिते घटे ज्ञे हरौ च नो सूता।
अनयोरलिवृषगतयोः सूता नारी परिज्ञेया ॥ ७७ ॥

एषा स्त्री किल प्रसूता = उत्पन्नसन्ताना, अस्ति न वा ? इति प्रश्ने, सिते = शुक्रे, घटे = कुम्भे, ज्ञे = बुधे, हरौ = सिंहे च सति नो सूता वाच्या। अत्र बुधशुक्रयोरराश्यन्तरता सर्वथा असम्भवा। अतः घटे = इत्यत्र 'धट' इति विशेयम्। एवमनयोः शुक्रबुधयोः, अलिवृषगतयोः सतोः नारी प्रसूता विज्ञेया। अत्रापि तयोः सप्तराश्यन्तरस्थितत्वमसम्भवम् तेन तौ वृषे वा वृश्चिकराशौ भवेतां तदा योगोऽयं घटते। अन्यथा असम्भवः ॥ ७७ ॥

भाषा—इसको सन्तान हुआ है या नहीं ? इस प्रश्न में शुक्र कुम्भ में हो, बुध सिंह में हो तो सन्तान होना नहीं कहना। यदि वे दोनों वृश्चिक ही में या वृष ही में हों तो प्रसूती कहना ॥ ७७ ॥

भौमबुधशुक्रचन्द्रा द्विशरीरे चापवर्जिते चेत्स्युः।
अग्रेऽस्ति तत्प्रसूतिश्चापे नाग्रे न पृष्ठतः सूता ॥ ७८ ॥
क्रूरश्चेच्चरराशौ परतः सूता स्थिरे तु निजपत्युः।
मिश्रे तु मिश्रमूह्यं जातकसन्देहपृच्छायाम् ॥ ७९ ॥

चेत् = यदि भौमबुधशुक्रचन्द्राः, चापवर्जिते = धनूरहिते द्विशरीरे=द्विःस्वभावे स्युः, तदा अग्रे प्रसूतिरस्ति। यदि चापे ते स्युस्तदा अग्रे न प्रसूतिः न पृष्ठतः प्रसूतिः वाच्या। वा क्रूरः = पापग्रहः, चरराशौ भवेत्, तदा परतः = स्वामिभिन्नजनात् सूता। यदि क्रूरः स्थिरे भवेत् तदा निजपत्युः प्रसूता वाच्या। मिश्रे = पापशुभे, मिश्रेचरस्थिरद्विःस्वभावे सति, मिश्रम् = उभयम्। जातकसन्देहपृच्छायां = अयं जातः परजातो वा पितृजात इति सन्देह प्रश्ने वाच्यम् ॥ ७८–७९ ॥

भाषा—यदि मङ्गल, बुध, शुक्र, चन्द्रमा ये सब धनु को छोड़ कर शेष द्विःस्वभावराशि में मिथुन कन्या मीन में हों, तो आगे प्रसव कहना। यदि वे धनु में हो, तो आगे पीछे भी नहीं प्रसव कहना। यदि पापग्रह चरराशि में हों तो पराये पुरुष

से सन्तान कहना। यदि पापग्रह स्थिरराशि में हों तो अपने स्वामी से उत्पन्न प्रसव कहना। यदि पाप शुभ और चर, स्थिर, द्विःस्वभाव में हों तो दोनों कहना। यह सन्तान के सन्देह में विचारना॥ ७८ ७९॥

अथ गर्भसन्देहपृच्छामाह—

गुर्विण्येषा पत्युः परपुरुषाद्वेति लग्नसुतपत्योः।
शुभयुतिदृग्भ्यां स्वपतेः शनिभौमदृशाऽन्यतो गुर्वी॥ ८०॥

एषा स्त्री पत्युः सङ्गेन गुर्विणी, वा परपुरुषाद्गुर्विणी अस्तीति प्रश्ने लग्नसुतपत्योः = लग्नेशपञ्चमेशयोः शुभयुतिदृग्भ्यां=शुभग्रहयोगदृष्टिभ्यां, स्वपतेः=निजस्वामिनो गर्भो बोध्यः। लग्नेशपञ्चमेशयोः शनिभौमदृशा सता अन्यतः = परपुरुषात्, गुर्विणी वाच्येति॥ ८०॥

भाषा—यह स्त्री अपने स्वामी से गर्भवती है? या दूसरे पुरुष के सङ्ग से? इस प्रश्न में लग्नेश पञ्चमेश को शुभग्रहों के संयोग, दृष्टि होने से अपने स्वामी से और शनि मङ्गल की दृष्टि उन दोनों पर पड़ने से पराये पुरुष के सङ्ग से गर्भ कहना॥८०॥

अथ पातिव्रत्यपरीक्षा—

कुलटा सतीयमथवा लग्नपतिश्चन्द्रमाश्च भौमेन।
एकांशे मुथशिलकृत्तदैव भवने भजत्यन्यम्॥ ८१॥
यदि निजगृहगो भौमस्तदाऽन्यदेशं प्रयाति जारकृते।
रविणेति मुथशिले सत्युपभुक्ता सा तु राजपुरुषेण॥ ८२॥
सौम्येन लेखकवणिग्भिर्निजभे शुक्रेण योषयेव स्त्री।
एतैर्योगैरसती विपरीते सुचरितेति विज्ञेयम्॥ ८३॥
लग्नपतिनाऽथ शशिना मूसरिफे भूसुते भवेज्जारः।
युक्तः पुनर्गुरुदृशा पुत्रभयाद्रविदृशा च राजभयात्॥ ८४॥
सितदृष्ट्या परनारी भयात्सितज्ञैकराशिगतदृष्ट्या।
जारस्य स्थविरत्वाल्लज्जितात्पतति जारं सा॥ ८५॥

इयं स्त्री कुलटा = व्यभिचारिणी, अथ वा सती = पतिव्रता अस्ति?, इति प्रश्ने लग्नपतिः = तत्काललग्नेशः, चन्द्रमाः, च भौमेन = कुजेन, एकांशे कृतमुथशिलः = कृतेत्थशालः, तदैव भवने = स्वगृहे, अन्यं = जारपुरुषं, भजति। अर्थाद्व्यभिचारिणी वाच्येति।

यदि भौमः = कुजः, निजगृहगः = मेषवृश्चिकयोरन्यतरराशिगतः तदा सा स्त्री जारकृते = परपुरुषसङ्गाय, अन्यदेशम् = स्वगृहाद्बहिः क्वापि सङ्केतितगृहे, प्रयाति = गच्छति । यदि निजगृहगस्य भौमस्य, रविणा = सूर्येण, मुथशिले सति, तदा सा स्त्री राजपुरुषेण उपभुक्ता = रमिता वाच्या । यदि तादृशभौमस्य सौम्येन मुथशिले तदा सङ्गकर्त्ता लेखकवणिग् जनः स्यात् । यदि निजभे = स्वगृहगे भौमे शुक्रेण कृतमुथशिले तदा स्त्री स्त्रियैव रमते । काष्ठादिकृत्रिमलिङ्गं स्वकट्यां बद्ध्वा रमते । यथा बृहज्जातके स्त्रीजातकाध्याये, 'अन्योन्यांशगयोः सितावनिजयोः' इत्यादिश्लोके योगेऽस्ति ।

एतैः = उक्तैः, योगैः, असती = असच्चरित्रा स्त्री वाच्या । अस्मात्, विपरीते सुचरिता = पवित्रचरित्रा, इति विज्ञेयम् । अथ पूर्वोक्तयोगेषु भूसुते = कुजे लग्नपतिना = लग्नेशेन, वा शशिना मूसरिफयोगे सति, जारः = कृतमैथुनः परपुरुषः, युक्तः = सौन्दर्यधनशीलादियुक्तो वाच्यः । यदि गुरुदृशा दृष्टे भौमे तदा पुत्रभयाद्व्यभिचारिणी, रविदृशा दृष्टे भूमिजे राजभयात् परपुरुषसङ्गिनी वाच्या, सितदृष्ट्या भौमे दृष्टे तदा परनारीभयात् व्यभिचारनिरता स्यात् । सितशैकराशिगतदृष्ट्या = शुक्रबुधयोरेकर्क्षभवदृष्ट्या दृष्टे सति जारस्य = पतिभिन्नप्रियपुरुषस्य स्थविरत्वात् = वृद्धत्वात्, लज्जिता सा जारं अनुतप्ता पतति = गच्छति ॥ ८१-८५ ॥

भाषा—यह स्त्री कुलटा है, या सती? इस प्रश्न में यदि लग्नेश और चन्द्रमा मङ्गलसे एक ही अंश में इत्थशाल करता हो, तो अपने मकान ही पर परपुरुष से भोग करे।

यदि मङ्गल मेष वा वृश्चिक में हो तो स्त्री परपुरुष के सङ्ग के लिये घर से बाहर निकल कर किसी स्थल में जाय। यदि निजगृही में वर्त्तमान मङ्गल को रवि से इत्थशाल योग हो तो राजसम्बन्धी पुरुष से भोग कहना। यदि वैसे मङ्गल को बुधसे मुथशिल होता हो तो लेखक ( बही खाता लिखने वाले कायस्थ आदि जाति से ) या वणिक् ( बनिया ) से सङ्ग कहना। यदि वैसे मङ्गल शुक्र से मुथशिल करता हो तो स्त्री ही से संग कहना।

इन कहे हुए योगों से स्त्री को कुलटा समझना। इन योगों से भिन्न लक्षण में पतिव्रता कहना। पहले के भी योग में यदि मङ्गल लग्नेश से या चन्द्रमा से मूसरीफ योग करता हो तो जार पुरुष उपयुक्त हो [ अर्थात् जैसे पुरुष को देख कर मन विचलित होने की निश्चय संभावना हो, वैसा अर्थात् सुन्दर सुभग चतुर सुशील मीठी मीठी बात बोलने वाला, आंख भौंह चलाने वाला, समय २ पर बालबच्चे को खिलाने वाला, कुछ २ तरकारी, भाजी, जलपान देने वाला हो ]। यदि वैसे मङ्गल

बृहस्पति से दृष्ट हो तो लड़के के भय से व्यभिचारिणी हो। यदि रवि से दृष्ट हो तो राज पुरुष के भय [ ऐसे नहीं करोगी तो जान माल खतरा में पड़ेगा, इस प्रकार के भय ] से कुलटा हो। यदि मङ्गल शुक्र से देखा जाय तो दूसरी स्त्री के दबाव से, यदि एक राशिगत शुक्र बुध की दृष्टि मङ्गल पर पड़े तो जार पुरुष बूढ़ा होने के कारण लज्जित होकर जार पुरुष के यहाँ जाय ॥ ८१-८५ ॥

इति सप्तमस्थानपृच्छाविचारः।

अथाष्टमस्थानपृच्छायां तावन्नृपसंग्रामप्रश्नमाह—

**नृपसंग्रामप्रश्ने विलग्नलग्नेशसंस्थितात्खेटात्।**
**शशिमूसरिफात्प्रष्टाऽस्तास्तपसंस्थेन्दुमुथशिलाच्छत्रुः ॥ ८६ ॥**

नृपसंग्रामप्रश्ने = राज्ञोर्युद्धप्रश्ने, विलग्नलग्नेशसंस्थितात् खेटात् = लग्नस्थितग्रहात्, वा लग्नेशाक्रान्तराशिस्थितान्यग्रहात् शशिमूसरिफात् = चन्द्रकृतमूसरिफयोगात् प्रष्टा = प्रच्छकराजा जयशीलः, वा लग्नलग्नेशस्थितग्रहात् अस्तास्तपसंस्थेन्दुमुथशिलात् = सप्तम-सप्तमेशाक्रान्तराशिस्थचन्द्रकृतेत्थशालात् , शत्रुः = प्रच्छकनृपप्रतिवादी राजा जययुक्तः स्यात् ॥ ८६ ॥

भाषा—राजाओं की लड़ाई के प्रश्न में लग्नस्थित ग्रह को, या लग्नेश जिस राशि में हो उस राशि में स्थित और ग्रह को चन्द्रमा से मूसरिफ योग हो, तो पूछने वाले राजा की जय होती है।

अथवा उन दोनों को सप्तमस्थ चन्द्रमा से या सप्तमेश युक्त चन्द्रमा से यदि मुथशिलयोग होता हो तो पूछने वाले राजा के शत्रुकी जय होती है ॥ ८६ ॥

**अथवा शनिकुजजीवाः शीघ्रेभ्यो बलयुता उपरिचराः।**
**बुधसितचन्द्रास्तेभ्यश्च दुर्बलाश्चाधराश्च संचिन्त्याः ॥ ८७ ॥**

अथवा शनिकुजजीवा ग्रहाः शीघ्रेभ्यः = शीघ्रगतिभ्यः बुधशुक्रचन्द्रेभ्यः, बलयुताः = अधिकबलशालिनः, तथा च उपरिचराः = अग्रेचराः, अथ बुधसितचन्द्राः, तेभ्यः=शनिकुजजीवेभ्यः दुर्बलाः, अधश्चराः = राश्यादिना न्यूनास्तदा प्रष्टुर्जय इति शेषः ॥ ८७ ॥

भाषा—शनि, मङ्गल, गुरु ये सब यदि बुध, शुक्र, चन्द्रमा से अधिक बल युक्त हों, और राश्यादि से अधिक हों तो पूछने वाले की जय होती है, या बुध, शुक्र, चन्द्रमा, दुर्बल हों और शनि मंगल गुरु इनसे न्यून हों तो प्रश्न कर्ता की जय होती है। यहाँ ये दोनों एक ही बात हुई ॥ ८७ ॥

अथ युद्धयतो राज्ञोर्जयादियोगमाह—

**लग्नपतावस्तपतेः षट्त्रिदशायमुथशिले द्वयोः स्नेहः।**

वर्गद्वयमध्येऽधः पतितः सोऽन्येन वध्यः स्यात् ॥ ८८ ॥
वर्गद्वयाधिपानां मूसरिफेऽस्तंगतेन रणदैर्ध्यम्।
लग्नस्वामिनि मन्दे कम्बूले उपरिगे जयः प्रष्टुः ॥ ८९ ॥
एवं गुणे तु तस्मिन्विप्रविनष्टेऽस्तपतिनोचस्थे।
केन्द्रेऽस्ते वाऽस्तपतौ प्रष्टुर्हानिः प्रवक्तव्या ॥ ९० ॥
लग्नादधः शुभे सति उपरि च मन्दे शुभः सहायः स्यात्।
लग्नपतौ रन्ध्रस्थे रन्ध्रपतिमुथशिले मृतिः प्रष्टुः ॥ ९१ ॥
सप्तेशे धनसंस्थे धनेशकृतमुथशिले रिपोर्नाशः।
लग्नेशदशमपत्योर्मुथशिलतः पृच्छकस्य जयवीर्यं ॥ ९२ ॥
तुर्यास्तपयोरेवं शत्रोर्योगे जयो ज्ञेयः।
उभयवर्गेऽपि केन्द्रे तत्पतिकृतमुथशिले बलं ज्ञेयम् ॥ ९३ ॥
चरराशौ सबलत्वं जित्वा प्रान्ते विनाशस्तु।
लग्नपतावन्त्यस्थे प्रष्टा नश्यति परोऽस्तपे षष्ठे ॥ ९४ ॥
खपतौ लग्ने प्रष्टुस्तुर्येशेऽस्ते रिपोः सहायबलम्।
यन्मुथशिलौ रवीन्दू तस्य बलं मुसरिफे हानिः ॥ ९५ ॥

लग्नपतौ=लग्नेशे, अस्तपतेः = सप्तमेशात् षट्त्रिदशायमुथशिले = ६।३।१०।११ एतदन्यतमस्थाने सप्तमेशेन मुथशिले सति द्वयोः = युद्धयतो राज्ञोः स्नेहः = सन्धिः स्यात्। यदि लग्नपतौ तद्वर्गद्वयस्य मध्यगतः स्यात्तदा स = प्रष्टा नृपः युद्धे अधः पतितः = भूमौ निपतितः सन् अन्येन = रिपुणा नृपेण वध्यः स्यात्। लग्नस्वामिनि मन्दे = मन्दगतिग्रहे वा शनौ कम्बूले, उपरिगे = पुरःस्थिते, तदा प्रष्टुर्जयः स्यात्। एवं गुणे तस्मिन् लग्नेशे विप्रविनष्टे = अस्तङ्गते, वा अस्तपतिनीचस्थे = सप्तमेशग्रहनीचराशिगते, वा अस्तपतौ=सप्तमेशे, केन्द्रे=१।४।७।१० स्थानस्थे, वा अस्ते तथा प्रष्टुः राज्ञः हानिः=क्षतिः प्रवक्तव्या = वाच्या। लग्नात् = लग्नराशितः, अधः = पूर्वराश्यादौ शुभे = शुभग्रहे सति, मन्दे = मन्दगतिग्रहे च उपरि=लग्नात्पुरतः स्थिते सति प्रष्टुः शुभः=सत्पुरुषः, सहायः स्यात्। लग्नपतौ=लग्नेशे, रन्ध्रस्थे=अष्टमस्थे, रन्ध्रपतिमुथशिले=अष्टमेशेत्थशाले सति प्रष्टुः मृतिः = प्राणघातः स्यात्। वा सप्तेशे=सप्तमेशे, धनसंस्थे=द्वितीयस्थानगते, धनेशकृतमुथशिले = द्वितीयेशग्रहेत्थशाले सति रिपोः=शत्रोः, प्रतिपक्षिणः, नाशः=क्षयः

स्यात् । वा लग्नेशदशमपत्योः = लग्नेशकर्मेशयोः मुथशिलतः = इत्थशालतः सकाशात्, पृच्छकस्य जयवीर्यं वाच्ये । एवं तुर्यास्तपयोः=चतुर्थेशसप्तमेशयोर्योगे शत्रोः जयः ज्ञेयः । अत्र उभयवर्गे=वादिप्रतिवादिनोरपि वर्गे केन्द्रे, तत्पतिकृतमुथशिले = स्वस्वामिग्रहेत्थशाले, तयोर्बलं चिन्त्यं, यस्य वर्गेशस्य बलाधिक्यं, तस्य जय इत्यूहः कार्यः ।

चरराशौ यदि पूर्वोक्तयोगस्य सबलत्वं स्यात् तदा पूर्वं जित्वाऽपि प्रान्ते विनाशः = पराजयः, स्यात्, वा लग्नपतौ = लग्नेशे, अन्त्यस्थे = द्वादशस्थानस्थे सति प्रष्टा जनः नश्यति, अस्तपे = सप्तमेशे, षष्ठे सति परः = शत्रुः, नश्यति, खपतौ = दशमेशे लग्ने, तदा प्रष्टुर्जयः स्यात् । वा तुर्येशे = चतुर्थेशे अस्ते = सप्तमे सति, रिपोः = शत्रोः सहायबलं भवेत् । वा रवीन्दू यन्मुथशिलौ = येन ग्रहेण कृतमुथशिलौ, तस्य बलं ज्ञेयम्, मुसरिफे योगे तु हानिर्वाच्या ॥ ८८-९५ ॥

भाषा - लग्नेश यदि सप्तमेशसे १।२।१०।११ इन स्थानों में सप्तमेश के साथ मुथशिल योग करता हो तो युद्ध में दोनों में सन्धि होती है । यदि लग्नेश दोनों के मध्यमें हो, तो पूछने वाला युद्ध में नीचे गिर कर शत्रु से वध्य होता है। लग्नेश मन्दगति ग्रह हो और चन्द्रमा से कबूल योग करता हो, और शीघ्र गतिग्रह से आगे हो तो पूछने वाले की जय होती है । इस तरह लक्षण युक्त लग्नेश यदि अस्तंगत हो, सप्तमेश के नीच राशि में स्थित हो, या सप्तमेश केन्द्र में हो, सप्तममें हो, तो पूछने वाले की हानि कहनी चाहिये । या लग्न से पीछे शुभ ग्रह हो मन्दगति ग्रह लग्न से आगे हो, तो अच्छा भला आदमी सहायक होता है । यदि लग्नेश आठवें स्थान में हो, अष्टमेश से इत्थशाल करता हो, तो पूछने वाले की मौत होती है । यदि सप्तमेश दूसरे स्थान में हो, द्वितीयेश से इत्थशाल करता हो, तो शत्रु का नाश होता है । यदि लग्नेश दशमेश में मुथशिल योग हो, तो पूछने वाले की जय और बल कहना चाहिये ॥ ८८-९२ ॥

इस प्रकार चतुर्थेश सप्तमेश के संयोग में शत्रु की जय कहना । दोनों के वर्ग यदि केन्द्र में हो, और अपने स्वामी ग्रहसे इत्थशाल करता हो, तो वहां दोनों के बल विचार कर जिसका विशेष हो, उसकी जय कहना ॥ ९३ ॥

चरराशि में यदि पूर्वोक्त योग होता हो, तो पहले जीत कर पीछे पराजय हो । या लग्नेश बारहवें में हो, तो पूछने वालेका नाश हो। यदि सप्तमेश छठे स्थान में हो, तो शत्रु मरता है। दशमेश यदि लग्न में हो तो पूछने वाले की जय होती है । यदि चतुर्थेश सप्तम में हो, तो शत्रु को सहाता होती है । रवि चन्द्रमा जिस ग्रहसे इत्थशाल करता हो, उस ग्रह का बल जानना, वहां मूसरिफ योग होता हो तो, पूछने वाले की हानि होती है ॥ ९४-९५ ॥

इत्यष्टमस्थानपृच्छाविचारः ।

अथ नवमस्थानपृच्छायां गमनप्रश्नमाह—

मम गमनं भविता किं नवेति लग्नेश्वरे न वा केन्द्रे।
नवमेशमुथशिले सति नवमेशे वा भवेद्गमनम् ॥ ९६ ॥
लग्नस्थे नवमपतौ लग्नाधिपमुथशिले च सञ्चारात्।
रहितो याति पुनर्ना नवमदृशा वर्जिते योगे ॥ ९७ ॥
लग्नपतौ केन्द्रस्थे सहजग्रहमुथशिले च विक्रूरे।
गमनं स्यादस्मिन्वा केन्द्रे क्रूरे च नास्ति गतिः ॥ ९८ ॥
अस्ते क्रूरेऽपि च यत्कार्यं निर्याति विघ्नमत एव।
आकाशस्थे पापे राजकुलाज्ज्येष्ठतो निजाद्वाऽपि ॥ ९९ ॥
नवमेशे मुथशिलगे लग्नाधीशेन पापरिपुदृष्टे।
गमनेऽवसानतः स्यात्प्रष्टुः कष्टं क्षयोऽर्थस्य ॥ १०० ॥
लग्नेशे नवमेशे मुथशिलकृति रन्ध्रसप्तमे कष्टम्।
उदये यस्मिन्यायाद्विनिःसृतिः स्यात्सुखकरः पन्थाः ॥१०१॥

कस्यापि कार्यस्य कृते मम गमनं भविता ? वा किं न भविता ? इति प्रश्ने लग्नेश्वरे = लग्नेशे केन्द्रे = १।४।७।१० एतदन्यतमस्थानस्थे, नवमेशमुथशिले = नवमेशेत्थशाले सति, नवमेशे केन्द्रे लग्नेशमुथशिले सति गमनं भवेत्। वा नवमपतौ लग्नस्थे लग्नाधिपमुथशिले=लग्नेशेत्थशाले सति, सञ्चारात्=चलनात्, रहितः याति = गमनं न स्यादित्यर्थः। वा तादृशे योगे नवमदृशा वर्जिते सति ना= पुरुषः पुनः गमनं न याति। लग्नपतौ=लग्नेशे, केन्द्रस्थे, सहजग्रहमुथशिले=सहज- भावस्थग्रहेत्थशाले, सति, तथा विक्रूरे=पापरहिते, तदा गमनं स्यात्। वा अस्मिन् एव योगे क्रूरे=पापे, केन्द्रे सति गतिः=गमनं न अस्ति। वा क्रूरे पापे अस्ते=सप्तम- स्थे, तदा यत्कार्यं, निर्याति = निर्गच्छति तत्कार्यं अत एव विघ्नं स्यात्। वा पापे आकाशस्थे=दशमस्थे, सति तदा राजकुलात्=राजवंशात् ज्येष्ठतः = ज्येष्ठबन्धुवर्गात् वा निजात् = स्वकीयाज्जनात् विघ्नं स्यात्।

नवमेशे लग्नाधीशेन मुथशिले, पापरिपुदृष्टे सति तदा गमने = यात्रायां, प्रष्टुः प्रश्नकर्तुः, अवसानतः कष्टं = शरीरक्लेशः, अर्थस्य = धनस्य, क्षयः=नाशः स्यात्। वा नवमेशे लग्नस्थे, मुथशिलकृति = इत्थशालयोगकारके रन्ध्रसप्तमे = अष्टमसप्तमे

सति कष्टं वाच्यम् । यस्मिन् उदये यायात् = गच्छेत् , तत्र विनिःसृतिः = विशेषेण निःसरणं तथा पन्थाः = मार्गः, सुखकरः स्यात् ॥ ९६-१०१ ॥

भाषा—मेरी यात्रा होगी या नहीं ? इस प्रश्न में लग्नेश यदि केन्द्र में हो और नवमेश से इत्थशाल होता हो, तो यात्रा कहना । या नवमेश लग्नमें हो, लग्नेश से इत्थशाल होता हो तो यात्रा नहीं होती है । या वैसे योग में नवम दृष्टि से रहित-हो, तो यात्रा नहीं होती है । या लग्नेश केन्द्र में हो, और तृतीय स्थान स्थित ग्रह से इत्थशाल होता हो, और पाप ग्रह से रहित हो, तो यात्रा होती है । वा इस योग में पापग्रह केन्द्र में हो तो यात्रा नहीं होती । या पापग्रह सप्तम में हो, तो जिस काम काज के लिये चले उस काम में विघ्न हो जाय । या पापग्रह दशम में हो, तो राज कुल से तथा बड़े आदमी से, अपने बन्धुवर्गों से कार्य में बाधा पहुँचे ॥ ९६-१०१ ॥

लग्नान्मार्गानुभवो व्योम्नः कार्यं स्मराद्गतिस्थानम् ।
भूमेः कार्यं परिणतिरेवं लग्ने शरीरसुखम् ॥ १०२ ॥

लग्नात् = लग्नराशिवशात् , मार्गानुभवः = मार्गसुखदुःखानुभवः, व्योम्नः = दशमात् स्थानात् कार्यं=कर्त्तव्यकृत्यविचारः स्यात् । स्मरात्=सप्तमस्थानात् , गति-स्थानं=गन्तव्यस्थलज्ञानं भवति । भूमेः = चतुर्थस्थानात् , परिणतिः = कर्त्तव्यका-र्यपरिणामः, स्यात् । एवं लग्ने शरीरसुखं चिन्त्यम् ॥ १०२ ॥

भाषा—लग्न से रास्ता का सुखदुःखानुभव होता है । दशवें स्थान से कर्तव्य कार्य का विचार होता है । सातवें से जाने की जगह का विचार होता है । चौथे स्थान से परिणाम का ज्ञान होता है । और लग्न से शरीर सुख का विचार होता है ॥ १०२ ॥

अथ कार्यसिद्ध्यसिद्धियोगमाह—

दशमे शुभे च सिद्धिः कार्यस्यास्ते प्रयाति यत्स्थाने ।
तत्र शुभं च चतुर्थे परिणामः सुन्दरः कार्ये ॥ १०३ ॥

दशमे शुभे सति कार्यस्य सिद्धिः स्यात् , अस्ते = सप्तमे शुभे सति यत्स्थाने प्रयाति तत्र = तत्स्थाने शुभं वाच्यम् । चतुर्थे शुभग्रहे सति कार्ये सुन्दरः = शोभनः परिणामः भवति ॥ १०३ ॥

भाषा—दशमस्थान में शुभग्रह हो, तो कार्य की सिद्धि होती है सप्तमस्थान में शुभग्रह हो, तो जिस स्थान में जाता है, वहां शुभ होता है । चौथे स्थान में शुभग्रह हो, तो कार्य का नतीजा अच्छा होता है ॥ १०३ ॥

अथ कार्ये कुतः कुतो भयसम्भवस्तदाह—

**लग्नेशं शशिनं वा यः क्रूरस्तुदति तत्र मनुजर्क्षे ।**
**मनुजत्रिराशिके वा तदा भयं द्विपदतो गन्तुः ॥ १०४ ॥**
**जलराशौ वारिभयं चतुष्पदर्क्षे तथाऽश्वादेः ।**
**घटचापे द्रुमकंटकभयं हरौ व्याघ्रसिंहादेः ॥ १०५ ॥**

यः क्रूरः = पापग्रहः, यत्र राशौ लग्नेशं = लग्नस्वामिनं वा शशिनं = चन्द्रं, तुदति=पीडयति, तत्र राशौ मनुजर्क्षे=द्विपदराशौ=मिथुनकन्यातुलेषु, वा मनुजत्रिराशिके = द्विपदराशित्रिराशिके च सति गन्तुः=प्रस्थातुः द्विपदतः = मानवात्, भयं वाच्यम् । अथ तत्र जलराशौ=जलचरराशौ सति वारिभयं = जलचरनक्रमकरजीवभयं, वा जलनिमज्जनभयं वाच्यम् । अथ तत्र चतुष्पदर्क्षे = मेषवृषराशौ सति अश्वादेः=घोटकादेः पशोर्भयम् । घटचापे = कुम्भधनुषोरन्यतरे द्रुमकण्टकभयं = वृक्षपतनकण्टकवेधनपीडनं वाच्यम् । हरौ=सिंहे, व्याघ्रसिंहादेः भयं वाच्यम् ॥१०४-१०५

भाषा—जो पाप ग्रह लग्नेश या चन्द्रमा को पीड़ित करे, वहां जो राशि हो, सो यदि द्विपद ( मिथुन कन्या तुला ) हो, या द्विपदराशि के त्रैराशिक हो, तो मनुष्य से भय हो, वहां यदि जलचरराशि हो, तो गोह, मगर जलचर जीव से, या जल ही में डूबने का भय हो । वहां यदि चतुष्पद राशि हो, तो घोड़ा आदि पशुओं से डर हो । यदि कुम्भ, धनु में हो, तो पेड़ से कांटे से भय हो, सिंह हो तो व्याघ्र से सिंह से भय हो ॥ १०४–१०५ ॥

अथ नगरप्रवेशे लाभालाभप्रश्नः—

**नगरप्रवेशतोऽस्मात् फलमस्ति न वा प्रवेशलग्नमिह ।**
**तस्मिन्धनपे वक्रे नो हरणं कार्यसिद्धिर्वा ॥ १०६ ॥**
**अतिचरिते बहुदिवसं हरणं नो कार्यसिद्धिरीषदपि ।**
**नवमतृतीयगतेऽस्मिन्कार्यं कृत्वाऽऽशु निजपुरं याति ॥ १०७ ॥**
**लग्ने कर्मण्याये धनपयुते शोभनं ज्ञेयम् ।**
**सक्रूरसप्तमस्थे पथि विघ्नाङ्कटकश्चतुर्थस्थे ॥ १०८ ॥**

अस्मात् नगरप्रवेशतः फलं = लाभादिकं फलं अस्ति, न वा ? इति प्रश्ने इह प्रवेशलग्नं साध्यं तत् प्रवेशपुरं ज्ञेयम् । तस्मिन् लग्ने धनपे = धनेशे सति, वा वक्रे सति हरणं = अवस्थानं, वा कार्यसिद्धिर्न स्यात् । लग्नस्थे धनपे अतिचरिते = अतीचारे, सति बहुदिवसं = चिरकालं, हरणं = स्थितिः, नो भवति, कार्यसिद्धिरपि

ईषत् = स्वल्पा भवति । यदि अस्मिन् = धनेशे नवमतृतीयगते तदा कार्यं = स्वार्थसिद्धिं कृत्वा आशु = शीघ्रं निजपुरं = स्वनिवासस्थानं, याति । वा धनपयुते = धनेशयुते लग्ने सति, वा धनपयुते कर्मणि = दशमे सति, वा धनपयुते आये = एकादशे सति कार्यं शोभनं ज्ञेयम् । वा धनपे सक्रूरसप्तमस्थे = पापाक्रान्तसप्तमराशिगते सति विघ्नान् = मार्गे बाधाबहुलान् वदेत् । वा धनपे सक्रूरचतुर्थस्थे तदा मार्गे झकटकं कलहः वाच्यम् ॥ १०६–१०८ ॥

भाषा—इस नगर ( शहर ) में जाने से मुझे लाभ होगा या नुकसान होगा ? इस प्रश्न में द्वितीयेश लग्न में हो, वक्री हो, तो वहां ठहरना नहीं होता है । या लग्नस्थ धनेश अतिचारी हो, तो जादे दिन तक वहां न ठहरे, कार्यसिद्धि भी थोड़ी हो । यदि धनेश नव में तीसरे में हो, तो कार्य सिद्ध करके अपने घर जाय । या धनेश लग्न में दशम में या एकादश में हो, तो काम कार्य अच्छा कहना । यदि धनेश पापग्रह से युक्त सप्तमराशि में हो तो रास्ता में विघ्न बाधा हो । यदि चौथे स्थान में पापयुक्त धनेश हो, तो रास्ता में किसी से झगड़ा हो ॥ १०६–१०८ ॥

इति नवमस्थानपृच्छाविचारः ।

अथ दशमस्थानपृच्छायां तावद्राज्याप्तिप्रश्नमाह—

राज्याप्तिप्रश्नलग्ने लग्नेशे शशिनि वा नभःपतिना ।
कृतमुथशिलेऽम्बरदृशा राज्यं रूपक्रमाद्भवति ॥ १०९ ॥
अन्योन्यभवनगमनात्क्रूराभावेऽथ चिन्तितप्राप्तिः ।
लग्नस्थे वाऽन्येन च सौम्येनाम्बरस्य मुथशिलेऽप्येवम् ।
पापार्दिते तु मन्दे निकटोभूयोत्तरत्यधो राज्यम् ॥ ११० ॥
भूमिस्थे क्रूरदृशा त्वपवादः शुभदृशा कीर्तिः ।
मन्दग्रहे बलवति क्रूरवियुक्ते यदा शशी विबलः ॥ १११ ॥
मन्दे बलेन भ्रमणात् राज्यप्राप्तिर्भवेत्प्रष्टुः ।
लग्नाधिपतौ स्वगृहे लाभे राज्यस्य तुंगगे भौमे ॥ ११२ ॥
लग्नाम्बराधिपौ यदि कंबूलौ केन्द्रगेन्दुमुथशिलतः ।
उत्तमराज्यावाप्तिः स्वर्क्षस्थे चेन्दुतो विपुला ॥ ११३ ॥

राज्याप्तिप्रश्नलग्ने, लग्नेशे=लग्नपतौ वा शशिनि = चन्द्रे नभःपतिना= दशमेशेन, कृतमुथशिले सति अम्बरदृशा दृष्टे तदा रूपक्रमात्=स्ववंशानुसारेण राज्यं भवतीति ॥ १०९ ॥

तयोर्लग्नेशदशमेशयोः अन्योन्यभवनगमनात् = परस्परराशिस्थितत्वात्,

यथा लग्नेशः कर्मणि, कर्मेशो लग्ने सति तथा च तयोः स्थाने क्रूराभावे = पाप-युतिदृष्टिसम्बन्धवर्जिते, तदा तु अचिन्तितप्राप्तिः = अप्रयासेन राज्यलाभः, स्यात् । वा लग्नस्थे अम्बरस्य = दशमस्य नाथे अन्येन सौम्येन = शुभेन मुथशिले सत्यप्येवं फलं वाच्यम् । उक्तयोगे मन्दे=मन्दगतिग्रहे, पापार्दिते = पापाक्रान्ते सति राज्यं निकटीभूय, अधुना लब्धं लब्धमिति सम्भवं दृष्ट्वाऽपि परिणामेऽप उत्तरति अर्थाद्राज्यस्य अप्राप्तिः भवेत् ॥ ११० ॥

तत्र भूमिस्थे = चतुर्थस्थानस्थिते बलवति मन्दग्रहे, क्रूरदृशा = क्षुतदृष्ट्या = १।४।७।१० दृशा मुथशिले सति, अपवादः=लोके अपकीर्त्तिः सम्भवेत् । तादृशे मन्दग्रहे शुभदृशा मुथशिले सति कीर्त्तिः स्यात् । वा मन्दग्रहे बलवति सति क्रूर-वियुक्ते = पापसंयोगदृष्टिरहिते, तदाऽपि कीर्त्तिः स्यात् । तदा तु शशी = चन्द्रः वि-बलः, मन्दे=मन्दगतिग्रहे, अबले = बलहीने, न = नहि, सति अर्थाद्बलयुक्ते सति. तदा प्रष्टुः भ्रमणात् = अनेकस्थलसञ्चारात्, राज्यप्राप्तिः भवेत् । वा लग्नाधिपतौ स्वगृहे=लग्ने, ( एवं कर्कसिंहलग्नयोरेव, रविचन्द्रयोरेकराश्यधिपत्वात् । कर्कसिंह-भिन्नलग्ने तु कुजादीनां तत्रायानां राशिद्वयाधिपत्वाल्लग्नभिन्नं स्थानमपि स्वगृहं भवति । यथा वृषलग्ने लग्नेशः शुक्रो यदि तुलायां, वा मिथुनलग्ने लग्नेशो बुधः कन्यायां, तदा लग्नेशो लग्नभिन्ने निजगृहे भवतीति ज्ञेयम् ) । अर्थात् लग्नेशे स्वराशिगते, भौमे = कुजे, तुङ्गगे = स्वोच्चराशिगते, तदा राज्यस्य लाभः वाच्यः ॥ १११–११२ ॥

यदि लग्नाम्बराधिपौ = लग्नेशदशमेशौ केन्द्रगेन्दुमुथशिलतः = केन्द्रस्थचन्द्रे-त्थशालयोगतः सतः कम्बूलौ, तदा उत्तमराज्यावाप्तिः स्यात् । वा लग्नेशदश-मेशौ स्वर्क्षस्थे = कर्के स्थितात् इन्दुतः = चन्द्रात्, मुथशिले, विपुला राज्यप्राप्तिः भवति ॥ ११३ ॥

भाषा—मुझे राज्य मिलेगा, या नहीं ? इस प्रश्न में लग्नेश या चन्द्रमा दशमेश के साथ इत्थशाल करें, और दशम दृष्टि से दृष्ट हों, तो अपने वंश के अनुसार राज्य मिलता है ॥ १०९ ॥

यदि लग्नेश दशम में दशमेश लग्न में, हों, उन दोनों ( लग्न दशम ) स्थान में यदि पाप–सम्बन्ध नहीं हो, तो एकाएक विना प्रयास से ही राज्य लाभ होता है । वा दशमेश लग्न में हो, किसी एक शुभग्रह से इत्थशाल करता हो तो भी अचिन्तित राज्यलाभ कहना । और यदि उक्तयोग में मन्दगति ग्रह पापग्रह

से आक्रान्त हो तो राज्य (अब मिला अब मिला ऐसे) नजदीक आकर भी नहीं मिले ॥ ११० ॥

वहां यदि बलवान् मन्दगतिग्रह चौथे स्थान में हो, और पापदृष्टि या क्षुतदृष्टि से देखा जाय, तो लोगों में अपवाद फैलता है। और यदि वैसे मन्दगतिग्रह शुभग्रह से इत्थशाल करता हो, तो लोगों में यश होता है। या बलवान् मन्दगतिग्रह पाप ग्रह के संयोग या दृष्टि से वञ्चित हो, तो भी कीर्त्ति ही होती है। यदि चन्द्रमा दुर्बल हो मन्दगति ग्रह भी बल हीन नहीं हो, तो पूछने वाले को अनेक स्थान में जाकर प्रयास करने से राज्यलाभ होता है।

या लग्नेश अपने घर में हो, मङ्गल अपने उच्च (मकर) में हों, तो राज्य का लाभ होता है ॥ १११-११२ ॥

यदि लग्नेश और दशमेश को केन्द्रस्थान स्थित चन्द्रमा से इत्थशाल होने से कम्बूल योग होता हो, तो उत्तम राज्य की प्राप्ति होती है। या लग्नेश दशमेश को अपने राशिस्थित चन्द्रमा से इत्थशाल होता हो, तो पूर्ण राज्य (विस्तृत राज्य) का लाभ होता है ॥ ११३ ॥

अथ कार्यसिद्धिप्रश्नमाह—

**यत्रर्क्षे लग्नेशस्तत्पतिरशुभे गृहे तदा कार्यम् ।**
**न स्यादस्ते कष्टाद्दशमदृशा कटुकता कार्ये ॥ ११४ ॥**

लग्नेशः यत्र = यस्मिन् ऋक्षे = राशौ भवेत्, तत्पतिः=तत्स्थाननाथः अशुभे= अशुभप्रदे = (६।८।१२) गृहे भवेत् तदा कार्यं न स्यात्। वा लग्नेशे अस्ते= सूर्यकराक्रान्ते, तदा कष्टात् = क्लेशात्, अत्यन्तप्रयासात् कार्यं वाच्यम्। यदि तादृशे योगे दशमदृशा दृष्टे, तदा, कार्ये कटुकता = कलहः स्यात् ॥ ११४ ॥

भाषा—लग्नेश जिस राशि में हो उसका स्वामी यदि अनिष्ट (६।८।१२) स्थान में हों तो कार्य नहीं होता है। वा लग्नेश अस्तंगत हो तो अत्यन्त क्लेश से कार्य कहना। यदि वैसे योग में दशमदृष्टि से देखे तो कार्यमें झगड़ा हो जाता है ॥११४॥

अथैतद्राज्यलाभेन मम कीदृशः परिणामः स्यादिति प्रश्ने विचारमाह—

**राज्यप्राप्तौ सत्यां यदि चेच्छति कोऽपि परिणतिं च तदा ।**
**लग्नं शरीरकार्ये गृहकर्मास्तं नभश्च राज्यार्थम् ॥ ११५ ॥**
**लाभो मित्रस्यार्थे चतुर्थकं कर्मणोऽवसितये च ।**
**द्रव्यं धनाय सहजं भृत्येभ्यो रिपुकृतेश्च वैरिभ्यः ॥ ११६ ॥**
**एतैः शुभैः शुभं स्यादशुभे वामं च सर्वकार्याणाम् ।**

**वित्तस्वामिनि भौमे नीचस्थे पारदारिके व्ययकृत् ॥ ११७ ॥**
**जीवे धर्मायरिपौ गुरुपूजायै सिते विलासाय ।**
**वाणिज्याय ज्ञे पुनरिन्दौ मुथशिलिनि चान्यथाऽन्यर्थम् ॥११८॥**
**लग्नपतौ पतितस्थे विबले राज्यात्ययस्तु कम्बूले ।**
**कोऽपि गुणः स्यात्पापाक्रांतैरशुभं च्युतौ भवति ॥ ११९ ॥**

राज्यप्राप्तौ = राज्यलाभे सति यदि कः अपि राजा तस्य = राज्यलाभस्य परिणतिं=परिणामं ज्ञातुम् च इच्छति=अभिलषति, तदा लग्नं शरीरकार्यं बोध्यं, अस्तम् = सप्तमभवनं गृहकर्म ज्ञेयम् , नभः=दशमस्थानं राज्यार्थम् , बोध्यम् । चतुर्थकं स्थानं मित्रस्यार्थे लाभः इति चिन्त्यम् । तथा कर्मणः = कार्यस्य अवसितये=परिणामाय च ज्ञेयम् । तथा द्रव्यं = द्वितीयस्थानं धनाय = धनलाभाय, चिन्त्यं, सहजं = तृतीयस्थानं, भृत्येभ्यः = सेवकेभ्यः, वैरिभ्यः=शत्रुभ्यः = षष्ठस्थानेभ्यः, रिपुकृतेः = शत्रुहेतोश्चिन्त्यम् । एतैः स्थानैः शुभैः=शुभस्वामिकैः शुभयुतदृष्टैः सद्भिः शुभं स्यात् , तथा एतैरशुभैः पापसम्बन्धैः = सर्वकार्याणां वामं=विलोमं बोध्यम् । वित्तस्वामिनि = धनेशे, भौमे नीचस्थे सति तदा पारदारिके=परस्त्रीविषयके कार्ये व्ययकृत् स्यात् ॥ ११५-११७ ॥

वा धनेशे जीवे धर्मायरिपौ=९।११।६ सति, गुरुपूजायै व्ययकृत् । द्वितीयेशे सिते=शुक्रे धर्मायरिपौ सति विलासाय=मनोविनोदाय व्ययकृत् । द्वितीयेशे ज्ञे=बुधे धर्मायरिपौ सति तदा वाणिज्याय व्ययकृद् भवति । पुनस्तादृशे योगे इन्दौ = चन्द्रे, मुथशिलिनि सति अन्यथा अर्थम् , बोध्यम् , अर्थात् दुर्भावं विहाय सद्भावेन व्ययं करोति ॥ ११८ ॥

लग्नपतौ=लग्नेशे, पतितस्थे = पापग्रहस्थानगते, वा अनिष्टस्थानस्थिते, विबले = बलहीने सति राज्यात्ययः=राज्यनाशः स्यात् । तत्र कम्बूले सति = चन्द्रकृतेत्थशालपूर्वककम्बूलयोगे च सति कोऽपि = विशेषः, गुणः स्यात् । पापाक्रान्तैः=पापयुतदृष्टैर्योगकारकैर्ग्रहैः च्युतौ = राज्यत्यागे अशुभं भवति ॥ ११९ ॥

भाषा—मुझे राज्य मिलने पर क्या नतीजा होगा ? इस प्रश्न में लग्न को शरीर सम्बन्धी कार्य समझना । सप्तमस्थान को घरेलू काम काज समझना । दशमस्थान को राज्य का प्रयोजन समझना । चतुर्थस्थान को मित्र के लिये लाभ समझना । और कार्य के परिणाम भी जानने के लिये समझना । और दूसरा स्थान धन लाभ के

लिये समझना। तीसरा स्थान सेवक नोकर के लिये, और षष्ठ स्थान शत्रुओं के लिये समझना ॥ ११५-११६ ॥

इन स्थानों को शुभ (शुभस्वामिक, शुभस्थानस्थित, शुभ-युत-दृष्ट) होने से सब कामों में शुभ कहना। और उन स्थानों को अशुभ (अशुभस्वामिक, अशुभस्थान स्थित, अशुभ-युत-दृष्ट) होने से सब काम काजों में अशुभ कहना। यदि द्वितीयस्थान का स्वामी मङ्गल होकर नीच में हो, अर्थात् मीन तुला राशि प्रश्न लग्न हो, तो परस्त्री के बारे में खर्च करने वाला होता है ॥ ११७ ॥

यदि द्वितीयेश बृहस्पति होकर ९।११।६ इन स्थानों में हो, तो गुरुसेवा में धन लगावे। यदि द्वितीयेश शुक्र होकर ९।११।६ इन स्थानों में हो तो भोग विलास में खर्चा करे। यदि द्वितीयेश बुध ९।११।६ इन स्थानों में हो, तो व्यापार में धन लगावे फिर भी उक्त योगों में चन्द्रमा से इत्थशाल होता हो तो दुर्भाव बदल कर सद्भाव में खर्चा करे ॥ ११८ ॥

यदि लग्नेश पाप के राशि में हो, या पाप-दूषित स्थान में हो और दुर्बल हो तो राज्यनाश होता है। वहां यदि चन्द्रमा से कंबूल योग होता हो, तो राज्य त्याग के समय पर भी विशेष कोई गुण ही होता है। यदि उक्त योगकारक ग्रह पापों से आक्रान्त हो, इत्थशाल संयोग आदि सम्बन्ध करता हो, तो राज्यत्याग के समय अशुभ ही कहना ॥ ११९ ॥

अथ मन्त्रिविषयकपृच्छायामाह—

**नरपतिसचिवस्नेहप्रश्ने कम्बूललग्नसप्तमयोः।**
**मुथशिलयोः शुभदृष्ट्या शुभता राज्ये मिथः स्नेहः ॥ १२० ॥**

नरपतिसचिवस्नेहप्रश्ने नरपतेः=राज्ञः, सचिवस्य=मन्त्रिणः, परस्परं स्नेहस्य=प्रेम्णः प्रश्ने, भूपमन्त्रिणोर्मिथो प्रेम स्थास्यति न वेति प्रश्ने, कम्बूललग्नसप्तमयोः=कम्बूलयोगघटनपूर्वकलग्नसप्तमयोः स्थानयोः शुभदृष्ट्या मुथशिलयोः=घटितेत्थशालयोगयोः सतोः राज्ये तयोर्भूपमन्त्रिणोर्मिथः स्नेहः स्यात् ॥ १२० ॥

भाषा—राजा और मन्त्री में परस्पर एक से दूसरे को प्रेम बना रहेगा या नहीं? इस प्रश्न में लग्न को राजा, सप्तम को मन्त्री जान कर लग्न और सप्तमस्थान में कम्बूल योग होता हो, और दोनों स्थान को शुभ ग्रह से इत्थशाल होता हो, तो राज्य में राजा मन्त्री को परस्पर प्रेम कहना ॥ १२० ॥

अथैतद्राज्यं चरं स्थिरं वा भवेदिति प्रश्ने विचारः—

**राज्यं चरं वा लग्नखगनेशयोः सहयोः।**
**यद्येको मन्दः स्यात्केन्द्रे तत्स्थिरमतोऽन्यथा वाच्यम् ॥१२१॥**

**यदि वा स वाममार्गे भूमौ वा प्रच्युतिर्भवेत् पूर्वम्।**
**कम्बूले सति लभते शीघ्रन्त्वथ मुसरिफे न पुनः॥ १२२॥**

इदं मम राज्यं चरम्=अचिरस्थायि, वा स्थिरम्=अचलम्, भविष्यति? एवं प्रश्ने लग्नपगगनेशयोः=लग्नेशदशमेशयोः ग्रहयोः मध्ये यदि एकः ग्रहः मन्दः=मन्दगतिः केन्द्रे १।४।७।१० स्यात्तदा तद्राज्यं स्थिरं=अचलं वाच्यम्, अन्यथा केन्द्रभिन्नस्थाने स्यात्तदा चलं वाच्यम्।

यदि वा स मन्दगतिग्रहः वाममार्गे=वक्रे, भवेत्, वा भूमौ=चतुर्थे तदा पूर्वं प्रच्युतिः भवेत्। पश्चात् कम्बूले सति शीघ्रं लभते। अथ मूसरीफयोगसम्भवे जाते तु पुनर्न लभते॥ १२१-१२२॥

भाषा—यह राज्य स्थिर रहेगा? या अस्थिर रहेगा? इस प्रश्न में लग्नेश और दशमेश में जो मन्दगति ग्रह हो, वह केन्द्र में हो, तो राज्य अचल कहना। यदि केन्द्र से भिन्न स्थान में हो, तो चल कहना॥ १२१॥

यदि मन्दगति ग्रह वक्री हो, या चतुर्थस्थान में हो, तो पहले राज्य का त्याग हो जाय, पीछे चन्द्रमा से कम्बूल योग होने पर जल्दी राज्य मिलता है। यदि मूसरीफ योग हो, तो फिर राज्य नहीं मिलता है॥ १२२॥

इति दशमस्थानपृच्छाविचारः।

अथैकादशस्थानपृच्छा—

**नृपतेर्गौरवलाभाशादि मम स्यान्न वेति चप्रश्ने।**
**आयेशलग्नपत्योः स्नेहदृशा मुथशिले द्रुतं भवति॥ १२३॥**
**रिपुदृष्ट्या बहुदिवसैः केन्द्रे चायेशाचन्द्रकम्बूले।**
**वाच्या पूर्णवाशा चरस्थिरद्विःस्वभावगे स्वनामफलम्॥ १२४॥**
**मन्दे क्रूरोपहते भूत्वाऽऽशाऽऽशु प्रणाशमुपयाति।**
**क्रूरायुक्ते च शुभयुज्यधिकारवशेन लब्ध्याशा॥ १२५॥**

नृपतेः=राज्ञः, सकाशात् मम गौरवलाभाशादि=संमानप्राप्त्यभिलाषाप्रभृति फलं स्यान्न वा? इति प्रश्ने आयेशलग्नपत्योः=लाभेशलग्नेशयोः स्नेहदृशा=(३।५।९।११) एतत्स्थानदृष्ट्या मुथशिले=इत्थशाले सति द्रुतं=झटिति, तद्राजगौरवलाभादि फलं भवतीति॥ १२३॥

अथ लग्नेशलाभेशयोः रिपुदृष्ट्या=शत्रुदृष्ट्या (१।४।७।१०) मुथशिले सति बहुदिवसैः=विशेषदिनैः राजसंमानसौभाग्यलाभः सम्भवेत्। यदि च केन्द्रे आयेश-चन्द्रकम्बूले सति तदा पूर्णा=सम्पूर्णा इव आशा वाच्या, अर्थात् सत्वरमेव सफला

आशा स्यात् । चरस्थिरद्विःस्वभावगे आयेश चन्द्रकम्बूले सति, स्वनामफलम् = स्वनामानुसारं फलं बोध्यम् । यथा चरराशौ नृपगौरवप्राप्तिर्न स्थिरा । भूत्वाऽपि पुनर्नष्टा स्यात् । स्थिरे तु नृपगौरवं स्थिरं, द्विःस्वभावे तूभयात्मकं वाच्यम् ॥१२४॥

मन्दे = मन्दगतिग्रहे, क्रूरोपहते = पापाक्रान्ते, सति आशा = राजगौरवाशा, आशु=शीघ्रं, भूत्वा पश्चात् प्रणाशं विनाशं, उपयाति=गच्छति । अथ मन्दे क्रूरायुक्ते= पापसम्बन्धरहिते, शुभयुजि=शुभसंयोगदृष्टियुक्ते च सति लब्धाशा = तद्राजगौरवप्राप्तिसम्भवः स्यात् ॥ १२५ ॥

भाषा—राजा से मुझे सम्मानकी आशा होगी या नहीं ? इस प्रश्न में एकादशेश और लग्नेश को मित्रदृष्टिसे इत्थशाल होता हो, तो जल्दी वह आशा फलती है ॥

यदि उन दोनों में शत्रुदृष्टि से इत्थशाल होता हो, तो जादे दिनों में राजा से संमान लाभ की आशा होती है । यदि केन्द्रस्थान में लाभेश को चन्द्रमा से कंबूल योग होता हो, तो जल्दी वह आशा पूरी होती है । चर, स्थिर, द्विःस्वभाव राशि में अपने नाम के अनुसार फल कहना । अर्थात् चरराशि में कुछ ही दिनों के लिये, स्थिरराशि में सदा के लिये, द्विःस्वभाव राशि में अनियत रूप से राजगौरव प्राप्ति कहनी चाहिये ।

यदि मन्दगति ग्रह पापग्रह से पीड़ित हो, तो आशा शीघ्र पूरी होकर पीछे नाश भी हो जाय । और मन्दगति ग्रह यदि पापग्रहसे युत दृष्ट नहीं हो, प्रत्युत शुभग्रह से युतदृष्ट हो, तो राज गौरव लाभ की आशा पूरी होती है ॥ १२३-१२५ ॥

मम मित्रेण समं प्रीतिर्भविष्यति न वा ? इति प्रश्ने विचारः—

**मित्रेण सह प्रीतिर्भविता लग्नेश्वरायपत्योश्च ।**
**प्रियदृष्ट्या मुथशिलतः प्रीतिर्वाऽन्योन्यगृहयानात् ॥ १२६ ॥**
**केन्द्रे स्थितयोरनयोर्मैत्री किल पूर्वजातैव ।**
**पणफरगतौ पुरस्तादापोक्लिमतो महाप्रीतिः ॥ १२७ ॥**

मम मित्रेण सह प्रीतिः = प्रेम, भविता = भविष्यति, न वेति प्रश्ने लग्नेश्वरायपत्योः = लग्नेशलाभेशयोः प्रियदृष्ट्या = स्नेहदृष्ट्या ( ३।५।९।११ ) दृशा मुथशिलतः = इत्थशालतः अन्योन्यगृहयानात् = मिथो गृहगमनात् प्रीतिः वाच्या । केन्द्रे स्थितयोः अनयोर्लग्नेशलाभेशयोर्मुथशिलतः पूर्वजाता एव मैत्री वाच्या । पणफरगतौ तौ लग्नेशलाभेशौ तदा पुरस्तात् = अग्रे प्रेम वाच्यम् , परतो न च प्रीतिः । तयोर्लग्नेशलाभेशयोः, आपोक्लिमतः = ३।६।९।१२ एतत्स्थानगतत्वात् , महाप्रीतिः स्यात् ॥ १२६-१२७ ॥

भाषा—मुझे मित्र के साथ प्रीति होगी, या नहीं ? इस प्रश्न में लग्नेश लाभेश में परस्पर प्रम दृष्टि से इत्थशाल होने से परस्पर एक को दूसरे के घर जाने से मित्रता कहना। यदि केन्द्र में लग्नेश लाभेश को इत्थशाल होता हो तो पहले ही की मैत्री कहना। यदि ये लग्नेश लाभेश पणफर में रहकर इत्थशाल करते हों, तो आगे मैत्री हो, यदि आपोक्लिम में होकर वे दोनों इत्थशाल करते हों तो अधिक प्रेम कहना ॥ १२६-१२७ ॥

अथ गुप्तकार्यसिद्धिपृच्छामाह—

**गुप्तं कार्यमिदं मे सिद्ध्यति लग्नेश्वरेऽथ चन्द्रमसि।**
**शुभमुथशिलगे केन्द्रे तन्निकटे वाऽथ सिद्धिः स्यात् ॥ १२८ ॥**

मे=मम, इदं=मनोगतं, गुप्तं=अप्रकटं, कार्यं सिद्ध्यति नवा ? इति प्रश्ने लग्नेश्वरे अथवा चन्द्रमसि = चन्द्रे, केन्द्रे स्थिते, शुभमुथशिलगे=शुभेत्थशाले, सति वा केन्द्रस्थित्यभावे तन्निकटे=केन्द्रसमीपे अर्थात् पणफरे सति सिद्धिः=कार्यस्य सिद्धिः स्यात्। आपोक्लिमस्थे नहि सिद्धिरित्यर्थाज्ज्ञायते ॥ १२८ ॥

भाषा—मेरा यह गुप्त कार्य सिद्ध होगा या नहीं ? इस प्रश्न में लग्नेश या चन्द्रमा शुभग्रह से इत्थशाल करते हुए केन्द्र में हों, वा पणफर में हों, तो कार्य की सिद्धि होती है। अन्यथा नहीं ॥ १२८ ॥

इति लाभस्थानपृच्छाविचारः।

अथ द्वादशस्थानपृच्छाविचारः—

**रिपुविग्रहपृच्छायां बलवति षष्ठे रिपुः सबलः।**
**द्वादशपे शुभदृष्टे बलवति वाच्यं बलं प्रष्टुः ॥ १२९ ॥**
**रिपुविग्रहपृच्छायां नामोच्चारे रिपोर्बलिन्यस्ते।**
**गुप्ते च द्वादशपे बलवति वाच्यं बलं प्रष्टुः ॥ १३० ॥**

रिपुणा=शत्रुणा सह विग्रहो विरोधस्तत्सम्बन्धिन्यां पृच्छायां बलवति षष्ठे=षष्ठभावे, वा षष्ठेशे सति रिपुः=शत्रुः, सबलः, निजापेक्षया प्रबलः स्यात्। द्वादशपे=द्वादशेशे बलवति च शुभदृष्टे सति प्रष्टुः = पृच्छकस्य बलं वाच्यम् ॥ १२९ ॥

नामोच्चारे=प्रश्ने, अस्ते=सप्तमे बलिनि सति रिपोः=शत्रोः बलं वाच्यम्, बलवति द्वादशपे गुप्ते=अस्ते सति प्रष्टुः बलं वाच्यम् ॥ १३० ॥

भाषा—शत्रु से विरोध के प्रश्न में षष्ठ भाव या षष्ठेश बलवान् होने से शत्रु

प्रबल होता है। द्वादशेश वा द्वादशस्थान बलवान् होने से प्रश्नकर्त्ता बलवान् होता है। शत्रु विग्रह प्रश्न में नाम के निकालने में सप्तम भाव या सप्तमेश बली हो तो शत्रु का बल कहना। द्वादशेश या द्वादश स्थान बलवान् हो तो प्रश्नकर्त्ता बलवान् होता है ॥ १२९-१३० ॥

अथ व्ययविषयपृच्छा—

**शुभयुतदृष्टे सद्व्ययमशुभेक्षणयोगतो व्ययमनर्थात्।**
**एवं भावेष्वखिलेषूह्यं सदसत्फलं सुधिया ॥ १३१ ॥**

व्ययभावे शुभयुतदृष्टे सति सद्व्ययम्, अशुभेक्षणयोगतः=पापदृष्टिसंयोगतः अनर्थाद् व्ययं भवति। एवम् अखिलेषु = सर्वेषु भावेषु सुधिया सदसत्फलं = शुभाशुभफलम् ऊह्यं=तर्क्यम्। अर्थाद्यद्भावपे यद्भावे च शुभयुतदृष्टे तद्भावगं शुभफलम्। यद्भावपे यद्भावे चाशुभयुतदृष्टे च सति तद्भावजम्, अशुभफलं वाच्यम् ॥ १३१ ॥

भाषा—व्ययभाव या व्ययभावेश शुभग्रह से युत दृष्ट हो, तो सद्व्यय होता है। पापदृष्ट युत होने से अपव्यय होता है। इस प्रकार सब भावों के शुभाशुभ फल विद्वान् तर्क करें ॥ १३१ ॥

इति संक्षेपतो द्वादशभावप्रश्ननिरूपणम्।

## अथ विशेषप्रश्नाध्यायः।

तत्र पथिकागमनमाह, ताजिके समरसिंहेन—

**आगमने पृच्छायां लग्नेशे लग्नमध्यसंस्थेन।**
**कृतमुथशिले समेति हि सुखमस्ततुरीयगे कष्टात् ॥ १ ॥**
**स्थानाच्चलितः प्रश्ने लग्नपतौ सहजनवमगृहसंस्थे।**
**लग्नस्थेन मुथशिले पन्थानं वहति पथिकोऽयम् ॥ २ ॥**
**रन्ध्रेऽथ धने तस्मिन्नाकाशस्थेन मुथशिलेऽप्येवम्।**
**केन्द्रस्थितेरथशाले लग्नेक्षणवर्ज्यमेति न कदापि ॥ ३ ॥**
**लग्नाधिपतौ वक्रे लग्नं पश्यत्यमुत्र चन्द्रे वा।**
**वक्रगमुथशिले सति समेति पथिकः सुखं शीघ्रम् ॥ ४ ॥**
**अन्त्यस्थितलग्नपतौ शशिना कृतमुथशिले द्रुतमुपैति।**
**लग्नाद्वाऽपि चतुर्थाच्छुभाद्द्वितीयतृतीयगा वाऽपि ॥ ५ ॥**
**कथयन्ति नष्टलाभं प्रवासिनश्चागमं त्वरितम् ॥ ५½ ॥**

आगमने = पथिकागमने, पृच्छायां यत्र कुत्रापि स्थाने स्थिते लग्नेशे लग्नमध्य-संस्थेन = प्रथमदशमस्थानस्थितेन ग्रहेण, तत्रापि दृष्टार्थं सप्तमेशेन कृतमुथशिले सति सुखम् = अक्लेशम् समेति = समायाति । वा लग्नेशे अस्ततुरीयगे=सप्तमचतुर्थस्थिते, सप्तमेशेन कृतमुथशिले सति कष्टात् = प्रयासात् समेति । अत्र लग्नं= पथिकः । सप्तमराशिः = मार्गः । चतुर्थस्थानं = तस्य सुखम् । वित्तम् । द्वितीयन्तु धनमेव सर्वतः प्रसिद्धम् । तेषां बलाबलविवेकेन परदेशागमनशीलस्य सर्वं विचार्यम् । एतदेव मूलग्रंथोक्तविचारापेक्षया सूक्ष्मम् ॥ १ ॥

स्थानात् = इष्टस्थानात्, अमुको जनश्चलितो न वेति प्रश्ने लग्नपतौ = लग्नेशे सहजनवमगृहसंस्थे = तृतीयनवमस्थे, लग्नस्थेन ग्रहेण मुथशिले = इत्थशाले सति, अयं पथिकः पन्थानं वहति = मार्गे वर्त्तते ॥ २ ॥

वा तस्मिन् = लग्नपतौ रन्ध्रे = अष्टमे, वा धने = द्वितीये स्थिते, आकाशस्थेन= दशमस्थेन ग्रहेण मुथशिले सति अपि, एवं फलं = अर्थात् पथिकः पन्थानं वहति । यदि तादृशे लग्नेशे केन्द्रस्थितेत्थशाले लग्नेक्षणवर्ज्ये = लग्नदृष्टिरहिते च सति तदा कदाऽपि न पथिकः एति = आयाति ॥ ३ ॥

वा लग्नाधिपतौ वक्रे, वा अमुत्र = लग्ने, चन्द्रे सति, वक्रगमूथशिले = वक्रीग्रहेत्थशाले सति, पथिकः सुखम् = अक्लेशं, शीघ्रम् = सत्वरं, समेति=समागच्छति ॥

वा अन्त्यस्थितलग्नपतौ = द्वादशस्थानस्थिते लग्नेशे, शशिना = चन्द्रेण, कृतमुथशिले सति, पथिकः=मार्गवर्त्ती, द्रुतं = शीघ्रम् उपैति=आगच्छति । लग्नात्, अपि वा चतुर्थात्, शुभात्=शुभग्रहाधिष्ठितस्थानात् द्वितीयतृतीयगाः शुभग्रहाः नष्टलाभं, प्रवासिनः = पथिकस्य त्वरितम् आगमनम् = समागमं कथयन्ति ॥ ५½ ॥

भाषा—परदेशी के आने के प्रश्न में जिस किसी स्थान स्थित लग्नेश को, लग्न या दशम स्थान स्थित किसी ग्रह से इत्थशाल होता हो, तो सकुशल पथिक घर आता है, अथवा लग्नेश सप्तम चतुर्थ में स्थित हो, सप्तमेश से इत्थशाल करता हो तो कष्ट से आता है ॥ १ ॥

किसी इष्ट स्थल से अमुक व्यक्ति चला है या नहीं? इस प्रश्न में लग्नेश तृतीय नवम में हो, लग्न स्थित ग्रह से इत्थशाल करता हो, तो वह पथिक रास्ता में है, यह कहना ॥ २ ॥

या लग्नेश अष्टम, द्वितीय स्थान में हो, दशम स्थान स्थित ग्रह से इत्थशाल होता हो तो भी पथिक रास्ता में है, यह कहना। यदि वैसे ही लग्नेश केन्द्र

स्थित ग्रह से इत्थशाल करता हो, तथा लग्न के ऊपर किसी की दृष्टि न हो, तो परदेशी कभी भी नहीं आता है ॥ ३ ॥

वा लग्नेश वक्री हो, वा लग्न में चन्द्रमा हो, वक्री ग्रह से इत्थशाल करता हो तो परदेशी सकुशल शीघ्र आता है ॥ ४ ॥

वा लग्नेश बारहवें स्थान में हो चन्द्रमा से इत्थशाल करता हो, तो पथिक शीघ्र आता है। लग्न से या चतुर्थस्थान से अथवा शुभग्रह से द्वितीय, तृतीय स्थान में शुभग्रह नष्ट द्रव्य का लाभ और परदेशी का समागमन को करते हैं ॥ ५ ॥

अथ प्रश्नचिन्तामणौ पथिकागमनप्रश्नः—

ग्रहः षष्ठेऽथ जामित्रे वाक्पतिः कंटके स्थितः।
पथिकागमनं ब्रूते सिते ज्ञे वा त्रिकोणगे ॥ ६ ॥

कोऽपि, ग्रहः षष्ठेऽथ जामित्रे=सप्तमे, स्थितः, वाक्पतिः = बृहस्पतिः, कण्टके= केन्द्रे, स्थितः, वा = अथवा सिते = शुक्रे, वा ज्ञे=बुधे त्रिकोणगे = नवमपञ्चमस्थानस्थे, तदा पथिकागमनं = परदेशिनः आगमनं, ब्रूते = आचार्यः कथयति ॥ ६ ॥

भाषा—यदि छठे और सातवें में कोई ग्रह हो, बृहस्पति केन्द्र ( १।४।७।१० ) में हो, अथवा शुक्र या बुध ९।५ में हो, तो परदेशी का आगमन कहते हैं ॥ ६ ॥

पृष्ठोदये पापदृष्टे शुभदृग्वर्जिते बुधः।
लग्नात्षष्ठे यदा पापा यातुश्च निधनं वदेत् ॥ ७ ॥

पृष्ठोदये = पृष्ठोदयराशौ लग्ने, पापदृष्टे, शुभदृग्वर्जिते=शुभग्रहदृष्टिरहिते, तथा लग्नात् षष्ठे पापाः स्थिताः स्युस्तदा यातुः = गन्तुः निधनं=मरणं वदेत् ॥ ७ ॥

भाषा-पृष्ठोदय राशि यदि लग्न हो, उस पर पाप ग्रह की दृष्टि हो, शुभग्रह की दृष्टि नहीं हो, और लग्न से छठे स्थान में पापग्रह सब हों, तो परदेशी का मरण कहना॥७॥

यदा क्रूरास्तृतीयस्था देशाद्देशान्तरं गतः।
चौरेणैव हृतस्वश्च पथिकः केन्द्रगा यदि ॥ ८ ॥

यदा क्रूराः = पापाः लग्नात् षष्ठे स्थाने स्थितास्तदा पथिकः देशात्=एकस्मात् परदेशाद्देशान्तरमन्यदेशं गतः वाच्यः। यदि क्रूराः केन्द्रगाः = १।४।७।१० स्थानस्थिताः, तदा पथिकः, चौरेण = तस्करेण हृतस्वः=अपहृतधनः वाच्यः ॥ ८ ॥

भाषा—यदि पापग्रह तीसरे स्थान में हो, तो एक देश से दूसरे देश ( प्रान्त ) चला जाना कहना। यदि पाप ग्रह केन्द्र ( १।४।७।१० ) में हो, तो पथिक का सब धन चोर हर लिया है ऐसा कहना ॥ ८ ॥

पापैः षष्ठत्रिलाभस्थैः कंटकस्थैः शुभग्रहैः।
प्रवासी सुखमायाति दूरस्थोऽपि सुनिश्चतम् ॥ ६ ॥

पापैः=पापग्रहैः, षष्ठत्रिलाभस्थैः=६।३।११ गतैः, शुभग्रहैः कण्टकस्थैः=केन्द्रस्थैः तदा, दूरस्थ=दूरदेशस्थितोऽपि, प्रवासी=परदेशी सुनिश्चितं=ध्रुवं, सुखं=सकुशलम्, आयाति=गृहं प्रत्यायाति ॥ ९ ॥

भाषा—यदि सब पापग्रह ६।३।११ स्थानों में हों, शुभग्रह केन्द्र में हो, तो दूर में रहता हुआ भी पथिक जरूर सुख से लौटता है ॥ ९ ॥

चतुरस्रे त्रिकोणे वा पापगेहस्थितः शनिः।
पापदृष्टश्च नियतं बन्धनं यातुरादिशेत् ॥ १० ॥

शनिः, चतुरस्रे, केन्द्रे, वा त्रिकोणे=नवपञ्चमे वा पापगेहस्थितः पापदृष्टश्च भवेत् तदा यातुः=पथिकस्य नियतं=निश्चितं बन्धनम्=कारागारनिवासात्मकम् आदिशेत्=कथयेत् ॥ १० ॥

भाषा—शनि यदि केन्द्र में वा त्रिकोण में पापग्रह के राशि में हो और पाप ग्रह से दृष्ट भी हो, तो परदेशी का जरूर बन्धन होता है ॥ १० ॥

शुभयुक्ते स्थिरे लग्ने स्थिरो बन्धश्चरेऽन्यथा।
द्वितनौ सौम्यसंयुक्ते बन्धमोक्षौ क्रमेण तु ॥ ११ ॥

तत्र विशेषमाह—शुभयुक्ते स्थिरे लग्ने प्रश्नश्चेत्तदा बन्धः स्थिरः=चिरसमयावधिकः स्यात्। शुभयुक्ते चरे लग्ने प्रश्नश्चेत्तदा बन्धः=कारागारवासः अन्यथा=चलः अचिरकालात्मकः स्यात्। द्वितनौ द्विःस्वभावे=प्रश्नलग्ने, सौम्यसंयुक्ते क्रमेण बन्धमोक्षौ भवतः ॥ ११ ॥

भाषा—यदि वहाँ स्थिर लग्न हो, वह शुभग्रह से युक्त हो, तो बन्धन स्थिर कहना, यदि चरराशि लग्न हो, शुभग्रह से युक्त हो, तो कुछ दिनों के लिये बन्धन कहना, यदि द्विःस्वभाव राशि लग्न हो, शुभग्रह से युक्त हो, तो बन्धन, मोक्ष भी क्रम से होता है॥

पापास्त्रिकोणजामित्रे विलग्ने पृष्ठकोदये।
शत्रुभिर्वीक्ष्यमाणाश्च यातुः कष्टं वदेत्सुधीः ॥ १२ ॥

पापाः=पापग्रहाः, त्रिकोणजामित्रे=५।७।९ स्थाने स्थिताः, वा विलग्ने, पृष्ठकोदये=पृष्ठोदयराशौ लग्ने वा स्थिताः, शत्रुभिः=शत्रुग्रहैः, वीक्ष्यमाणाः, तदा सुधीः=विद्वान्, यातुः=पथिकस्य, कष्टं=क्लेशं, वदेत् ॥ १२ ॥

भाषा—पापग्रह ५।७।९ में हों, या लग्न में हों, या छठे स्थान में हों, और शत्रुओं से देखे जाँय तो पण्डित परदेशी को कष्ट बतावे ॥ १२ ॥

**मार्गस्थानगतैः सौम्यैर्मार्गे तस्य शुभं भवेत् ।**
**क्रूरैर्दुःखं विलग्नस्थैः पापैः क्लेशमवाप्नुयात् ॥ १३ ॥**

सौम्यैः = शुभैः, मार्गस्थानगतैः = सप्तमस्थानस्थितैस्तदा तस्य = पथिकस्य शुभं वदेत् । क्रूरैः = पापैः = शनिरविकुजैः विलग्नस्थैः सद्भिः, (पथिकः) दुःखं=क्लेशम् अवाप्नुयात = प्राप्नुयात् ॥ १३ ॥

भाषा—शुभग्रह यदि सप्तम में हों, तो रास्ते में पथिक को आराम मिलता है । पापग्रह यदि सप्तम में हों और लग्न में हों तो रास्ते में क्लेश को पाता है ॥ १३ ॥

**चरलग्ने चरांशे वा चतुर्थे चन्द्रमाः स्थितः ।**
**प्रवासी सुखमायाति कृतकार्यश्च वेश्मनि ॥ १४ ॥**

चरलग्ने वा चरांशे वा चतुर्थे यदि चन्द्रमाः स्थितः स्यात्, तदा प्रवासी पथिकः, कृतकार्यः सन् वेश्मनि = गृहे, सुखं = सकुशलम्, आयाति ॥ १४ ॥

भाषा—चरलग्न में या चरनवांश में, या चतुर्थस्थान में चन्द्रमा हों, तो परदेशी सकुशल कार्यसिद्धि करके घर लौटता है ॥ १४ ॥

**कंटकैः सौम्यसंयुक्तैः पापग्रहविवर्जितः ।**
**प्रवासी सुखमायाति निधनस्थे सुधाकरे ॥ १५ ॥**

कण्टकैः = १।४।७।१० स्थानैः शुभसंयुक्तैः, पापग्रहवर्जितैः=पापशून्यैः । अर्थात् शुभाः केन्द्रगताः, पापाः केन्द्रेतरस्थानगतास्तदा प्रवासी = पथिकः, सुखं = सकुशलं, आयाति । अथवा सुधाकरे = चन्द्रे, निधनस्थे = अष्टमस्थे तदा पथिकः सकुशलं, आयाति ॥ १५ ॥

भाषा—केन्द्र में शुभग्रह हों, पाप ग्रह से रहित हों, अथवा चन्द्रमा अष्टम स्थान में हो तो परदेशी सुखपूर्वक आता है ॥ १५ ॥

**गमागमौ तु न स्यातां योगे दुरुधुराकृते ।**
**शुभैः शुभकृतो रोधः पापैस्तस्करतो भयम् ॥ १६ ॥**

अथ शुभैः = शुभग्रहैः, दुरुधुराकृते योगे = दुरुधुरायोगे, शुभकृतः=शुभकार्येण देवाराधनतीर्थसेवनशास्त्राध्यापनादि कार्येण कृतः रोधः = गमननिरोधः स्यात् । पापैः कृते दुरुधुरायोगे, पापकृतः=व्यभिचारादिदुःखकर्मकृतः, रोधः=यात्रानिषेधो वाच्यः । तथा तस्करतः = चौरात्, भयं भवेत् ॥ १६ ॥

भाषा—यदि चन्द्रमा के एक स्थान आगे एकस्थान पीछे ग्रह हो तो दुरुधुरा योग होता है, वैसा योग होने से परदेशी का आना जाना नहीं होता। वहां यदि शुभग्रहों से

उक्त योग होता हो, तो अच्छे काम होने के कारण यात्रा में रुकावट हो। पाप ग्रहोंसे उक्त योग होता हो तो शत्रुओं के कारण आने में बाधा हो ॥ १६ ॥

गमागमौ हि न स्यातां स्थिरराशौ विलग्नगे।
न रोगोपशमो नाशो द्रव्याणां च पराभवः ॥ १७ ॥

स्थिरराशौ विलग्नगे सति पथिकस्य गमागमौ न स्याताम्। रोगोपशमो न, तथा द्रव्याणां नाशः, च = पुनः पराभवो भवति ॥ १७ ॥

भाषा—यदि लग्नमें स्थिर ( वृष, सिंह, वृश्चिक, कुम्भ ) राशि हो, तो परदेशी का जाना आना नहीं होता है। यदि रोग हुआ हो, तो वह भी नहीं छूटता है। धन का नाश, और पराभव भी होता है ॥ १७ ॥

विपरीतं चरे वाच्यं फलं मिश्रं द्विमूर्तिषु।
स्थिरवत्प्रथमे खण्डे परार्धे चरराशिवत् ॥ १८ ॥

चरे = चरे लग्ने, विपरीतं फलं=गमागमौ स्यातां, रोगोपशमः, द्रव्याणां लाभः, इति फलं वाच्यम्। द्विमूर्त्तिषु = द्विःस्वभावलग्नेषु मिश्रम्=उभयात्मकं फलं वाच्यम्। तत्र द्विःस्वभावलग्ने प्रथमे खण्डे = प्रथमहोरायां, स्थिरवत् फलम्। परार्धे=द्वितीय-होरायां, चरराशिवत् फलं बोध्यम् ॥ १८ ॥

भाषा—यदि चरराशि लग्न हो, तो परदेशी आता है, रोग नाश होता है, धन मिलता है, सुख भी होता है। द्विःस्वभाव राशि लग्न हो, उसमें भी पहली होरा हो तो स्थिर राशि के फल के समान फल कहना। और दूसरी होरा होने से चरराशि के ऐसे फल कहना ॥ १८ ॥

प्रवासी शीघ्रमायाति गुरुशुक्रौ त्रिवित्तगौ।
चतुर्थस्थानगावेतौ शीघ्रमायाति कार्यकृत् ॥ १९ ॥

यदि गुरुशुक्रौ त्रिवित्तगौ = तृतीयद्वितीयगौ, तदा प्रवासी = पथिकः, शीघ्रम् आयाति। वा एतौ गुरुशुक्रौ = चतुर्थस्थानगौ, तदा कार्यकृत् = कार्यकर्त्ता शीघ्रम् आयाति, गृहमिति शेषः ॥ १९ ॥

भाषा—यदि बृहस्पति, शुक्र तृतीय, द्वितीय स्थान में हों तो परदेशी शीघ्र आता है। यदि बृ० शु० चतुर्थस्थान में हों, तो काम काज करके जल्दी लौटता है ॥ १९ ॥

इन्दुः सप्तमगो लग्नात् पथिकं वक्ति मार्गगम्।
मार्गाधिपश्च राश्यर्धात्परभागे व्यवस्थितः ॥ २० ॥

इन्दुः = चन्द्रः, लग्नात् सप्तमगः, तदा पथिकं मार्गगं=पथिगतं वक्ति=कथयति।

वा मार्गाधिपः = सप्तमेशः, राश्यर्धात् परभागे = द्वितीयदेष्काणे व्यवस्थितः, तदाऽपि पथिकं मार्गगं वक्ति ॥ २० ॥

भाषा-चन्द्रमा यदि लग्न से सातवे स्थान में हो, तो पथिक को रास्ते में कहना। यदि सप्तमेश किसी राशिके दूसरी होरा में हो, तो भी रास्ते में पथिक है; यह कहना ॥२०॥

शुक्रार्कजीवसौम्यानामेकोऽपि स्याद्धरायगः ।
तदाऽऽशु गमनं ब्रूयात्प्रष्टुर्न गमनं व्यये ॥ २१ ॥

शुक्रार्कजीवसौम्यानां=शुक्ररविगुरुबुधानां मध्ये एकोऽपि यदि ग्रहः धरायगः= चतुर्थलाभस्थानगतः, तदा प्रष्टुः, आशु = शीघ्रं गमनं = प्रत्यागमनं, वाच्यम् । यदि तेषामेकतमो ग्रहो व्यये = द्वादशस्थाने स्यात्तदा गमनं = प्रत्यावर्तनं न वाच्यम् ॥२१॥

भाषा—शुक्र, सूर्य, गुरु, बुध, इन ग्रहों में कोई एक भी यदि ४।११ में हो, तो शीघ्र ही परदेशी का आगमन कहना। यदि उन में से एक बारहवें में हो, तो पथिक का लौटना नहीं कहना ॥ २१ ॥

लग्नाद्यावतिथे स्थाने बली खेटो व्यवस्थितः ।
ब्रूयात्तावतिथे मासे पथिकस्य निवर्तनम् ॥ २२ ॥

लग्नाद् यावतिथे = यत्संख्यके स्थाने बली खेटः=बली ग्रहः व्यवस्थितः, तावतिथे मासे पथिकस्य = विदेशिनः निवर्त्तनं = प्रत्यागमनं ब्रूयात्=कथयेत् ॥ २२ ॥

भाषा—लग्न से जितने स्थान में बली ग्रह स्थित हो उतने मास में पथिक का आगमन कहना ॥ २२ ॥

एवं कालं चरांशस्थे द्विगुणं च स्थिरांशके ।
द्विःस्वभावांशगे खेटे त्रिगुणं चिन्तयेत्सुधीः ॥ २३ ॥

एवमनेन प्रकारेण यः कालः सिद्धस्तं कालं चरांशस्थे ग्रहे जानीयात् । स्थिरांशस्थे ग्रहे द्विगुणं कुर्यात् । द्विःस्वभावांशगे ग्रहे त्रिगुणं सुधीश्चिन्तयेत् ॥ २३ ॥

भाषा—इस प्रकार चरराशि में जो काल आया वही समझना। स्थिरराशि में उसे दूना करना। द्विःस्वभाव में ग्रह हो तो उस काल को त्रिगुण करना ॥ २३ ॥

यातुर्विलग्नाज्जामित्रभवनाधिपतिर्यदा ।
करोति वक्रमावृत्तेः कालं तु ब्रुवते परे ॥ २४ ॥

यातुः = पथिकस्य, विलग्नाज्जामित्रभवनाधिपतिः=सप्तमाधिपः, यदा वक्रं=विलोमगमनं करोति, तदा एव आवृतेः=आवृत्त्या द्वित्र्यादिगुणनया कालं परे जगुः॥२४॥

भाषा—लग्न से सप्तमेश ग्रह यदि वक्री हो, तो उस प्रकार उस समय को दुगुना तिगुना करना दूसरे आचार्य कहते हैं ॥ २४ ॥

**चतुर्थे दशमे वाऽपि यदि सौम्यग्रहो भवेत् ।**
**तदा न गमनं क्रूरैस्तत्रस्थैर्गमनं भवेत् ॥ २५ ॥**

चतुर्थे दशमे स्थाने यदि सौम्यग्रहः = शुभग्रहः भवेत, तदा पथिकस्य गमनं = प्रत्यावर्त्तनं न भवति । अर्थात् परदेशवास एव वाच्यः । यदि क्रूरैः = पापैः तत्रस्थैः = चतुर्थदशमस्थैः, तदा पथिकस्य गमनं भवति ॥ २५ ॥

भाषा—यदि चौथे या दशवें में शुभग्रह हो, तो लौटना नहीं होता । यदि पापग्रह चौथे दशवें में हों, तो आना होता है ॥ २५ ॥

**लग्नाद्वा लग्ननाथाद्वा यत्संख्याः क्रूरखेचराः ।**
**नवमे द्वादशे वाऽपि तत्संख्याः स्युरुपद्रवाः ॥ २६ ॥**

लग्नात् , वा लग्ननाथात् = लग्नेशात्, यत्सङ्ख्यकाः = यन्मिताः, क्रूरखेचराः = पापग्रहाः, नवमे, अपिवा द्वादशे स्थाने स्थिताः, तावन्तः उपद्रवाः = क्लेशाः स्युः ॥ २६ ॥

भाषा—यदि लग्न से या लग्नेश से जितने पापग्रह नवम या द्वादश में हों, उतने उपद्रव रास्ते में होते हैं ॥ २६ ॥

**लग्नाद्वा लग्ननाथाद्वा यावंतः सौम्यखेचराः ॥**
**मार्गे तत्रोदया वाच्याः स्थाने स्थाने विचक्षणैः ॥ २७ ॥**

एवं लग्नात् वा लग्ननाथात् = लग्नेशाक्रान्तराशितः, यावन्तः सौम्यखेचराः = शुभग्रहाः स्थिताः, तावत्सङ्ख्यकाः, मार्गे = पथि स्थाने विचक्षणैः उदयाः = अभ्युदयाः इष्टलाभाः वाच्याः ॥ २७ ॥

भाषा—लग्न से या लग्नेश से जितने शुभग्रह सप्तम, नवम, द्वादश में हों, उतने जगह पर रास्ता में अभ्युदय होते हैं ॥ २७ ॥

**क्रूरयुक्तेक्षितो मन्दः शुभदृग्योगवर्जितः ।**
**धर्मस्थस्तनुते व्याधिं प्रोषितस्याष्टगो मृतिम् ॥ २८ ॥**

क्रूरयुक्तेक्षितः = पापयुतदृष्टः, शुभदृग्योगवर्जितः, मन्दः = शनिः धर्मस्थः = नवमस्थानस्थितः, तदा व्याधिं = रोगं तनुते । यदि तादृशः शनिः अष्टगः = अष्टमस्थः, तदा प्रोषितस्य = प्रस्थितस्य, विदेशिनः मृतिं = मरणं, तनुते = दिशति ॥ २८ ॥

भाषा—यदि शनि पापग्रह से युत दृष्ट हो, लेकिन शुभग्रह की दृष्टि योग से वर्जित हो और नवम स्थान में हों, तो रोग होता है । यदि पापयुत दृष्ट, शुभ योग दृष्टि रहित शनि आठवें में हो, तो मरण होता है ॥ २८ ॥

जामित्रस्य शुभोत्थे याता नायाति दुरुधुरायोगे।
मित्रस्वामिनिषेधात्पापोत्थे शत्रुरुक्चौरात् ॥ २९ ॥

आमित्रस्य = सप्तमस्य, शुभोत्थे=शुभग्रहजनिते, दुरुधुरायोगे, सप्तमभावे यदि चन्द्रः षष्ठाष्टमगतौ शुभौ च भवत इत्यर्थः, तदा याता = प्रस्थितो जनः मित्रस्वामिनिषेधात् न आयाति। एवं पापोत्थे दुरुधुरायोगे शत्रुरुक्चौरात्=वैरिरोगतस्करोपद्रवपतनात्, न आयाति ॥ २९ ॥

भाषा—यदि चन्द्रमा सप्तम में हो, उसके आगे पीछे शुभग्रह हों, तो पथिक मित्र या मालिक के रोकने से, वहां यदि सप्तमस्थ चन्द्रमा से आगे पीछे पापग्रह हो, तो शत्रु और रोग के कारण परदेशी नहीं आता है ॥ २९ ॥

चन्द्रार्कयोश्छिद्रगयोर्यमेन संदृष्टयोः स्यात्परशस्त्रभीतिः।
रन्ध्रे सिते ज्ञे च सुखाप्तिरारे मन्दे भयं पापयुगीक्षितेऽध्वनि॥३०॥

चन्द्रार्कयोः = चन्द्रसूर्ययोः, छिद्रगयोः=अष्टमस्थानगयोः, यमेन = शनिना संदृष्टयोस्तदा परशस्त्रभीतिः = शत्रुशस्त्रभयं स्यात्। वा सिते = शुक्रे, ज्ञे=बुधे च रन्ध्रे= अष्टमे सति, शुभेक्षिते = शुभयुतदृष्टे तदा सुखाप्तिः = सुखप्राप्तिः सम्भवेत्। अथ आरे = कुजे, मन्दे = शनौ च रन्ध्रे सति तथा पापयुगीक्षिते च सति अध्वनि = मार्गे भयं वदेत् ॥ ३० ॥

भाषा—रवि चन्द्रमा यदि अष्टम में हों, शनि से देखे जांय, तो शत्रु के शस्त्रका, भय हो। या शुक्र वा बुध अष्टम में हो, तो सुख का लाभ होता है। यदि मङ्गल शनि अष्टम में हो और पापग्रह से युत दृष्ट हो तो रास्ते में भय होता है ॥ ३० ॥

अथ दूरस्थो जीवति मृतो वेत्थं यदा प्रश्नः—

लग्नेऽष्टरे शीतकरेऽथ षष्ठे तुर्येऽष्टमे वाऽप्यतिनीचगे वा।
अस्तंगते छिद्रपतोत्थशालयुक्ते शुभैर्दूरगतो मृतः स्यात् ॥ ३१ ॥
भूमेरधःस्थेन च वक्रगेण यदोत्थशालं कुरुते शशांकः।
सौम्यैरदृष्टे मरणं प्रकुर्याद्दूरस्थितस्यापि विदेशगस्य ॥ ३२ ॥
सौम्यैः षष्ठान्त्यरन्ध्रस्थैर्विबलैश्च शुभेक्षितैः।
पापयुक्तौ शशाङ्कार्कौ तदा दूरस्थितो मृतः ॥ ३३ ॥
पृष्ठोदये पापयुते त्रिकोणकेन्द्राष्टषष्ठोपगतैश्च पापैः।
सौम्यैरदृष्टैः परदेशसंस्थो मृतो गदार्तो नवमे च सूर्ये ॥ ३४ ॥
तुर्योपरिस्थेन खगेन चन्द्रमा यदोत्थशालं कुरुते शुभेक्षितः।

**सौम्यैर्युतो वा परदेशसंस्थितः सुखी च जीवेत्पथि सौख्यमेति ॥३५॥**

लग्नेश्वरे शीतकरे = चन्द्रे षष्ठे वा तुर्ये = चतुर्थे, अपिवा अष्टमे वा अतिनीचगे सति वा अस्तङ्गते वा छिद्रपतीत्थशालयुक्ते = अष्टमेशग्रहेत्थशाले, शुभैः = शुभग्रहैः, अयुक्ते = योगरहिते, तदा दूरगतः = दूरदेशगतः, मृतः स्यात् ॥ ३१ ॥

यदि शशाङ्कः = चन्द्रः, भूमेः = चतुर्थस्थानात् , अधःस्थेन = पूर्वस्थानस्थितेन वक्रगेण = वक्रगतेन, इत्थशालं कुरुते, तथा सौम्यैः = शुभैः अदृष्टे, तदा दूरस्थितस्य विदेशगस्यापि मरणं प्रकुर्यात् ॥ ३२ ॥

सौम्यैः = शुभैः षष्ठान्त्यरन्ध्रस्थैः=६।८।१२ एतत्स्थानगतैः, विबलैः=हीनबलैः, अशुभेक्षितैः=पापदृष्टैः, तदा दूरस्थितो जनः = मृतो वाच्यः। यदि वा शशाङ्कार्कौ पापयुक्तौ तदाऽपि दूरस्थितः = परदेशगतः, मृतो वाच्यः ॥ ३३ ॥

पृष्ठोदये लग्ने, पापयुते, पापैः त्रिकोणकेन्द्राष्टषष्ठोपगतैः ९ ५।१।४।७।१०।६।८ स्थितैः सौम्यैः=शुभैः, अदृष्टैः, तदा परदेशसंस्थः मृतो वाच्यः। सूर्ये नवमस्थे सति गदार्त्तः=रोगपीड़ितो वाच्यः ॥ ३४ ॥

यदि चन्द्रमास्तुर्योपरिस्थेन ग्रहेण इत्थशालं कुरुते, तथा च शुभेक्षितश्च भवेत् वा सौम्यैः युतः भवेत् , तदा सुखी जीवेच्च, पथि सौख्यम् एति=गच्छति ॥ ३५ ॥

भाषा—यदि लग्नेश चन्द्रमा छठे स्थान में या चौथे, वा आठवें स्थान में हो, या नीच में हो, या अस्त हो, अष्टमेश से इत्थशाल करता हो, शुभग्रहों से युत नहीं हो तो परदेशी का मरण कहना ॥ ३१ ॥

यदि चन्द्रमा चतुर्थस्थान से पूर्व ३।२।१ स्थानों में स्थित वक्री ग्रह से इत्थशाल करता हो तो परदेशी का मरण कहना ॥ ३२ ॥

शुभग्रह छठे बारहवें आठवें स्थान में हों, बलहीन हों, पापग्रह से दृष्ट हों तो परदेशी का मरण कहना। अथवा चन्द्रमा रवि यदि पापग्रह से युक्त हों तो भी परदेशी को मृत कहना ॥ ३३ ॥

अथवा पृष्ठोदय राशि लग्न हो, पाप युत हो और पापग्रह सब ९।५।१।४।७।१०।६।८ इन स्थानों में हों, और शुभग्रहों से देखे नहीं जाय, तो परदेशी को मृत कहना। सूर्य नवम में हों, तो रोग से पीड़ित कहना ॥ ३४ ॥

यदि चन्द्रमा चतुर्थस्थान से आगे ( ५।६।७।८।९।१० ) इन स्थानों में कहीं भी स्थित ग्रह से इत्थशाल करता हो, और शुभग्रह से दृष्ट भी हो, युत भी हो, तो परदेशी सुखी, जीता हुआ रास्ते में सुखपूर्वक आता है ॥ ३५ ॥

अथ परचक्रागमनपृच्छा ( षट्पञ्चाशिकायाम् )—

मार्गान्निवर्तते शत्रुः पापैः शत्रुगृहाश्रितैः।
चतुर्थगैरपि प्राप्तः शत्रुर्भग्नो निवर्तते ॥ ३६ ॥
झषालिकुम्भकर्कटा रसातले यदा स्थिताः।
रिपोः पराजयस्तदा चतुष्पदैः पलायनम् ॥ ३७ ॥
मेषधनुसिंहवृषा यद्युदयस्था भवंति हिबुके वा।
शत्रुनिवर्ततेऽत्र ग्रहसहिता वा वियुक्ता वा ॥ ३८ ॥
नागच्छति परचक्रं यदाऽर्कचन्द्रौ चतुर्थभवनस्थौ।
गुरुबुधशुक्रा हिबुके यदा तदा शीघ्रमायाति ॥ ३९ ॥
स्थिरोदये जीवशनैश्चरे स्थिते गमागमौ नैव वदेत्तु पृच्छतः।
त्रिपञ्चषष्ठा रिपुसंगमाय पापाश्चतुर्था विनिवर्तनाय ॥४०॥
दशमोदयसप्तमगाः सौम्या नगराधिपस्य विजयकराः।
आरार्कौ ज्ञगुरुसिताः प्रभंगदौ विजयदा नवमे ॥ ४१ ॥
उदयर्क्षाच्चन्द्रर्क्षं भवति च यावद्दिनैश्च तावद्भिः।
आगमनं स्याच्छत्रोर्यदि न हि मध्ये ग्रहः कश्चित् ॥ ४२ ॥

पापैः शत्रुगृहाश्रितैः शत्रुः मार्गान्निवर्त्तते। चतुर्थगैः पापैस्तु प्राप्तः अपि शत्रुः भग्नः सन् निवर्त्तते ॥ ३६ ॥

रसातले = चतुर्थस्थाने, यदा झषालिकुम्भकर्कटाः राशयः स्थितास्तदा रिपोः=शत्रोः पराजयः स्यात्, तदा तु चतुष्पदैः शत्रोः पलायनं वाच्यम्। वा चतुर्थस्थाने चतुष्पदराशिगतैः शत्रोः पलायनं भवति ॥ ३७ ॥

यदि मेष–धनुः–सिंह–वृषाः अर्थाच्चतुष्पदा राशयः उदयस्थाः = लग्नस्थाः वा हिबुके=चतुर्थे स्थिताः, तथा ग्रहसहिता वा ग्रहेण वियुक्तास्तदाऽपि शत्रुः निवर्त्तते॥ ३८॥

यदा अर्कचन्द्रौ चतुर्थभवनस्थौ तदा परचक्रम् = शत्रुवर्गः न आगच्छति वा यदा बुधगुरुशुक्रा हिबुके = चतुर्थे स्थितास्तदा शीघ्रं शत्रुः आयाति ॥ ३९ ॥

स्थिरोदये = स्थिरराशिलग्ने सति तत्र जीवशनैश्चरे = गुरुशनिग्रहे स्थिते तदा पृच्छतः गमागमौ नैव वदेत्। पापाः त्रिपञ्चषष्ठे स्थितास्तदा रिपुसङ्गमाय भवन्ति। पापाश्चतुर्थे स्थितास्तदा विनिवर्त्तनाय भवन्ति ॥ ४० ॥

सौम्याः = शुभग्रहाः दशमोदयसप्तमगाः, तदा नगराधिपस्य=राज्ञः विजयकराः

भवन्ति। आरार्की = भौमशनी, नवमे प्रभङ्गदौ भवतः। शगुरुसिताः = बुध गुरु शुक्राः नवमे विजयदा भवन्ति। ४१॥

उदयर्क्षात् = लग्नराशितः, चन्द्रर्क्षं = चन्द्रराशिः, यावद्भवति, तावद्भिर्दिनैः शत्रोरागमनं वाच्यम्। यदि कश्चिद्ग्रहस्तन्मध्ये नहि भवेत्॥ ४२॥

भाषा—पापग्रह शत्रुगृह में हो, तो शत्रु रास्ता ही से लौटता है। यदि पापग्रह चौथे स्थान में हो, तो पहुंचा हुआ भी शत्रु हारकर भाग जाय॥ ३६॥

यदि चौथे स्थान में मीन, वृश्चिक, कुम्भ, कर्क अर्थात् जलचर राशि हो, तो शत्रु की पराजय होती है। वा चतुर्थस्थान में चतुष्पद (मेष, वृष, सिंह, धनुः) राशि हों तो शत्रु भाग जाता है॥ ३७॥

यदि मेष, वृष, धनु, सिंह राशि लग्न में वा चतुर्थस्थान में हो, तो उन में ग्रह हो या न हो दोनों दशा में शत्रु लौट जाता है॥ ३८॥

यदि रवि, चन्द्रमा चतुर्थस्थान में हों, तो शत्रु वर्ग नहीं आता है। या बुध, गुरु, शुक्र चौथे में हों, तो शत्रु शीघ्र आता है॥ ३९॥

स्थिरराशि लग्न हो उस में बृहस्पति, शनि स्थित हों, तो प्रश्न कर्त्ता का आना जाना नहीं होता, यदि पापग्रह २।४।६ में हो, तो शत्रु से शमागम होता है। यदि पापग्रह चौथे में हो तो शत्रु लौट जाता है॥ ४०॥

शुभग्रह यदि दशम प्रथम सप्तम में हो तो राजा की जीत होती है। यदि मङ्गल, शनि, नवम में हों तो हार होती है। बुध, गुरु और शुक्र नवमस्थान में हों, तो विजय होती है॥ ४१॥

लग्न राशि से चन्द्रमा के राशिपर्यन्त जितने राशि हों, उतने ही दिनों में शत्रु का आगमन कहना। यदि लग्न चन्द्रमा के मध्य और कोई ग्रह नहीं हो तो ऐसा समझना॥ ४२॥

अन्यत्रापि प्रश्नप्रदीपे—

दैत्येज्यवाचस्पतिसोमपुत्रैरेकत्रगैर्लग्नगतैर्बलाढ्यैः।
द्वाभ्यामथेज्ये भृगजेऽथ लग्ने हन्याद्रणे यायिनृपं पुरेशः॥४३॥
सूर्येन्दुभौमार्कजसैंहिकेयैः सर्वैश्चतुर्भिस्त्रिभिरेव लग्नगैः।
हन्यात्तदा स्थायिनमाशु यायी द्यूनस्थितैर्यायिनृपं पुरेशः॥४४॥
शुक्रेज्यशीतांशुबुधामरेज्यैः सर्वैस्त्रिभिर्द्यूनगतैर्बलाढ्यैः।
हन्याद्रणे स्थायिनमाशु यायी सुखास्पदस्थैश्च शुभैः सुसन्धिः॥४५॥
कुजेत्थशाले हिमगौ विलग्ने बन्धोऽथ मृत्युर्युधि नागरस्य।
भौमेत्थशाले च विधौ कलत्रे बन्धं मृतिं वा लभतेऽत्र यायी॥ ४६॥

लग्नेशजामित्रपयोश्च मध्ये भवेद्ग्रहो यः स्वगृहोच्चसंस्थः ।
तद्वर्गमत्या नृपयोश्च संधिर्ज्ञेयो बुधैर्लेखकपण्डिताभ्याम् ॥ ४७ ॥
क्रूरे कलत्रे ह्युदये शुभग्रहो यच्छेद्धनं यायिनृपाय नागरः ।
विपर्ययाद्यायिनृपः पुरेश्वरं दुर्गादिनिष्काश्य ददाति वाऽऽस्पदम् ॥४८॥
रवीत्थशाले शशिजे सुगुप्ताश्चरा भवेयुश्च कुजेसराफात् ।
ग्रहाच्छशाङ्केन युतश्च तस्मिन् ये येऽन्यवेषाश्च भवन्ति चाराः ॥ ४९ ॥

अथ बलाढ्यैः = बलयुक्तैः, दैत्येज्यवाचस्पतिसोमपुत्रैः = शुक्रजीवबुधैः, एकर्क्षगैः, वा लग्नगतैः अथवा शुक्रजीवबुधेषु द्वाभ्यां लग्नगताभ्यां, अथवा ईज्ये = जीवे, वा भृगुजे = शुक्रे लग्ने सति पुरेशः = नगरेशः, रणे = संयुगे यायिनृपं = आगन्तुकराजानं हन्यात् = नाशयेत् ॥ ४३ ॥

सूर्येन्दुभौमार्कजसैंहिकेयैः = रविचन्द्रकुजशनिराहुभिः, एतैः सर्वैः, वा तेषु चतुर्भिः, वा त्रिभिः ग्रहैः लग्नगैः, तदा यायी नृपः, स्थायिनं नृपं हन्यात् । वा तेषु सर्वैः वा त्रिभिः ग्रहैः द्यूनगतैः, तदा पुरेशः नृपः यायिनृपं हन्यात् ॥ ४४ ॥

वा शुक्रेज्यशीतांशुबुधामरेज्यैः = शुक्रगुरुचन्द्रबुधैः सर्वैः, वा त्रिभिर्बलाढ्यैर्ग्रहैः द्यूनगतैः = सप्तमस्थानगतैः, तदा रणे = संग्रामे यायी नृपः स्थायिनं नृपम् आशु हन्ति । यदि तैर्ग्रहैः सुखास्पदस्थैः = चतुर्थदशमगतैः शुभैः सुसन्धिः = यायिस्थायिनोर्मेलनं भवति ॥ ४५ ॥

हिमगौ = चन्द्रे विलग्ने, कुजेत्थशाले, तदा नागरस्य = नगरेशस्य, युधि = रणे, बन्धः = बन्धनं, अथवा मृत्युर्मरणं स्यात् । वा विधौ = चन्द्रे कलत्रे = सप्तमे भौमेत्थशाले, तदा यायी नृपः बन्धं, वा मृतिं = मरणं लभते = प्राप्नोति ॥ ४६ ॥

लग्नेशजामित्रपयोः = लग्नेशसप्तमेशयोर्मध्ये यः कश्चिद्ग्रहः स्वगृहोच्चसंस्थः, भवेत्, तद्वर्गमत्या = तत्तस्य ग्रहस्य यो भूप-सेनापति—कुमार-मन्त्रिदासानामन्यतमो वर्गः स्याद्यथा रविचन्द्रौ राजानौ, कुजः सेनापतिः, बुधो राजकुमारः, गुरुभृगू मन्त्रिणौ, शनिः किङ्करः, एवं तस्य मत्या = संमत्या लेखकपण्डिताभ्यां नृपयोः = यायिस्थायिनोः सन्धिः ज्ञेयः ।

तथोक्तं बृहज्जातके—"राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः ॥ इति ॥ ४७ ॥

कलत्रे = सप्तमे, क्रूरे = पापग्रहे सति, शुभग्रहः उदये = लग्ने सति नागरः =

नगरेशः, यायिनृपाय धनं यच्छेत् = प्रयच्छति । विपर्ययात्=ऊक्तवैपरीत्यात्, यायिनृपः पुरेश्वरं दुर्गात् = निजगुप्तगारात् निष्काश्य आस्पदं = स्थानं ददाति ॥ ४८ ॥

शशिजे बुधे सप्तमे रवीत्थशाले तदा चराः=गुप्तवेशधरा राजकार्यकराः भवेयुः । च = पुनः कुजेसराफात्=भौमकृतेसराफयोगात्, ग्रहात, शशाङ्केन=चन्द्रेण यो ग्रहो युतः स्यात्, तस्मिन् ग्रहे, अन्यवेषाः = गुप्ताः चरा भवन्ति ॥ ४९ ॥

भाषा—शुक्र, गुरु, बुध ये किसी एकस्थान में या लग्न ही में बली होकर हों, या इन ग्रहों में दो, या केवल गुरु या शुक्र लग्न में हों, तो लड़ाई में स्थायी नरेश यायी राजा को मारता है ॥ ४३ ॥

रवि, चन्द्र, कुज, राहु इन में सब, या तीन ग्रह लग्न में हों, तो यायी राजा जल्दी से स्थायी को मारता है। यदि ये चारो ग्रह सप्तम में हों, तो स्थायी राजा यायी राजा को मारता है ॥ ४४ ॥

शुक्र, गुरु, चन्द्र, बुध ये सब, या इन में से ३ तीन ग्रह बलयुक्त होकर सप्तम में हों, तो शीघ्र ही यायी राजा स्थायी को लड़ाई में मारता है। और यदि शुभग्रह चौथे दशवें में हों, तो दोनों में सन्धि हो जाती है ॥ ४५ ॥

मङ्गल से इत्थशाल करता हुआ चन्द्रमा यदि लग्न में हों, तो लड़ाई में स्थायी नरेश का बन्धन या मरण होता है। या मङ्गल से इत्थशाल करता हुआ चन्द्रमा सप्तम में हों, तो यायी राजा की बन्धन ही में मृत्यु होती है ॥ ४६ ॥

लग्नेश सप्तमेश इन दोनों में जो ग्रह अपने गृही, अपने उच्च में हों, तो दोनों राजाओं में लेखक ( मोहरिर बकील ) से पण्डित से मेल होता है, यह जानना ॥४७॥

पापग्रह यदि सातवें स्थान में हो, या लग्न में शुभग्रह हो, तो स्थायी राजा यायी को धन देता है, लड़ाई का खर्चा लौटाता है। इसके विपरीत में यायी राजा स्थायी को अपने किला से निकाल कर स्थान देता है ॥ ४८ ॥

यदि रवि के साथ इत्थशाल करता हुआ बुध सप्तम में हों, तो गुप्तचर होना चाहिये। यदि मङ्गल के साथ ईसराफ योग होता हो, और चन्द्रमा से संयुत हो, तो गुप्त वेषधारी चर ( डिटेक्टिभ ) कर्मचारी लोग होते हैं ॥ ४९ ॥

अथ प्रश्नचिन्तामणौ दुर्गप्रश्नः—

प्रश्ने विलग्ने क्रूरे वा दुर्गभङ्गो हि जायते ।
विशेषतो भूमिपुत्रे राहौ वा मूर्तिगे सति ॥ ५० ॥
सप्तमे सिंहिकासूनौ दुर्गं शीघ्रेण लभ्यते ।
जामित्रोदयगे क्रूरे रिःफगे लग्ननायके ॥ ५१ ॥
द्वितीये वाऽष्टमे षष्ठे तदा दुर्गं न लभ्यते ।

सक्रूरो लग्नपो वक्री युद्धदः केन्द्रसंस्थितः ॥ ५२ ॥
षष्ठाधिपे द्यूनगते पापे वा युद्धमादिशेत्।
पृच्छायां केन्द्रगैः क्रूरैः कीटे दुर्गे वधो नृणाम् ॥ ५३ ॥
भौमाष्टमेशावेकत्र तदाऽतिनिधनं नृणाम्।
स्वायपुत्रस्थिते जीवे कोटमध्ये भयं नहि।
शनौ भौमे च केन्द्रस्थे बहूनां वधबन्धनम् ॥ ५४ ॥
लग्नगतो यदि पापः पापेन युतेक्षितो वा स्यात्।
लग्नात्पूर्वापरगौ पापौ युद्धं तदा घोरम् ॥ ५५ ॥

प्रश्ने = प्रश्नकाले, क्रूरे = पापे विलग्ने सति दुर्गभङ्गः जायते, (तत्र)भूमिपुत्रे= कुजे, वा राहौ लग्नगे सति विशेषतः, दुर्गभङ्गः जायते। वा सिंहिकासूनौ = राहौ सप्तमे सति शीघ्रेण दुर्गं लभ्यते। क्रूरे = पापे, जामित्रोदयगे=सप्तमलग्नगे, लग्न-नायके = लग्नेशे, रिःफगे = द्वादशे, वा द्वितीये, वा अष्टमे षष्ठे भवेत्तदा पुनः दुर्गं न लभ्यते। सक्रूरः = सपापः, वक्री = विलोमगतिकः, लग्नपः = लग्नेशः, केन्द्रसं-स्थितः = १।४।७।१० एतत्स्थानस्थितः सन् युद्धदः भवति ॥ ५०–५२ ॥

षष्ठाधिपे = षष्ठेशे, वा पापे द्यूनगते = सप्तमस्थे, तदा युद्धम् आदिशेत्=कथ-येत्। पृच्छायां = प्रश्ने, क्रूरैः = पापैः केन्द्रगैः, तत्रापि कीटे = कर्कवृश्चिकराश्य-न्यतरे नृणां दुर्गे बधः = नाशः भवति ॥ ५३ ॥

वा भौमाष्टमेशौ, एकत्र यत्र कुत्रापि स्थाने भवतः, तदा नृणाम् अतिनिधनं = कष्टान्मरणं भवति। तत्र जीवे स्वायपुत्रस्थिते = द्वितीयैकादशपञ्चमस्थानस्थिते कीटराशिमध्ये च स्थिते तदा भयं नहि भवति। शनौ भौमे च केन्द्रस्थे, तदा बहूनां जनानां वधबन्धनम् आदिशेत् = कथयेत् ॥ ५४ ॥

यदि पापः लग्नगतः वा पापेन युतेक्षितः, स्यात्, तदा घोरं युद्धं वाच्यम्। वा लग्नात् पापौ पूर्वापरगौ, अर्थात् कर्त्तरीयोगे सति, तदा घोरं=भयङ्करं, युद्धं वाच्यम् ॥ ५५ ॥

भाषा—प्रश्नकाल में यदि लग्न में पापग्रह हो, तो किला का भङ्ग होता है। उसमें भी यदि मङ्गल या राहु लग्न में हो, तो विशेषरूप से किला का भङ्ग होता है ॥ ५० ॥

यदि राहु सप्तम में हो, तो शीघ्र किला का लाभ होता है। यदि पापग्रह सप्तम में या लग्न में हो, और लग्नेश द्वादशस्थान में हो, या दूसरे, आठवें, छठे स्थान

में हो, तो किला फिर नहीं मिलता है। पापग्रह से युक्त लग्नेश वक्री होकर यदि केन्द्र में स्थित हो, तो युद्ध को देता है॥ ५१-५२॥

यदि षष्ठेश या पापग्रह सप्तम में हों, तो युद्ध कहना। प्रश्न काल में पापग्रह केन्द्र में हों, या कर्क वृश्चिक में हों, तो किला ही में आदमियों के नाश होते हैं॥ ५३॥

मङ्गल और अष्टमेश ये यदि एकस्थान में हों, तो मनुष्यों के विशेष नाश होते हैं। वहां यदि बृहस्पति २।११।५ इन स्थानों में हो, या कीटराशि में हो, तो किसी बात का भय नहीं होता है। शनि मङ्गल यदि केन्द्र में हों, तो बहुतेरे आदमियों का वध और बन्धन होता है॥ ५४॥

यदि पापग्रह लग्न में स्थित हों, पापग्रह से युत या दृष्ट हों, तो घोर युद्ध होता है। यदि लग्न राशि से अग्र पश्चात् पापग्रह हो, अर्थात् कर्त्तरीयोग होता हो, तो भी भयङ्कर लड़ाई होती है॥ ५५॥

अथ रोगिणः शुभाशुभविचारः—

विलग्ने षष्ठपः पापो जन्मराशिं निरीक्षते।
रोगिणस्तस्य मरणं निश्चयेन वदेद्बुधः॥ ५६॥
चतुर्थाष्टमगे चन्द्रे पापमध्यगतेऽपि वा।
मृतिः स्याद्बलसंयुक्तसौम्यदृष्ट्याऽचिरात्सुखम्॥ ५७॥
विधौ लग्ने स्मरे भानौ रोगी याति यमालयम्।
प्रश्ने क्रूरग्रहे लग्ने रोगवृद्धिश्चिकित्सकात्॥ ५८॥
तथा लग्नगते सौम्ये वैद्योक्तममृतं वचः।
लग्नं वैद्यो द्युनं व्याधिः खं रोगी तुर्यमौषधम्॥ ५९॥
रोगिणो भिषजो मैत्री मैत्री भेषजरोगयोः॥
व्याधेरुपशमो वाच्यः प्रकोपः शात्रवे तयोः॥ ६०॥
लग्ननाथे च सबले केन्द्रसंस्थे शुभग्रहे।
उच्चगे वा त्रिकोणे वा रोगी जीवति निश्चयम्॥ ६१॥
एकः शुभो बली लग्ने त्रायते रोगपीडितम्।
सौम्या धर्मारिलाभस्थास्तृतीयस्था गदापहाः॥ ६२॥

षष्ठपः = षष्ठेशः वा पापः विलग्ने स्थितः जन्मराशिं निरीक्षते = पश्यति तदा बुधः = गणकः तस्य रोगिणः यस्य विषये प्रश्नः कृतस्तस्य निश्चयेन मरणं वदेत्॥ ५६॥

चन्द्रे चतुर्थाष्टमगे, अपि वा पापमध्यगते सति मृतिः स्यात्। तत्र बलयुक्तशुभग्रहदृष्ट्या दृष्टे सति अचिरात्=सत्वरमेव सुखं स्यात् ॥ ५७ ॥

विधौ = चन्द्रे लग्ने सति भानौ = सूर्ये स्मरे = सप्तमे सति अर्थात् पूर्णिमायां सन्ध्यायां यदि प्रश्नः स्यात्तदा रोगी जनः यमालयं=यमगृहं याति। प्रश्ने क्रूरग्रहे=पापग्रहे लग्ने सति चिकित्सकात्=वैद्यात् रोगवृद्धिः भवति ॥ ५८ ॥

तथा सौम्ये = शुभग्रहे लग्नगते सति, वैद्योक्तम् अमृतं वचो वचनं भवति। अत्र लग्नं=लग्नराशिशीलः, वैद्यः=चिकित्सकः, द्यूनं=सप्तमं, व्याधिः=रोगः, खं=दशमस्थानं रोगी, तुर्यं = चतुर्थस्थानम्, औषधं भवति ॥ ५९ ॥

रोगिणः = दशमेशस्य, भिषजः=लग्नेशस्य यदि मैत्री, वा भेषजरोगयोः=औषधरोगयोर्मैत्री स्यात्तदा व्याधेः = रोगस्य उपशमः = प्रशमः,निवृत्तिः, स्यात्, तयोः लग्नेशदशमेशयोः शात्रवं = शत्रुभावे सति व्याधेः प्रकोपः वाच्यः ॥ ६० ॥

सबले = बलयुक्ते, लग्ननाथे = लग्नेशे शुभग्रहे, केन्द्रसंस्थे च सति वा उच्चगे = स्वोच्चराशिगते वा त्रिकोणे = मूलत्रिकोणे, सिंहवृषाजप्रमदाकार्मुकभृत्तौलिकुम्भधराः इति परिभाषिते त्रिकोणे सति रोगी निश्चयं जीवति ॥ ६१ ॥

बली एकः शुभग्रहः लग्ने स्थितः तदा रोगपीडितं = रोगिणं, त्रायते=रक्षति। सौम्याः=शुभग्रहाः, धर्मारिलाभतृतीयस्थाः=९।६।११।३ एषु स्थितास्तदा गदापहाः=रोगशान्तिकरा भवन्ति ॥ ६२ ॥

भाषा—षष्ठेश या पापग्रह लग्न में हों, लग्न को देखें भी, तो रोगी का मरण होता है ॥ ५६ ॥

चन्द्रमा ४।८ में हो या पापों के बीच में हो, तो रोगी का मरण कहना। वहां बली शुभग्रह से दृष्ट हो, तो जल्दी से रोग आराम होता है ॥ ५७ ॥

चन्द्रमा लग्न में हो, रवि सप्तम में हो, अर्थात् पूर्णिमा की सन्ध्या में प्रश्न हो, तो रोगी यमपुर जाता है, अर्थात् मरता है। प्रश्नकाल में पापग्रह लग्न में हो, तो वैद्य के दोष से रोग बढ़ता है ॥ ५८ ॥

शुभग्रह लग्न में हो, तो वैद्य की मीठी बोल होती है। यहां लग्न राशि वैद्य समझना, सप्तम को व्याधि, दशम को रोगी, चतुर्थस्थान को औषध समझना ॥५९॥

यहां यदि लग्नेश दशमेश की मित्रता हो, तो रोग का नाश होता है। यदि लग्नेश दशमेश की शत्रुता हो, तो रोग का प्रकोप हो ॥ ६० ॥

लग्नेश शुभग्रह हो और बली होकर केन्द्र में स्थित हो, और उच्च में या त्रिकोण में हो, तो रोगी जरूर जीता है ॥ ६१ ॥

एक भी शुभग्रह बली होकर लग्न में हो, तो रोगी की रक्षा होती है। यदि शुभ ग्रह नवमें, छठे, ग्यारहवें, और तीसरे स्थान में हों, तो रोग का नाश होता है ॥६२॥

अथ देवदोषज्ञानम्—

वह्न्यङ्कद्वादशे षष्ठे लग्नात्पापग्रहो यदि।
हतो गदैर्जलैश्शास्त्रैस्तस्य दोषः कुलोद्भवः ॥ ६३ ॥

प्रेताश्च राहौ पितरः सुरेज्ये चन्द्रेऽम्बुदेव्यस्तपनेऽपि देव्यः।
स्वगोत्रदेव्यश्च शनौ बुधे च भूतानि विन्द्याद्व्ययरन्ध्रसंस्थे ॥ ६४ ॥
शाकिन्य आरे भृगुजेऽम्बुदेव्यो गृह्णन्ति मर्त्यं विमुखं मुकुन्दात्।
स्वर्क्षोच्चगे वीर्ययुते च साध्याश्चन्द्रे च नीचे विबले न साध्याः ॥ ६५ ॥

केन्द्रस्थैर्बलिभिः पापैरसाध्या देवतागणाः।
सौम्यग्रहैश्च केन्द्रस्थैः साध्या मन्त्रस्तवार्चनैः ॥ ६६ ॥
कण्टकार्थत्रिकोणस्थाः शुभा उपचये शशी।
लग्ने च शुभसंदृष्टे रोगी रोगाद्विमुच्यते ॥ ६७ ॥

लग्नात् यदि पापग्रहः वह्न्यङ्कद्वादशे षष्ठे ३।९।६।१२ स्थाने, अर्थादापोक्लिमे भवेत् तदा तस्य गदैः=रोगैः, जलैः=सलिलदोषैः, शास्त्रैः, कुलोद्भवः=वंशप्रमागतः दोषः स्यात् ॥ ६३ ॥

तत्र राहौ व्ययरन्ध्रसंस्थे=द्वादशाष्टमस्थानस्थिते सति, प्रेताः दोषकराः स्युः। सुरेज्ये अष्टमव्ययस्थे पितरः दोषकराः वाच्याः। चन्द्रेऽष्टमव्ययस्थे अम्बुदेव्यः= जलदेवाङ्गनाः दोषकर्त्र्यः। तपने=सूर्येऽष्टमव्ययस्थे सति देव्यः=कुमारीप्रेता बाधका वाच्याः। तत्रापि शनौ चाष्टमव्ययस्थे सति स्वगोत्रदेव्यः=स्वकुलदेवताः, बाधका ज्ञेयाः। बुधे व्ययाष्टमस्थे सति भूतानि=मृतनराः, दोषकराः। आरे= कुजेऽष्टमव्ययस्थे सति शाकिन्यः दोषकर्त्र्यः। भृगुजे = शुक्रे, व्ययाष्टमस्थे सति अम्बु देव्यः=जलदेवताः मुकुन्दात्=विष्णोः विमुखं = विष्णुभक्तिहीनं मर्त्यं गृह्णन्ति। चन्द्रे स्वर्क्षोच्चगे = कर्कटवृषगते वीर्ययुक्ते च सति रोगाः साध्याः=भवन्ति। वा चन्द्रे नीचे=वृश्चिके, विबले=बलशून्ये च सति साध्याःचिकित्सायोग्या न भवन्ति ॥६४-६५॥

बलिभिः पापैः केन्द्रस्थैः, तदा देवतागणाः असाध्याः भवन्ति। सौम्यग्रहैः केन्द्रस्थैस्तदा मन्त्रस्तवार्चनैः=जपस्तुतिपूजनैः साध्याः भवन्ति ॥ ६६ ॥

शुभाः=शुभग्रहाः, कण्टकार्थत्रिकोणस्थाः=१।४।७।१०।८।९।५ स्थिताः, शशी=

चन्द्रः उपचये=३।६।१०।११ एतदन्यतमे स्थाने भवेत्, लग्ने च शुभसन्दृष्टे तदा रोगी जनः रोगात् विमुच्यते ॥ ६७ ॥

भाषा—लग्न से पापग्रह यदि ३।९।६।१२ वें स्थान में हो, तो रोग से, जल से, और शस्त्र से वंशक्रमागत रोग होता है ॥ ६३ ॥

वहाँ यदि राहु ८।१२ वें में हो तो प्रेतदोष से रोग हो, बृहस्पति ८।१२ वें में हो तो पितर के दोष से व्याधि कहना। चन्द्रमा ८।१२ वें में हो तो जलदेवी के दोष से रोग हो। सूर्य ८।१२ वें में हो, तो देवी के दोष से रोग कहना। शनि ८।१२ में हो, तो अपनी कुल देवता के दोष से रोग कहना। बुध ८।१२ वें में हो, तो भूत, प्रेत बाधक होते हैं। मङ्गल ८।१२ वें में हो, तो शाकिनी का दोष। शुक्र १२।८ वें में हो तो जलदेवीका दोष, विष्णुभक्तिविहीन को पकड़ता है। चन्द्रमा कर्क या वृष के हों, और बलवान् हों, तो रोग साध्य होता है। यदि चन्द्रमा नीच (वृश्चिक) के हों, और बलहीन हों, तो रोग असाध्य होता है ॥ ६४-६६ ॥

बली पापग्रह यदि केन्द्र में हों, तो देवगण पूजित होने पर भी रोग नहीं छुड़ाते। यदि शुभग्रह केन्द्र में हों, तो मन्त्रों के जप से देवता की स्तुति से पूजासे देवता साध्य होते हैं। तब रोग का नाश होता है ॥ ६७ ॥

त्रैलोक्यप्रकाशे—नृपसेवकशुभाशुभप्रश्नः—

शीर्षोदये(३।५।६।७।८।११)सौम्ययुतेक्षिते वा सौम्यैर्द्वितीयाष्टमसप्तमस्थैः।
तृतीयलाभारिगतैश्च पापैः सौख्यार्थलाभो नृपसेवकस्य ॥ ६८ ॥
लग्नाद्द्वितीये मदनाष्टमर्क्षे वित्तक्षयं सम्भ्रममार्तिमृत्युम्।
कुर्वन्ति पापाः क्रमशो नरेन्द्राद्भृत्यस्य तस्मात्परिवर्जयेत्तम् ॥ ६९ ॥
लग्नाद्द्वितीयाष्टमसप्तमर्क्षाः पापाः प्रणाशं नृपभृत्ययोर्द्वयोः।
कुर्वन्ति तेष्वेव गताश्च सौम्याः कुर्युर्धनारोग्यसुखानि चोभयोः ॥ ७० ॥
शशाङ्कसौम्यैरुदयास्तभावौ दृष्टौ युतौ वा सबलैर्न पापैः।
प्रष्टुस्तदा स्याद्वृद्धि पार्थिवस्य स्नेहप्रसादादकृपाप्रतापात् ॥ ७१ ॥

प्रश्नलग्ने=शीर्षोदये सति वा तस्मिन् सौम्ययुतेक्षिते सति, वा सौम्यैः=शुभग्रहैः द्वितीयाष्टमसप्तमस्थैः, पापैः=शनिरविकुजैः, तृतीयलाभारिगतैः, तदा, नृपसेवकस्य=राजसेवननिरतस्य सौख्यार्थलाभः=सुखधनप्राप्तिः, भवति ॥ ६८ ॥

लग्नात् द्वितीये मदनाष्टमर्क्षे=सप्तमाष्टमस्थे स्थिताः पापाः भृत्यस्य=सेवकस्य, नरेन्द्रात्=भूपात् वित्तक्षयं=धननाश, सम्भ्रमं=मनोवेगं, आर्तिं=पीडाम्, मृत्युं=मरणं च कुर्वन्ति। तस्मात्तं नरेन्द्रं वर्जयेत्। लग्नात् पापाः द्वितीयाष्टमसप्तम-

स्थाः, तदा द्वयोर्नृपभृत्ययोः प्रणाशं कुर्वन्ति। सौम्याः=शुभग्रहाः, तेषु=द्वितीयाष्टमसप्तमेषु गताः, तदा उभयोः=नृपसेवकयोः धनारोग्यसुखानि कुर्युः ॥ ६९-७० ॥

शशाङ्कसौम्यैः=चन्द्रबुधगुरुशुक्रैः, उदयास्तभावौ=लग्नसप्तमभावौ दृष्टौ वा युतौ सबलैः पापैः न युतेक्षितौ, भवेताम् तदा प्रष्टुः=प्रश्नकर्तुः, पार्थिवस्य हृदि, अकृपाप्रतीपात्=दयोदयात्, स्नेहप्रसादौ=प्रेमप्रसन्नत्वे च भवतः ॥ ७१ ॥

भाषा—शीर्षोदय राशि प्रश्नलग्न हो, और वह शुभग्रह से युत दृष्ट हो, अथवा सब शुभग्रह २।८।७ इन स्थानों में हों, पापग्रह ३।११।६ में हों, तो राजसेवक को सुख धन लाभ होता है ॥ ६८ ॥

पापग्रह लग्न से २।७।८ में हों, तो क्रमसे राजा से सेवक का धननाश, चित्तका भ्रम, कष्ट, और अन्त में मरण होता है। इसलिये इस दशा में उस मालिक को छोड़ना उचित है ॥ ६९ ॥

पापग्रह लग्न से यदि २।८।७ में हों, तो नौकर और मालिक दोनों का नाश करते हैं। यदि शुभग्रह २।८।७ में हों, तो उन दोनों के धन, आरोग्य, सुख को करते हैं॥७०॥

यदि चन्द्रमा, बुध, गुरु और शुक्र इन सबोंसे लग्न और सप्तम दृष्ट हो, तथा युत भी हो, और सबल पापग्रहों से युत दृष्ट नहीं हो, तो प्रश्नकर्त्ताके लिये राजाके हृदयमें दयासे प्रेम और प्रसन्नता होती है ॥ ७१ ॥

अथान्य ईशो मम भविष्यति न वा? इति प्रश्ने—

षष्ठेश्वरेण व्ययपेन केन्द्रे यदीत्थशालं कुरुते विलग्नपः।
प्रष्टुस्तदाऽन्यः प्रभुरर्थदः स्यादतः प्रतीपान्न भवेत्परः प्रभुः ॥७२॥
लग्नेश्वरे स्वर्क्षगते स्वतुङ्गकेन्द्रस्थिते शीतकरेत्थशाले।
शुभग्रहैर्दृष्टयुते बलान्विते प्रष्टुर्निजस्वाम्यमितार्थलाभः ॥ ७३ ॥
जायेश्वरे स्वोच्चनिजर्क्षसंस्थे केन्द्रस्थिते शीतकरेत्थशालगे।
शुभग्रहैर्दृष्टयुते बलोत्कटैः प्रष्टुस्तदाऽन्यः प्रभुरर्थदो भवेत् ॥७४॥
इदं गृहं वा शुभमन्यदालयं स्थानन्त्विदं वा शुभमन्यदालयम्।
ममात्र भद्रं गमनात्तु तत्र वा पृष्ठोदयोत्थं विधिना विमृश्य ॥७५॥

केन्द्रे = १।४।७।१० स्थाने स्थितः, विलग्नपः = लग्नेशः यदि षष्ठेश्वरेण=षष्ठेशेन, वा व्ययपेन = व्ययेशेन इत्थशालं कुरुते, तदाः प्रष्टुः = प्रश्नकर्तुः अन्यः = द्वितीयः प्रभुः अर्थदः = धनदः स्यात्। अतः प्रतीपात् = विलोमात्, परः = अन्यः, प्रभुः = ईश्वरः अर्थदः न स्यात् ॥ ७२ ॥

लग्नेश्वरे=लग्नेशे, स्वर्क्षगते=स्वराशिस्थिते, स्वतुङ्गकेन्द्रस्थिते=स्वोच्चकेन्द्रगते, शीतकरेत्थशाले=चन्द्रकृतमुथशिलयोगे, बलान्विते=बलयुक्ते, शुभग्रहैः=दृष्ट-युते, तदा प्रष्टुः=प्रश्नकर्त्तुः, निजस्वाम्यर्मितार्थलाभः=स्वप्रभोः अतुलधनला-भः स्यात् ॥ ७३ ॥

जायेश्वरे=सप्तमेशे, स्वोच्चनिजर्क्षसंस्थे, केन्द्रस्थिते, शीतकरेत्थशाले=चन्द्र-कृतमुथशिले, बलोत्कटैः=वीर्ययुक्तैः शुभग्रहैर्दृष्टयुते तदा प्रष्टुः=प्रच्छकस्य अ-न्यः प्रभुः=स्वामी, अर्थदः=धनदः भवेत् ॥ ७४ ॥

इदं गृहं मम शुभं भविष्यति वा अन्यत्=अपरं गृहम् ? वा इदं स्थानं शुभप्रदं भविष्यति ? अत्र मम भद्रं=कुशलम् , वा इतो गमनात् कुशलं ? इत्येवं प्रश्नेषु पृष्ठोदयोत्थं=पृष्ठोदयराशिलग्नजनितं सर्वं विधिना=युक्त्या विमृश्य=विचार्य, फलं बोध्यम् ॥ ७५ ॥

भाषा—केन्द्र ( १।४।७।१० ) में लग्नेश होकर यदि षष्टशसे या व्ययेशसे इत्थ-शाल करता हो, तो प्रश्नकर्त्ता को दूसरे मालिक से धनलाभ होता है। इसके विपरीतसे विपरीत फल कहना ॥ ७२ ॥

लग्नेश अपने राशिमें, अपने उच्चमें, या केन्द्रमें हो, चन्द्रमासे इत्थशाल करता हो, बली हो और शुभग्रहोंसे दृष्ट युत हो तो प्रश्नकर्त्ताको अपने मालिकसे अतुल धन मिलता है ॥ ७३ ॥

सप्तमेश अपने उच्च अपने गृहमें हो, या केन्द्रमें स्थित हो, चन्द्रमा से इत्थशाल होता हो और बलवान् शुभग्रहोंसे दृष्ट युत हो, तो पूछनेवाले को दूसरा मालिक धन देता है ॥ ७४ ॥

यह घर, या यह मकान या यह जगह मुझे अच्छा होगा ? या यहां ही सुख होगा ? या यहांसे जानेपर सुख होगा ? इन प्रश्नोंमें पृष्ठोदय-राशि लग्न होनेसे अच्छा कहना, यह विचार कर फल कहना ॥ ७५ ॥

अथ नष्टद्रव्यलाभप्रश्नः । तत्र धनप्राप्तौ प्रश्नचिन्तामणौ—

प्रश्ने चतुर्थाधिपतिस्तत्रस्थे वाऽवलोकिते ।
अवश्यं वर्तते तत्र धनं चन्द्रेऽथ वा वदेत् ॥ ७६ ॥
वित्तपे धनगे बन्धौ वाऽस्ति तत्र धनं बहु ।
पापे तुर्यगते द्रव्यं स्थितं तूर्णं न लभ्यते ॥ ७७ ॥
भौमे सप्ताष्टराशिस्थे धनमन्यत्र नाप्यते ।
लग्ने तमो रविश्छिद्रे तदा द्रव्यं न लभ्यते ॥ ७८ ॥

( सप्ताष्टदशपातालेशो विधुर्धनदो गुरुः ॥ ७८ ॥ )
लग्नेश्वरे द्यूनगते विलग्ने जायेश्वरे नष्टधनस्य लाभः।
जायेशलग्नाधिपतीत्थशाले द्यूने विनष्टं धनमेति मर्त्यः ॥ ७९ ॥
लग्नेशजायाधिपतीत्थशाले लग्नेश्वरं यच्छति तस्करोऽर्थम्।
सूर्ये विलग्नेऽस्तमिते शशाङ्के न लभ्यते यद्द्रविणं विनष्टम् ॥८०॥
कर्मेशलग्नाधिपतीत्थशाले चौरः स्वमादाय पुरात्पलायते।
चन्द्रेऽस्तपे चार्ककरप्रविष्टे तल्लभ्यते नष्टधनं सतस्करम् ॥ ८१ ॥
अस्तेश्वरे केन्द्रगतेऽस्ति चौरस्तत्रैव वाऽन्यत्र पुराद्विनिर्गतः।
धर्मेशदुश्चिक्यपतीत्थशाले जायेश्वरेऽन्यत्र गतः स चौरः ॥ ८२ ॥
कर्मेशलग्नाधिपतीत्थशाले यल्लभ्यते राजकुलाच्च चौर्यम्।
त्रिधर्मपद्यूनपतीत्थशाले त्वन्यप्रदेशाद्गमने तदाप्तिः ॥८३॥
शुभेत्थशाले हिमगौ विलग्ने खस्थेऽथ वा नष्टधनस्य लाभः।
सुस्नेहदृष्ट्या रविणा शुभेन दृष्टे विलग्ने हिमगौ च लाभः ॥८४॥

चतुर्थाधिपतिः=चतुर्थेशः, प्रश्ने=प्रश्नलग्ने, भवेत्, अथवा चन्द्रे तत्र=लग्नस्थे, वा चतुर्थाधिपेन अवलोकिते=दृष्टे, तत्र अवश्यं धनं वर्त्तते, इति वदेत् ॥ ७६ ॥

वित्तपे = द्वितीयेशे धनगे = द्वितीयस्थानगते, अपिवा बन्धौ = चतुर्थस्थाने गतवति सति तत्र बहु = अधिकं धनं विद्यते। पापे = पापग्रहे तुर्यगते=चतुर्थस्थानगते सति स्थितं द्रव्यं = धनं तूर्णं = शीघ्रं न लभ्यते ॥ ७७ ॥

भौमे = कुजे सप्ताष्टराशिस्थे सति, अन्यत्र धनं, अर्थात् यत्र पूर्वं रक्षितं, तत्र न विद्यते, ततोऽन्यत्तो गतम्, अत एव न आप्यते। तमो राहुः लग्ने, रविः छिद्रे= अष्टमे स्थितस्तदा द्रव्यं न लभ्यते ॥ ७८ ॥

[ सप्तष्टादशपातालेशः = ७।८।१०।४ एतदन्यतमभावपतिः, विधुः = चन्द्रः वा गुरुः स्यात्तदा धनदः = अर्थलाभकारो भवति ॥ ७८ ॥ ]

लग्नेश्वरे = लग्नेशे, द्यूनगते=सप्तमस्थानगते, जायेशे=सप्तमेशे विलग्ने, तदा नष्टधनस्य लाभः भवति। वा द्यूने = सप्तमस्थाने जायेशलग्नाधिपतीत्थशाले=सप्तमेशलग्नेशयोर्मुथशिले सति मर्त्यः=मनुष्यः, विनष्टं धनम्, एति=प्राप्नोतीत्यर्थः॥७९॥

लग्नेशजायाधिपतीत्थशाले सति सप्तमेशो लग्नेशं ग्रहो यच्छति=ददाति, तदाऽर्थं=धनं तस्करो ददाति। सूर्ये विलग्ने, शशाङ्के अस्तमिते, सति तदा विनष्टं द्रविणं = धनं, न लभ्यते ॥ ८० ॥

कर्मेशलग्नाधिपतीत्थशाले = दशमेशलग्नेशयोर्मुथशिले सति, चौरः स्वं = धनम्, आदाय = गृहीत्वा, पुरात् = स्वग्रामात् पलायते । चन्द्रे, अस्तपे = सप्तमेशे च अर्ककरप्रविष्टे = अस्तंगते सति, सतस्करं = सचौरं, तत् नष्टधनं लभ्यते ॥ ८१ ॥

अस्तेश्वरे=सप्तमेशे, केन्द्रगते सति चौरः=तस्करः, तत्रैव=चौर्यस्थले विद्यते । वा सप्तमेशे अन्यत्र = केन्द्राद्भिन्नस्थाने स्थिते सति चौरः पुरात् = ग्रामात्, विनिर्गतः = बहिः पलायितो वाच्यः । जायेश्वरे = सप्तमेशे धर्मेशदुश्चिक्यपतीत्थशाले = नवमेशतृतीयेशयोर्मुथशिले सति, स चौरः अन्यत्र = पुराद्बहिर्गतः ॥ ८२ ॥

कर्मेशलग्नाधिपतीत्थशाले=दशमेशलग्नेशयोर्मुथशिले सति राजकुलात्, चौर्य= चोरितं वस्तु लभ्यते । त्रिधर्मपद्यूनपतीत्थशाले = तृतीयेशनवमेशसप्तमेशानामित्थशाले सति अन्यप्रदेशाद् गमने तदाप्तिः = चोरितधनलाभः । हिमगौ=चन्द्रे, विलग्ने अथवा खस्थे = दशमस्थे शुभेत्थशाले सति नष्टधनस्य लाभः । वा हिमगौ = चन्द्रे, विलग्ने, रविणा, शुभेन = शुभग्रहेण च सुस्नेहदृशा = मित्रदृशा दृष्टे तदा नष्टधनस्य लाभः स्यात् ॥ ८३-८४ ॥

भाषा—चतुर्थेश प्रश्नलग्न में हो, या चन्द्रमा प्रश्नलग्न में हो, अथवा चतुर्थेश से दृष्ट हो तो जरूर धन है, यह कहना ॥ ७६ ॥

धनेश द्वितीय स्थान में हो, या चौथे स्थान में हो, तो बहुत ही धन कहना । पापग्रह चौथे स्थान में हो, तो रखा हुआ धन नहीं मिलता है ॥ ७७ ॥

मङ्गल सातवें या आठवें स्थान में हो, तो दूसरे स्थानमें गया, धन नहीं मिलेगा, यह कहना । राहु लग्न में हो, रवि अष्टम में हों तो धन नहीं मिलता है ॥ ७८ ॥

[ यदि चन्द्रमा, या गुरु ७।८।१०।४ भवोंमें किसीका स्वामी हो तो धनलाभकारक होता है ॥ ७८ ॥

लग्नेश सप्तम में हो, सप्तमेश लग्न में हो, तो नष्टधन लाभ होता है । या सप्तम स्थानमें सप्तमेश लग्नेश को इत्थशाल हो, तो मनुष्य नष्टधन को पाता है ७९

लग्नेश और सप्तमेश को इत्थशाल होता हो, वहां सप्तमेश लग्नेश को तेज देता हो तो चौर धन देता है । सूर्य लग्न में, चन्द्रमा अस्तंगत हो, तो नष्ट द्रव्य नहीं मिलता ॥ ८० ॥

कर्मेश लग्नेश को इत्थशाल होता हो, तो धन लेकर चोर ग्राम से भाग जाय । चन्द्रमा और सप्तमेश अस्तंगत हो, तो धन सहित चोर पकड़ा जाता है ॥ ८१ ॥

सप्तमेश केन्द्रमें हो, तो चोर वहां ही रहता है । वा सप्तमेश केन्द्रसे भिन्न स्थान में हो, तो चोर गांव से बाहर भाग जाय । सप्तमेश को दशमेश से या तृतीयेश से इत्थशाल होता हो, तो चोर गांव से बाहर चला जाता है ॥ ८२ ॥

दशमेश लग्नेश को इत्थशाल होता हो, तो राजकुल ( कचहरी ) से चोरी का माल मिलता है। तृतीयेश, नवमेश और सप्तमेश को इत्थशाल होता हो, तो दूसरे प्रदेश में जाने से चोरी का माल मिलता है॥ ८३॥

चन्द्रमा लग्न में या दशम में हो तो नष्ट धन का लाभ होता है। वा चन्द्रमा लग्न में हो, और रवि से या शुभग्रह से मित्रदृष्टि से देखा जाय, तो नष्ट धन लाभ होता है॥ ८४॥

अथ षट्पञ्चाशिकायाम्—

स्थिरोदये स्थिरांशे वा वर्गोत्तमगतेऽपि वा।
स्थितं तत्रैव तद्द्रव्यं स्वकीयेनैव चोरितम्॥ ८५॥
आदिमध्यावसानेषु द्रेष्काणेषु विलग्नतः।
द्वारदेशे तथा मध्ये गृहान्ते च वदेद्धनम्॥ ८६॥

स्थिरोदये=स्थिरराशिलग्ने, वा तत्र स्थिरराशिनवांशे, अपि वा वर्गोत्तमगते=चरराशिप्रथमनवांशे, स्थिरराशौ पञ्चमनवांशे, द्विःस्वभावराशौ नवमनवांशे, लग्नांशे सति स्वकीयेनैव आत्मना, वा आत्मीयजनेन चोरितं तद्द्रव्यं तत्रैव=निजगृहे एव स्थितं वाच्यम्॥ ८५॥

विलग्नतः=विलग्नस्य आदिमध्यावसानेषु द्रेष्काणेषु द्वारदेशे, तथा मध्ये=गृहमध्ये, गृहान्ते=गृहद्वितीयप्रान्ते धनं वदेत्। अर्थात् लग्नस्य प्रथमद्रेष्काणे द्वारदेशे, लग्नस्य द्वितीयद्रेष्काणे गृहमध्ये, लग्नस्य तृतीयद्रेष्काणे सति गृहापरप्रान्ते धनं रक्षितं वदेत्=कथयेत्॥ ८६॥

भाषा—स्थिरराशि ( वृष, सिंह, वृश्चिक, कुम्भ लग्नों में कोई ) लग्न हो, या स्थिरराशि का नवांश लग्नमें हो, या लग्न में वर्गोत्तम नवांश हो, अर्थात् चरराशि का प्रथम, स्थिरराशि का पञ्चम नवांश, द्विःस्वभावराशिका नवम नवांश लग्न हो, तो अपने ही से, या अपने आदमी से चुराया गया धन अपने ही घरमें है, यह कहना॥ ८५॥

प्रथम द्रेष्काण लग्न में हो तो द्वार (दरवाजे) पर, द्वितीयद्रेष्काण लग्न में हो, तो घर के अन्दर, तृतीय द्रेष्काण लग्न में हो, तो मकान के पीछे हिस्से में धन सुरक्षित कहे॥ ८६॥

प्रश्नतन्त्रे—

पतितधनस्थप्रश्ने मिथो गृहस्थौ विलग्नसप्तेशौ।
यदि मुथशिलन्तयोः स्यात्तदाऽऽशुतत्रैव वदति धनम्॥ ८७॥

नष्टं क्व दिशि प्राप्तं ? पृच्छायां लग्नगे विधौ प्राच्याम् ।
खस्थाने याम्यायामस्ते वारुण्यां वा भुव्युदीच्याम् ॥ ८८ ॥

पतितधनस्यप्रश्ने=निधिस्थापितवित्तलाभप्रश्ने यदि विलग्नसप्तेशौ = लग्नेशसप्तमेशौ, मिथो गृहस्थौ = परस्परराशिगतौ, लग्नेशः सप्तमे, सप्तमेशः लग्ने, तथा च यदि तयोः = लग्नेशसप्तमेशयोः मुथशिलं, तदा आशु=शीघ्रं, तत्रैव धनं गणकः वदति = कथयति ॥ ८७ ॥

वा नष्टं मदीयं धनं क्व = कस्यां, दिशि प्राप्तं = गतम् ? इति पृच्छायां=प्रश्ने, विधौ = चन्द्रे लग्नगे सति, प्राच्यां=पूर्वस्यां धनं गतं वाच्यम् । वा विधौ खस्थाने= दशमस्थाने सति याम्यायाम्—दक्षिणस्याम् , धनं वाच्यम् । वा विधौ अस्ते=सप्तमे सति वारुण्यां = पश्चिमस्यां धनं वाच्यम् । वा विधौ भुवि = चतुर्थस्थानस्थे सति, उदीच्याम्=उत्तरस्यां गतं धनं वाच्यम् ॥ ८८ ॥

भाषा—गाड़ी हुई सम्पत्ति के वारे में प्रश्न होने पर यदि लग्नेश सप्तमेश के घरमें, सप्तमेश लग्नेश के घर में हों, और दोनों में इत्थशाल होता हो, तो शीघ्र वहां ही धन कहै ॥ ८७ ॥

मेरा खोया हुआ धन किधर गया ? इस प्रश्न में यदि चन्द्रमा लग्न में हो तो पूर्व दिशामें, यदि चन्द्रमा दशम में हो, तो दक्षिण दिशामें, यदि चन्द्रमा सप्तम में हो तो पश्चिम दिशामें, यदि चन्द्रमा चौथे में हो, तोउत्तर दिशा में धन कहना ॥८८॥

यदि नेन्दुः केन्द्रे तच्चत्वारिंशांशकैश्च पञ्चयुतैः ।
भागे दिक्क्रम उक्तो वह्न्यवनीवायुवारिराशौ वा ॥ ८९ ॥

यदि इन्दुः=चन्द्रः केन्द्रे न भवेत् तदा पञ्चयुतैः चत्वारिंशांशकैः = पञ्चचत्वारिंशांशकैः भागैः दिक्क्रम उक्तः । वा वह्न्यवनीवायुवारिराशौ दिक्क्रमउक्तः । अग्नितत्वात्मके राशौ लग्ने अग्निकोणे, भूमितत्वात्मके राशौ लग्ने नैऋत्यकोणे, वायुतत्वात्मके राशौ लग्ने वायुकोणे, जलतत्वात्मकेराशौ ऐशान्यकोणे धनं वदेत् ॥ ८९ ॥

भाषा—यदि चन्द्रमा केन्द्र में नहीं हो तो ४५ पैंतालिश २ अंश के विभाग में दिशाका क्रम समझना। जैसे पूर्व से दक्षिण ९० अंशपर है, इस के अर्ध में ४५ अंश पर अग्निकोण समझना। ऐसे दक्षिण से पश्चिम तक ९०, उसके बीच ४५ अंश पर ठीक नैऋत्यकोण होता है। ऐसे ही पश्चिम से उत्तर ९० अंश, उसके आधे ४५ अंश पर वायव्यकोण समझना। एवं उत्तर से पूर्वतक ९० हैं, उसके अर्धस्थल में अर्थात् ४५ अंश पर ईशानकोण समझना। अथवा अग्नितत्व

वाले राशिमें अग्निकोणमें, भूमितत्ववाले राशिमें नैरृत्यकोणमें, वायुतत्त्ववाले राशि लग्न होने से वायुकोण में, जलतत्व वाले राशि में ईशान कोण में धन कहना ॥८९॥

नष्टवीतवित्तलब्धेः पृच्छायां चौरसप्तमं ततो लाभः ।
हिबुकं द्रव्यस्थानं लग्नं चन्द्रश्च धननाथः ॥ ९० ॥
लग्नेशोऽस्तेऽस्तपतिना चेन्मुथशिली ततो लाभः ।
यद्यष्टेशो लग्ने तदा स्वयं तस्करोऽर्पयति ॥ ९१ ॥
रविरश्मिगे धनेशे वाऽस्तमिते तस्करस्य लाभः स्यात् ।
लग्नेशदशमपत्योर्मुथशिलतः प्राप्यते स्ववान् चौरः ॥ ९२ ॥
लग्नेशदृष्ट्यभावे चौरः सह मात्रया याति ।
अस्ताधिपतौ दग्धे रविरश्मिगतेऽथ लभ्यते चौरः ॥ ९३ ॥
लग्नपकृतेत्थशाले राजभयाद्धनमिदं स्वयं दत्ते ।
लग्नास्तपयोर्न स्याद्यदि दृष्टिर्लग्नपस्तथा विकलः ॥ ९४ ॥
तत्तस्करोऽस्य हस्ताद्ददाति चौर्यं हि राजकुले ।
लग्नपमध्यपयोगे राजकुलं प्राप्य लभ्यते चौर्यम् ॥ ९५ ॥
रन्ध्रं चौरस्य धनं धनपे तत्राथ सप्तमे नाप्तिः ।
रन्ध्रपतौ धनपस्य तु मुथशिलयोगे च प्राप्यते वित्तम् ॥ ९६ ॥
रन्ध्रपतौ दशमपतेर्मुथशिलगे चौरपक्षकृद्भूपः ।
धनपे विलग्नपे सति दृष्टिविहीने श्रुतिर्भवति नाप्तिः ॥ ९७ ॥
चौरज्ञानप्रश्ने लग्नरविशशिदृशा स्वगृहचौरः ।
अनयोरेकदृशा गृहसमीपवर्ती वसत्येषः ॥ ९८ ॥
लग्नस्थे लग्नपतावस्तपयुक्ते च गृहगतश्चौरः ।
अस्ताधिपतावन्त्ये सहजे वा स्वीयभृत्योऽयम् ॥ ९९ ॥
अस्तेशे तुङ्गस्थे स्वगृहे वा तस्करः प्रसिद्धः स्यात् ।
लग्नदशमास्तभावाः क्रमेण वीक्ष्याः स्वतुङ्गभवनाद्यौ ।
यः खेटः स्याद्बलवान् स ज्ञेयस्तस्करस्य बली ॥ १०० ॥
एवं योगं तु विना द्यूनेशस्यैव बलमभिग्राह्यम् ।
इत्थं चौरज्ञाने चौरः सूर्ये, गृहेश्वरस्य पिता ॥ १०१ ॥
चन्द्रे माता, शुक्रे भार्या, मन्दे सुतो भवेन्नीचे ।

जीवे गृहप्रधानं भौमे पुत्रोऽथ वा भ्राता ॥ १०२ ॥
ज्ञे स्वजनो मित्रं वा ज्ञात्वेत्थं पुण्यसहममादेश्यम् ।
तस्मिन् क्रूरादृष्टे पुरा न चौरोऽस्तपे पुराऽपि स्यात् ॥ १०३ ॥
अस्तेशान्मूसरिफे भौमे चौरः पुराऽपि निगृहीतः ।
सप्तेशे रविपुत्रे चन्द्रदृशा तस्करो हि पाखण्डी ॥ १०४ ॥
जीवो विलोक्य लोकं भौमे खातेन पालकं भक्त्या ।
प्रतिकुञ्चिकयाऽपहृतं सितेऽतिथिर्ज्ञे प्रपञ्चकरः ॥ १०५ ॥
चौरस्य वयोज्ञाने सिते युवा, ज्ञे शिशुर्गुरौ मध्यः ।
तरुणो भौमे, मन्दे वृद्धोऽर्के स्यादतिस्थविरः ॥ १०६ ॥
रविनभयोः स्वमन्दिरे स्मरभूमिलग्नयोर्मध्यम् ।
चरति रवौ नवमध्यमवृद्धवयोऽतीतकाः क्रमशः ॥ १०७ ॥
नष्टस्थाने प्रश्ने तुर्ये भूम्यग्निवायुजलमध्यात् ।
यो भवति राशिरस्मात्स्थानं ज्ञयं गतधनस्य ॥ १०८ ॥
अथ चतुर्थगृहे तुर्येश्वरोऽथ यः स्याद्ग्रहस्ततो ज्ञेयम् ।
मन्दे मलिनस्थाने, चन्द्रेऽम्बुनि, गीष्पतौ सुरारामे ॥ १०९ ॥
भौमे वह्निसमीपे, रवौ गृहाधीश्वरासनस्थाने ।
तल्पे शुक्रे, सौम्ये पुस्तकवित्तान्नयानपार्श्वे च ॥ ११० ॥

नष्टवीतवित्तलब्धेः = भ्रष्ट-पतित-चोरितधनलाभस्य, पृच्छायां, चौरसप्तमं = चौरः सप्तमं भवनं बोध्यम् । ततः = सप्तमात्, लाभः = धनलाभः, विचिन्त्यः । हिबुकं = चतुर्थस्थानं, द्रव्यस्थानं बोध्यम् । चन्द्रः वा धननाथः लग्नं प्रति भवेत् लग्ने स्थितो भवेत् । वा लग्नेशः अस्ते = सप्तमे यदि अस्तपतिना = सप्तमेशेन मुथशिली तदा ततो लाभः वाच्यः । यदि अष्टेशः = अष्टमेशः लग्ने भवेत्तदा स्वयम् = आत्मना तस्करः चौर आगत्य अर्पयति = ददाति ॥ ९०-९१ ॥

वा धनेशे = द्वितीयेशे, रविरश्मिगते = अस्तङ्गते, वा अस्तगते तदा तस्करस्य लाभः स्यात् । लग्नेशदशमपत्योः = लग्नेशदशमेशयोः, मुथशिलतः, स्ववान् = धनसहितः चौरः प्राप्यते = गृह्यते । तत्र लग्नेशदृष्टयभावे सति चौर्यार्थं मात्रया सह चौरः याति । अस्ताधिपतौ = सप्तमेशे दग्धे = अस्तङ्गते च सति चौरो लभ्यते = गृहपतिना परिगृह्यते ॥ ९२-९३ ॥

उक्तयोगे लग्नपकृतेत्थशाले राजभयात् राजदण्डभयात् स्वयमात्मना एवागत्य इदं धनं दत्ते। लग्नास्तपयोर्यदि मिथो दृष्टिः न स्यात्तथा लग्नपः विकलः स्यात्, तदा तस्करः = चौरः, अस्य = गृहपतेः हस्तात् आदाय राजकुले चौर्यं = चोरितधनं ददाति। लग्नपमध्यपयोगे=लग्नेशदशमेशयोर्योगे राजकुलं प्राप्य, चौर्यं = चोरित-द्रव्यं लभते ॥ ९४-९५ ॥

चौरस्य धनं रन्ध्रम्=अष्टमस्थानम् बोध्यम्, अथ धनपे=द्वितीयेशे तत्र = अ-ष्टमे, अथ सप्तमे स्थिते, तदा आप्तिः=चौरधनप्राप्तिः, न स्यात्। रन्ध्रपतौ=अष्टमेशे धनपस्य=द्वितीयेशस्य मुथशिलयोगे सति वित्तं धनं प्राप्यते ॥ ९६ ॥

वा रन्ध्रपतौ=अष्टमेशे दशमपतेः मुथशिलयोगे चौरपक्षकृत् भूपः वेद्यः। धनपे विलग्नपे च दृष्टिविहीने मिथो दृष्टिवर्जिते सति, श्रुतिः=चोरितद्रव्यस्य श्रवणमात्रमेव भवति, आप्तिः=प्राप्तिः न भवति ॥ ९७ ॥

चौरज्ञानप्रश्ने=कुत्रत्यः कीदृशः कश्च चौरः ? इति प्रश्ने, लग्नरविशशिदृशा = लग्नोपरि रविचन्द्रयोर्दृष्ट्या स्वगृहचौरः = स्वपरिवार एव चौरः स्यात्। अनयोः = रविचन्द्रयोः, एकदृशा=लग्नोपरि रविदृशा, वा लग्नोपरि चन्द्रदृशा एषः=चौरः गृह-समीपवर्त्ती वसति ॥ ९८ ॥

लग्नपतौ=लग्नेशे, लग्नस्थे, अस्तपयुक्ते=सप्तमेशसहिते, च सति तदा चौरः= धनापहर्त्ता गृहगत एव जनो वेद्यः। वा अस्ताधिपतौ=सप्तमेशे, अन्त्ये=द्वादशे वा सहजे = तृतीये, तदा अयं चौरः स्वामिभृत्यः = स्वामिसेवक एव विज्ञेयः ॥ ९९ ॥

अस्तेशे=सप्तमेशे, तुङ्गस्थे = उच्चस्थे वा स्वगृहे=स्वभवने सति तस्करः=चौरः, प्रसिद्धः=सकललोकविदितः स्यात्। एवंलग्नदशमास्तभावाः बोद्ध्याः=विचारणीयाः, यः बलवान् खेटः=ग्रहः स्वतुङ्गभवनादौ=स्वोच्चराश्यादौ भवेत् स एव तस्करस्य = चौरस्य बली=सहायकः ज्ञेयः ॥ १०० ॥

एवं योगं तु विना, एतदुक्तसकलयोगघटनाभावे द्यूनेशस्य = सप्तमेशस्य बलम् अभिप्राह्यं = ग्राह्यम्। इत्थं चौरज्ञाने सूर्ये नीचे ( तुले ) सति गृहेश्वरस्य पिता एव चौरः स्यात् ॥ १०१ ॥

चन्द्रे नीचे=वृश्चिके सति, तदा गृहपतेर्माता=जननीचौरः। शुक्रेनीचे (कन्यायां) गृहपतेर्भार्या=चौरः, अत्र यदि गृहे प्रधाना स्त्री स्यात्तदा तत्पतिरेव चौरः स्यात्। मन्दे=शनौ नीचे=मेषस्थे सति सुतः=पुत्रः, चौरः भवेत्। जीवे=गुरौ नीचे=मकरस्थे

सति गृहप्रधानः=गृहमुख्यो जनश्चौरः स्यात् । भौमे=कुजे, नीचे=कर्कस्थे सति पुत्रः वा भ्राता चौरः स्यात् ॥ १०२ ॥

ज्ञे=बुधे, नीचे=मीनस्थे सति स्वजनः, वा मित्रं=सुहृत्, चौरः, इत्थं विचार्य पुण्यसहमम् अपि विचार्य फलम् आदेश्यम् । तस्मिन्=पुण्यसहमे, क्रूरादृष्टे=पाप-दृष्टिरहिते सति, पुरा=पूर्वम्, अयं चौरश्चौरो न, वर्त्तमानसमये एवायं चौरः सञ्जातः । अस्तपे=सप्तमेशे क्रूरयुतदृष्टे तदा पुराऽपि अयं चौरः स्यादधुना तु विद्यते एव ॥ १०३ ॥

वा भौमे=कुजे, अस्तेशात्=सप्तमेशात्, मूसरीफे=सति पुराऽपि असौ चौरः निगृहीतः स्यात् । सप्तेशे रविपुत्रे=शनौ, चन्द्रदृशा दृष्टे तदा तस्करः=चौरः, पाखण्डी स्यात् ॥ १०४ ॥

जीवः=गुरुः, योगकर्त्ता तदा लोकं विलोक्य अपहरति । भौमे=कुजे योगक-र्त्तरि सति भक्त्या खातेन=गर्त्तेन, पालकं=धनरक्षकं चौरं जानीयात् । सिते=शुक्रे तु प्रतिकुञ्चिकया अन्यकीलकयन्त्रेण अपहृतम् वाच्यम् । ज्ञे=बुधे तु अतिथिः=अ-भ्यागतः, प्रपञ्चकरः=चौर्यरचनाकरः स्यात् ॥ १०५ ॥

अथ चौरस्य वयोज्ञाने, सिते बलवति युवा=समर्थस्तरुणवयस्कश्चौरः । ज्ञे=बुधे, बलवति शिशुः=बालकश्चौरः । गुरौ बलवति सति मध्यः=मध्यवयस्कः । भौमे=कुजे बलवति तरुणः चौरः । मन्दे=शनौ बलवति वृद्धः चौरः । अर्के=सूर्ये बलवति अतिस्थविरः=वृद्धतमः चौरः स्यात् ॥ १०६ ॥

रवौ=सूर्ये, रविनभयोः द्वादशदशमयोः, स्वमन्दिरे=स्वराशौ, स्मरभूमिलग्न-योः=सप्तमचतुर्थलग्नयोः, मध्यं चरति सति, चौरस्य नवमध्यमवृद्धवयोऽतीतकाः वयसः क्रमशः वेद्याः ॥ यथा रवौ द्वादशदशमयोः स्थिते नववयाश्चौरः, रवौ सिंहे मध्यमवयाः । रवौ सप्तमे सति वृद्धः । रवौ चतुर्थे सति वयोऽतीतश्चौरः स्यादिति १०७

नष्टस्थाने प्रश्ने-तुर्ये=चतुर्थस्थाने, भूम्यग्निवायुजलमध्यात् यो राशिर्भवति । अस्मात् गतधनस्य स्थानं ज्ञेयम् । यथा प्रश्नलग्नाच्चतुर्थस्थाने भूमिचारिराशौ सति भूमौ धनं, चतुर्थेऽग्नितत्त्वराशौ सति अग्नौ, वायुतत्त्वराशौ चतुर्थे सति अन्तरिक्षे चोरितं धनं वाच्यम् । जलतत्त्वात्मके राशौ चतुर्थे सति जले धनं निक्षिप्तं वाच्यम् ॥

अथ वा चतुर्थगृहे तुर्येश्वरः=चतुर्थेशः, अथवा यः कश्चिद्ग्रहः स्यात् ततोऽ-पहृतधनस्य स्थानज्ञानम्—यथा मन्दे=शनौ, तुर्येशे, वा तुर्यगते सति मलिनस्थाने

तच्चोरितद्रव्यं वर्त्तते । चन्द्रे चतुर्थेशे, वा चतुर्थगते, अम्बुनि=जले, गोष्पतौ=जीवे चतुर्थेशे, वा चतुर्थे सति, सुरारामे=देवमन्दिरे पुष्पवाटिकायां वा धनं विद्यते । भौमे चतुर्थेशे, वा चतुर्थे सति वह्निसमीपे=महानसादौ, रवौ चतुर्थेशे वा चतुर्थे सति गृहाधीश्वरासनस्थाने, वा शुक्रे तादृशे सति तल्पे=पर्यङ्के, सौम्ये=बुधे तादृशे सति पुस्तकवित्ताश्रयानपार्श्वे=पुस्तकमध्ये, वा पुस्तकपेट्यां, वित्तस्य धनस्य रक्षणस्थाने, अश्वरक्षणस्थाने, यानस्थाने, वा एतेषां स्थानानां पार्श्वे=इतस्ततोधनं विद्यते॥१०९-११०॥

भाषा—नष्टधन, चोरी गया हुआ धन, इन सबों के मिलन के प्रश्न में सातवां स्थान चोर का स्थान है, उस से लाभ सम्भव होता है। चौथा स्थान चोरित धनका स्थान समझना। लग्न और चन्द्रमा दोनों को धन का मालिक समझना॥ ९०॥

यहां लग्नका स्वामी सप्तम में सप्तमेशसे इत्थशाल होता हो, तो लाभ कहना। यदि अष्टमेश लग्न में हो, तो खुद चोर आकर धनको लौटादे॥ ९१॥

या धन का स्वामी अस्त हो, तो चोर पकड़ा जाता है। लग्नेश और दशमेश को इत्थशाल योग होता हो, तो धनसहित चोर पकड़ा जाता है॥ ९२॥

यदि उक्तयोग में लग्नेश की दृष्टि नहीं पड़े, तो माता के साथ चोर पकड़ा जाता है। यदि सप्तमेश अस्त हो, तो चोर पकड़ा जाता है॥ ९३॥

यदि सप्तमेश लग्नेशसे इत्थशाल करता हो, तो राजा के डर से चोर स्वयं धन को देता है॥ ९४॥

यदि लग्नेश और सप्तमेशकी परस्पर दृष्टि नहीं हो, और लग्नेश दुर्बल हो, तो चोर चोरी का धन कचहरी में दे आता है। यदि लग्नेश और दशमेशको योग होता हो, तो कचहरी जाकर चोरीका माल मिलता है॥ ९५॥

चोरका धन अष्टमस्थान होता है। यदि धनेश वहां हो या सप्तम में हो, तो धन नहीं मिलता है। अष्टमेशको धनेशसे यदि इत्थशाल योग होता हो, तो धन पाया जाता है॥ ९६॥

यदि अष्टमेश दशमेशसे इत्थशाल करता हो, तो चोर का पक्ष करनेवाला राजा समझना। या धनेश और लग्नेश किसी ग्रह से नहीं देखे जांय, तो चोरी हुए धनकी न तो सुनाई, न तो मिलना ही होता है॥ ९७॥

चोर कौन था? इस बात के समझने के प्रश्न में लग्न पर रवि और चन्द्रमाकी दृष्टि पड़ती हो, तो अपने घरका चोर होता है। यदि रवि ही से या चन्द्रमा ही से लग्न देखा जाय तो घर का पड़ोसी चोर होता है॥ ९८॥

सप्तमेश के साथ लग्नेश यदि लग्न में हो, तो अपने ही घर का चोर होता है। या सप्तमेश बारहवें घरमें हो, या तीसरे घरमें हो, तो अपना ही नोकर चोर होता है॥९९॥

सप्तमेश उच्चका हो, या अपने घरका हो तो चोर नामवर ( मशहूर ) होता है। या लग्न, दशम, सप्तमभाव विचारना चाहिये। उन भावों में रहकर यदि कोई ग्रह अपने उच्च या अपने राशिमें हो, और बली हो, ता उस ग्रहकी जाति, वर्ण, शरीर स्वभाव, गुण दोष वाला आदमी चोरका सहायक होता है ॥ १०० ॥

इस प्रकार सर्वांशसे योग यदि घटित नहीं हो, तो केवल सप्तमेश ही का बल विचारना चाहिये, उसपरसे सब कुछ विचारं। इस प्रकार चोर के ज्ञान में सूर्य नीच के हों, तो घर के मालिक का पिता ही चोर होता है ॥ १०१ ॥

यदि चन्द्रमा नीचका हो, तो माता ही चोर होती है। यदि शुक्र नीचका हो, तो स्त्री चुराती है। यहाँ तर्क करना कि यदि स्त्री ही घरका प्रधान हो, तो स्वामी चोर होता है। शनि नीचमें हो, तो लड़का चोरी करता है। बृहस्पति यदि नीचमें हो, तो घरका मालिक ही चोर होता है। मङ्गल नीचका हो, तो लड़का चोर होता है। या भाई चोर होता है ॥ १०२ ॥

बुध नीचका हो, तो अपना परिजन चोर होता है। या मित्र चोर होता है। इसप्रकार पुण्यसहमको भी बनाकर विचार करके फल कहना। पुण्यसहम यदि पाप-ग्रहसे नहीं देखा जाय, तो पहले यह चोर चोरी नहीं करता था, हालही में चोरी करने लगा है। यदि सप्तमेश पापग्रहसे दृष्ट हो, तो पहले भी यह चोर चोरीही करता था।

मङ्गलको सप्तमेशसे मूसरीफ होता हो, तो यह पहले भी पकड़ाया हो या सप्त-मेश शनि होकर चन्द्रमा से देखा जाय, तो चोर बड़ा पाखण्डी होता है ॥ १०४ ॥

गुरु यदि योगकर्त्ता हो, तो लोगों को देखकर धन चोरी करे। मङ्गल योगकर्त्ता हो, तो जमीन के नीचे धनको रक्खे। शुक्र योगकारक हो तो चुगलीसे चोरी करे। बुध योगकर्त्ता हो, तो अतिथि (अभ्यागत) ही चोरीका प्रपञ्च करता है ॥ १०५ ॥

चोरकी ऊमर समझनेके लिये शुक्र यदि योगकर्त्ता हो, तो युवक चोरी करता है। यदि बुधयोग करे, तो बच्चा चोर हो। बृहस्पति में जवान, मङ्गल में तरुण, शनि में बूढा, रवि में अत्यन्त वृद्ध चोर होता है ॥ १०६ ॥

यदि सूर्य १२।१० वें में हो, तो कम ऊमरवाला, यदि अपने राशिमें हों तो मध्यम ऊमरवाला, यदि सूर्य सातवें घर में हों, तो वृद्ध चोर होता है। यदि सूर्य चौथे घर में हों तो अतिवृद्ध चोर होता है ॥ १०७ ॥

किस जगह चीज खोयी ? इस प्रश्नमें प्रश्न लग्न से चौथे स्थानमें यदि भूमि तत्वराशि हो तो भूमिपर, यदि चतुर्थ में अग्नितत्ववाला राशि हो, तो अग्निके समीप, यदि चतुर्थ में वायुतत्ववाला राशि हो, तो आकाश में, यदि जलतत्ववाला राशि हो तो पानी के निकट धन नष्ट हुआ, यह कहना चाहिये ॥ १०८ ॥

अब चतुर्थेश यदि चतुर्थस्थान में हो, तो चतुर्थेश जो ग्रह हो, उसके भेदसे चोरी का स्थान कहते हैं। चतुर्थेश शनि हो, तो मलिन जगह में, यदि चन्द्रमा हो, तो जल में, यदि बृहस्पति हो, तो देवमन्दिर, फुलवाड़ी में धन खोया हुआ है ॥ १०९ ॥

यदि मङ्गल हो तो अग्नि के नजदीक, यदि सूर्य हो तो घर के मालिक के आसन के नजदीक, यदि शुक्र हो, तो पलङ्ग पर, बुध योग करे तो पुस्तक, धन, अन्न सवारी के समीप धन खोया है; यह कहना ॥ ११० ॥

अथ चौरोऽयं न वेति प्रश्ने विचारः—

चौरोऽयमथ न वेति क्रूरेन्द्वोर्मुथशिले च चौरः स्यात्।
सौम्यशशिमुथशिले खलु न भवति चौरः प्रवक्तव्यम् ॥१११॥
किमनेन तस्करत्वं कदाऽपि विहितं न वेति पृच्छायाम्।
लग्नपशशिनोरेकस्मादपि मूसरिफेऽस्तपे विहितम् ॥११२॥
चौरः स्त्री पुरुषो वा पृच्छायामस्तपे स्त्रियो राशौ।
स्त्रीखेटे स्त्रीदृष्टे चौरः स्त्री व्यत्ययात्पुरुषः ॥ ११३ ॥
लग्नेश्वरनवमांशतो वयःप्रमाणजातयो ज्ञेयाः।
चौरोऽयमिहानन्तं शास्त्रं कथितोऽयमुद्देशः ॥ ११४ ॥

अयं जनः चौरः अस्ति न वा? इति प्रश्ने क्रूरः=पापः, इन्दुः=चन्द्रः, अनयोर्मुथशिले सति अवश्यमयं चौरः वाच्यः। सौम्यशशिमुथशिले=शुभग्रहेण चन्द्रस्येत्थशाले सति अयं सन्दिग्धो जनः, चौरः न भवति, इति प्रवक्तव्यम् ॥१११॥

किम् अनेन कदाऽपि तस्करत्वं विहितं=कृतं न वा कृतम्? इति पृच्छायां=प्रश्ने लग्नपशशिनोः=लग्नेशचन्द्रयोरेकस्मादेकतरेण अस्तपे=सप्तमेशे, मूसरिफे=कृते सराफे सति, तेन तस्करत्वं विहितं=कृतम् इति वाच्यम् ॥ ११२ ॥

चौरः स्त्री, वा पुरुषः अस्ति इति पृच्छायां, अस्तपे=सप्तमेशे स्त्रियो राशौ=समराशौ सति स्त्रीखेटे=स्त्रीग्रहे सप्तमेशे सति, वा स्त्रीग्रहदृष्टे सति तदा चौरः स्त्री स्यात्। व्यत्ययात्, किन्तु, सप्तमेशे पुंग्रहे पुरुषराशौ, पुंग्रहयुकदृष्टे सति चौरः पुरुषः स्यात् ॥ ११३ ॥

लग्नेश्वरनवमांशतः=लग्नेशनवमांशराशिस्वरूपात्, वयःप्रमाणजातयः ज्ञेयाः। अयं जनश्चौर इत्यत्र अनन्तं शास्त्रम् अस्ति। अयमुद्देशः कथितः ॥ ११४ ॥

भाषा—यह चोर है या नहीं? इस प्रश्न में यदि चन्द्रमा को पापग्रह से इत्थशाल होता हो, तो अवश्य वह चोर है। यदि चन्द्रमा को शुभग्रह से इत्थशाल होता हो, तो वह चोर नहीं है, यह कहना ॥ १११ ॥

क्या इसने कभी चोरी की या नहीं ? इस प्रश्न में लग्नेश और चन्द्रमा में से किसी एक स सप्तमेश को मूसरीफ योग होता हो, तो जरूर चोरी की है यह कहना ॥११२॥

चोर स्त्री है या पुरुष ? इस प्रश्न में सप्तमेश यदि स्त्री-ग्रह ( बु. शु. श. चं. ) हो, और स्त्री (सम) राशि में हो, स्त्री-ग्रह से दृष्ट हो तो चोर स्त्री होती है। इसके विपरीत योग से अर्थात् सप्तमेश पुरुषग्रह ( र. मं. बृ. ) हो, पुरुष राशि ( विषम राशि ) में हो, पुरुष-ग्रह से दृष्ट हो, तो चोर पुरुष होता है ॥ ११३ ॥

लग्नेश की नवांश से चोर की उमर, प्रमाण, जाति, आदि समझना। यह चोर है या नहीं इस के विषय में असंख्य शास्त्र हैं, मुझ से इतना ही यहां उपदेश किया गया। ॥ ११४ ॥

अथ विशेषतः सन्तानप्रश्नः—

लग्नेश्वरेणाथ निशाकरेण यदोत्थशालं कुरुते सुतेशः।
शुभः शुभैः संयुत ईक्षितः स्यात् स सन्ततिं प्रष्टुरसौ विदध्यात् ॥११५॥
पुस्त्रीग्रहाः पुत्रगृहं विलग्नात्पश्यन्ति यावन्ति इहातिवीर्याः।
तत्संख्यकाः स्युस्तनयाश्च कन्याः शुभेशयोगात्सुतभांशतुल्याः ॥११६॥
लग्नेशपुत्राधिपती परस्परं न पश्यतश्चदुदयं च पञ्चमम्।
पापेत्थशालौ सुतलग्नपौ च प्रष्टुस्तदा सन्ततिनास्तितां वदेत् ॥११७॥
पुत्रालये सिंहवृषालिकन्याः प्रश्नोदयाज्जन्मभतस्तथेन्दोः।
अल्पप्रजः सन्ततिपृच्छकः स्यात् पापैः सुतर्क्षे सहितेक्षिते वा ॥११८॥
स्वर्क्षे स्थितौ रन्ध्रगतौ यमार्कौ प्रष्टुः स्त्रियं संदिशतश्च बन्ध्याम्।
छिद्रस्थितौ चन्द्रबुधौ सदोषां वा काकवन्ध्यां तनयाप्रसूतिम् ॥११९॥
मृतप्रजा छिद्रगयोः सितेज्ययोर्गर्भस्रवां भूमिसुतेऽष्टमर्क्षम्।
छिद्रेश्वरे छिद्रगतेऽतिवीर्ये पुष्पं न विन्दत्यबला सुतप्रदम् ॥ १२० ॥
शुक्रार्कयोरष्टमसंस्थयोर्वा क्रूरैर्धनान्त्याष्टमराशिसंस्थैः।
जातः पुरस्तान्म्रियते प्रजा वै प्रष्टुर्न चाग्रे शुभसन्ततिः स्यात् ॥१२१॥
रिष्फेश्वरे केन्द्रगते च सौम्यैर्युतेक्षिते जीवति बालकश्च।
आपूर्यमाणे शुभयुक्त इन्दौ केन्द्रे शिशुर्जीवति दीर्घकालम् ॥ १२२ ॥

यदि सुतेशः = पञ्चमेशः शुभग्रहः लग्नेश्वरेण = लग्नेशेन, अथ निशाकरेण = चन्द्रेण इत्थशालं कुरुते, तथा शुभैः संयुतः ईक्षितः = दृष्टः च स्यात् , तदा स ग्रहः प्रष्टुः = पृच्छकस्य सन्ततिं = अपत्यं, विदध्यात्-कुर्यात् ॥ ११५ ॥

इह अतिवीर्याः = बलाधिकाः यावन्तः = यत्सङ्ख्यकाः पुंस्त्रीग्रहाः विलग्नात् पुत्रगृहं = पञ्चमस्थानं पश्यन्ति, तत्संख्यकाः तनयाः कन्याश्च स्युः। शुभेशयोगात्= शुभग्रह—पञ्चमेशसंयोगात् सुतभांशतुल्याः = पञ्चमभावनवांशसंख्यकाः तनयाः कन्याश्च वाच्याः ॥ ११६ ॥

लग्नेशपुत्राधिपती परस्परं न पश्यतः, उदयं = लग्नं, पञ्चमं च तौ न पश्यतः वा सुतलग्नपौ = पञ्चमेशलग्नेशौ पापेत्थशालौ = पापग्रहेण मुथशिलौ च भवतः, तदा प्रष्टुः = प्रश्नकर्तुः, सन्ततिनास्तितां = अपत्याभावतां वदेत् ॥ ११७ ॥

यदि पुत्रालये = पञ्चमभावे, सिंहवृषालिकन्याः राशयः स्युः, तथा प्रश्नोदयात्= प्रश्नलग्नात्, जन्मभतः = जन्मलग्नात्, इन्दोश्चन्द्राक्रान्तराशितः च सुतर्क्षे= पुत्रभावे = पञ्चमस्थाने, पापैः = पापग्रहैः = शनिरविकुजैः, सहितेक्षिते = युतेक्षिते तदा सन्ततिपृच्छकः जनः अल्पप्रजः = परिमितापत्यवान् स्यात् ॥ ११८ ॥

यमार्कौ = शनिरवी, स्वर्क्षस्थितौ = स्वराशिगतौ, छिद्रगतौ = अष्टमस्थानगतौ भवतः, तदा प्रष्टुः = प्रश्नकर्तुः, स्त्रियं = भार्या वन्ध्यां = अपत्योत्पत्तिसम्भवशून्यां सन्दिशतः = कथयतः। वा चन्द्रबुधौ छिद्रस्थितौ=अष्टमस्थितौ भवतस्तदा सदोषां= प्रदरादिरजोदोषयुक्तां कुरुतः। वा काकवन्ध्यां = एकापत्यां, वा तनयाप्रसूतिम् = कन्याजननीम्, कुरुतः ॥ ११९ ॥

सितेज्ययोः = शुक्रजीवयोः, छिद्रगयोः = अष्टमस्थयोः प्रष्टुः स्त्री मृतप्रजा = नष्टापत्या भवति। वा अष्टमर्क्षं गते भूमिसुते = भूमिजे सति गर्भस्रवा भवति। अतिवीर्ये, छिद्रेश्वरे = अष्टमेशे छिद्रगते तदा अबला = स्त्री, सुतप्रदं = पुत्रप्रदं पुष्पं = रजः, न विन्दति = धारयति ॥ १२० ॥

शुक्रार्कयोः = शुक्रसूर्ययोः, अष्टमसंस्थयोः, वा क्रूरैः=पापैः, धनान्त्याष्टमराशिसंस्थितैः = द्वितीयद्वादशाष्टमस्थानस्थैः सद्भिः, तदा पुरस्तात् = अग्रे जाता प्रजा = सन्ततिः म्रियते, प्रष्टुः = प्रच्छकस्य अग्रे शुभसन्ततिः = चिरायुरपत्यं च न स्यात् ॥

रिष्फेश्वरे = द्वादशेशे केन्द्रगते, सौम्यैः = शुभैः, युतेक्षिते, तदा बालकः जीवति। आपूर्यमाणे = परिपूर्णे, शुभयुक्ते इन्दौ = चन्द्रे, केन्द्रगते, सौम्यैः=शुभैः, युतेक्षिते, तदा शिशुः = बालः, दीर्घकालं = चिरं जीवति ॥ १२२ ॥

भाषा—यदि पञ्चमेश शुभ ग्रह हो, और लग्नेश या चन्द्रमा से इत्थशाल करता हो, शुभ ग्रहों से युत दृष्ट हो, तो यह पञ्चमेश प्रश्न करने वाले को सन्तान देता है ११२

जितने बलवान् पुरुष ग्रह, या स्त्रीग्रह लग्न से पञ्चमभाव को देखें, उतने लड़के या लड़कियां होती हैं। अथवा पञ्चमभाव को या पञ्चमेश को शुभग्रह से या अपने स्वामी से संयोग होने से पुत्र भाव के नवांश के संख्या समान पुत्र कन्या कहना ॥ ११६ ॥

लग्नेश और पञ्चमेश ये दोनों यदि परस्पर नहीं देखें, या लग्न को तथा पञ्चम भाव को नहीं देखें, अथवा पञ्चमेश को पापग्रह से इत्थशाल होता हो, तो प्रश्नकर्त्ता को सन्तान नहीं कहे ॥ ११७ ॥

यदि पञ्चमभाव में सिंह, वृष, वृश्चिक, कन्या इन राशियों में से कोई राशि हो, तथा प्रश्नलग्न से तथा जन्मलग्न से तथा चन्द्रमा से पञ्चमभाव में पापग्रह सब हों या पापग्रहों से युत हो, या दृष्ट हो, तो प्रश्नकर्त्ता थोड़े सन्तान वाला होता है ॥ ११८ ॥

यदि शनि और रवि अपने राशि में हों, और लग्न से अष्टम भाव में हों तो प्रश्नकर्त्ता की स्त्री वन्ध्या कहना। वा यदि चन्द्रमा और बुध अष्टम स्थान में हों, तो काक वन्ध्या होती है, या लड़की हो लड़की होती है ॥ ११९ ॥

शुक्र और बृहस्पति ये अष्टम में हों, तो स्त्री मृतप्रजा होती है। मङ्गल अष्टम में हो, तो गर्भ स्राव हो जाया करे। या अष्टमेश अष्टम स्थान में हो, अत्यन्त बलवान् भी हो तो प्रश्नकर्त्ता की स्त्री पुत्रप्रद रज को नहीं धारण करती है ॥ १२० ॥

शुक्र तथा सूर्य अष्टम स्थान में हों, और पापग्रह २।१२।८ इन स्थानों में हों तो पहले उत्पन्न सन्तान मरती है। पीछे भी अच्छी सन्तान नहीं होती हैं ॥ १२१ ॥

द्वादशेश केन्द्र ( १।४।७।१० ) में गत हो शुभ ग्रहों से युत दृष्ट हो, तो बालक नहीं जीता है। पूर्णबली पुष्टचन्द्र शुभग्रह से युक्त होकर केन्द्र में हो तो बालक दीर्घजीवी होता है ॥ १२२ ॥

तथाच पुत्रविचारः प्रश्नचिन्तमणौ—

पञ्चमेशोऽथ लग्नेशो विषमर्क्षगतौ यदा ।
पुत्रजन्मप्रदो ज्ञेयौ कन्यानां समराशिगौ ॥ १२३ ॥
सुताधिपे नृराशिस्थे पुंराशिस्थोऽपि लग्नपः ।
वीक्ष्यते पुत्रदः प्रोक्तो युग्मराशौ च दारिकाः ॥१२४॥
युग्मराशिगते लग्ने यदा तत्र शुभग्रहाः ।
गर्भेऽपत्यद्वयं वाच्यं दैवज्ञेन विपश्चिता ॥ १२५ ॥
विषमोपगतो लग्नाच्छनिः पुत्रसुखप्रदः ।
समभे योषितां जन्म विशेषो जातकोक्तिवत् ॥ १२६ ॥

यदा पञ्चमेशः, तथा लग्नेशः एतौ विषमर्क्षगतौ = विषमराशिगतौ भवतः,

तदा पुत्रजन्मप्रदौ भवतः। यदि तौ लग्नेशपञ्चमेशौ समराशिगौ, तदा कन्यानां जन्मप्रदौ भवतः॥ १२३॥

सुताधिपे = पञ्चमेशे नरराशिस्थे = पुरुषराशिस्थे सति लग्नपः = लग्नेशः पुं-राशिस्थः = पुरुषराशिगतः, पुंग्रहेण वीक्ष्यते च तदा पुत्रदः प्रोक्तः। वा सुताधिपे समराशिस्थे, लग्नेशे अपि समराशिगते, स्त्रीग्रहेण वीक्षिते तदा दारिकाः = कन्यकाः उत्पद्यन्ते॥ १२४॥

लग्ने युग्मराशिगते = समराशिगते, यदा शुभग्रहाः तत्र = लग्ने स्थिताः, तदा विपश्चिता = विदुषा, दैवज्ञेन = ज्योतिर्विदा गर्भे अपत्यद्वयं = यमलं वाच्यम्॥ १२५॥

वा लग्नात् शनिः विषमोपगतः = विषमसङ्ख्यकस्थाने स्थितः, पुत्रजन्मप्रदः भवति। तथा लग्नात् शनिः समगे = समसङ्ख्यकस्थाने स्थितः, तदा योषितां = कन्यानां जन्म भवति। अतो विशेषः = अधिकविचारः, जातकोक्तिवत् = जातकीयपञ्चमभावविचार इव बोध्यः॥ १२६॥

भाषा—पञ्चमेश लग्नेश ये दोनों विषम राशि में हों, तो पुत्रजन्म को करते हैं। यदि वे दोनों समराशि में हों, तो कन्या का जन्म करते हैं॥ १२३॥

पञ्चमेश और लग्नेश भी पुरुष राशि में हों, पुरुषग्रह से देखे जांय, तो पुत्र को देते हैं, समराशि में हों, तो कन्या का जन्म देते हैं॥ १२४॥

समराशि लग्न हो, वहां यदि शुभग्रह स्थित हों, तो गर्भमें दो बच्चे हों। ऐसा पण्डितों को कहना चाहिये॥ १२५॥

लग्न से विषम राशि में शनि हो, तो पुत्र सुख हो। लग्न से समराशि में यदि शनि हो, तो लड़की का जन्म होता है। इससे विशेष विचार जातक ग्रन्थों के विचार के समान समझना॥ १२६॥

अथ भोजनचिन्ता (प्रश्नचिन्तामणौ)—

**कटुको लवणस्तिक्तो मिश्रितो मधुरो रसः।**
**अम्लः कषायः कथिता रव्यादीनां रसा बुधैः॥ १२७॥**

रव्यादीनां ग्रहाणां क्रमेण कटुकः = मरीचस्वादुवत्, लवणः = क्षारः, तिक्तः = निम्बपत्रस्वादुवत्, मिश्रितः = सकलरसयोगः, मधुरः = मधुवत्, अम्लः = तिन्तिणीस्वादुवत्, कषायः = धात्रीवत्, एते रसाः बुधैः कथिताः॥ १२७॥

भाषा—रव्यादिक ग्रहों के क्रमसे कटु, लवण, तीता, सब रस मिला हुआ, मधुर, खट्टा, कषाय, ये रस होते हैं। कै एक देशों में तीता से कटु, कटु से

तीता समझते हैं । जैसे मरीच के स्वाद को तीता, नीम के स्वाद को कडुआ कहते हैं ॥ १२७ ॥

| ग्रहाः | सूर्य | चन्द्र | कुज | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| रसाः | कटु | लवण | तीता | मिश्रित | मधुर | खट्टा | कषाय |

लग्नं पश्यति यः खेटस्तस्य यः कथितो रसः ।
भोजनेऽसौ रसो वीर्यक्रमाद्वाच्याः परे रसाः ॥ १२८ ॥
चन्द्रो यस्य मुथशिलस्तस्य विशेषं वदेद्भुक्तौ ।
लग्ने राहौ मन्दे रविदृष्टे भोजनाभावः ॥ १२९ ॥

यः खेटः = ग्रहः, लग्नं पश्यति तस्य यः रसः कथितः, असौ रसः, भोजने = अशने वाच्यः । तत्र वीर्यक्रमात् परे अपि रसाः वाच्याः ॥ १२८ ॥

चन्द्रः यस्य मुथशिलः, तस्य ग्रहस्य विशेषं = अधिकं रसं भुक्तौ=भोजने वदेत् । अत्र चन्द्रस्य येन मुथशिलमिति पाठः साधीयान् । राहौ, मन्दे = शनौ वा लग्ने सति तथा रविदृष्टे सति भोजनाभावः = उपवासः स्यात् ॥ १२९ ॥

भाषा—जो ग्रह लग्न को देखे उस ग्रह का जो रस हो, वही भोजन में कहना । यदि बहुत ग्रह लग्न को देखे तो बल के क्रमसे रसों का भी क्रम कहना । जिसके बल जादे हों, या अधिक दृष्टिसे लग्न को देखे, उसका रस विशेष कहना । ऐसे बल और दृष्टिके तारतम्य से रसोंका तारतम्य करना ॥ १२८ ॥

या चन्द्रमा को जिस ग्रह से इत्थशाल होता हो उस के रस भोजन में विशेष कहना । लग्न में राहु शनि हों रवि से देखें जांय तो भोजन नहीं मिलता है ॥ १२९ ॥

प्रश्नतन्त्रे भोजनचिन्ता—

कीदृङ्मयाऽद्य भुक्तं ? पृच्छायां यदि भवेत्स्थिरं लग्नम् ।
तद्भुक्तमेकवेलं, द्व्यात्मनि वेलद्वयं, चरे त्वसकृत् ॥ १३० ॥
चन्द्रे लग्नगते स्यात्क्षारं, भौमे च कटुकमम्लगुरौ ।
मधुरं दिनकृति तिक्तं शुक्रे स्निग्धं बुधे च सर्वरसम् ॥ १३१ ॥
मन्दे कषायमशुभान्मुसरिफे सर्वाणि मुथशिले शुभेऽरिदृशा ।
उच्चाहारिप्रियदृष्ट्या प्रायश्चिकत्वात्समागतं भोज्यम् ॥ १३२ ॥

अद्य मया कीदृग्, अन्नं भुक्तम् ? इत्येवं पृच्छायां यदि स्थिरं ( वृष-सिंह-

वृश्चिक-कुम्भानामन्यतमं ) लग्नं भवेत् तदा एकवेलं=एकवारम् , एवं भुक्तं=भोजनं वाच्यम् ; द्व्यात्मनि=द्विःस्वभावलग्ने वेलद्वयं = द्विवारं भोजनम् , चरे=चरे लग्ने, असकृत् = अनेकवारं भोजनं वाच्यम् ॥ १३० ॥

चन्द्रे लग्नगते सति क्षारं=क्षाररसप्रधानम् , भौमे = कुजे लग्ने सति कटुकं = कटुकरसात्मकं भोजनं वाच्यम् । अम्लगुरौ=गुरौ लग्ने अम्लं=अम्लरसप्रधानं भोजनं, दिनकृति=सूर्ये लग्ने सति मधुररसप्रधानं, शुक्रे लग्नगते तिक्तं, बुधे लग्नगते स्निग्धं=चिक्कणं सर्वरसं च भोजनं वाच्यम् ॥ १३१ ॥

मन्दे=शनौ लग्नगते, सति कषायं = कषायरसात्मकं, भोजनं वाच्यम् । शशिनि=चन्द्रे अशुभान्मूसरिफे, अरिदृशा = शत्रुदृशा शुभे मुथशिले सति, उद्वाहात् = विवाहात् प्रियदृष्टया प्रायणिकत्वात्=उपायनरूपतः, समागतं वस्तु भोजनं भवति॥१३२॥

भाषा—आज मैं क्या क्या खाया है ? इस प्रश्न में यदि स्थिर लग्न हो, तो एक बार ही भोजन कहना । यदि द्विस्वभाव लग्न हो तो दो बार, यदि चरलग्न हो, तो अनेक बार भोजन कहना ॥ १३० ॥

यदि चन्द्रमा लग्नमें गत हो, तो खार रस, मङ्गल लग्न में हो, तो कडूरस, बृहस्पति लग्न में हो, तो खट्टारस, सूर्य लग्न में हो तो मधुर रस, शुक्र लग्न में हो, तो तीता, बुध लग्न में हो, तो चिकना सब रस भोजन कहना ॥ १३१ ॥

शनि लग्न में हो तो कसैला रस भोजन कहना, चन्द्रमा पापग्रह से मूसरिफ योग करता हो शुभग्रह से शत्रुदृष्टिसे इत्थशाल हो, तो विवाहमें आया हुआ और मित्रदृष्टया, हो तो मित्रों के यहां से आया हुआ सौगात सन्देश भोजन कहना ॥ १३२ ॥

अथ भोजनचिन्तामेवाह—

**चन्द्रस्य चेत्स्याच्छुभजेत्थशाले पापेसराफे च तदेतदुक्तम् ।**
**पापेसराफे च शुभेत्थशाले चन्द्रे तु भुक्तं शुभमन्नमीशम् ॥ १३३ ॥**
**शुभेसराफे त्वशुभेत्थशाले चन्द्रे कदन्नं मधुसर्पिषौ विना ।**
**पापेत्थशालेऽथ खलेसराफे शक्यं न भोक्तुं परतोऽपि लभ्यम्॥ १३४॥**
**चन्द्रे स्वनाथदृष्टे सुखभोजनमन्यथा कष्टात् ।**
**गुरुमुथशिले सगौरवमर्केण मुथशिलेऽतिशुचि तीक्ष्णम् ॥ १३५ ॥**
**शुक्रे सुस्वादुरसं सहास्यगीतं बुधे जनाकीर्णम् ।**
**शास्त्रकथाढ्यं शनिना कुस्थानगतं कुजे चोष्णम् ॥ १३६ ॥**

चेत् चन्द्रस्य शुभजेत्थशाले = शुभग्रहकृतेत्थशाले, पापग्रहकृतेसराफे च सति एतत् वक्ष्यमाणं शुभं फलम् उक्तम् । चन्द्रे पापेसराफे शुभेत्थशाले सति शुभं=प्रश-

स्तम्, ईशम् = धनिभोगयोग्यं अन्नं भुक्तं वाच्यम् ॥ १३३ ॥

चन्द्रे शुभेसराफे, अशुभेत्थशाले मधुसर्पिषौ=मधुघृते विना कदन्नं=कुत्सितमन्नं भुक्तं वाच्यम्। पापेत्थशाले, अथ खलेसराफे = पापेसराफे सति। परतः = अन्यतः लब्धं=प्राप्तम् अपि भोज्यं भोक्तुं शक्यं न भवेत् ॥ १३४ ॥

चन्द्रे, स्वनाथदृष्टे=यद्राशौ चन्द्रस्तिष्ठति तत्स्वामिना विलोकिते तदा सुखभोजनं = आनन्दपूर्वकं भोजनं वाच्यम्। अन्यथा कष्टात् भोजनं वाच्यम्। चन्द्रे गुरुमुथशिले = जीवेत्थशाले सगौरवं भोजनं वाच्यम्। चन्द्रे अर्केण मुथशिले सति अतिशुचि = अतिपवित्रं तीक्ष्णं = कट्वम्लरसोपेतं भोजनं वाच्यम् ॥ १३५ ॥

शुक्रे=शुक्रकृतेत्थशाले चन्द्रे सुस्वादुरसं भोजनम्, बुधे=बुधकृते चन्द्रस्येत्थशाले जनाकीर्णं=बहुललोकपरिवृतं सहास्यगीतम्, भोजनं श्वशुरालयभोजनं शास्त्रकथाढ्यं च भवति। शनिना कृतेत्थशाले चन्द्रे कुस्थानगतं भोजनम्, कुजे=कुजकृतेत्थशाले चन्द्रे सति उष्णं भोजनं वाच्यम् ॥ १३६ ॥

भाषा—यदि चन्द्रमाको शुभग्रहसे इत्थशाल, पापग्रहसे ईसराफ योग होता हो, तो अच्छा भोजन कहना। ऐसे चन्द्रमाको पापग्रहसे ईसराफयोग, शुभग्रहसे इत्थशाल योग होता हो, तो अच्छा ही अन्न भोजन में कहना ॥ १३३ ॥

चन्द्रमाके शुभग्रहसे ईसराफयोग, और पापग्रहसे इत्थशालयोग होते हों, तो घृतमधुर विना ही कुत्सित अन्न भोजन हो। पापग्रहसे इत्थशाल हो, पापग्रह ही से ईसराफ योग भी होता हो, तो दूसरी जगहसे भी मिला हुआ अन्न भोज्य नहीं होता है॥

चन्द्रमा यदि अपने स्थान के स्वामी से देखे जांय, तो सुखसे ( विना प्रयाससे ) भोजन होता है। इस से अन्यथा कष्टसे भोजन कहना। यदि चन्द्रमाको बृहस्पति से इत्थशाल होता हो, तो सम्मानपूर्वक भोजन कहना। चन्द्रमा सूर्यसे इत्थशाल करें तो अत्यन्त पवित्र तीखरस भोजन कहना ॥ १३५ ॥

शुक्र से चन्द्रमाको इत्थशाल होता हो तो स्वादिष्ट भोजन कहना। बुधसे इत्थशाल होता हो, तो बहुत से लोगों से सम्मिलित स्थानमें हँसी गीतसे सहित, शास्त्र की कथा इतिहासके साथ सुन्दर भोजन कहना। शनिसे चन्द्रमाको इत्थशाल होता हो तो खराब जगह में भोजन कहना। मङ्गलसे चन्द्रमाको इत्थशाल होता हो, तो गर्म अन्न भोजन में मिले ॥ १३६ ॥

यदि वदति भोजनार्थं निमन्त्रितो यामि ? शशिमहीसुतयोः।
एकस्थितयोः केन्द्रे मुथशिलयोर्वाऽपि पूर्णता भवति ॥ १३७ ॥
विधिनाऽनेन शनेः स्यात्कुभोजनं ह्यसितयोस्मीष्टान्नम्।

जीवस्य तुष्टिजनकं होरेशे तनुखगे स्वयमुपैति ॥ १३८ ॥
यश्चन्द्रेण मुथशिली तस्मिन्नीशे तनोः स्वगृहभोज्यम् ।
वित्तेशे भृत्यगृहे भ्रातृणां सहजपे तथाऽन्यत्र ॥ १३९ ॥

यदि कश्चिज्जनः 'भोजनार्थं निमन्त्रितो भूत्वा यामि' इति वदति, तदा शशिमहीसुतयोः = चन्द्रकुजयोः, केन्द्रे एकस्थितयोः, अपि वा मुथशिलयोश्च सतोः भोजने पूर्णता = पर्याप्तता भवति ॥ १३७ ॥

अनेन विधिना शनेः सकाशात् कुभोजनं भवति । एवं शसितयोः=बुधशुक्रयोः वशेन अभीष्टान्नं लभ्यते । वा जीवस्य = गुरोः, होरेशे = होरानाथे तनुखगे = प्रथमदशमगते सति, स्वयम् = अप्रयत्नकृतमेव तुष्टिजनकं = तृप्तिसम्पादकं भोजनं भवति ॥ १३८ ॥

चन्द्रेण सार्कं यः ग्रहः मुथशिली, तस्मिन् ग्रहे तनोर्लग्नस्य ईशे = स्वामिनि सति तदा स्वगृहभोज्यं भवति । अथ वित्तेशे=द्वितीयेशे, चन्द्रेत्थशालकरे भृत्यगृहे= दासगृहे भोजनम्, तथा यदि सहजपे=तृतीयेशे, चन्द्रेत्थशालकरे तदा भ्रातृणां गृहे तथा अन्यत्र भोजनं वाच्यम् ॥ १३९ ॥

भाषा—मैं निमन्त्रण खाने को जाता हूं, क्या भोजन मिलेगा? ऐसा यदि पूछे तो चन्द्रमा मङ्गल यदि केन्द्रमें एक किसी स्थान में हों, इत्थशाल योग भी होता हो, तो भोजन में पूर्णता होती है ॥ १३७ ॥

इस प्रकार यदि चन्द्रमा के साथ शनि केन्द्रमें हो, इत्थशाल भी करता हो तो कदन्न भोजन मिलता है। ऐसे बुध और शुक्रमें मनमाना भोजन मिलता है। बृहस्पति जिस होरामें हों, उसका स्वामी ग्रह यदि लग्नमें या दशम में हो, तो विना प्रयास के सन्तोषकर भोजन मिलता है ॥ १३८ ॥

या चन्द्रमा को जिस ग्रहसे इत्थशाल होता हो, वही ग्रह यदि लग्न का स्वामी हो, तो अपने घरका ही भोजन कहना। यदि द्वितीयेश से इत्थशाल होता हो, तो नौकर के घर में, तथा तृतीयेशसे इत्थशाल हो, तो भाईके घर में और अन्यत्र कहना ॥१३९॥

लग्नस्थिते सूर्यसुतेऽथ राहौ सूर्येक्षिते वैरिनिमन्त्रितस्य ।
स्याच्छस्त्रघातः शशिभौमयोश्च लग्नस्थयोः सौरिदृशाऽस्ति घातः ॥१४०॥
जीवे सिते लग्नगते बलाढ्ये चन्द्रे बुधे लग्नगते शुभान्विते ।
त्रिलाभषष्ठास्पदगैश्च पापैः स्यात्प्रेमनिर्वैरकरं सुभोजनम् ॥ १४१ ॥
भोज्यं बुभुक्षा भोक्ता च सुखास्ताम्बरक्रमात् ।
लग्नपो भोज्यदस्तेषां बलेन फलमादिशेत् ॥ १४२ ॥

तुर्यशलाभाविपतीत्थशाले शुभग्रहेक्षायुतितः सुभोज्यम् ।
इत्थं खलग्नास्तपतीत्थशाले लाभेश्वरे तत्सुखलाभ ऊह्यः ॥ १४३ ॥

सूर्यसुते = शनौ, अथवा राहौ लग्नस्थिते सति, तथा च सूर्येक्षिते = रविदृष्टे, तथा वैरिनिमन्त्रितस्य = शत्रुजनामन्त्रितस्य जनस्य शस्त्रघातः स्यात् । एवं शशिभौमयोः = चन्द्रकुजयोः लग्नस्थयोः, सौरिदृशा = शनिदृष्टया दृष्टयोः सतोः प्रच्छकस्य घातः = शस्त्राघातः स्यात् ॥ १४० ॥

एवं जीवे=गुरौ, सिते=शुक्रे लग्नगते, बलाढ्ये च सति, वा चन्द्रे बुधे च लग्नगते, तथा शुभान्विते = शुभयुक्ते च सति, तथा पापैः=शनिरविकुजैः त्रिषष्ठलाभास्पदगैः=३।६।१०।११ एतत्स्थानगतैः, तदा प्रेमनिर्वैरकरं सुभोजनं स्यात् ॥१४१॥

सुखभावबलेन भोज्यम्, आयभावबलेन बुभुक्षा, लग्नबलेन भोक्ता = खादकः, भवति । तथा लग्नपः = लग्नेशः भोज्यदः = भोजयिता भवति । एतेषां बलेन फलं शुभाशुभम् आदिशेत् = कथयेत् ॥ १४२ ॥

तुर्यशलाभाविपतीत्थशाले=चतुर्थेशलाभेशयोर्मुथशिले शुभग्रहेक्षायुतितः=शुभदृष्टियोगात्, सुभोजनं मिलति । इत्थम् = अमुना प्रकारेण, लाभेश्वरे = एकादशभावेशे, खलग्नास्तपतीत्थशाले=दशमेशलग्नेशसप्तमेशग्रहकृतेत्थशाले सति तत्सुखलाभः = भोजनविनोदप्राप्तिर्भवति ॥ १४३ ॥

**भाषा—शनि वा राहु लग्नमें हो, और रविसे दृष्ट हो, तो शत्रुसे निमन्त्रण पाकर शस्त्रके आघातको भोगता है। इस प्रकार चन्द्रमा और मङ्गल लग्नमें हों, शनिसे देखें जांय, तो शस्त्रका घात होता है ॥ १४० ॥**

**इस प्रकार बृहस्पति और शुक्र बलसे युक्त होकर लग्नमें हों, वा चन्द्रमा और बुध लग्नमें हों, शुभग्रहसे युक्त हों, और पापग्रह ३।६।१०।११ इन स्थानोंमें हों, तो प्रेम आनन्द विनोद पूर्वक अच्छा पदार्थ भोजन मिलता है ॥ १४१ ॥**

**चौथे भावसे भोजनीय पदार्थ, एकादश भावके बलसे भूख, लग्नसे खानेवाला, लग्नेश खिलानेवाला होता है। इन सबोंके बल देखकर शुभ अशुभ भोजन कहना चाहिये ॥ १४२ ॥**

**यदि चतुर्थेश और एकादशेश आपसमें इत्थशाल करते हों, शुभग्रहकी दृष्टि और योग भी होता हो, तो अच्छा भोजन मिलता है। इस प्रकार एकादशेश, दशमेश लग्नेश और सप्तमेश से इत्थशाल करता हो तो भोजनका सुख मिलता है ॥ १४३ ॥**

अथ स्वप्नविचारः—

लग्नेऽर्के नृपतिं वह्निं शस्त्रं पश्यति लोहितम् ।
श्वेतं पुष्पं सितं वस्त्रं गन्धं नारीं च शीतगौ ॥ १४४ ॥
रक्तमांसप्रवालं च सुवर्णं धरणीसुते ।
बुधे खे गमनं जीवे धनं बन्धुसमागमम् ॥ १४५ ॥
जलावगाहनं शुक्रे शनौ तुङ्गावरोहणम् ।
लग्ने लग्नांशपवशात्स्वप्नो वाच्योऽथ वा बुधैः ॥ १४६ ॥
सर्वोत्तमबलाद्वाऽपि खेटाद्बुद्ध्या विचिन्तयेत् ।
बलसाम्ये फलं मिश्रं दुःस्वप्नो निर्बलैः खगैः ॥ १४७ ॥

अर्के = सूर्ये लग्ने सति नृपतिं=राजानं, वह्निम् = अग्निं, शस्त्रम् = आयुधम् , लोहितम्=रुधिरं पश्यति । शीतगौ = चन्द्रे, लग्ने सति, श्वेतं पुष्पं, सितं = स्वच्छं, वस्त्रं, गन्धं, नारीं = स्त्रियं च पश्यति ॥ १४४ ॥

धरणीसुते = कुजे लग्नगते सति रक्तमांसप्रवालं—रक्तं = शोणितं, मांसं, प्रवालम् = विद्रुमं, सुवर्णं च पश्यति । बुधे लग्नगते, खे = आकाशे गमनं = भ्रमणं दृश्यते । जीवे = गुरौ लग्नगते धनं = रूप्यकादि, बन्धुसमागमश्च दृश्यते ॥१४५॥

शुक्रे लग्नगते सति जलावगाहनं=नदीतडागादौ स्नानं, शनौ लग्ने सति तुङ्गावरोहणम् = उच्चभवनवृक्षपर्वतादिषु गमनम् । अथवा लग्ने लग्नांशपवशात् बुधैः= प्राश्निकैर्गणकैः स्वप्नः वाच्यः ॥ १४६ ॥

वा सर्वोत्तमबलात्=सकलग्रहेषु यो हि विशेषबलवान् , तस्मात् , वा बुद्ध्या= स्वधिया स्वप्नं विचिन्तयेत् । अथ ग्रहाणां बलसाम्ये मिश्रं = सम्मिलितं फलं वाच्यम् । सकलैः खगैः = ग्रहैः निर्बलैः सद्भिः दुःस्वप्नो वाच्यः ॥ १४७ ॥

भाषा—रवि लग्नमें हो, तो राजाको, आगको, हथियारको और शोणित ( खून ) को आदमी देखता है । चन्द्रमा लग्नमें हो, तो सफेद फूल, सफेद वस्त्र, गन्ध, स्त्री को देखता है ॥ १४४ ॥

यदि मङ्गल लग्नमें हो, तो शोणित, मांस, मूंगा, सोना इन सबों को स्वप्नमें देखता है । बुध लग्नमें हो, तो आकाशमें उड़ना देखे। बृहस्पति यदि लग्नमें हो, तो रुपये धन दौलत और बन्धु बान्धवका समागमन देखता है ॥ १४५ ॥

शुक्र लग्नमें हो, तो नदी, पोखरे में स्नान करना देखता है । शनि लग्नमें हो, तो ऊंचे मकान, पेड़, पर्वत आदि पर चढ़नेको देखता है । अथवा लग्नगतनवांशके अनुसार पण्डितों को स्वप्न का विचार करना चाहिये ॥ १४६ ॥

अथवा सबसे बली ग्रहके अनुसार अपनी बुद्धिसे स्वप्नका विचार करना चाहिये जहां बहुतेरे ग्रहोंके बल समान हों, वहां मिले जुले स्वप्न होते हैं, । जहां सभी ग्रह निर्बल हों, वहां खराब स्वप्न कहना चाहिये ॥ १४७ ॥

अत्रोत्पलः—

रविलग्ने शशिदृष्टे रविशशिसमेतलग्नाद्वा ।
स्वप्नं दुष्टं प्रवदेत्प्रष्टुर्लग्नान्तरात्कालः ॥ १४८ ॥

रविलग्ने = रविगतलग्नस्थाने, शशिदृष्टे=चन्द्रदृष्टे सति, वा रविशशिसमेतलग्नात्=रविचन्द्रयुक्तलग्नात् प्रष्टुः = प्रच्छकस्य दुष्टं स्वप्नं प्रवदेत् । लग्नान्तरात् कालः=समयः, स्यात् ॥ १४८ ॥

भाषा—रवि लग्नमें हो, उसपर चन्द्रमाकी दृष्टि हो, तो खराब स्वप्न देखता है । या रवि और चन्द्रमासे युक्त लग्नसे भी दुष्ट स्वप्न होता है । लग्नके अन्तरसे कालका ज्ञान होता है ॥ १४८ ॥

अथाखेटकविचारः—

लग्नेशजामित्रपतीत्थशाले सुस्नेहदृष्ट्या त्वनयोर्द्वयोश्च ।
आखेटकः स्यात्सफलोऽरिदृष्ट्या स्यान्निष्फलो वाऽल्पफलोऽतिकष्टात् १४९
लग्नेश्वरे द्यूनगते विलग्ने जायेश्वरे स्यान्मृगया प्रभूता ।
जामित्रनाथे हिबुके नभःस्थे चाखेटकः स्वल्पतरोऽपि न स्यात् ॥ १५० ॥

ज्ञभौमौ सबलौ सिद्धिरस्तांशे मृगयाच्युतिः ।
लग्नाद्द्यूने तत्पती च हेतुस्तैर्जलराशिगैः ॥ १५१ ॥
जलजं खेटकं ब्रूयादन्यथैर्वनसंभवः ।
क्रूराक्रान्तानि यावन्ति मध्ये भानीन्दुलग्नयोः ।
तावन्तः प्राणिनो वाच्या द्वित्रिघ्नाः स्वांशकादिषु ॥ १५२ ॥

लग्नेशः प्रसिद्धः, जामित्रपतिः=सप्तमेशः, अनयोरित्थशाले सति, अनयोर्द्वयोः लग्नेशसप्तमेशयोः सुस्नेहदृष्ट्या आखेटकः = मृगया = वन्यपशुमारणार्थं विनोदः सफलः स्यात् । तयोररिदृष्ट्या = शत्रुदृष्ट्या निष्फलः स्याद्वाऽतिकष्टादल्पफलः स्यात् १४९

लग्नेश्वरे = लग्नेशे द्यूनगते = सप्तमगते, जायेश्वरे विलग्ने सति मृगया प्रभूता = बहुला भवति । च जामित्रनाथे = सप्तमेशे हिबुके = चतुर्थे, नभःस्थे = दशमस्थे सति, स्वल्पतरः अपि आखेटकः = मृगया न स्यात् ॥ १५० ॥

ज्ञभौमौ = बुधकुजौ सबलौ [illegible] सिद्धिः = [illegible] स्यात् । तौ अस्तांशे=

कांशान्तर्गते सति मृगयाच्युतिः = आखेटत्यागः स्यात्। वा लग्नात् सकाशात् तत्पती = चतुर्थदशमयोः स्वामिनौ द्यूने = सप्तमे, स्थितौ, तदा हेतुः = आखेटककारणं भवति। तैर्जलराशिगैः = जलचरराशिगैः जलजं = जलचरजीवः, खेटकं = आखेटकं स्यात्। वा तैर्ग्रहैः, वन्यराशिस्थैः = सिंहादिस्थैस्तदा वनसम्भवः = शूकरहरिणादिजीवः वाच्यः। इन्दुलग्नयोर्मध्ये यावन्ति भानि = भवनानि, क्रूराक्रान्तानि = पापाधिष्ठितानि, भवेयुः तावन्तः प्राणिनः वाच्याः। यदि ते पापाः स्वांशकादिषु = स्वकीय नवांश, द्रेष्काणादिषु स्थितास्तदा द्वित्रिनिघ्नाः प्राणिनः वाच्याः॥

भाषा—लग्नेश और सप्तमेशको इत्थशाल होता हो. और वे दोनों प्रेम दृष्टिसे एक दूसरे को देखे, तो शिकार करना सफल होता है। यदि वे शत्रुदृष्टिसे देखें, तो व्यर्थ होता है, या अत्यन्त कष्टसे थोड़ा बहुत कुछ हो जाता है॥ १४९॥

लग्नेश सप्तम में हो, या सप्तमेश लग्न में हो, तो बहुत से शिकार होते हैं। यदि सप्तमेश चौथे, या दशमें हों, तो थोड़ा भी शिकार नहीं होता है॥ १५०॥

बुध और मङ्गल सबल हों, तो शिकार मिलता है। यदि वे दोनों अस्त हो, या सप्तम भाव के नवांश में हों, तो शिकार छूट जाता है। लग्न से सप्तम में यदि चतुर्थेश और दशमेश हों, तो शिकार का कारण होता है। यदि वे ग्रह जलचरराशि में हों, तो वनैले पशु का शिकार कहना। चन्द्रमा से लग्न पर्यन्त राशियों में जितने स्थानों में पापग्रह हों, उतने जीव शिकार में मिलें। यदि ग्रह अपने नवांश आदि में हों, तो द्विगुणित त्रिगुणित शिकार की संख्या कहनी चाहिये॥ १५१-१५२॥

अथ कलहविचारः-भुवनदीपके—

क्रूरः खचरो लग्ने विवादपृच्छासु जयति विवादं तम्।
सर्वावस्थासु परं नीचेऽस्ते जयति न द्विषतः॥१५३॥
लग्नद्यूने मुक्त्वा परस्परं क्रूरयोर्भकटदृष्टौ।
विवदद्वादियुगं तच्छुरिकाभ्यां प्रहरति तदैवम्॥ १५४॥
लग्ने द्यूने च यदि क्रूरः खचरो विवादिनोर्न तदा।
कलहनिवृत्तिः काले जयति हि बलवान् गतबलन्तु॥ १५५॥
लग्नेशसुतदः सौम्याः केन्द्रे सन्धिर्न वाऽन्यथा।
लग्नद्यूनेशषष्ठेशारित्वेऽप्यन्योन्यविग्रहः॥ १५६॥

विवादपृच्छासु = विवादे मम जयो भविष्यति न वा? एवं पृच्छासु = प्रश्नेषु,

क्रूरः = पापः खचरः = ग्रहः, लग्ने स्थितस्तदा सर्वावस्थासु तं विवादं जयति । परंतु लग्नेशे नीचे वा अस्ते = अस्तंगते सति द्विषतः शत्रून् न जयति ॥ १५३ ॥

लग्नद्यूने = प्रथमसप्तमे, मुक्त्वा = त्यक्त्वा, अन्यत्र स्थितयोः क्रूरयोः = पापग्रहयोः, परस्परम् = अन्योन्यं म्रकटदृष्टौ = शत्रुदृष्टौ सत्यां विवदत् = विवादं कुर्वत्, वादियुगं = वादिद्वयं कर्तृ छुरिकाभ्यां तदा एवं प्रहरति ॥ १५४ ॥

यदि क्रूरः खचरः = पापग्रहः, लग्ने वा द्यूने = सप्तमे भवेत् । तदा विवादिनोः = विवादं कुर्वतोः अनयोः कलहनिवृत्तिः = विरोधशान्तिः न भवति । परन्तु काले = समये उपस्थिते बलवान् वादी गतबलं विवादिनं जयति ॥ १५५ ॥

लग्नेशसुतदः = लग्नपतिग्रहः पुत्रप्रदश्च ग्रहः तथा सौम्याः = शुभग्रहाः, केन्द्रे स्थिताः, तदा सन्धिः स्यात् । अन्यथा न सन्धिः । लग्नद्यूनेशषष्ठेशारित्वे = लग्नाद्यो द्यूनेशः तथा षष्ठेशः, अनयोररित्वे = शत्रुत्वे सति, अन्योन्यविग्रहः = परस्परविरोधः स्यादेव ॥ १५६ ॥

भाषा—विवाद के प्रश्नमें पापग्रह लग्नमें हो, तो सब अवस्थामें वादी को जीतता है । यदि लग्नेश नीच में या अस्तंगत हो तो शत्रु को नहीं जीतता है ॥ १५३ ॥

लग्न और सप्तम स्थान को छोड़ कर यदि दो पापग्रहों की परस्पर शत्रुदृष्टि हो, तो एक दूसरे से बकवाद करते हुवे छूरा से एक दूसरे को मारता है ॥ १५४ ॥

यदि पापग्रह लग्न में या सप्तम में हो, तो वादी प्रतिवादी की कलह शान्ति नहीं होती । समय आने पर बलवान वादी निर्बल प्रतिवादी को जीतता है ॥ १५५ ॥

लग्नेश और पुत्र प्रद ग्रह और शुभग्रह ये सब केन्द्र में हों, तो सन्धि होती है । अन्यथा अर्थात् केन्द्रसे अन्यत्र हो, तो सन्धि नहीं होती है । लग्न से सप्तमेश, और षष्ठेश में शत्रुता हो, तो परस्पर विरोध रहता ही है ॥ १५६ ॥

अथ प्रवासिस्थितिविचारः–भु० दी०—

गृहमागतो न यदसौ किं बद्धः किमथवा हतः ? इति प्रश्ने ।<br>
मूर्तौ क्रूरो यदि तन्न हतो बद्धोऽथवा पुरुषः ॥ १५७ ॥<br>
त्रिकोणचतुरस्रास्तस्थितः पापग्रहो यदि ।<br>
ग्रहैर्निरीक्षितः पापैर्नूनं बन्धनमादिशेत् ॥ १५८ ॥<br>
सप्तमगोऽष्टमगो वा चेत् क्रूरस्तद्धतेपि वा बद्धः ।<br>
मूर्तौ च सप्तमे वा यद्वा लग्नेऽष्टमेऽपि भवेत् ।<br>
क्रूरस्तदसौ पुरुषो बद्धश्च हतश्च मुच्यते च परम् ॥ १५९ ॥

बद्धः सप्ताष्टमे क्रूरे मूर्त्यस्ते चाष्टलग्नगे ।
बद्धो विमुच्यतेऽत्याशु क्रूरः श्रेयांस्तनौ तदा ॥ १६० ॥

यत् = यस्मात् । असौ परदेशगतो मम जनः गृहम् , न आगतः, अत एव किं स बद्धः=कारागारे यन्त्रितः ? अथवा किं कुत्रापि केनापि जनेन हतः=मारितः ?, इति प्रश्ने यदि क्रूरः=पापः मूर्तौ = लग्ने, भवेत् , तदा स हतो न अथवा स पुरुषः बद्धोऽपि न वाच्यः ॥ १५७ ॥

यदि पापग्रहः, त्रिकोणचतुरस्रास्तस्थितः = ९।५।४।८।७ स्थाने स्थितः, पापैः ग्रहैः निरीक्षितः = दृष्टः, तदा नूनं = निश्चितं बन्धनम् आदिशेत् ॥ १५८ ॥

चेत् = यदि, क्रूरः=पापग्रहः सप्तमगः वा अष्टमगः भवेत् , तदा हतेऽपि बद्धः । वा पापग्रहः मूर्तौ = लग्ने, वा सप्तमे, यद्वा लग्ने वा अष्टमे पापग्रहः स्यात् तदाऽसौ पुरुषः = परदेशी, बद्धः, हतः = ताडितः, परं मुच्यते च ।। १५९ ।।

क्रूरे = पापग्रहे सप्ताष्टमे, वा मूर्त्यस्ते = लग्ने सप्तमे च, वा अष्टमे भवेत्, तदा आशु = शीघ्रं विमुच्यते = कारागारमुक्तो भवति । यदि क्रूरः = पापग्रहः तनौ लग्ने, तदा श्रेयान् = कल्याणं भवति ॥ १६० ॥

भाषा—मेरा आदमी परदेश गया, लेकिन लौटकर घर नहीं आया, क्या वह कहीं जेलमें बांधा तो नहीं गया ? या मर तो नहीं गया ? इस प्रश्नमें पापग्रह लग्नमें हो, तो मारा नहीं गया है, या बन्धनमें भी नहीं है । यह कहना ॥ १५७ ॥

यदि पाप ग्रह ९।५।४।८।७ में हों, पापग्रहोंसे देखें भी जांय, तो निश्चय बन्धन कहना ॥ १५८ ॥

यदि पापग्रह सातवें आठवें स्थानमें हो तो मारने पर बाधा गया कहना । यदि पापग्रह लग्नमें या सप्तममें या अष्टममें हो तो वह परदेशी बांध कर पीटा गया हो लेकिन छूटता है ॥ १५९ ॥

यदि पापग्रह ७।८ या १।७ वें में या ८।१ में हो, तो बन्धनमें पड़ा हुआ जल्दी छुटकारा पाता है । पाप ग्रह यदि लग्नमें हो, तो कल्याण कहना ॥ १६० ॥

अथ बद्धमोक्षप्रश्नः प्रश्नदीपके—

बद्धोऽस्ति तत्किं भवितेति प्रश्ने विमुच्यतेऽसौ खलु मृत्युयोगे ।
कदा विमुच्येदिति पृच्छमाने शुभं कदा भावि च तैर्मृतिः स्यात् ॥१६१॥

मुक्तिप्रश्ने यदा केन्द्रे केन्द्रेशाः स्युर्न मोक्षदाः ।
तस्मिन्वर्षेऽथ लग्नेशः पतितः केन्द्रगेन च ॥ १६२ ॥

संबन्धेऽमुः स चेत्क्रूरो मृतीशः स्यात्तदा मृतिः ।
लग्नेशेऽस्तमितेऽम्बुस्थे कुजदृष्टे तदा मृतिः ॥ १६३ ॥
चन्द्रश्चाम्बुगपापेन मृत्युनाथेन योगकृत् ।
तदा गुप्त्यां मृतिश्चन्द्रः केन्द्रे मन्दयुतोऽन्वितः ॥ १६४ ॥
दीर्घपीडा च भौमेन युग्दृष्टे बन्धताडने ।
दृश्यार्धे लग्नपश्चेत्स्याद्व्ययपेनेत्थशालवान् ॥ १६५ ॥
पलायते तदा बद्धो व्ययगो लग्नगोऽपि वा ।
तृतीयनवमस्वामी व्ययगो लग्नपेन च ॥ १६६ ॥
यदीत्थशालयोगेऽमुस्तदाऽपि च पलायते ।
दृश्यार्धे ह्युपचारेण चन्द्रो मुथशिलो तदा ॥ १६७ ॥
बन्धमोक्षस्त्रिधर्मेशः सद्ग्रहः शीघ्रमोक्षकृत् ।
पतितेन्दुस्त्रिधर्मस्थग्रहसम्बन्धकृत्तदा ॥ १६८ ॥
केन्द्रस्थत्रिभवेशेन योगेऽमुश्चेत्तदाऽचिरात् ।
यावच्छुक्रो बली लग्ने तावत्कर्त्ता बलाधिकः ॥ १६९ ॥
अस्तंगते शनौ शुक्रे बद्धमोक्षादिसम्भवः ।
म्रियते येन योगेन तेन योगेन मुच्यते ॥ १७० ॥
मेषे तुले च शीघ्रं स्यात्कर्के नक्रे सकष्टता ।
स्थिरेऽचिराद्द्विदेहस्थे मोक्षो मध्यमकालतः ॥ १७१ ॥

यः जनः बद्धः = राजगृहीतः अस्ति, तद्विषये किं भविता=किं भविष्यति ? इति प्रश्ने मृत्युयोगे=जातकोक्तमृत्युयोगे सति असौ निगडबद्धः खलु विमुच्यते = मुक्तो भवति । अथ कदा स विमुच्येत् ? इति पृच्छमाने सति, वा कदा शुभं भावि इति प्रश्ने तैः पापयोगैः मृतिः = मरणं स्यात् ॥ १६१ ॥

मुक्तिप्रश्ने = बन्धनाच्च्युतिप्रश्ने यदा केन्द्रेशाः = केन्द्रस्थानस्वामिनः, केन्द्रे १।४।७।१० स्थाने स्थिताः स्युस्तदा मोक्षदाः = बन्धनमुक्तिकराः न = नहि स्युः । तस्मिन् वर्षे = वर्षप्रवेशकुण्डल्यां, लग्नेशः=वर्षलग्नस्वामी ग्रहः पतितः=पापयुतदृष्टः केन्द्रगेन = केन्द्रस्थानगतेन ग्रहेण सह सम्बन्धेऽमुः = संयोगेऽमुः चेद् = यदि स मृतीशः = अष्टमेशः क्रूरः = पापग्रहः, तदा मृतिः=मरणं स्यात् । लग्नेशे=लग्नपतौ, अस्तमिते = अस्तंगते, अम्बुस्थे = चतुर्थस्थानस्थे, कुजदृष्टे = भौमदृष्टे तदा

मृतिः स्यात् ॥ १६२-१६३ ॥

चन्द्रः, अम्बुगपापेन = चतुर्थस्थानगतपापग्रहेण, मृत्युनाथेन = अष्टमेशेन च योगकृत् = संयोगकृत्, तदा गुप्त्यां = कारागारे मृतिः स्यात्। चन्द्रः केन्द्रे स्थितः मन्दयुगीक्षितः = शनियुतवीक्षितः, तदा दीर्घपीडा = चिरकालवेदना वाच्या। वा केन्द्रस्थचन्द्रे भौमेन युगदृष्टे सति बन्धताडने भवतः। वा लग्नपः = लग्नेशः इत्थार्धे = लग्नतः पूर्वषड्राश्यन्तरे भवेद्यथा मेषलग्ने वृश्चिकादिषड्राश्यन्तरे भवेत्, व्ययपेन = व्ययेशेन इत्थशालवान्, तथा बद्धः = कारागारवासी जनः पलायते, वा लग्नेशे, व्ययगे अपिवा लग्नगे वा तृतीयनवमस्वामी व्ययगः लग्नपेन यदि इत्थशालयोगेप्सुः = इत्थशालयोगाभिलाषी भवेत् तदा अपि बद्धः पलायते = कारागाराद्बहिर्निर्गच्छति। यदि च चन्द्रः उपचारेण = संचारवशेन इत्थार्धे स्थितः केनापि ग्रहेण मुथशिली तदा बन्धमोक्षः स्यात्।

त्रिधर्मेशः = तृतीयनवमेशः, सद्ग्रहः = शुभग्रहः स्यात् तदाऽपि शीघ्रमोक्षकृत् भवति। पतितेन्दुः नीचशत्रुभगश्चंन्द्रः त्रिधर्मस्थग्रहसम्बन्धकृत् = तृतीयनवमस्थानस्थग्रहेण सम्बन्धकर्त्ता स्यात्, तदा शीघ्रमोक्षकृत् स्यात् ॥ १६४-१६८ ॥

यदा पतितेन्दुः केन्द्रस्थत्रिभवेशेन = केन्द्रगततृतीयैकादशपतिना योगेप्सुः = इत्थशालाभिलाषी स्यात्तदा अचिरात् बन्धमोक्षकृत् स्यात्। यावत्कालं बली शुक्रः लग्ने स्यात्तावत् कर्त्ता = बन्धनदाता, बलाधिकः भवति ॥ १६९ ॥

अथ शनौ शुक्रे अस्तङ्गते = रविसान्निध्याल्लुप्तकिरणे सति बन्धमोक्षादिसम्भवः भवति। येन एव योगेन लोकः म्रियते, तेनैव योगेन मुच्यते = बन्धनात् त्यज्यते १७०

शुक्रे शनौ वा मेषे तुले सति शीघ्रं बन्धनान्मुक्तिः स्यात्। शुक्रे शनौ वा कर्के नक्रे = मकरे सति सकष्टता = मुक्तौ क्लेशः स्यादित्यर्थः। स्थिरे शुक्रे शनौ वा सति अचिरान्मुक्तिः, द्विदेहस्थे = द्विःस्वभावराशिस्थे शुक्रे शनौ वा सति मध्यमकालतः = न चिरात् न शीघ्रात्, अर्थाच्चिरशीघ्रकालयोर्मध्यमकालेन मोक्षः स्यात् ॥ १७१ ॥

भाषा—जो कोई बन्धनमें है, उसको क्या होने वाला है?, इस प्रश्नमें यदि मृत्युयोग हो, अर्थात् जातकमें जिन २ योगों में जन्मलेनेसे जातक मर जाता है। ऐसे योग हों, तो बन्धनमें रहनेवाला छुटकारा पाता है। अब फिर दूसरा प्रश्न होता है कि वह कब छूटेगा? इस प्रश्न में, और कब उसको अच्छा होने वाला है? इस प्रश्न में भी मृत्युयोग होने से मरण कहना॥ १६१ ॥

मुक्ति ( छूटने ) के प्रश्नमें यदि केन्द्रेश केन्द्रमें हों, तो छुटकारा नहीं करते। उस वर्ष की वर्षकुण्डली में यदि लग्नेश, पापस्थान में पापयुत दृष्ट हो, और केन्द्र-स्थित पापग्रह से सम्बन्ध करने वाला हो और वहां अष्टमेश पापग्रह हो, तो मरण कहना। यदि लग्नेश अस्तंगत हो, चतुर्थ स्थान में स्थित हो, मङ्गल से दृष्ट हो, तो मरण होता है ॥ १६२–१६३ ॥

यदि चन्द्रमा चतुर्थस्थानस्थित पापग्रहसे या अष्टमेश से इत्थशाल करता हो तो जेल ही में मरण कहना। यदि चन्द्रमा केन्द्र में हो, शनि से युत दृष्ट हो, तो लम्बे समय तक पीड़ा कहनी चाहिये, यदि केन्द्र स्थित चन्द्रमा मङ्गल से युत दृष्ट हो, तो बन्धन और ताड़न–मार लगना भी सम्भव होता है।

यदि लग्नेश लग्न से पीछे छ राशियों में हो, और व्ययेश से इत्थशाल भी करता हो, तो जेल में रहने वाला भाग जाता है। या यदि व्ययेश लग्न में हो, वा तृतीयेश और नवमेश व्ययस्थान में हों, लग्नेश से यदि इत्थशाल करने वाला हो, तो भी जेल से भाग जाता है। यदि चन्द्रमा संचारसे इस्यार्ध (लग्न से पीछे छै राशि के अन्दर) में हो, इत्थशाल भी करता हो, तो बन्धन से छुटकारा होता है। यदि तृतीयेश या नवमेश शुभग्रह हो, तो जल्दी ही छुड़ाने वाला होता है ॥ यदि पापग्रह के राशि में स्थित पापग्रहसे युत दृष्ट चन्द्रमा हो, और तृतीय नवम स्थान में स्थित ग्रहों से सम्बन्ध करता हो, तो भी जेल से छुड़ाता है। यदि वैसे चन्द्रमा केन्द्रस्थित तृतीयेश या नवमेश से इत्थशाल करता हो, तो जल्द ही छुड़ाता है। जबतक बली शुक्र लग्नमें हों, तबतक बन्धन योग करने वाला प्रबल रहता है। शनि या शुक्र यदि अस्तंगत हो तो बन्धन से छूटजाने का सम्भव होता है ॥ जिन २ योगों से जातक मरता है, उन्हीं योगों से जेली मनुष्य छूटता है ॥ शुक्र या शनि यदि मेष में या तुला में हों, तो जल्दी छूटता है, यदि कर्क में या मकर में हो, तो कष्ट के साथ छूटता है। यदि स्थिर राशि में हो, तो देर में छूटता है। यदि द्विःस्वभाव राशि में हो, तो न जादे, न तो जल्दी बीच बीचों के काल में छूटता है॥ १६४–१७१ ॥

अथ नौकाप्रश्नः—

**क्षेमायतं वहित्रस्य मज्जनं वपनं जले।**
**पण्यव्यवहृतौ लाभो वाऽपि प्रश्नचतुष्टयम् ॥ १७२ ॥**

वहित्रस्य = नौकायाः क्षेमायतं, वा क्षेमाय = कुशलाय तं ब्रूहि, वा तस्य जले मज्जनं, = जलमध्ये प्रब्रूडनम् , वपनं = स्खलनं वा पण्यव्यवहृतौ = क्रयविक्रयव्यवहारे, लाभः। एतत् प्रश्नचतुष्टयं भवति ॥ १७२ ॥

भाषा—नौकाका कुशल, या जलमें उसका डूबना, तथा नौकाका वपन ( टूटना-फटना ) तथा खरीद बिक्रीमें लाभ, ये ही नौका सम्बन्धी चार प्रश्न होते हैं ॥ १७२ ॥

नौर्लाभदा स्यान्मम नेति पृष्टे केन्द्रे शुभाश्चेदितरेषु पापाः।
बलोज्झिताः क्षेमजयार्थदा नौर्भावीति वाच्यं विदुषा विमृश्य ॥ १७३ ॥
लग्नाधिपे वक्रिणि चांशनाथे व्यावृत्य नौरेति च मार्गतः सा।
चेत्सौम्यदृष्टः कुशलेन पापैर्दृष्टस्तदा वस्तु विनेति वाच्यम् ॥ १७४ ॥
विलग्नरन्ध्राधिपती स्वगेहे प्रवेक्ष्यतश्चेद्व्यवहारलाभः।
यदाऽष्टमे सौम्यखगा बलाढ्यास्तदा तरी लाभसुखप्रदा स्यात् ॥ १७५ ॥

नौः = नौका, मम लाभाय=व्यापारे प्राप्तिदात्री स्यान्न वा ? इति पृष्टे सति शुभाः=शुभग्रहाः केन्द्रेषु स्थिताः, पापाः=शनिरविकुजाः, इतरेषु=त्रिषडायेषु स्थितास्तथा बलोज्झिताः = बलहीनाः स्युस्तदा नौः=नौका, क्षेमसुखार्थदा = कुशल-मनोविनोद-धनलाभदा, भावी=भविष्यति, इति विमृश्य=विचार्य, वाच्यम्=वक्तव्यम् ॥ १७३ ॥

लग्नाधिपे=लग्नेशे, च=पुनः अंशनाथे=लग्ननवांशनाथे वक्रिणि सति तदा सा नौः=नौका, मार्गतः = वाटतः, व्यावृत्य=परावर्त्य, एति = आयाति । चेत् वक्री लग्नेशः, वा वक्री लग्ननवांशेशः सौम्यदृष्टः तदा कुशलेन नौकाऽऽगमनम् । चेत्तादृशो लग्नेशो वा लग्ननवांशेशः पापैः दृष्टः, तदा वस्तु=वाणिज्यपदार्थं विनैव नौका एति, इति वाच्यम् ॥ १७४ ॥

यदि विलग्नरन्ध्राधिपती = लग्नेशाष्टमेशौ स्वगेहे=स्वराशौ प्रवेक्ष्यतः=प्रवेष्टुमभिलषन्तौ भवतः, तदा व्यवहारतो लाभः स्यात् । यदा वा बलाढ्याः सौम्यखगाः = शुभग्रहाः अष्टमे स्थाने स्युः, तदा तरी = नौका लाभसुखप्रदा=सकुशलप्राप्तिदायिनी स्यात् ॥ १७५ ॥

**भाषा—नाव मुझे नफा करायेगी या नहीं ? इस प्रश्न में शुभग्रह यदि केन्द्र में हो, और पापग्रह उससे भिन्न ( ३।६।११ ) में हों, और बलहीन हो, तो नाव सकुशल धनलाभ को करती है, यह विचार कर कहना ॥ १७३ ॥**

**लग्नेश या उसका नवांशेश वक्री हो, शुभ ग्रह से दृष्ट हो तो सकुशल नाव का आना कहना। यदि वक्री लग्नेश या नवांशेश पापग्रह से दृष्ट हो तो नाव खाली ही आती है ॥ १७४ ॥**

**यदि लग्नेश, और अष्टमेश अपने राशि में जाने वाले हों, तो व्यापार से लाभ होता है। यदि बलयुक्त शुभग्रह अष्टम स्थान में हों, तो नाव लाभ सुख को देती है ॥ १७५ ॥**

कुशलाऽऽयाति पृच्छायां मृत्युयोगे समागते।

तदा नौरेति शीघ्रेण लाभाद्यं चान्ययोगतः ॥ १७६ ॥
लग्नेशं चन्द्रनाथं वा चन्द्रं वा मृत्युपो यदि ।
पश्येत्क्रूरदृशा नावा समं नश्यति नौपतिः ॥ १७७ ॥
लग्नेशोऽष्टपतिः स्वस्वगेहं नालोकते यदि ।
तदा यानेऽस्य वक्तव्यं निश्चितं मज्जनं बुधैः ॥ १७८ ॥
तावुभौ सप्तमस्थौ चेज्जले वापनिकां वदेत् ॥ १७८½ ॥

नौका कुशला = सकुशला, आयाति न वा ?, इति पृच्छायां = प्रश्ने मृत्युयोगे समागते घटिते, सति तदा नौः=तरिः, शीघ्रेण एति = आयाति, परन्तु लाभार्थं तु अन्ययोगतः विचार्यम् ॥ १७६ ॥

यदि मृत्युपः=अष्टमेशः, लग्नेशं, वा चन्द्रनाथं = चन्द्राश्रयराशिपतिं, वा चन्द्रं क्रूरदृशा=शत्रुदृष्ट्या पश्येत्, तदा नावा=नौकया समं = सह एव, नौपतिः=नौकानाथः, नश्यति = जले मज्जतीति भावः । "इदानीं नौकया सार्धं कथं सोऽभूदलक्षितः" इतिवत् ॥ १७७ ॥

यदि लग्नेशः वा अष्टपतिः = अष्टमेशः, स्वस्वगेहम्=लग्नं, अष्टमं च क्रमेण न आलोकते=न पश्यति, तदा अस्य याने = प्रस्थाने बुधैः निश्चितं मज्जनं वक्त० = वाच्यम् ॥ १७८ ॥

तौ उभौ = लग्नेशाष्टमेशौ सप्तमस्थौ, तदा जलेवापनिकां = वस्तुमात्रनिमज्जनं वदेत् ॥ १७८½ ॥

भाषा—मेरी नाव सकुशल आती है, या नहीं ? इस प्रश्न में यदि मृत्युयोग हो, तो नाव शीघ्र आती है, लेकिन लाभ का विचार दूसरे योग से करना ॥ १७६ ॥

यदि अष्टमेश लग्नेश को या चन्द्रराशीश को, वा चन्द्रमा को शत्रु दृष्टि से देखे, तो नौका के साथ नौका का मालिक जल में डूब जाता है ॥ १७७ ॥

यदि लग्नेश लग्न को, अष्टमेश अष्टम स्थान को नहीं देखे, तो जरूर जल में नाव का डूबना होता है ॥ १७८ ॥

यदि वे लग्नेश और अष्टमेश सप्तममें हों तो जल में नौका डूब जाय, प्राणमात्र बच जाय ॥ १७८-½ ॥

तथाचोक्तं यवनाचार्यैः—

द्यूने वापनिकां कृत्वा यानमायाति मन्दिरम् ॥ १७९ ॥

लग्नेशाष्टमेशौ द्यूने = सप्तमे स्थितौ तदा वापनिकां कृत्वा यानं सत्वरं मन्दि-

रम् आयाति ॥ १७९ ॥

भाषा—लग्नेश और अष्टमेश यदि सप्तम में हों, तो वस्तु मात्र डूब जाता है और नाव लेकर शीघ्र घर आता है ॥ १७९ ॥

**लग्नचन्द्रपती क्रूरदृष्ट्याऽन्योन्यं यदीक्षितौ।**
**तदा पोतजनानां च मिथः कलहमादिशेत् ॥ १८० ॥**

लग्नेशः, चन्द्रपतिः = चन्द्राश्रयराशीशः, एतौ यदि क्रूरदृष्ट्या = शत्रुदृष्ट्या, अन्योन्यं = परस्परं, लग्नेशश्चन्द्रराशीशं, चन्द्रेशो लग्नेशं एवम् ईक्षितौ=दृष्टौ, तदा पोतजनानां=नाविकानां, मिथः=परस्परं, कलहं=झकटकम् आदिशेत्=कथयेत् ॥१८०॥

भाषा—यदि लग्नेश चन्द्रराशीश को, चन्द्रराशीश लग्नेश को शत्रु दृष्टि से देखें तो नौका वाले लोगों में एक को दूसरे से झगड़ा कहना ॥ १८० ॥

अथ किंवदन्ती ( जनश्रुतिः ) किं सत्या भवति ? न वा ? इति प्रश्ने—

**लग्नन्तु लग्नेश्वरशीतगूदयैः शुभान्वितैः केन्द्रगतैस्तु सत्या।**
**शुभदृग्योगतः सौम्यां वार्तां सत्यां विनिर्दिशेत् ॥ १८१ ॥**
**पापदृग्योगतो दुष्टा वार्ता सत्येति कीर्त्यते।**
**लग्नेश्वरे भाविवक्रे मिथ्या वार्ता भविष्यति ॥ १८२ ॥**

लग्नं शुभान्वितदृष्टम्, तथा लग्नेश्वरशीतगूदयैः=लग्नेशचन्द्रलग्नैः शुभान्वितैः= शुभग्रहयुक्तैः, केन्द्रगतैः सद्भिः, वार्ता = परदेशिनः कुशलाकुशलवार्त्ता सत्या वाच्या। तथा शुभदृग्योगतः वार्त्ता सौम्याम्=अनुकूलां सत्यां च विनिर्दिशेत्=कथयेत्। पापदृग्योगतः वार्त्ता दुष्टा = प्रतिकूला, असत्या च इति कीर्त्यते=कथ्यते। लग्नेश्वरे भाविवक्रे=अग्रकाले वक्रसम्भवे सति वार्त्ता मिथ्या=असत्या भविष्यति ॥१८१-१८२॥

भाषा—लग्न यदि शुभ-युत-दृष्ट हो, और लग्नेश, चन्द्रमा, लग्न, ये सब शुभ ग्रहों से युत दृष्ट हों, केन्द्रगत हों, तो समाचार सत्य निकला है, यह कहना। शुभ ग्रह की दृष्टि और संयोग से वार्त्ता सत्य और अनुकूल होती है। पापग्रह के योग दृष्टि से अशुभ और झूठी भी होती है। यदि लग्नेश वक्री होनहार हो, तो वार्ता झूठी होती है ॥ १८१-१८२ ॥

अथ क्रयविक्रयिणोर्विचारः—

**क्रेता लग्नपतिर्ज्ञेयो विक्रेताऽग्रपतिः स्मृतः।**
**गृह्णाम्यहमिदं वस्तु प्रश्न एवंविधे सति ॥ १८३ ॥**
**बलशालि विलग्नं चेद्गृह्यते तत्क्रयाणकम्।**

तस्मात्क्रयणकाल्लाभः प्रष्टुर्भवति निश्चितम् ॥ १८४ ॥
विक्रीणाम्यमुकं वस्तु प्रश्न एवंविधे सति ।
आयस्थाने बलवति विक्रेतव्यं क्रयाणकम् ॥ १८५ ॥

मम क्रयविक्रये क्रियमाणे लाभो भविष्यति न वा ? इति प्रश्ने लग्नपतिः = तात्कालिकलग्नेशः क्रेता = क्रयकारकः, अग्रपतिः = द्वितीयेशः, लाभेशो वा, विक्रेता = विक्रयकारकः, स्मृतः = कथितः । अहम् , इदं वस्तु गृह्णामि ?, एवंविधे प्रश्ने सति विलग्नं बलशालि=बलयुक्तं, चेत् स्यात् तदा क्रयाणकं गृह्यते । तस्मात् = क्रयाणकात् प्रष्टुः = प्रच्छकस्य निश्चितं लाभः भवति ॥ १८३-१८४ ॥

अहम् , अमुकं वस्तु विक्रीणामि ? एवंविधे प्रश्ने सति, यदि आयस्थाने = एकादशस्थाने बलवति ग्रहे सति क्रयाणकं = क्रय्यं वस्तु विक्रेतव्यम् , मूल्यमादाय ग्राहकाय वस्तु दातव्यमिति ॥ १८५ ॥

भाषा—मुझे क्रय विक्रय में लाभ होगा या नहीं ? इस प्रश्न में लग्नेश खरीदने वाला, अग्रपति धनेश या लाभेश, बेचने वाला होता है । उस पर से फल विचारना । मैं इस चीज को लूँगा ? इस प्रश्न में लग्न यदि बलयुक्त हो, तो चीज खरीदना चाहिये । उस से प्रश्न कर्त्ता को जरूर लाभ होता है ॥ १८३-१८४ ॥

मैं अमुक चीज को बेचूँगा ? इस प्रश्न में एकादश स्थान में यदि बली ग्रह हो तो बेचने वाले को लाभ होगा । अतः बेचना चाहिये ॥ १८५ ॥

अथ सस्यनिष्पत्तिविचारः—

दिशि कस्यां भवेत्सस्यनिष्पत्तिः क्व च सा नहि ।
पूर्वं देशस्य भङ्गो हि क्व दिशि कतमे नहि ॥ १८६ ॥
चतुर्णामपि केन्द्राणां मध्ये यत्र शुभग्रहः ।
तस्यां च सस्यनिष्पत्तिः स्वस्थं चैव भविष्यति ॥ १८७ ॥
यस्यां दिशि शनिः पापैर्युतो वाऽप्यवलोकितः ।
दिशि तस्यां च तत्स्वास्थ्यं दुर्भिक्षं च भविष्यति ॥ १८८ ॥
दिशि यस्यां रविस्तत्र धान्यनाशो नृपाद्भवेत् ।
यत्रापि मङ्गलस्तत्र धान्यनाशोऽग्निभीस्तथा ॥ १८९ ॥
यस्यां दिशि शुभाः खेटाः समस्तबलशालिनः ।
निष्पन्ना सैव विज्ञेया सस्यस्वास्थ्यं च तत्र हि ॥ १९० ॥
केन्द्रेषु सर्वतः पापाः समस्तबलसंयुताः ।

**देशस्तदा विनष्टोऽसौ ज्ञातव्यः शास्त्रकोविदैः ॥ १९१ ॥**

कस्यां दिशि सस्यनिष्पत्तिः=उत्पत्तिः भवेत्, तथा कस्यां दिशि सा सस्यनिष्पत्तिः नहि भवेत् ? इति प्रश्ने तथा पूर्वं=प्रथमं क दिशि कस्य देशस्य भङ्गः=नाशः, कतमे देशे भंगः नहि ?, इति प्रश्ने च चतुर्णां केन्द्राणां मध्ये यत्र स्थाने शुभग्रहः भवेत्, तस्यां दिशि सस्यनिष्पत्तिः भवति, वा स्वस्थं=सकुशलं च भवति। यस्यां दिशि शनिः पापैः=पापग्रहैः युतः, वा अवलोकितः=दृष्टः, तस्यां दिशि नत् स्वास्थ्यं वाच्यं, दुर्भिक्षं च भविष्यति ॥ १८६-१८८ ॥

यस्यां दिशि रविः स्यात्, तत्र नृपात्=भूपात् धान्यनाशः=सस्यक्षयः स्यात्। यत्र=यस्यां दिशि मंगलः स्यात् तत्र धान्यनाशः तथा अग्निभीः=अग्निभयं च स्यात्। यस्यां दिशि समस्तबलशालिनः=पूर्णबलिनः शुभाः=शुभग्रहाः स्युः, तत्र=तस्यां दिशि सस्यनिष्पत्तिः निष्पन्ना=सम्पन्ना वाच्या। शस्यस्वास्थ्यं च जायते ॥ १८९-१९० ॥

केन्द्रेषु सर्वतः=स्थानतुष्टयेषु यदि समस्तबलशालिनः=पूर्णबलयुक्ताः पापाः स्युः, तदा असौ देशः शास्त्रकोविदैः=पण्डितैः विनष्टः विज्ञेयः ॥ १९१ ॥

**भाषा—किस दिशा में फसल अच्छी होगी, किधर नहीं ? इस प्रश्न में और पहले कहां किस देश का भङ्ग ( नाश ) होगा ? कहां नहीं होगा ?, इस प्रश्न में चारों केन्द्र स्थानों में जहां शुभग्रह हो, उसकी दिशा में फसल कहना। और कुशल भी वहां कहना। जिस दिशा में शनि पापग्रहों से युत हो, या दृष्ट हो तो उस दिशा में कुशल कहना और दुर्भिक्ष भी कहना ॥ १८६-१८८ ॥**

**जिस दिशा में सूर्य हो, उस दिशा में राजा से धान्य का नाश होता है। मङ्गल जिस दिशा में हो, उस दिशा में धान्यनाश और अग्निभय हो। जिस दिशा में पूर्ण बली शुभ ग्रह हों, उस दिशा में फसल की सम्पन्नता कहना, और फसल की स्वस्थता कहनी चाहिये। केन्द्रों के चारो स्थान में यदि पूर्णबली पापग्रह हों तो उस दिशा का देश नष्ट होता है ॥ १८९-१९१ ॥**

इति विशेषप्रश्नविचारः समाप्तः।

---

## अथ प्रकीर्णकाध्यायः।

भुवनप्रदीपे—

**लग्नपो मृत्युपश्चापि मृत्यौ स्यातामुभौ यदि।**

स्थितौ द्रेष्काण एकस्मिन्प्रष्टुर्लाभस्तदा ध्रुवम् ॥ १ ॥
एवं द्वादशभावेषु द्रेष्काणैरेव केवलम् ।
बुधो विनिश्चयं ब्रूयाद्योगेष्वन्येषु निःस्पृहः ॥ २ ॥
प्रश्नकाले सौम्यवर्गो लग्ने यद्यधिको भवेत् ।
ग्रहभावानपेक्षेण तदाऽऽख्येयं शुभं फलम् ॥ ३ ॥
लग्नाधिपश्च लाभस्याधीशश्च दायको भवेत् ।
लग्नाधिपस्य योगो लाभाधीशेन लाभकरः ॥ ४ ॥
भवति परलाभकरस्तदैव स यदि चन्द्रदृग्लाभे ।
योगाः सर्वेऽप्यफलाश्चन्द्रमृते व्यक्तमेतच्च ॥ ५ ॥
कर्माधीशेन नवमं कर्माधीशेन च निवृत्त्यधीशेन ।
मृत्युपतिना च योगे लाभाधीशस्य वक्तव्यम् ॥ ६ ॥
तत्तत्स्थानेक्षणतः पुण्यविवृद्धिश्च कर्मवृद्धिश्च ।
विबुधैस्तदा निवृत्तिर्मृत्युर्भावा परेऽप्येवम् ॥ ७ ॥
लग्नेशो यदि षष्ठः स्वयमेत्य रिपुर्भवत्यात्मा ।
मृत्युकृदष्टमगोऽसौ व्ययगोऽसौ सततं व्ययं कुरुते ॥ ८ ॥
लग्नस्थं चन्द्रजं चन्द्रः क्रूरो वा यदि पश्यति ।
धनलाभो भवत्याशु किंत्वनर्थोऽपि पृच्छतः ॥ ९ ॥

लग्नपः = लग्नेशः, च=पुनः मृत्युपः = अष्टमेशः अपि यदि मृत्यौ=अष्टमभावे स्यातां, वा एकस्मिन् द्रेष्काणे स्थितौ, तदा प्रष्टुः ध्रुवं लाभः स्यात् ॥ १ ॥

एवम्=अमुना प्रकारेण द्वादशभावेषु, द्रेष्काणैः, एव केवलं विनिश्चयं = फलस्य निर्णयं ब्रूयात् । अन्येषु योगेषु निःस्पृहः=निरीहः, उपेक्षादृष्टिवान् स्यात् ॥ २ ॥

प्रश्नकाले यदि लग्ने सौम्यवर्गः अधिकः भवेत्, तदा ग्रहभावानपेक्षेण शुभं फलम् आख्येयम् ॥ ३ ॥

लग्नाधिपः = लग्नेशः, लाभस्याधिपः=एकादशेशः च दायकः=दाता भवति । लग्नाधिपस्य ग्रहस्य लाभाधीशेन योगः लाभकरः स्मृतः ॥ ४ ॥

परन्तु स लग्नेशो लाभेशश्च तदैव परलाभकरः=परमलाभकरः भवति यदि च चन्द्रदृग्लाभे, सति, अर्थात् लग्नेशे लाभेशे च चन्द्रदृष्टे विशेषलाभकरो योगः इति । चन्द्रं = चन्द्रसम्बन्धम् ऋते = विना, एते सर्वे योगा अपि अफलाः=व्यर्थाः

भवन्ति। एतद्द्वयकमस्ति। कर्माधीशेन नवमं युतदृष्टं तदा शुभप्रदो योगः। वा कर्माधीशेन, निवृत्यधीशेन = व्ययेशेन, मृत्युपतिना च लाभाधीशस्य योगे सति फलं वक्तव्यम् ॥ ५–६ ॥

तत्तस्थानेक्षणतः पुण्यविवृद्धिः, कर्मवृद्धिः च = पुनः, निवृत्तिः, मृत्युश्च विबुधैः वक्तव्यः। एवं परे अपि भावाः विचार्याः ॥ ७ ॥

लग्नेशः = लग्नपतिः, यदि षष्ठे स्थितः तदा स्वयम् आत्मा एस्य रिपुः = शत्रुः भवति। असौ लग्नेशः अष्टमगः, तदा मृत्युकृत्, भवति। असौ लग्नेशः व्ययगः तदा सततं व्ययं कुरुते ॥ ८ ॥

यदि चन्द्रः वा क्रूरः = पापग्रहः लग्नस्थं चन्द्रजं=बुधं पश्यति, तदा आशु = शीघ्रं धनलाभः भवति। किन्तु पृच्छतः अनर्थः अपि भवति ॥ ९ ॥

भाषा—यदि लग्नेश और अष्टमेश ये दोनों अष्टमस्थान में हों, और एक ही द्रेष्काण में हों, तो प्रश्नकर्त्ता को जरूर लाभ होता है ॥ १ ॥

इसी प्रकार बारहों भाव में द्रेष्काणों से ही पण्डित फल का निश्चय करें। और योगों के प्रति निरपेक्ष हो केवल द्रेष्काण ही से फल कहना ॥ २ ॥

प्रश्न काल में यदि लग्न में शुभग्रह के वर्ग अधिक हो, तो ग्रह के भाव के विचार के बिना ही शुभ फल कहना ॥ ३ ॥

लग्नेश और एकादशेश ये दोनों ग्रह देने वाले होते हैं। और लाभाधीश से लग्नेश का संयोग भी लाभकारक होता है ॥ ४ ॥

यदि लग्नेश पर या लाभेश पर चन्द्रमा की दृष्टि हो, तो विशेष लाभ होता है। चन्द्रमा के योग बिना ये सब योग निरर्थक होते हैं, यह स्पष्ट है ॥ ५ ॥

दशमेश से नवम स्थान यदि युत, दृष्ट हो, अथवा लाभेश को दशमेश से व्ययेश से अष्टमेश से योग होने से विशेष लाभ योग होते हैं ॥ ६ ॥

उन २ स्थानों के ऊपर शुभग्रह की दृष्टि से पुण्यवृद्धि, कर्मवृद्धि, कार्यनिवृत्ति पण्डितों को कहना चाहिये। इस प्रकार और भाव भी विचारें ॥ ७ ॥

यदि लग्नेश छठे स्थान में हों, तो अपनी ही आत्मा शत्रु होती है। यदि लग्नेश अष्टम स्थान में हों, तो मरण करता है। यदि बारहवें भाव में हो, तो हर समय खर्चा कराता है ॥ ८ ॥

यदि चन्द्रमा या पापग्रह लग्नस्थ बुध को देखे, तो शीघ्र धनलाभ होता है। लेकिन साथ ही पूछने वाले को पापग्रह के कारण अनर्थ भी होते हैं ॥ ९ ॥

अथ सामान्यतो भावविचारः—

**इन्दुः सर्वत्र बीजाभो लग्नं च कुसुमप्रभम्।**

फलेन सदृशोंऽशश्च भावः स्वादुसमप्रभः ॥ १० ॥

इन्दुः=चन्द्रः, सर्वत्र बीजाभः=बीजसदृशः, लग्नं च कुसुमप्रभम्=पुष्पसमम् । अंशः=लग्ननवांशः फलेन सदृशः । भावः, स्वादुसमप्रभः विज्ञेयः ॥ १० ॥

भाषा—सब जगह चन्द्रमा बीज समान, लग्न फूल के बराबर, नवांश फल के समान, भाव स्वादु के बराबर है ॥ १० ॥

लग्नपतिर्यदि लग्नं कार्याधीशश्च वीक्षते कार्यम् ।
लग्नाधीशः कार्यं कार्येशः पश्यति विलग्नम् ॥ ११ ॥
लग्नेशः कार्येशं विलोकयेल्लग्नपं च कार्येशः ।
शीतगुदृष्टौ सत्यां परिपूर्णा कार्यसंसिद्धिः ॥ १२ ॥
कथयन्ति पादयोगं पश्यति सौम्यो न यल्लग्नम् ।
लग्नाधिपं च पश्यति शुभग्रहश्चार्धयोगोऽत्र ॥ १३ ॥
एकः शुभो ग्रहो यदि पश्यति लग्नाधिपौ विलोकयति ।
पादोनयोगमाहुस्तदा बुधाः कार्यसंसिद्धिः ॥ १४ ॥

लग्नपतिः=लग्नेशः, यदि लग्नं पश्यति कार्याधीशः=दशमेशः कार्यं=दशमं वीक्षते वा लग्नाधीशः कार्यं=दशमं, कार्येशः विलग्नं पश्यति, वा लग्नेशः कार्येशं कार्येशः लग्नपं च विलोकयेत्=पश्येत्, सर्वत्र शीतगुदृष्टौ=चन्द्रदृष्टौ सत्यां कार्यसंसिद्धिः परिपूर्णा भवति ॥ ११-१२ ॥

सौम्यः=शुभग्रहः यल्लग्नं न पश्यति तं पादयोगं=चतुर्थांशयोगं कथयन्ति । यदि शुभग्रहः लग्नाधिपं पश्यति तदाऽयमर्धयोगः भवति । एकः शुभग्रहः यदि लग्नाधिपौ=लग्नलग्नेशौ विलोकयति तदा तं बुधाः पादोनयोगम् आहुः । तदा कार्यसंसिद्धिः स्यात् ॥ १३-१४ ॥

भाषा—यदि लग्नेश लग्न को, कार्याधीश कार्य को, वा लग्नेश कार्य को, कार्येश लग्न को देखता हो, वा लग्नेश कार्येश को, कार्येश लग्नेश को देखे, इन सब योगों में चन्द्रमा की दृष्टि हो, तो कार्यसिद्धि पूरी होती है ॥ ११-१२ ॥

यदि शुभग्रह लग्न को न देखे, तो एक चरण $\frac{1}{4}$ योग होता है । यदि शुभग्रह लग्नेश को देखे, तो आधा योग $\frac{1}{2}$ होता है । यदि शुभग्रह लग्न को देखे, तो तीन चरण $\frac{3}{4}$ योग होता है । तब कार्यसिद्धि होती है ॥ १३-१४ ॥

अथ लाभादौ कालावधिनिर्णय उक्तो भट्टोत्पलेन—

उदयोपगतं राशिं तत्र कलीकृत्य लिप्तिका गुणयेत् ।

छायाङ्गुलैश्च कुर्यात् हृत्वा मुनिभिस्ततः शेषम् ॥ १५ ॥
ग्रहगुणकारो ज्ञेयो दैवविदा पञ्च विंशतिः सैका ।
मनवोऽङ्काऽष्टौ त्रितयं भवाश्च ५।२१।१४।६।८।३।११ सूर्यादितो ज्ञेयाः१६
गुणयित्वैवं प्राग्वत् हृत्वा सौम्यस्य यदि भवेदुदयः ।
कार्यप्राप्तिः प्रष्टुर्वक्तव्या नेतरैर्ग्रहैर्भवति ॥ १७ ॥
गुणकारैक्यविभक्तः कार्यः सूर्यादिगुणकसंशुद्धः ।
यस्य न शुद्धयति वर्गो विज्ञेयस्तद्वशात्कालः ॥ १८ ॥
आरदिवाकरशेषे दिवसाः पक्षाश्च भृगुशशिनोः ।
गुर्ववशेषे मासा ऋतवः सौम्ये शनैश्चरेऽब्दाः स्युः ॥ १९ ॥

उदयोपगतं राशिं=राश्यादिलग्नमानम् यत्तत्कलीकृत्य, राशिस्थानीयाङ्कं त्रिशद्भिः संगुण्य तदग्रिमावयवेन अंशेन योजनीयम्, तदङ्कमानं षष्ट्या संगुण्य कलाभिर्योज्यम्, तदा कलात्मकं जातम् । एवं लिप्तिकाः=कलाः छायाङ्गुलैः गुणयेत् ताः मुनिभिः = सप्तभिः, हृत्वा ततः शेषं कुर्यात् । तच्च शेषं ग्रहगुणकारः = ग्रहाणां रव्यादीनां गुणकारः दैवविदा = ज्योतिर्विदा ज्ञेयः । तत्र सूर्यादितः ग्रहात् क्रमेण पञ्च, सैका विंशतिः, मनवः, अङ्काः, अष्टौ, त्रितयं, भवाः एते गुणकारा ज्ञेयाः ।

यथा चक्रं बालबोधार्थं लिख्यते—

| ग्रहाः | सूर्य | चन्द्र | कुज | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| गुणकाः | ५ | २१ | १४ | ९ | ८ | ३ | ११ |

(अत्र अङ्काष्टौ इत्यत्र अङ्काः इत्यग्रे अष्टौ, मिलित्वा अङ्का अष्टौ, भवन्ति । नतु 'अङ्काष्टौ' इति ज्ञेयम् ) एवं गुणयित्वा प्राग्वत्=पूर्ववत् हृत्वा यदि सौम्यस्य=शुभस्य उदयः भवेत् तदा प्रष्टुः कार्यप्राप्तिः वक्तव्या । इतरैर्ग्रहैः=पापग्रहैः शुभं न भवति । गुणकारैक्यविभक्तः सूर्यादिगुणकसंशुद्धः यस्य गुणकारः न शुद्धयति, तस्य वर्गः विज्ञेयः । तद्वशात् कालः विज्ञेयः ॥ १५-१८ ॥

आरदिवाकरशेषे=कुजरविशेषे भृगुशशिनोः=शुक्रचन्द्रयोश्च शेषे पक्षाः=पञ्चदश दिवसाः । गुर्ववशेषे मासाः त्रिंशद्दिनात्मकाः । सौम्ये=बुधे, ऋतवः=षट्, शनैश्चरे=शनौ, अब्दाः = वर्षाणि स्युः ॥ १९ ॥

भाषा—प्रश्नकालमें इष्टवश राश्यादिक लग्न जो हो, उसको कलात्मक बनावे, अथवा राशिस्थानीय अङ्कको तीससे गुणा करके अंशस्थानीय अङ्क जोड़ देवे, फिर उस अङ्कको साठसे गुणा करके कलास्थानीय अङ्क जोड़े यही कलात्मक प्रश्नलग्न हुआ। अब जिस समयमें प्रश्न हुआ है, उस कालमें द्वादशाङ्गुल शङ्कुको समतल भूमिमें लम्बरूप रखकर जो अङ्गुलात्मक छाया होगी, उस छायाङ्गुल संख्या से कलात्मक लग्न मानको गुणा करे, गुणनफलको सातसे भाग देनेपर जो शेष बचेगा, वह ग्रहका गुणकार होगा। अर्थात् भिन्न भिन्न ग्रहोंके भिन्न भिन्न गुणकार हैं, जैसे सातसे भाग देने पर यदि १ एक शेष हुआ, तो रविका गुणकार ५ हुआ। यदि २ दो शेष बचा तो चन्द्रमा हुआ, उसका गुणकार २१ है। ऐसे ३ तीन रहनेसे मङ्गल, इसका गुणकार १४ है। ( यहां चक्र देखिये। ऊपरकी संस्कृत टीका में है। ) ऐसे हो और ग्रहोंके समझने चाहिये ॥ १५–१६ ॥

अब पूर्वोक्त लग्नके कलापिण्डको उस ग्रहके गुणकांकसे गुणा करें ( जो १५। १६ श्लोकसे सिद्ध हुआ है ) और गुणनफलको इष्ट ग्रहके गुणकांक पर्यन्त जो गुणकोंके योग हो, उससे भाग दें, तो जो शेष बचे, उसमें रव्यादिक ग्रहोंके गुणकांकको घटावें जिस ग्रहका गुणकांक नहीं घटे, उसी ग्रहका उदय हुआ यह जानना। यहां यदि शुभ ग्रहोंका उदय हो तो कार्यसिद्धि कहना। यदि पापग्रहोंका उदय हो तो कार्य विफल कहना ॥ १७–१८ ॥

अब उसी इष्ट ग्रहके उदय पर से काल ( कार्यसिद्धिका समय ) जानना। जैसे मङ्गल और रविके शेष जो हो, उसके तुल्य दिन जानना, शुक्र, चन्द्रमाके शेष तुल्य पक्ष समझना और बृहस्पती के शेष तुल्य मास तथा बुधके शेष तुल्य ऋतु, शनिके शेष तुल्य वर्ष समझना ॥ १९ ॥

उदाहरण—यथा प्रश्नकालमें १२ अङ्गुलकी छाया ८ अङ्गुलहै और लग्न = १। २। ४। १० है, तो यहां लग्नका कलापिण्ड १९२४ हुआ, इसको छायाङ्गुल ८ से गुणा किया १५३९२, फिर इसमें ७ सातसे भाग दिया तो लब्धि = २१९८, शेष = ६, यहां शुक्रका ३ गुणकांक आया, तब उस कलापिण्ड १९२४ को ३ से गुणा करके शुक्र तकके गुणकाङ्क योग (६०) से भाग दिया तो शेष बचा ४, इसमें रविका भी गुणकाङ्क नहीं घटा, इसलिये रवि ही का उदय हुआ। रवि पापग्रह है, इससे कार्यसिद्धि नहीं होगी ॥ १५–१९ ॥

आधानेऽथ प्राप्तौ गमनागमने पराजये विजये।
रिपुनाशे वा काले पृच्छायां निश्चितं ब्रूयात् ॥२०॥
अकचटतपयशवर्गा रविकुजसितसौम्यजीवसौराणाम्।
चन्द्रस्य च निर्दिष्टास्तैः स्युः प्रथमोद्भवैर्वर्णैः ॥ २१ ॥

ज्ञात्वा तस्माल्लग्नं विज्ञाय शुभाशुभं च वदेत्।
वर्गादिमध्यमान्त्यैर्वर्णैः प्रश्नोद्भवैर्विषमराशिः ॥ २२ ॥
रात्रौ लग्नं प्रवदेत्पृच्छायुग्मं कुजज्ञजीवानाम्।
सितरविजयोश्च नैवं रविशशिनोरेकराशित्वात् ॥ २३ ॥
तस्मात्प्राग्वत्प्रवदेत्पृच्छासमये शुभाशुभं सर्वम्।
कालस्य च विज्ञानादेतच्चिन्त्यं बहुप्रश्ने ॥ २४ ॥

अथ आधाने = गर्भाधाने, प्राप्तौ = धनप्राप्तौ, गमनागमने, पराजये, विजये, वा रिपुनाशे काले, पृच्छायां निश्चितं कालं ब्रूयात् ॥ २० ॥

रविकुजसितसौम्यजीवसौराणां चन्द्रस्य च, अकचटतपयशवर्गाः निर्दिष्टाः। तैः प्रथमोद्भवैः वर्णैः लग्न विज्ञाय तस्मात्=लग्नात् शुभाशुभं च वदेत्। प्रश्नोद्भवैः वर्गादिमध्यमान्त्यैर्वर्णैः विषमराशिः रात्रौ लग्नं प्रवदेत्। तत्र कुजज्ञजीवानां सितरविजयोश्च पृच्छायुग्मं भवति, तेषां राशिद्वयाधिपत्वात्। रविशशिनोः = सूर्यचन्द्रयोः एकराशित्वात् एवं न वाच्यमर्थादेकमेव प्रश्नरूपं वाच्यम्। तस्मात् प्राग्वत् पृच्छासमये सर्वंशुभाशुभं बोध्यम्। कालस्य विज्ञानात् बहुप्रश्ने एतच्चिन्त्यम् २१-२४

भाषा—गर्भ प्रश्न में धनलाभके प्रश्नमें, या जाने आने के प्रश्न में, तथा जय पराजय के प्रश्न में, या शत्रुनाश के प्रश्न में, या किसी भी प्रश्न में उक्त रीतिसे काल ज्ञान करके कहना चाहिये ॥ २० ॥

अब यहां रवि का अवर्ग, मङ्गल का कवर्ग, शुक्र का चवर्ग, बुध का टवर्ग और बृहस्पतिका तवर्ग, शनि का पवर्ग, चन्द्रमा का यवर्ग और शवर्ग कथित है। यहां प्रश्नकरनेवाले के मुख से जो शब्द प्रथम निकले, उस का जो पहला अक्षर सो जिसके वर्ग में पड़े, उस ग्रह का राशि लग्न समझकर शुभ अशुभ फल कहना, अर्थात् शुभ ग्रह के लग्न से शुभ, पापग्रह के लग्न से अशुभ कहना।

और यदि दैवात् प्रश्न वाक्य का प्रथम वर्ण वर्ग के आदि या मध्य, या अन्त्य का हो तो विषम राशि और रात्रि लग्न समझना अर्थात् सूर्य चन्द्रमा को छोड़कर प्रत्येक ग्रह के दो दो राशि हैं, उस में एक सम दूसरा विषम, यथा मङ्गल का मेष (विषम) तो वृश्चिक (सम), तथा बुध का मिथुन (विषम) तो कन्या (सम), शुक्र का वृष (सम) तो तुला (विषम) है, सो प्रश्न से समझना। रवि चन्द्रमा का एक एक राशि है, इस लिये इन दोनों के वर्ग से एक ही प्रश्न कहना। और मङ्गल, बुध, बृहस्पति, शुक्र, शनि, इन ग्रहों के वर्ग होने से दो दो प्रश्न कहना ॥२१-२४॥

अथ मानसचिन्तामाह पृथुयशाः—

**स्वांशं विलग्ने यदि वा त्रिकोणे स्वांशे स्थितः पश्यति धातुचिन्ताम् ।**
**परांशकस्थश्च करोति जीवं मूलं परांशोपगतः परांशम् ॥ २५ ॥**
**धातुं मूलं जीवमित्योजराशौ युग्मे विन्द्यादेतदेव प्रतीपम् ।**
**लग्ने योंऽशस्तत्क्रमाद्गण्यमेवं संक्षेपोऽयं विस्तराच्चत्प्रभेदः ॥ २६ ॥**

स्वांशे = स्वनवांशे स्थितः कश्चिदपि ग्रहो विलग्ने वा त्रिकोणे ( ५।९ ) स्वांशं = स्वनवांशं पश्यति तदा धातुचिन्तां ब्रूयात् । परांशकस्थः=अन्यनवांशे स्थितो ग्रहो लग्ने त्रिकोणे वा गतं स्वांशं पश्यति तदा जीवं=जीवचिन्तां करोति । अथ परांशोपगतो ग्रहो लग्ने त्रिकोणे वा परांशं पश्यति तदा मूलं करोति । अत्रैतदुक्तं भवति । यः कोऽपि ग्रहस्तत्काले स्वनवांशे विद्यमानो लग्नपञ्चमनवमान्यतमगतं स्वनवांशं पश्यति तदा प्रष्टुर्धातुचिन्तां करोति । परनवांशोपगतः सन् लग्नपञ्चमनवमान्यतमगतं स्वांशं पश्यति तदा जीवचिन्तामेवं परांशोपगतो ग्रहो लग्नपञ्चमनवमान्यतमगतं परनवांशं पश्यति तदा मूलचिन्तां करोतीति ।

अथ प्रकारान्तरमाह = धातुमिति । ओजराशौ = विषम ( १।३।५।७।९।११ ) राशौ प्रश्नलग्ने क्रमेण धातुं, मूलं, जीवं विन्द्यात् । युग्मे = समे ( २।४।६।८।१०।१२ ) राशौ लग्नगते प्रतीपं = व्यत्यासेन एतदेवार्थाज्जीवं, मूलं, धातुमिति विन्द्यात् । अथात्र यदुक्तं धातुं, मूलं, जीवमिति कस्तं गणयेदित्याह लग्ने योंऽशस्तत्क्रमाद्गण्यमिति । अर्थाल्लग्ने प्रथमनवांशे धातुं, द्वितीये मूलं, तृतीये जीवमेवं विषमे लग्ने १।४।७। नवांशे धातुं, २।५।८ नवांशे मूलं ३।६।९। नवांशे जीवं विजानीयात् । समे लग्ने १।४।७ नवांशे जीवं, २।५।८ नवांशे मूलं, ३।६।९ नवांशे धातुं विन्द्यादिति । अत्रांशशब्देन द्रेष्काणग्रहणमसङ्गतं स्यादंशशब्देन सर्वत्रैव नवांशस्य ग्रहणात् । अयं किल संक्षेप उक्तः । तत्प्रभेदो विस्तरादपि वर्त्तत इति ॥२५-२६॥

भाषा—नवांशमें स्थित कोई ग्रह यदि लग्न या त्रिकोण ( ५।९ ) में गत अपने नवांशको देखता हो, तो प्रश्नकर्त्ता को धातु की चिन्ता कहनी चाहिये। यदि ग्रह दूसरे के नवांश में रहकर लग्न या त्रिकोण में अपने नवांशको देखता हो, तो मूल चिन्ता, और ग्रह यदि दूसरे के नवांश मे रहकर लग्न या त्रिकोण में भी दूसरे के नवांश को देखे तो जीव चिन्ता कहनी चाहिये । दूसरा प्रकार यह है-विषमराशि ( १।३।५।७।११ ) के लग्न में १।४।७ नवांश होने पर धातु, २।५।८ नवांश हो तो मूल और ३।६।९ नवांश हो तो जीव कहना। समराशि के लग्न में इसीका उलटा

१।४।७ नवांशमें जीव, २।५।८ में मूल और ३।६।९ नवांश में धातु कहना चाहिये। यहां अंश का अर्थ द्रष्काण करना असगत होगा। यहां यह संक्षेप में कहा है। इसका भेद बहुत विस्तार भी है ॥ २५–२६ ॥

उत्पलः—

बलिनौ केन्द्रोपगतौ रविभौमौ धातुकरौ प्रश्ने।
बुधसौरी मूलकरौ शशिगुरुशुक्राः स्मृता जीवाः ॥ २७ ॥
मेषालिसिंहलग्ने कुजार्कयुक्ते निरीक्षितेऽप्यथवा।
धातोश्चिन्तां प्रवदेद्युगघटकन्यागतैर्लग्नैः ॥ २८ ॥
बुधरविजयुतैर्मूलं वृषतुलहरिमीनचापकर्कटकैः।
चन्द्रगुरुशुक्रयुक्तैर्दृष्टैर्जीवो विनिर्देश्यः ॥ २९ ॥

प्रश्ने बलिनौ = बलयुक्तौ रविभौमौ केन्द्रोपगतौ धातुकरौ=धातुचिन्ताकरौ भवतः। बलिनौ बुधसौरी केन्द्रोपगतौ, तदा मूलकरौ = मूलचिन्ताकरौ भवतः। बलिनः = शशिगुरुशुक्राः केन्द्रगतास्तदा जीवाः = जीवचिन्तायोगकरा भवन्ति ॥ २७ ॥

अथवा मेषालिसिंहलग्ने कुजार्कयुक्ते वा कुजार्काभ्यां निरीक्षिते = दृष्टे तदा धातोश्चिन्तां प्रवदेत्। युगघटकन्यागतैः = मिथुनकुम्भकन्यालग्नैः बुधरविजयुतैः तैर्दृष्टैर्वा मूलं = मूलचिन्तात्मकं प्रश्नं वदेत्। वृषतुलहरिमीनचापकर्कटकैः = वृषः प्रसिद्धः, तुला प्रसिद्धा, हरिः = सिंहः, मीनः, चापः = धनुः, कर्कटक एतैर्लग्नैः चन्द्रगुरुशुक्रयुक्तैः सद्भिः जीवः = जीवचिन्तात्मकः प्रश्नो विनिर्देश्यः ॥२८–२९॥

भाषा—बली रवि और मङ्गल केन्द्रमें हों तो धातुचिन्ता कहना। यदि बली बुध और शनि केन्द्रमें हों, तो मूलचिन्ता कहना। बली चन्द्रमा, बृहस्पति और शुक्र यदि केन्द्र में स्थित हों, तो जीवचिन्ता कहनी चाहिये ॥ २७ ॥

अथवा मेष, वृश्चिक या सिंह लग्नमें मङ्गल या रवि हों, उन्हीं दोनों से दृष्ट भी हों, तो धातु की चिन्ता कहनी चाहिये। यदि बुध शनिसे युत दृष्ट मिथुन, कुम्भ कन्या लग्न हो, तो मूल की चिन्ता कहनी चाहिये। अथवा चन्द्रमा, बृहस्पति, शुक्र से युत दृष्ट वृष, तुला, सिंह, मीन, धनु, कर्क राशि लग्न हो, तो जीवचिन्ता कहनी चाहिये२८-२९

लग्नलाभपयोः प्राणितयोर्यद्भावगः शशी।
तस्य भावस्य या चिन्ता प्रष्टुः सा हृदि वर्तते ॥ ३० ॥
एवं बलाधिकाच्चन्द्राल्लग्ननाथो यतः स्थितः।
दैवज्ञेन विनिर्णेयः प्रश्नसद्भावसम्भवः ॥ ३१ ॥

प्राणितयोः=बलवतोः लग्नलाभपयोः = लग्नेशैकादशेशयोः सकाशात् , शशी= चन्द्रः यद्भावगः=यस्मिन् भावे गतः तस्य भावस्य विषयिणी या चिन्ता पूर्वमुक्ता सा प्रष्टुः = प्रश्नकर्त्तुः हृदि वर्त्तते ॥ ३० ॥

एवममुना प्रकारेण बलाधिकात्-चन्द्रात् लग्ननाथः=लग्नस्वामी, यतः=यस्मिन् भावे स्थितः तद्भावविषयकः प्रश्नसद्भावसंभवः दैवज्ञेन विनिर्णेयः कार्यः ॥ ३१ ॥

भाषा—बलयुक्त लग्नेश और एकादशेश से चन्द्रमा जिस भाव में हो, उस भाव सम्बन्धी चिन्ता हृदय में वर्त्तमान कहना ॥ ३० ॥

इस प्रकार बलयुक्त चन्द्रमा से लग्नेश जिस भाव में हो, उस भाव सम्बन्धी प्रश्नकाल में ज्यौतिषी निर्णय करें ॥ ३१ ॥

अथ पृथुयशाः ( षट्पञ्चाशिकायाम् )—

**आत्मसमं लग्नगतैस्तृतीयगैर्भ्रातरः सुतं सुतगैः।**
**माता वा भगिनी वा शत्रुगतैः शत्रुभार्या स्यात् ॥ ३२ ॥**
**सप्तमसंस्थैर्नवमैर्धर्माश्रितयुग्गुरुर्दशमैः ।**
**स्वांशपतिमित्रशत्रुषु तथैव वाच्यं बलयुतेषु ॥ ३३ ॥**
**चरलग्ने चरभागे मध्याद्भ्रष्टे प्रवासचिन्ता स्यात् ।**
**भ्रष्टः सप्तमभवनात्पुनर्निवृत्तो यदि न वक्री ॥ ३४ ॥**

लग्नगतैर्ग्रहैः आत्मसमं=स्वसमानम् , तृतीयगतैः ग्रहैः भ्रातरः, सुतगैः=पञ्चमभावगतैः ग्रहैः सुतं=पुत्रं, शत्रुगतैर्ग्रहैः-माता=जननी, वा भगिनी, वा शत्रुभार्या= वैरिनारी स्यात्। सप्तमसंस्थैः ग्रहैः, नवमैः = नवमस्थानस्थितग्रहैः, धर्माश्रितयुक् जनः, दशमैः=दशमस्थग्रहैः गुरुः=गुरुजनः, विचार्यः। स्वांशपतिशत्रुषु बलयुतेषु सत्सु तथैव फलं वाच्यम् ॥ ३२-३३ ॥

चरलग्ने चरभागे=चरराश्यंशे, मध्याद् दशमाद् भ्रष्टे प्रवासचिन्ता=परदेश विषयणी चिन्ता स्यात्। यदि सप्तमभवनाद् भ्रष्टः पुनर्निवृत्तः, अतएव वक्री ग्रहः स्यात्तदाऽपि प्रवासचिन्ता स्यात् ॥ ३४ ॥

भाषा—लग्न स्थित ग्रहों से अपने समान लोगोंकी चिन्ता होनी चाहिये। तीसरे स्थान में स्थित ग्रहों से भाई की चिन्ता। पञ्चम स्थान स्थित ग्रहों से पुत्र की, शत्रु स्थान स्थित ग्रहों से माता, वा बहन या शत्रु की स्त्री इन सबों का विचार करना चाहिये ॥ ३२ ॥ सप्तम स्थान में स्थित ग्रहों से नवमस्थानस्थितग्रहों से धर्म के आश्रयवाले लोग का विचार एवं दशमस्थित ग्रहों से गुरु जन का, विचार होना

चाहिये । अपनी नवांशा और स्थान के स्वामी, या शत्रुग्रह ये सब बलयुत हों, तो वैसे ही फल कहना ॥३३॥ चरलग्न हो या चरराशि की नवांशा हो, या दशम स्थान से अन्यत्र स्थित हो, तो परदेश की चिन्ता कहनी चाहिये । यदि सप्तमभाव से आगे बढ़कर फिर भी वक्री होकर उसी में लौटे तो परदेश की चिन्ता कहनी चाहिये ॥३४॥

मया का स्त्री उपभुक्ता, मनसि चिन्तिता कीदृशी वा इति प्रश्ने—

**अस्ते रविसितवक्रैः परजायां स्वां गुरौ बुधे वेश्याम् ।**
**चन्द्रे च वयः शशिवत् प्रवदेत्सौरेऽन्त्यजादीनाम् ॥ ३५ ॥**
**कुमारिकां बालशशी बुधश्च वृद्धां शनिः सूर्यगुरू प्रसूताम् ।**
**स्त्रीं कर्कशां भौमसितौ च धत्ते एवं वयः स्यात्पुरुषेषु चैवम् ॥ ३६ ॥**

रविसितवक्रैः = सूर्यशुक्रकुजैः, अस्ते = सप्तमे स्थितैः सद्भिः, परजायां चिन्तयति । गुरौ अस्ते सति, स्वां = स्वकीयां स्त्रियं चिन्तयति । बुधे अस्तस्थिते सति वेश्याम् = गणिकां चिन्तयतीति वाच्यम् । चन्द्रे च सप्तमे सति गणिकां चिन्तयति । शशिवद्वयः स्त्रिया अवश्यं कथयेत् । सौरे अस्तस्थे तदाऽन्त्यजादीनां = नीचजातीनां स्त्रियं चिन्तयतीति ज्ञेयम् । बालशशी = दर्शादितः शुक्लनवमीपर्यन्तकश्चन्द्रो बाल उच्यते, तादृशो यदि स्यात्तदा कुमारिकां चिन्तयति । बुधो यदि सप्तमस्थस्तदाऽपि कुमारिकामेव चिन्तयति । शनिः सप्तमस्थः तदा वृद्धां स्त्रियं चिन्तयति । सूर्यगुरू सप्तमस्थौ तदा प्रसूतां चिन्तयति । भौमसितौ सप्तमस्थौ तदा कर्कशां = कलहप्रियां नारीं चिन्तयति । एवं पुरुषेषु अपि वयः=वयःप्रमाणं, जातिं च विचारयेत् ॥३५-३६॥

भाषा—मैं कैसी स्त्री का भोग किया? इस प्रश्न में लग्न से सप्तम स्थान में यदि रवि, शुक्र, मङ्गल, ये सब हों, तो दूसरे की स्त्री से भोग किया यह कहना । तथा यदि सप्तम में बृहस्पति हो, तो अपनी स्त्री कहना । सप्तम में यदि बुध हो, तो वेश्या कहना । चन्द्रमा यदि सप्तम में हो, तो भी वेश्या ही कहना ।

उस स्त्री की उमर चन्द्रमा की उमर की तरह कहना । जैसे शुक्लपक्ष की प्रतिपदा से पञ्चमी तक बाल, शुक्ल षष्ठी से शुक्ल दशमी तक कुमार, शुक्ल एकादशी से पूर्णिमा तक युवा, कृष्ण प्रतिपदा से कृष्णपञ्चमी तक प्रौढ, कृष्णषष्ठी से कृष्णदशमी तक वृद्ध, कृष्णएकादशी से अमावास्या तक मृत अवस्था समझनी चाहिये ।

यदि शनि सप्तम में हो, तो अन्त्यज वर्ण की स्त्री कहना । यदि बाल अवस्था वाला चन्द्रमा या बुध हों, तो कुमारी की चिन्ता, शनि हो तो बूढ़ी स्त्री की रवि और बृहस्पति हों, तो प्रसूता स्त्री की, यदि मङ्गल और शुक्र हों तो झगड़ा करने वाली स्त्री की चिन्ता कहनी चाहिये । और जैसे स्त्री की उमर जानने में विचार किया है, वैसे पुरुष की भी उमर को जानना । जाति को भी विचारना ॥ ३५-३६ ॥

अथ सुरतप्रश्नः—

शुभेत्थशाले हिमगौ चतुष्टये सौख्यातिरेकः सविलासहासः।
क्रूरेत्थशाले हिमगौ सरोषे क्रूरान्वितेऽभूत्कलहो नृवध्वाः ॥ ३७ ॥
पीडाऽथवाऽऽसीत्सुरते युवत्या रजो यथाऽस्तर्क्षमुपैति तद्वत्।
लग्ने सुरेज्ये भृगुजे कलत्रे तुर्ये हिमांशौ सविलासहासम् ॥ ३८ ॥
शुभग्रहोत्थे च कबूलयोगे युतो रजः पुष्पसुगन्धयुक्तम्।
स्वर्क्षोच्चगे हर्म्यरतं निगद्यं स्थिते द्विदेहे वनिता स्वकीया ॥ ३९ ॥
चरोदये सा रमिते परस्त्री केन्द्रे शनौ सा सुरजा दिवारतिम्।
निशोदयेशे त्रिखगे च रात्रौ दिवानिशं तद्बलिनोर्द्विखेटयोः ॥ ४० ॥

हिमगौ चन्द्रे, शुभेत्थशाले, चतुष्टये=केन्द्रे च सति तदा सविलासहासः सौख्यातिरेकः = आनन्दातिशयः स्यात्। हिमगौ चन्द्रे क्रूरेत्थशाले = पापग्रहमुथशिले सति सरोषः = सक्रोधः सङ्गः स्यात्। हिमगौ क्रूरान्विते = पापसहिते सति नृवध्वोः= दम्पत्योः पुरुषस्त्रियोः कलहः अभूत् अथ वा सुरते=मैथुने युवत्याः पीडा आसीत्। यथा अस्तर्क्ष=सप्तमगृहम्, उपैति, तद्वत् युवत्या रजः = कामोपचारो ज्ञेयः। तथोक्तं वराहेण—

"यथाऽस्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोगः।
असद्ग्रहालोकितसंयुतेऽस्ते सरोष इष्टैः सविलासहासः ॥ बृहज्जातके।

सुरेज्ये = गुरौ, लग्ने, भृगुजे = शुक्रे कलत्रे, हिमांशौ = चन्द्रे, तुर्ये = चतुर्थस्थाने सति सविलासहासः सुरतप्रयोगः वाच्यः ॥ ३७-३८ ॥

वा शुभग्रहोत्थे कम्बूलयोगे युतश्चन्द्रः स्यात्तदा पुष्पसुगन्धयुक्तं रजः वाच्यम्। स्वर्क्षोच्चगे चन्द्रे सति हर्म्यरतं कथनीयम् प्रासादभवने सङ्गं वदेत्। द्विदेहे = द्विःस्वभावलग्ने तु स्वकीया वनिता=स्त्री वाच्या। चरोदये = चरलग्ने सति रमिते = रमणे सा परस्त्री स्यात्। शनौ केन्द्रे सति सा सुरजा, तथा दिवोदयेशे त्रिखगे दिवा रतिं वदेत्। निशोदयेशे त्रिखगे = ग्रहत्रये सति रात्रौ रतिं वदेत्। बलिनोः द्विखेटयोः = द्विग्रहयोः दिवानिशं रतिं वदेत् ॥ ३९-४० ॥

भाषा—चन्द्रमा शुभग्रह से इत्थशाल करता हुआ केन्द्र में हो, तो हँसी खुशी से आनन्द से स्त्री सङ्ग कहना। यदि चन्द्रमा पापग्रह से इत्थशाल करता हो तो क्रोधयुक्त सङ्ग कहना। चन्द्रमा पापयुक्त हो, तो स्त्री पुरुषों में झगड़ा हुआ कहना या मैथुन के वक्त स्त्री को पीड़ा हुई यह कहना। जिस प्रकार सप्तम राशि सङ्ग करे वैसे ही स्त्री का सङ्ग कहना ॥ ३७-३८ ॥

बृहस्पति लग्नमें हो, शुक्र सप्तम में हो और चन्द्रमा चौथे स्थान में हो, तो आनन्द विनोद के साथ सङ्ग कहना। या चन्द्रमा को शुभग्रह से कबूल योग होता हो तो फूल के सुगन्धि से युक्त रज कहना। चन्द्रमा अपने राशि या अपने उच्च में हो,तो कोठा मकान में सङ्ग कहना। यदि चन्द्रमा द्विःस्वभाव राशि में हो, तो अपनी स्त्री के साथ सङ्ग कहना। चरलग्न में हो तो, परायी स्त्री कहना। शनि केन्द्र में हो तो अधिक कामातुर कहना या विकार रहित रज ( शुक्र ) कहना। और यदि दिन में उदय होने वाले राशियों के स्वामी यदि ३।९ में हों, तो दिन में संभोग कहना। यदि रात्रि में उदय होने वाले लग्नों के स्वामी ग्रह सब ३।९ में हों, तो रात में सङ्ग कहना। बली दो ग्रहों से दिन रात सङ्ग कहना ॥ ३९–४० ॥

अथ महर्घचिन्ता—

**मेषे वृषे च मिथुने शुभयुक्तदृष्टे न ग्रैष्मिकं तु सुलभं भविता पृथिव्याम् ।**
**सूर्ये धनुर्मृगघटेषु च सारधान्यंकुर्यात्समर्घमशुभैः सहितोऽसमर्घम्॥४१॥**
**लग्ने बलाढ्ये निजनाथसौम्यैर्युक्तेक्षिते केन्द्रगतैः शुभैश्च ।**
**सर्वैः समर्घं विबलैर्विलग्ने केन्द्रेषु पापैः सकलं समर्घम् ॥ ४२ ॥**
**राकाकुहूशशिपभास्वदजप्रवेशे लग्नेश्वराः शुभखगैर्युतवीक्षिताश्चेत् ।**
**तद्वत्सरे जगति सौख्यमलं प्रकुर्युः पापार्दिते गदनरेन्द्रभयं प्रजानाम्॥४३॥**
**मेषप्रवेशोदयतः स्वराशिः केन्द्रेषु पापोडुपतीत्थशाले ।**
**पापग्रहैर्दृष्टयुतेऽथ तस्मिन् वर्षे गदार्तिः प्रियमन्नमुर्व्याम् ॥ ४४ ॥**
**भानोर्मेषप्रवेशोदयभवनपतिः सद्ग्रहः स्वोच्चसंस्थः**
**स्वर्क्षस्थो वाऽपि केन्द्रे शुभगगनचरैर्दृष्टयुक्तो बलाढ्यः ।**
**तस्मिन्वर्षे विदध्याज्जगति शुभसुखं भूरिसस्यं सुवृष्टिः**
**क्रूरः क्रूरार्दितो वा दिशति नृपभयं कष्टमन्नं महर्घम् ॥ ४५ ॥**

प्रश्नलग्ने मेषे वृषे मिथुने च सति, तथा शुभयुक्तदृष्टे च सति पृथिव्यां ग्रैष्मिकं= ग्रीष्मर्तुजातं सस्यं सुलभं न स्यात्। सूर्ये धनुर्मृगघटेषु स्थिते, तदा सारधान्यम् समर्घं कुर्यात्। अथवा तादृशे सूर्ये अशुभैः सहिते तदा तत् असमर्घं = महर्घं स्यात् ॥ ४१ ॥

लग्ने बलाढ्ये, निजनाथसौम्यैः युक्तेक्षिते, तथा केन्द्रगतैः सर्वैः शुभैश्च युतेक्षिते,तदा समर्घं कुर्यात्। वा विबलैः=दुर्बलैः सर्वैः ग्रहैः विलग्ने स्थितैः पापैः=पापग्रहैः केन्द्रेषु स्थितैः तदा सकलं सस्यजातं समर्घं वाच्यम् ॥ ४२ ॥

राकाकुहूशशिपभास्वदजप्रवेशे = राका=पूर्णिमा, कुहूः = अमावास्या, तयोः शशिपः=चन्द्रराशीशः, भास्वान्=सूर्यः अनयोरजप्रवेशे = मेषराशिसंक्रान्तौ, चन्द्रस्य सूर्यस्य च मेषसञ्चारे चेत्=यदि लग्नेश्वराः = शुभखगैः युतवीक्षिताः स्युः, तदा तद्वत्सरे=तद्वर्षे जगति=संसारे, अलं=पूर्णं, सौख्यं प्रकुर्युः। तथा लग्नेशे पापार्दिते=पापपीडिते सति प्रजानां = जनानां, गदनरेन्द्रभयं=रोगभयं राजभयं च वाच्यमिति॥४३॥

मेषप्रवेशोदयतः = मेषे रविर्यस्मिन् समयेऽभूत्तत्समये यल्लग्नं स्यात्तस्मात् सकाशात् स्वराशिः = स्वजन्मराशिः केन्द्रेषु = १।४।७।१० एतेषु भवेत्, तस्मिंश्च पापोडुपतीत्थशाले सति = पापग्रहचन्द्राभ्यामित्थशालयोगे च सति, तथा पापग्रहैर्दृष्टयुते च सति, तदा तस्मिन् वर्षे प्रजानां गदार्त्तिः = रोगपीडा, उर्व्यां प्रियं यथेष्टमन्नं च वाच्यम् ॥ ४४ ॥

भानोः = सूर्यस्य, मेषप्रवेशोदयभवनपतिः = मेषप्रवेशकालिकलग्नेशः, सद्ग्रहः= शुभग्रहः स्यात्, स च स्वोच्चसंस्थः स्यात्, अपि वा स्वर्क्षस्थः स्यात्, वा केन्द्रे स्यात्, तथा शुभगगनचरैः = शुभग्रहैः, दृष्टयुक्तः स्यात्, तथा बलाढ्यः = बलाधिकयुक्तः स्यात्, तदा तस्मिन् वर्षे जगति = संसारे शुभसुखं, भूरि = प्रचुरं, सस्यं च विदध्यात् = कुर्यात्। तथा सुवृद्धिः=सकलपदार्थानामुत्तमसमृद्धिः स्यात्। यदि मेषप्रवेशकालिकलग्नेशः क्रूरः = पापः स्यात्, वा क्रूरार्दितः = पापयुतदृष्टः स्यात्, तदा संसारे नृपभयं=राजोपद्रवं, कष्टं=रोगादिकं, महर्घम् = अधिकमूल्यलभ्यम्, अन्नं च दिशति ॥ ४५ ॥

**भाषा—प्रश्नकालमें मेष, वृष, मिथुन, लग्न हो, उस में सूर्य स्थित हो और शुभ ग्रह से युत दृष्ट हो तो ग्रीष्म (ज्येष्ठ आषाढ) में होने वाले अन्न दुनियाँ में सस्ता हो।**

**यदि प्रश्नकालमें धनु, मकर, कुम्भ इन राशियों में से कोई लग्न हो, उसी में सूर्य हो अर्थात् पौष, माघ, फाल्गुन में सूर्योदय समीप समय में प्रश्न करे तभी ऐसा हो सकता है। उस हालत में गेहूँ, जव, चना इत्यादि को सस्ता करता है। यदि पापग्रहों से युक्त सूर्य उन लग्नों में हो तो उस धान्य को महँगी करता है ॥ ४१ ॥**

**प्रश्नलग्न बलयुक्त हो और अपने स्वामी ग्रह से और शुभग्रहों से युत दृष्ट हो, या केन्द्रस्थित शुभग्रहों से युतदृष्ट हो तो अनाज को सस्ता करता है। यदि केन्द्र स्थित दुर्बल पापग्रहों से युत दृष्ट हो तो सब चीजें सस्ती होती हैं ॥ ४२ ॥**

**पूर्णमासी में, अमावस में चन्द्रमा और सूर्य के मेष राशि में प्रवेश समयमें यदि लग्नेश्वर शुभग्रहों से युत दृष्ट हों, तो उस वर्ष में पूर्ण सुख को करते हैं। और यदि लग्नेश पापग्रहोंसे युत दृष्ट पीड़ित हो, तो उस साल में लोगों को रोगभय, राजभय**

कहना। वहां लग्न जिस पापग्रह से युत दृष्ट हो, उस का जो रोग धातु है वह रोग कहना ॥ ४३ ॥

मेषराशि के प्रवेश काल में जो लग्न हो उस से यदि अपनी जन्मराशि केन्द्र में हो, और पापग्रह से तथा चन्द्रमासे इत्थशाल योग करता हो, या पापग्रहों से दृष्ट युत हो, तो उस साल में लोगों को रोगपीड़ा होती है, लेकिन अनाज यथेष्ट होता है ॥ ४४ ॥

सूर्य के मेषप्रवेश लग्न का स्वामी यदि शुभग्रह हो, अपने उच्चराशि में या अपने राशि में या केन्द्र में हो, शुभग्रहों से दृष्ट और युक्त भी हो, बलयुक्त भी हो उस वर्षमें संसार में पूर्ण सुख, पर्याप्त फसल और अच्छी समृद्धि होती है। यदि लग्नेशपापग्रह हो, पापग्रहों से युत दृष्ट हो तो राजभय, और कष्ट तथा अन्न महगा होता है ४५

अथ मनुष्याणां जन्मलग्नात् प्रतिवर्षं शुभाशुभज्ञानम्—

जन्मोदयाद्भास्वदजप्रवेशलग्नं हि यद्भावगतं शुभान्वितम्।
तद्भाववृद्धिं विदधाति तस्मिन् वर्षे नृणां पापयुतं तदन्यथा ॥ ४६ ॥
जन्मोदये देहसुखं धनेऽर्थलाभस्तृतीये च कुटुम्बवृद्धिः।
तुर्ये सुहृत्सौख्यमथात्मजाप्तिः पुत्रेऽथ षष्ठेऽरिपराजयः स्यात् ॥ ४७ ॥
स्त्रीसौख्याप्तिर्भवति मदने मृत्युरुग्भीश्च रन्ध्रे
धर्मार्थाप्तिस्तपसि दशमे वित्तसौख्यास्पदाप्तिः।
लाभे लाभः सुखधनव्ययो दुःखदारिद्र्यमन्त्ये
पुंसो मेषे प्रविशति रवौ जन्मलग्नादिलग्ने ॥ ४८ ॥

जन्मोदयात् = जन्मलग्नात्, भास्वदजप्रवेशलग्नं = भास्वान् सूर्यस्तस्य यत् अजप्रवेशलग्नं=मेषप्रवेशकालिकलग्नं, तत् यद्भावगतं जन्मकुण्डल्यां वा वर्षकुण्डल्यां यद्भावगतं भवेत्तथा शुभान्वितं = शुभग्रहयुक्तं च भवेत् तस्मिन् वर्षे नृणां तद्भाववृद्धिं विदधाति = करोति। सूर्यस्य मेषप्रवेशक्षणलग्नं पापग्रहयुतं सत् यद्भावगतं, तदन्यथा = तद्भावहानिं करोति ॥ ४६ ॥

तत्र पृथक् स्पष्टार्थं तत्फलं कथयति—जन्मोदये = जन्मलग्ने यदि मेषसंक्रान्तिस्तदा देहसुखम्, धने = जन्मलग्नाद्द्वितीयभावे यदि मेषसंक्रान्तिलग्नं स्यात् तदाऽर्थलाभः = धनलाभः। तृतीये यदि मेषप्रवेशलग्नपतिः, तदा कुटुम्बवृद्धिः भवति। तुर्ये = जन्मलग्नतश्चतुर्थे सुहृत्सौख्यम् = मित्रविनोदः। पुत्रे = पञ्चमभावे, आत्मजाप्तिः = पुत्राप्तिः। षष्ठे = जन्मलग्नात् षष्ठभावे यदि मेषप्रवेशलग्नं स्यात् तदा अरिपराजयः = शत्रुपराभवः स्यात् ॥ ४७ ॥

मदने=सप्तमभावे यदि मेषप्रवेशलग्नं स्यात् तदा स्त्रीसौख्याप्तिः स्यात् । रन्ध्रे=अष्टमे तु मृत्युरुग्भीः=मृत्युभयं रोगभयञ्च स्यात् । तपसि = जन्मलग्नान्नवमभावे मेषप्रवेशलग्ने पतिते सति धर्मार्थाप्तिः स्यात् । दशमे तु चित्तसौख्यास्पदाप्तिः = चित्तसौख्यं = मनोविनोदः, आस्पदाप्तिः = स्थानलाभः स्यात् । लाभे = एकादशस्थाने यदि मेषप्रवेशलग्नं स्यात् तदा लाभः, सुखधनचयः स्यात्, मेषे रवौ प्रविशति सति विलग्ने पुंसः जन्मलग्नात् अन्त्ये = द्वादशे सति दुःखदारिद्र्यं भवति ॥ ४८ ॥

भाषा—जन्मलग्न से सूर्य के मेषप्रवेशलग्न जिस भाव में हों, और शुभग्रह से युत हो, तो उस वर्ष में मनुष्य को उस भाव की वृद्धि होती है । यदि मेषप्रवेशलग्न पापग्रह युत होकर जिस भाव में पड़े, उस भाव की हानि होती है ॥ ४६ ॥

यदि मेषप्रवेश लग्न जन्मलग्न ही में पड़े, तो देहसुख हो, द्वितीय भाव में धनलाभ तृतीयभाव में हो तो परिवार वृद्धि, चतुर्थ स्थान में पड़े, तो मित्रसुख, पञ्चम में पड़े तो पुत्रपीड़ा, यदि छठे स्थान में पड़े तो शत्रु की पराजय होती है । सप्तमभाव में पड़े तो स्त्रीसुख होता है । अष्टम में हो तो मरणभय, रोगभय हो । नवम में पड़े, तो धर्मलाभ, धनलाभ होते हैं । दशम में पड़े तो चित्त सुख, स्थानलाभ होते हैं । एकादश में पड़े, तो लाभ, सुख, धन की वृद्धि होती है । बारहवें स्थान में जन्मलग्न से मेषप्रवेशलग्न पड़े, तो दुःख, दारिद्र्य, होते हैं ॥ ४७–४८ ॥

अथ ताजिकमतानुसारेण प्रश्नाद्युपयोगिन इत्थशालादयो योगाः कतिपया निरूप्यन्ते—

> नवपञ्चमयोर्दृष्टिः पादोना सर्वदृष्टितः सबला ।
> मेलापकदृष्टिरियं प्रत्यक्षस्नेहदृष्टिरिति ॥ ४६ ॥
> तृतीयैकादशयोर्दृष्टौ यो वीक्षते तृतीयदृशा ।
> तद्दृष्टिस्त्र्यंशोना नान्यत्र तु षड्भागदृष्टिश्च ॥ ५० ॥
> अनयोर्गुप्तस्नेहा दृष्टिः सर्वत्र कार्यसिद्धिकरी ।
> दशमचतुर्थजदृष्टिः पादोना दुर्जना ख्याता ॥ ५१ ॥

नवपञ्चमयोः स्थानयोः दृष्टिः पादोना=चतुर्थांशोना $0^\circ|45'$, भवति । सा सर्वदृष्टितः = सकलस्थानगतदृष्ट्यपेक्षया सबला = प्रबला भवति । इयं मेलापकदृष्टिः, जातकमतेन शत्रुत्वभावप्राप्तयोरपि ग्रहयोर्मेलापककरी दृष्टिः अस्ति । वा प्रत्यक्षस्नेहदृष्टिः प्रौढा स्त्रीव भवति, इत्यपि कथ्यते । तृतीयैकादशयोः स्थानयोर्दृष्टौ यः ग्रहः तृतीयदृशा वीक्षते = पश्यति, तद्दृष्टिः त्र्यंशोना = ४०' कथिता = $1^\circ - \frac{1^\circ}{3} = \frac{2^\circ}{3} = \frac{60^\circ \times 2}{3} = 40'$ । अन्यत्र = एकादशस्थाने षड्भागदृष्टिः = $\frac{1^\circ}{6} = \frac{60'}{6} = 10'$ म-

वति । अनयोस्तृतीयैकादशस्थानयोः दृष्टिः गुप्तस्नेहा = गुप्तस्नेहकरी नवोढेव भवति सर्वत्र कार्यसिद्धिकरी च उच्यते । दशमचतुर्थजदृष्टिः पादोना $१ - \frac{१^\circ}{४} = \frac{३^\circ}{४} = \frac{३ \times ६०}{४} = ०^\circ । ४५'$ भवति सा दुर्जना क्षुताख्या ख्याता ॥

यत्र उभयसप्तमके भवेत् तत्र प्रत्यक्षदुर्जना दृष्टिः स्यात् सा तु पूर्णैव भवति । पूर्वमपि "दृष्टिः स्यान्नवपञ्चमे बलवती" इत्यादि तथा 'दृष्टिः पादमिता चतुर्थदशमे गुप्तारिभावा स्मृता" इत्यादि च संज्ञातन्त्रे उक्तं बोध्यम् ॥ ४६–५१ ॥

भाषा = नवम पञ्चम दृष्टि ०°।४५' पौने एक अंश अर्थात् पैंतालिस कला होती है। यह सब स्थानों की दृष्टि से प्रबल होती है। यह मेलापक दृष्टि कहलाती है। या प्रत्यक्षस्नेह दृष्टि भी कहलाती है ॥ ४७ ॥

तीसरे स्थान की दृष्टि या एकादश स्थान की दृष्टि में जो तीसरे स्थान की दृष्टि है वह तृतीयांशोन एक अंश अर्थात् ४०' कला परिमित दृष्टि होती है। और ११ एकादश स्थान की दृष्टि एक अंश का षष्ठांश अर्थात् १०' दश कला परिमित होती है। ये दोनों दृष्टि गुप्तरूप से स्नेह ( प्रेम ) करती है। कार्य की सिद्धि करने वाली है। और दशम चतुर्थ स्थान की जो दृष्टि सो पौने अंश अर्थात् ०°।४५' कला होती है, यह दुर्जन दृष्टि शत्रु दृष्टि है। तथा प्रथम, सप्तम, या परस्पर सप्तम दृष्टि भी शत्रु दृष्टि है। यह पूरा एक अंश होती है ॥ ५०–५१ ॥

सर्वाश्चैता हि दृशो द्वादशभागान्तरे भवेयुश्चेत् ।
सर्वविशेषः प्रोक्तो दृष्ट्यनुसारात्फलं चिन्त्यम् ॥ ५२ ॥
सूर्यः पञ्चदशांशैरिन्दुर्द्वादशभिरवनिजोऽष्टाभिः ।
सप्तांशैर्बुधशुक्रौ गुरुमन्दौ नवभिरीक्षेते ॥ ५३ ॥

एताः सर्वाश्च दृशः चेत् द्वादशभागान्तरे भवेयुस्तदा सर्वविशेषः प्रोक्तः दृष्ट्यनुसारात फलं चिन्त्यम् । तत्र सूर्यः पञ्चदशांशैः, इन्दुः = चन्द्रः द्वादशभिः अंशैः, अवनिजः = कुजः, अष्टाभिः,बुधशुक्रौ सप्तांशैः, गुरुमन्दौ=जीवशनी नवभिः अंशैः ईक्षेते = पश्यतः । स्वस्वदीप्तांशैः सर्वे पश्यन्ति स्वस्वदीप्तांशान्तर्गतमेव पश्यन्तीति भावः ॥ ५२–५३ ॥

भाषा—ये सब दृष्टियां यदि बारह अंश के अन्दर ही में हों तो विशेष फल कहे हैं। दृष्टि के अनुसार ही फल विचारना चाहिये ॥ ५२ ॥

सूर्य १५, चन्द्रमा १२, मङ्गल ८, बुध और शुक्र ७, बृहस्पति और शनि ९, अंशों से देखते हैं। अपने अपने दीप्तांशा के अन्दर ही सब ग्रह देखते हैं ॥ ५३ ॥

दीप्तांशा चक्र देखिये ।

| ग्रह | सूर्य | चन्द्र | कुज | बुध | बृहस्पति | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| दीप्तांशाः | १५ | १२ | ८ | ७ | ९ | ७ | ९ |

अथेत्थशालयोगोदाहरणमाह—

यदि शीघ्रः स्वल्पांशः पश्चान्मन्दं घनांशमुपगम्य ।
स्वदीप्तभागमस्मै दत्ते ध्रुवमित्थशालयोगोऽयम् ॥ ५४ ॥
लिप्तार्धविलिप्तिकाभ्यां यदि हीनो मन्दतोऽप्यतुल्यः स्यात् ।
तत्पूर्णमित्थशालं मुथशिलमपि कथ्यते तज्ज्ञैः ॥ ५५ ॥
अथ शीघ्रो मन्दगतैरपि भागैकं समुत्तरत्यग्रे ।
तदिहेसराफसंज्ञो मूसरिफः कथ्यतेऽत्यशुभः ॥ ५६ ॥
यद्युभयदृष्टिरहितो यद्यन्यः शीघ्रगोऽन्तरे भूत्वा ।
पश्चाच्च तदन्यस्मै ददाति तेजः स नक्तसंज्ञः स्यात् ॥ ५७ ॥

यदि शीघ्रः=शीघ्रगतिग्रहः, स्वल्पांशः, पश्चात् घनांशम्=अधिकांशं मन्दं=मन्दगतिग्रहम्, उपगम्य स्वदीप्तभागम् = स्वदीप्तांशम् अस्मै = शीघ्रगतिग्रहाय दत्ते=ददाति, तदाऽयं ध्रुवं = निश्चितम् इत्थशालः स्यात् । लिप्तार्धविलिप्तिकाभ्यां यदि मन्दतः = मन्दगतिग्रहात् शीघ्रगतिग्रहः हीनः = न्यूनः अपि अतुल्यः स्यात्, तदा तत् पूर्णम् इत्थशालं, तथा मुथशिलमपि तज्ज्ञैः=विज्ञैः कथ्यते ॥ ५४-५५ ॥

अथ शीघ्रः=शीघ्रगतिग्रहः, मन्दगतेः=मन्दगतिग्रहात्, भागैकं=एकांशं, अग्रे समुत्तरति तदा तद् ईसराफसंज्ञः योगः। स एव मूसरिफसंज्ञः योगः कथ्यते । स अति अशुभः = अशुभ फलप्रदः भवति ॥ ५६ ॥

यदि उभयोः = लग्नाधीशकार्याधीशयोर्दृष्टिरहितः अन्यः शीघ्रगः ग्रहः अन्तरे= मध्ये भूत्वा पश्चात्=पृष्ठस्थग्रहात् तेजः आदाय अन्यस्मै=अग्रवर्त्तिने ग्रहाय ददाति तदा स ईदृशो योगः नक्तसंज्ञः स्यात् ॥ ५७ ॥

भाषा—यदि शीघ्रगतिग्रह कुछ कमती अंश से हो, उस से कुछ अधिक अंश से मन्दगति ग्रह हो, अर्थात् मन्दगति ग्रह आगे हो शीघ्रगतिग्रह पीछे हो, साधारण इत्थशाल योग होता है । वहां यदि शीघ्रगतिग्रह से १ अंश आगे मन्दगति ग्रह हो, तो निश्चय इत्थशाल योग होता है । यदि आधी कला ( ३० विकला ) अथवा

एकं विकला भी यदि मन्दगति ग्रह से शीघ्र गति ग्रह हो, तो पूरा इत्थशाल योग होता है। इत्थशाल ही को मुथशिल योग कहते हैं॥ ५४-५५॥

यदि शीघ्रगतिग्रह मन्दगति ग्रहसे एकभी अंश आगे बढ़ जाय तो ईसराफ योग होता है। वही मूसरिफ योग कहाता है। यह अत्यन्त अशुभप्रद होता है॥ ५६॥

यदि लग्नाधीश कार्याधीश की दृष्टि से हीन कोई दूसरा शीघ्र गति ग्रह उन दोनों के बीच में होकर पीछेके ग्रह से अर्थात् शीघ्र गति ग्रहसे तेज लेकर आगे वाले मन्दगति ग्रह को दें, तो नक्त योग होता है॥ ५७॥

अथोदाहरणम्—

स्त्रीलाभस्य प्रश्ने कन्यालग्ने बुधः पतिः सिंहे।
मीने च तत्पतिर्गुरुस्तत्रानयोर्नत्वस्ति दृष्टिस्तु॥५८॥
शीघ्रश्चन्द्रो द्वाभ्यां दृष्टो बुधात्तन्महो नीत्वा।
जीवाय ददौ तद्वत्परहस्ताद्योषितः प्राप्तिः॥५९॥
अथ यदि मंदोऽन्तःस्थो द्वावपि पश्यति निजोक्तदीप्तदृशा।
तेजो नीत्वा शीघ्राद्ददाति मन्दाय तद्यमया॥६०॥
उभयेत्थशालयोगे यदि चन्द्रोऽप्यत्र मुथशिलविधायी।
तत्कम्बूलं हि भवेदुत्तममध्याधमैर्भेदैः॥६१॥

यदि लग्नेशकार्येशयोरित्थशालयोगः तौ चेत्स्वगृहे स्वोच्चे वा चन्द्रोऽपि स्वर्क्षोच्चगतस्तदोत्तमं कम्बूलम्। यदि चन्द्रः स्वर्क्षादौ न तदोत्तममेव। यदि त्रैराशिकहद्दामुसल्लहाद्यधिकारवांस्तदा मध्यमम्। पञ्चाधिकाररहितत्वमुभयोश्च तदाऽधमम्। उभयोर्नीचारिराशिगतत्वेऽधमाधममिति विकल्पना। एते चेत्थशालादयो दृष्टिस्थानदीप्तांशाकान्तरे द्वादशान्तरे वा ज्ञेया न केवलमेकराश्यंशस्थान एवेति ज्ञेयम्। एतच्चास्मत्कृते ताजिकरत्ने स्पष्टतरं प्रपञ्चितमेवावधारणीयम्। स्वगृहोच्चनवांशनिरूपणं जातकावसरे निरूपितम्, नवांशक एव मुसल्लहो वाच्यः। त्रैराशिकपदेन द्रेष्काणेशाः यथा-मेषादेः षट्त्रिंशद्द्रेष्काणानामधीश्वरा ज्ञेयाः। प्रथमो भौमस्तस्मात्षष्ठश्च भौमान्तम्। हद्दपदेन त्रिंशांशा उच्यन्ते। यथा-मेषे षडङ्गवसुशरबाणाः ६।६।८।५।५ गुरुसितज्ञकुजमन्दाः। वृषभे वसुरसवसुशरशिखिनः ८।६।८।५।३ शुक्रज्ञजीवमन्दाराः। मिथुने षडङ्गशरनगषण्णां ६।६।५।७।६ बुधशुक्रजीवकुज-

सौराः। कर्केऽद्रिरसषडद्रिश्रुतिषु च ७।६।६।७।४ कुजशुक्रसौम्यगुरुमंदाः। सिंहेऽङ्कबाणशैलाङ्काङ्काः ६।५।७।६।६ देवेज्यशुक्रार्कबुधाराणाम्। युवतौ शैलाशाब्ध्यद्र्यक्षिः ७।१०।४।७।२ ज्ञसितजीवकुजशनीनाम्। तुले रसाष्टाद्रिनगाक्षिभागाः ६।८।७।७।२ शनिबुधगुरुसिताराश्च, अलिन्यद्र्यंबुधिगजबाणाङ्काः ७।४।८।५।६ भूसुतशुक्रसौम्यगुरुमन्दाः। चापे रविबाणाब्धिशरवेदाः १२।५।४।५।४ देवगुरुसितज्ञकुजसूर्यजाः। मकरेऽद्र्यद्रिनागाब्धिवेदाः ७।७।८।४।४ बुधेज्यदैत्यगुरुशनिभौमाः, कुम्भेऽद्र्यङ्काद्रिबाणबाणाः ७।६।७।५।५ बुधसितेज्यकुजमन्दाः। मीनेऽर्काब्ध्यग्निनन्दाहिः १२।४।३।६।८ सितगुरुज्ञकुजसौराः।

इति श्रीदैवज्ञानन्तसुतश्रीदैवज्ञनीलकण्ठविरचितायां
श्रीनीलकण्ठ्यां प्रश्नतन्त्रं तृतीयं समाप्तम् ॥ ३ ॥
समाप्तोऽयं ग्रन्थः ॥ शुभमस्तु।




स्त्रीलाभस्य प्रश्ने कन्यालग्ने तत्पतिः बुधः सिंहे, मीने च तत्पतिः=तत्स्त्रियाः भावस्य सप्तमस्य पतिः गुरुः तिष्ठति. अत्रानयोर्दृष्टिर्न वर्त्तते बुधादष्टमे गुरोर्वर्त्तमानत्वात् द्वितीयद्वादशयोः षट्काष्टमयोर्दृष्ट्यभावात्। अत्र शीघ्रः = शीघ्रगतिग्रहः चन्द्रः धनुषि वा वृषे स्थितः, द्वाभ्यां बुधगुरुभ्यां दृष्टः, बुधात्तन्महः = तेजः आदाय जीवाय ददौ तद्वत् परहस्तायोषितः स्त्रियाः प्राप्तिः = लाभः स्यात्। अत्र को ग्रहः कियद्भिरंशैर्वर्त्तते, चन्द्रः कुत्र राशौ वर्त्तते इति नास्ति, स्फुटतया 'संज्ञातन्त्रे 'स्त्रीलाभपृच्छा—तनुरस्ति कन्या स्वामी बुधः सिंहगतो रसांशैः' इत्यादिश्लोके तद्विषयोऽस्ति। द्रष्टव्यं तत्रैवेति। अथ यदि मन्दः = मन्दगतिग्रहः लग्नाधीशकार्याधीशयोरन्तर्मध्ये स्थितः, निजोक्तदीप्तदृशा द्वौ लग्नेशकार्येशौ यदि पश्यति. शीघ्रात् = शीघ्रगतिग्रहात् तेजः नीत्वा मन्दाय=मन्दगतिग्रहाय ददाति, अतस्तथमया योगः प्रदिष्टः ॥ ५८-६० ॥

यदि उभयोरित्थशालयोगे सति, अत्र यदि चन्द्रः अपि मुथशिलविधायी = इत्थशालकर्त्ता भवेत्तदा उत्तममध्याधमैर्भेदैः कम्बूलं भवेत् ।

विशेषोऽस्य भेदः संज्ञातन्त्रे द्रष्टव्यः । किमत्र पुनः पिष्टपेषणेन ॥ ६१ ॥

भाषा—स्त्रीलाभके प्रश्नमें कन्यालग्न है, लग्नेश बुध सिंहमें ( १२ वें ) है, सप्तमेश गुरु मीन ( ७ वें ) में हो ऐसी हालतमें इन दोनोंको (बु० बृ०) परस्पर दृष्टि नहीं है और इन दोनोंसे शीघ्रगति चन्द्रमा बुधसे तेज लेकर गुरुको देता है इसलिये यहाँ दूसरेके द्वारा स्त्रीकी प्राप्ति कहनी चाहिये ॥ ५८–५९ ॥

यदि लग्नेश और कार्येशके मध्यमें मन्दगति ग्रह स्थित होकर अपने दीप्तांशासे दोनोंको देखे और शीघ्रगतिग्रहसे तेज लेकर मन्दगति ग्रहको देवे तो यह 'यमया' योग होता है ॥ ६० ॥

लग्नेश और कार्येशंको परस्पर इत्थशाल होता हो यदि वहाँ चन्द्रमा भी मुथशिली होवे तो 'कम्बूल' योग होता है । इसके उत्तम, मध्यम, और अधम ये तीन भेद हैं ॥ ६१ ॥

इति श्रीदैवज्ञानन्तसुतदैवज्ञश्रीनीलकण्ठविरचितायां श्रीनील-
कण्ठयां प्रश्नतन्त्रस्य टीका समाप्ता ॥

भूवैरिनागधरणीमितशाकवर्षे मास्यर्जुनेऽसितदले दिनपे दशम्याम् ।
श्री १०८ वैद्यनाथपदपद्मदयोदयेन पूर्णा व्यधायि सरला किल नीलकण्ठ्याः ॥ १ ॥
बोधाल्पताहतमतेः सुसुखाय पूर्वं गीर्वाणवाणिसहिताऽनु च देशभाषा ।
अब्दध्वनेर्जगति नृत्यति नीलकण्ठी टीका कृता जलदगर्जननामिकाऽतः ॥ २ ॥
श्री १०८ मद्बालानन्दयोगीश्वरेन्द्रैर्विद्यागारः स्थापितो योऽतिरम्यः ।
तत्र ज्योतिःशास्त्रकाध्यापकेन नीताऽन्ततवं मिश्रगङ्गाधरेण ॥ ३ ॥

**समाप्तोऽयं ग्रन्थः ।**

श्री १०८ वैद्यनाथार्पणमस्तु ।



# अथ परिशिष्टम् ।

तत्रादौ मुद्दादशासाधनप्रकारः—

**जन्मर्क्षसंख्या-सहिता गताब्दा द्वगूनिता नन्दहृताऽवशेषात् ।**
**आचकुराजीशबुकेशुपूर्वाः मुद्दादशा स्यात्किल वर्षवेशे ॥ १ ॥**

जन्मर्क्षं = जन्मनक्षत्रं, तस्याश्विनीतो यावती संख्या स्यात्तया सहिताः = संयुताः, गताब्दाः=व्यतीतवर्षसंख्याः कार्याः, सा च द्वगूनिता = द्वयूना कार्या, ततः नन्दैः= नवभिः, हृता = भक्ता सती योऽवशेषः स्यात्तद्वशात् आचकुराजीशबुकेशुपूर्वाः आदित्यचन्द्रकुजराहुजीवशनिबुधकेतुशुक्रा दशेशा ज्ञेयाः, वर्षवेशे तु किल निश्चयेन मुद्दा दशा स्यादिति ॥ १ ॥

भाषा—जन्मनक्षत्र जो कोई हो, अश्विनी से जन्मनक्षत्र को गिनकर जो संख्या हो उसमें गतवर्ष की संख्या को जोड़ने पर जो हो, उसमें दो घटाकर नव भाग देने पर शेष जो बचेगा उसमें रवि, चन्द्र, कुज, राहु, गुरु, शनि, बुध, केतु और शुक्र इन ग्रहों की क्रम से दशा होगी। जैसे १ शेष में सूर्य की, दो शेष में चन्द्रमाकी, तीन शेष में मङ्गल की, चार शेष में राहु की, इस क्रमसे दशेश समझना। वर्ष प्रवेश में मुद्दा दशा ही होती है ॥ १ ॥

उदाहरण—जैसे किसी का जन्मनक्षत्र रोहिणी है, उसकी संख्या ४ इस में गत-वर्ष १५ जोड़ देने पर हुआ १९, इसमें २ घटाकर ९ नौसे भाग दिया यहां लब्धि-का काम नहीं है शेष रहा ८, रवि से गिनने पर केतु की दशा हुई। यहां एक वर्ष में ही नवों ग्रहों की दशा पूरी होनी चाहिये। एक वर्ष में सौर दिन ३६० होते हैं, और उन ग्रहों के दशावर्षों के योग १२० वर्ष हैं। अर्थात् महादशावर्ष से तिगुना १ सौर वर्ष के दिन हैं इसलिये त्रिगुणित वर्ष संख्या तुल्य उन ग्रहों के दिनात्मक दशा

| ग्रहाः | र० | चं० | मं० | रा० | बृ० | श० | बु० | के० | शु० |
|---|---|---|---|---|---|---|---|---|---|
| दशादिनादि | १८ | ३० | २१ | ५४ | ४८ | ५७ | ५१ | २१ | ६० |

हुई। जैसे यहां एक बात लिखना और जरूरी है—

जैसे विंशोत्तरी दशामें भुक्त भोग्य, भयात भभोग पर से निकालते हैं। वैसे ही

यहां भी वर्षकालिक नक्षत्र के भयात भभोग पर से युक्त निकाल कर पूर्ण दशादिन में घटा कर भोग्य को पहले, उसके बाद अग्रिम ग्रहोंकी दशादिन उस के बाद अन्तमें भुक्तदशादि जोड़ना। प्राचीन ज्यौतिषी भुक्त भोग्य नहीं निकालते । केवल जिसकी मुद्दादशा हुई, वही लिख देते हैं । यह ठीक नहीं क्योंकि भुक्त, भोग्य निकालने के लिये ताजिकमुक्तावली में लिखा है । जोकि जातकक्रोड़ में माननीय पूज्य पण्डित कृष्णदत्त झा जी लिखे हैं—

हायनरत्ने—"गौरीमतोक्तस्य दशाक्रमस्य दशाऽऽदिमा या भवशादुपेता ।
सा भुक्तभोग्यर्क्षघटीविनिघ्नी सर्वर्क्षनाडीविहृता दिनाद्यम् ॥
द्विधा यदाऽऽप्तं त्विह भुक्तभोग्यं तस्य ग्रहस्यैव लिखेदधस्तात् ।
दशाप्रमाणं परतो ग्रहाणां यथास्थमग्रे विलिखेदधोऽधः ॥
प्रान्ते पुनर्भुक्तघटीसमुत्थं दिनाद्यमाद्यस्य लिखेत् खगस्य ॥"

इसका अर्थ स्पष्ट है । मुद्दादशा का फल ताजिक पद्मकोष के भावस्थ ग्रह फल ही समझना। जैसे 'स्वदशासु फलप्रदाः सर्वे' यह वराह मिहिराचार्य लिखे हैं। और पद्मकोष के श्लोक में भी ऐसा है कि स्वदशा में ये फल देते हैं।

## अथ ग्रहाणां मुद्दादशादिचक्रम् ।

| ग्रहाः | सू. | चं. | मं. | रा. | बृ. | श. | बु. | के. | शु. |
|---|---|---|---|---|---|---|---|---|---|
| दशादिनानि | १८ | ३० | २१ | ५४ | ४८ | ५७ | ५१ | २१ | ६० |

## अथ सूर्यमुद्दान्तर्दशाचक्रम् ।

| ग्रहाः | सू. | चं. | मं. | रा. | बृ. | श. | बु. | के. | शु. |
|---|---|---|---|---|---|---|---|---|---|
| दिन. | ०० | १ | १ | २ | २ | २ | २ | १ | ३ |
| दण्डः | ५४ | ३० | ३ | ४२ | २४ | ५१ | ३३ | ३ | ०० |
| पल. | ०० | ० | ०० | ०० | ०० | ०० | ०० | ०० | ०० |

## अथ चन्द्रमुद्दादशायामन्तर्दशाचक्रम् ।

| ग्रहाः | चं. | मं. | रा. | बृ. | श. | बु. | के. | शु. | सू. |
|---|---|---|---|---|---|---|---|---|---|
| दिनम् | २ | १ | ४ | ४ | ४ | ४ | १ | ५ | १ |
| दण्डः | ३० | ४५ | ३० | ०० | ४५ | १५ | ४५ | ०० | ३० |

## अथ कुजमुद्दादशायामन्तर्दशाचक्रम् ।

| ग्रहाः | मं. | रा. | बृ. | श. | बु. | के. | शु. | सू. | चं. |
|---|---|---|---|---|---|---|---|---|---|
| दिन. | १ | ३ | २ | ३ | २ | १ | ३ | १ | १ |
| दण्डः | १३ | ९ | ४८ | १९ | ५८ | १३ | ३० | ३ | ४५ |
| पल. | ३० | ०० | ०० | ३० | ३० | ३० | ०० | ०० | ०० |

## अथ राहुमुद्दादशायामन्तर्दशाचक्रम् ।

| ग्रहाः | रा. | बृ. | श. | बु. | के. | शु. | सू. | चं. | मं. |
|---|---|---|---|---|---|---|---|---|---|
| दिनानि | ८ | ७ | ८ | ७ | ३ | ९ | २ | ४ | ३ |
| दण्डः | ०६ | १२ | ३३ | ३९ | ९ | ०० | ४२ | ३० | ०९ |
| पलानि | ०० | ०० | ०० | ०० | ०० | ०० | ०० | ०० | ०० |

## अथ गुरुमुद्दादशायामन्तर्दशाचक्रम् ।

| ग्रहाः | बृ. | श. | बु. | के. | शु. | सू. | चं. | मं. | रा. |
|---|---|---|---|---|---|---|---|---|---|
| दिनम् | ६ | ७ | ६ | २ | ८ | २ | ४ | २ | ७ |
| दण्डः | २४ | ३६ | ४८ | ४८ | ०० | २४ | ०० | ४८ | १२ |
| पल० | ०० | ०० | ०० | ०० | ०० | ०० | ०० | ०० | ०० |

## अथ शनिमुद्दादशायामन्तर्दशाचक्रम् ।

| ग्रहः | श. | बु. | के. | शु. | सू. | चं. | मं. | रा. | बृ. |
|---|---|---|---|---|---|---|---|---|---|
| दिनम् | ९ | ८ | ३ | ६ | २ | ४ | ३ | ८ | ७ |
| दण्डः | १ | ४ | १९ | ३० | ५१ | ४५ | १९ | ३३ | ३६ |
| पल० | ३० | ३० | ३० | ०० | ०० | ०० | ३० | ०० | ०० |

## अथ बुधमुद्दादशायामन्तर्दशाचक्रम् ।

| ग्रहाः | बु. | के. | शु. | सू. | चं. | मं. | रा. | बृ. | श. |
|---|---|---|---|---|---|---|---|---|---|
| दिनानि | ७ | २ | ८ | २ | ४ | २ | ७ | ६ | ८ |
| दण्डः | १३ | ५८ | ३० | ३३ | १५ | ५८ | ३९ | ४८ | ४ |
| पलानि | ३० | ३० | ०० | ०० | ०० | ३० | ०० | ०० | ३० |

अथ केतुमुद्दादशायामन्तर्दशाचक्रम् ।

| ग्रहाः | के. | शु. | सू. | चं. | मं. | रा. | बृ. | श. | बु. |
|---|---|---|---|---|---|---|---|---|---|
| दि० | १ | ३ | १ | १ | १ | ३ | २ | ३ | २ |
| दं० | १२ | ३० | ३ | ४५ | १३ | ९ | ४८ | १९ | ५८ |
| प० | ३० | ०० | ०० | ०० | ३० | ०० | ०० | ३० | ३० |

अथ शुक्रमुद्दादशायामन्तर्दशाचक्रम् ।

| ग्रहाः | शु. | सू. | चं. | मं. | रा. | बृ. | श. | बु. | के. |
|---|---|---|---|---|---|---|---|---|---|
| दिनानि | १० | ०३ | ०५ | ०३ | ०६ | ०८ | ०९ | ०८ | ०३ |
| दण्डः | ०० | ०० | ०० | ३० | ०० | ०० | ३० | ३० | ३० |

इति ग्रहाणां मुद्दादशान्तर्दशाचक्राणि लिखितानि ।

आसां फलानि हायनसुन्दरग्रन्थादवगन्तव्यानि । अत्र विस्तरभिया न तानि लिखितानि ।

अथ वर्षपताकि चक्रम्—

तदुक्तं ताजिकमुक्तावल्याम्—

रेखात्रयं तिर्यगधोर्ध्वसंस्थमन्योन्यविद्धाग्रगमेककोणात् ।
स्मृतं बुधैस्तत् त्रिपताकि चक्रं प्राङ्मध्यरेखाऽग्रगवर्षलग्नात् ॥ १ ॥
न्यसेद्भचक्रं किल तत्र सैकां याताब्दसङ्ख्यां विभजेन्नभोगैः ।
शेषोन्मिते जन्मगचन्द्रराशेस्तुल्ये च राशौ विलिखेच्छशाङ्कम् ॥ २ ॥
परे चतुर्भाजितशेषतुल्ये स्थाने स्वराशौ खचरास्तु लेख्याः ॥ २½ ॥

अथ फलम्—

स्वर्भानुविद्धे हिमगौ तु कष्टं, तापोऽर्कविद्धे रुगिनात्मजेन ॥ ३ ॥

**महीजविद्धे तु शरीरपीडा, शुभैश्च विद्धे जयसौख्यलाभः।**
**शुभाशुभव्योमगवीर्यतोऽत्र फलं च वर्षस्य वदेत् सुधीमान्॥ ४॥**

अत्र रेखात्रयं = समसमानान्तरं रेखात्रितयं, तिर्यग् = तिरश्चीनं लेख्यम्, तथा समसमानान्तररेखात्रितयम् ऊर्ध्वसंस्थं = ऊर्ध्वाकारकं लेख्यम्, तत्र तदुभयमपि एककोणात् अन्योन्यविद्धाग्रं = परस्पराग्रश्लिष्टसूत्रं कार्यम्। एवं कृते तत् त्रिपताकि चक्रं बुधैः स्मृतं कथितम्। तत्र प्राग् भागे यद्रेखात्रितयाग्रं तत्र यन्मध्यरेखाग्रं भवेत्तद्गतं वर्षलग्नं = वर्षलग्नराशिसंख्यामानं निवेशनीयम्। तस्मात् परं भचक्रं निवेश्यम्। अथ तत्र ग्रहस्थापनप्रकारः—तत्र यावती याताऽब्दसङ्ख्या=गतवर्षसङ्ख्या स्यात्तां सैकामेकयुक्तां कृत्वा नभोगैर्नवभिर्विभजेत्, तदा शेषं यावत्तन्मिते जन्मगचन्द्रराशेः = जन्मकालिकचन्द्राक्रान्तराशिमारभ्य तच्छेषतुल्ये राशौ परिगणिते सति यो राशिः, तत्र शशाङ्कं = चन्द्रं विलिखेत्। यथा जन्मराशिर्मिथुनं, सैकगताब्दाः=२३, अत्र नवभक्तसैकगताब्दशेषम् = ५, तत्र मिथुनमारभ्य पञ्चमो गणितो राशिस्तुलासञ्ज्ञः, तत्र चन्द्रो लेख्यः। प्राचीनैर्गणकैस्तु जन्मराशिं विहाय तदव्यवहिताग्रिमराशितः शेषतुल्ये राशौ चन्द्रो निवेशितो दृश्यते। स च निवेशप्रकारो युक्त्याऽसङ्गत इव भाति। यथा जन्मकाले वर्षपताकिचक्रलेखने, गताब्दाः = ० सैकगताब्दसङ्ख्या = १, इयं नवभक्ता शेषं तन्मितमेव = १, अत्र यदि जन्मचन्द्रराशिं विहाय अग्रिमराशितो हि चन्द्रो निवेश्यते तदा राश्यन्तरे चन्द्रस्य स्थितिर्भवति। वस्तुतो जन्मकाले जन्मराशावेव चन्द्रस्थानमुचितमतः प्राचीनरीतिर्युक्तियुक्ता नेति। एवमन्येषां ग्रहाणां निवेशनेऽपि चिन्त्यम्। तत्र तु परे = चन्द्रभिन्नाः खचराः = ग्रहाः, चतुर्भाजितशेषतुल्ये = चतुर्भक्तसैकगतवर्षशेषसमे जन्मगचन्द्रराशेरग्रे स्वराशौ गणिते राशौ लेख्याः। अत्र चन्द्रस्य नवराश्यात्मकः पर्ययः। तदितराणां चतूराशिमितः पर्ययः कल्पित इति तावत्तत्त्वम्॥ १–२$\frac{1}{2}$॥

अथ तत्र फलविचारः।

स्वर्भानुविद्धे = राहुविद्धे हिमगौ = चन्द्रे अर्थादेकरेखोभयप्रान्तगतौ राहुचन्द्रौ भवेतां तदा कष्टम्। एवम् अर्कविद्धे = सूर्यविद्धे चन्द्रे तापः=सन्तापः, पित्तविकारेण शरीरे उष्णत्वाविर्भावः स्यात्। इनात्मजेन = शनिना विद्धे चन्द्रे रुक् = रोगः, वायुपीडनादिरोगः स्यात्। महीजविद्धे चन्द्रे तु शरीरपीडा = व्रणक्षतशस्त्रदण्डादिप्रहारवह्निभयादिपीडा स्यात्। शुभैः = बुधगुरुभृगुभिर्विद्धे चन्द्रे जयसौख्यलाभः स्यात्।

शुभाशुभाभ्यां विद्धे तयोर्यस्य शुभस्य वाऽशुभस्य वीर्यमधिकं, तद्वशतः शुभाशुभं वर्षस्य फलं सुधीमान् वदेत्। शुभग्रहवीर्याधिक्ये शुभम् । अशुभग्रहवीर्याधिक्येऽशुभमधिकम्। अत्र चन्द्रस्यैव प्रधानतया शान्तिः कर्तव्येति बोध्यम् ॥३—४॥

भाषा—समानान्तर खड़ी रेखा तीन, लिखकर, बीच वाली रेखाके मध्य बिन्दु पर लम्ब करके एक तिर्यग्रेखा लिखे, और जितना ही अन्तर देकर खड़ी तीन रेखा लिखी है उतना ही अन्तर देकर बीच वाली तिर्यक् लम्ब रेखा के ऊपर और नीचे भी एक एक रेखा लिखें। इस प्रकार तीन रेखायें खड़ी और तीन रेखायें तिरश्चीन हुईं। बाद एकके अग्र से दूसरेके अग्र पर्यन्त परस्पर रेखा बान्धनेसे यह वर्षपताकी चक्र कहाता है।

इसमें राशि निवेशनका यह क्रम है कि खड़ी जो तीन रेखायें लिखी गयी हैं उनमें बीच वाली जो रेखा है, उसके ऊपर वाले अग्रमें वर्षलग्न की संख्या को, जैसे मिथुन लग्नमें ३, धनु में ९ लिखकर उसी क्रम से सब राशियोंका निवेश करें।

अब इसमें कौन ग्रह कहां लिखे? इसका विचार करते हैं—गतवर्ष जो हो उसमें एक जोड़ कर नौ से भाग दें, जो शेष बचे, उसके तुल्यही जन्मकालीन चन्द्रराशिसे लेकर गिनने पर जो राशि होगा उसमें चन्द्रमाको लिखे। और शेष ग्रहोंका निवेश इस प्रकार से करे जैसे कि सैक गत वर्षको चारसे भाग देने पर जो शेष हो, उतने तुल्य संख्या जन्म कुण्डली के ग्रहाधिष्ठित राशिका छोड़कर गिनने से जो राशिहो, उसमें उस ग्रहको लिखे। यहां जो ग्रह वक्री हो उसको पीछे शेष तुल्य गिनने पर जो स्थान हो, उसमें लिखे। इस प्रकार वर्षपताकी चक्रमें ग्रह निवेश करके फल विचारे।

जिस स्थानमें चन्द्रमा हों वहां जो तीन रेखाओंके अग्र हैं उन रेखाओंके दूसरे अग्र में यदि राहु पड़े तो राहुविद्ध चन्द्रमा हुआ। इसमें शरीरमें व्यथा हो। एवं सूर्यसे विद्ध होनेसे ताप ( गर्मी ) हो, शनिसे विद्ध हो तो रोग हो, मङ्गलसे विद्ध चन्द्रमा हो तो शरीरमें तकलीफ हो, शुभग्रहों ( बु. बृ. शु. ) से विद्ध हो तो शुभ, जय, सुखका लाभ हो। यदि पापग्रह और शुभग्रह इन दोनोंसे एक बार हां विद्ध हो तो उन दोनोंमे जिसके बल अधिक हों, उसके अनुसार शुभाशुभ हो ॥ १-२ ॥

यहां विशेष बात यह है-प्राचीन ज्यौतिषी लोग जन्मकालिक ग्रहोंकी राशिको छोड़ कर अगिले राशिसे शेष तुल्य राशिमें ग्रहोंका निवेश करते आये हैं। लेकिन यह बात समुचित नहीं मालुम पड़ती। जैसे—जन्मपताकी लिखने में गत वर्ष शून्य है एक जोड़ने पर एक ही, उसको नवसे या चारसे भाग देने पर १ एक ही शेष रहा, अब यहां यदि एक स्थान छोड़ कर ग्रह लिखे जाय तो जन्मकालमें अपने अपने राशिमें नहीं होंगे आगे हो जायँगे। लेकिन जन्मपताकीमें जिस राशिमें जो ग्रह रहते हैं, उसीमें उनके लिखनेका क्रम है। इस लिये जन्मकालमें जिस राशिमें जो ग्रह हो

उसीसे लेकर शेष तुल्य राशिमें उस ग्रहको लिखें। यहां वक्री ग्रहको शेष तुल्य पीछे हटाना, यह प्राचीनोंमें युक्ति सङ्गत पाते हैं। यहां पापग्रहसे चन्द्रमा विद्ध होनेसे चन्द्रमाकी शान्ति करनी चाहिये ॥ ३-४ ॥

वर्षपताकी चक्रका उदाहरण—

यहां गत वर्ष १९, एक जोड़ने पर १६ इस में नव से भाग दिया तो लब्धि १, शेष ७ बचा, यहां जन्मकुण्डली की आवश्यकता पड़ती है, इस लिये नीचे दे दी गयी है देखिये–चन्द्रमा जन्मकाल में वृषराशि में है, अब उससे शेष ७ तुल्य स्थान वृश्चिक राशि में चन्द्रमा पड़ा। यहां पहले वर्षपताकी चक्र लिखकर पूर्व भाग की जो तीन रेखायें हैं, इन में बीच वाला जो रेखाग्र है, वहां वर्षलग्न ४ लिखे। वहां से उसी क्रम से बारहों राशियों का निवेश करें।




अब जहां वृश्चिक राशि पड़ी है, वहां पर चन्द्रमा को लिखे। और ग्रहों का निवेशन प्रकार–फिर गत वर्ष में १ जोड़ने पर १६ हुआ। इस में ४ से भाग दिया शेष बचा=०, इस लिये शेष रख लिया ४, यहां चन्द्रमा को छोड़ कर और ग्रहोंको अपने स्थान से शुरू कर चार चार घर आगे चलाइये। जैसे सूर्य मेष में हैं, तो कर्क में, मङ्गल वृष में है, तो सिंह में लिखिये, बुध मीनमें है तो मिथुन में लिखिये। बृहस्पती मकर में है तो

जन्मकुण्डली ॥



मेष में, शुक्र मेष में तो कर्क में लिखिये । शनि तुला में है तो मकर में लिखिये । राहु कर्क में है, तो इस से पीछे ४ गिनिये तो मेष में राहु, केतु मकर में है तो उसको वहां से चार घर पीछे तुला में लिखिये । अब वेधविचार—

चन्द्रमा वृश्चिक में है, इस लिये मीनके स्थान से सम्मुख वेध होता है । लेकिन वहां कोई नहीं है, इसलिये सम्मुख वेध नहीं हुआ, और वृश्चिकस्थ चन्द्रमा को धनु से तथा मिथुन से तिर्यक् वेध होता है, उन दोनों स्थानों में कोई ग्रह नहीं है इस लिये चन्द्रमा को तिर्यक् वेध भी नहीं होता है ।

यहां यदि चलित चन्द्रमा तुला में होता तो देखिये-राहु और बृहस्पति से सम्मुख वेध होता, और शनि से तथा सूर्य शुक्र से तिर्यक् वेध होता ।

अथवा कर्क में चन्द्रमा होता तो शनि से सम्मुख वेध, और केतु से तथा बृहस्पति और राहु से तिर्यक् वेध होता ।

यहां वेधविचारमें भेद नहीं है, केवल जन्मकुण्डलीसे ग्रह चलाने में भेद है । प्राचीन सम्प्रदाय से तो जन्मकुण्डलीमें जिस कोष्ठमें ग्रह है, उस कोष्ठको छोड़ कर दूसरे कोष्ठ से शेष तुल्य कोष्ठमें उस ग्रहको लिखा जाता । नवीन—उपपत्तिसंगत प्रकारसे मैंने ऐसा लिखा है । फल विचार मूल में देखिये ।

## अथ वर्षप्रवेशलिखनक्रमसूची लिख्यते ।

१ आदौ मङ्गलाचरणम् ।
२ ततो वर्षारम्भदिनपञ्चाङ्गादिलिखनम्
३ वर्षाङ्गचक्रम् , जन्माङ्गचक्रञ्च ।
४ पञ्चाङ्ग—फलम् ।
५ तात्कालिकस्पष्टग्रहाः सगतिकाः ।
६ वर्गेश्वरचक्रम् ।
७ मित्रसमशत्रुचक्रम् ।
८ पञ्चवर्गीयबलबोधकचक्रम् ।
९ हर्षस्थानादिलघुपञ्चवर्गीयचक्रम् ।
१० वर्षेशनिर्णयस्तत्फलञ्च ।
११ मुथहा, मुथहेशफलम् ।
१२ वर्षारिष्टविचारलिखनम् ।
१३ तन्वादिद्वादशभावाः ससन्धयः ।
१४ भावचक्रेश्वरचक्रम् ।
१५ चलितभावकुण्डली ।
१६ भावस्थग्रहफलानि ।
१७ भावविचारः ।
१८ इत्थशालादियोगविचारः ।
१९ मुद्दादशाचक्रम् ।
२० मुद्दादशाफलानि ।
२१ पात्यायिनीदशाचक्रम् ।
२२ तत्फलानि च ।
२३ वर्षपताकिचक्रम् , तत्फलञ्च ।
२४ सहमानि सहमकुण्डली च ।
२५ सहमविचारः ।
२६ पूज्यग्रहाः । तच्छान्तिविधिश्च ।
२७ जन्मपत्रस्थदशाऽन्तर्दशादिनिदर्शनम् ।

इति शुभम् ।